Tanjore Sarasvati Mahal Series No. 217.

श्रीमज्जयरामन्यायपञ्चाननविरचिता

# ॥ पदार्थमाला ॥

॥ लौगाक्षिभास्करविरचितया टीकयासहिता ॥



JAYARĀMA-NYĀYAPANCHANANA'S

# PADĀRTHAMĀLĀ

WITH

LOUGĀKSHĪ BHĀSKARA'S

**PADĀRTHAMĀLĀ PRAKĀSA-TIKA**



Tanjore Maharaja Serfoji's
Sarasvati Mahal Library, Thanjavur.



1985 ]

[ Price : Rs. 40—00

Tanjore Sarasvati Mahal Series No. 217.

# PADĀRTHAMĀLĀ

*By*

JAYARĀMA-NYAYAPANCHANANA

*WITH*

**PADĀRTHAMĀLĀ PRAKĀSĀ-TIKA**

*By*

LOUGĀKSHĪ BHĀSKARA.

*

EDITED WITH INTRODUCTION IN SANSKRIT

*By*

N. SRINIVASAN, SIROMANI,

Vedanta Visarada & Tamil Vidwan, Sanskrit Pandit,

Sarasvati Mahal Library, Thanjavur.






TANJORE MAHARAJA SERFOJI'S

SARASVATI MAHAL LIBRARY, THANJAVUR.

**

1985 ] [ Price : Rs. 100/-

तञ्जापुरी सरस्वती महालय ग्रन्थमालाया : पुष्पम् - २१७

श्रीमज्जयरामन्यायपञ्चाननविरचिता

# ॥ पदार्थमाला ॥

## ॥ लौगाक्षिभास्करविरचितया टीकयासहिता ॥



सरस्वतीमहालयसंस्कृतपण्डितेन

वेदान्तविशारद - वेदान्तशिरोमणि - तमिल्विद्वान् विरुदभाजा

न. श्रीनिवासशर्मणा

संशोध्य, संस्कृतप्रस्तावनासहितं परिष्कृत्य संपादिता ।



तञ्जापुरी महाराजाशरभोजी सरस्वतीमहाल् ग्रन्थालये प्रकाशिता च

विजयतेतमाम्



१९८५ ] [ रू. ४०-००

# PREFACE

Nyaya Sastra is one of the six systems of Hindu Philosophy (Hindu Asthiga Darasnas). It is called as "Tarka Sastra" or "Anvikshiki". This system of Philosophy determines the fact logically. The ultimate goal of this system is to attain Moksha, the eternal bliss of God. The same principle is being adopted in "Vaisesika Darsana" also. Hence Nyaya and Vaisesika are considered as equal in the Indian Philosophy.

Many poets have written on the Nyaya Vaisesika Darsanas. One among them is Jayarama - Nyaya - Pancanana. He lived in Bengal during 17th century. He has witten 34 works in his life time. One among them is 'Padarthamala'.

One of his disciples has written a commentary under the name 'Padarthamala Prakasa'. He has mentioned his name as 'Lovkakshi-Bhaskara'. This book 'Padarthamala' is now published with the commentary for the benefit of readers and scholars.

We have to congratulate the Sanskrit Pandits incharge of edition and all members of the staff of this Library for bringing out this work in a lucid manner. It becomes our duty to thank the Government of India for their generous grant for publication.

**T. R. RAMASWAMY, I. A. S.,**
Collector and Director,
T. M. S. S. M. Library.

Thanjavur,
25--9—85.



# ॥ प्रस्तावना ॥

**

या देवी सर्वभूतेषु विद्यारूपेण दृश्यते ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥

## किं नाम न्यायशास्त्रम् ?

अथ षड् दर्शनानामलङ्कार भूतं 'प्रमाणप्रमेय' इत्यारभ्य 'हेत्वाभासाश्च यथोक्ताः' इत्यन्तं पञ्चाध्यायात्मकं महर्षि गौतममुनिपादैः प्रणीतं शास्त्रं न्यायदर्शनमित्युच्यते । दृश्यतेऽनेनेति दर्शनम्, न्यायस्य दर्शनं न्यायदर्शनम् । न्यायश्च पुनः प्रमाणैरर्थपरीक्षणम् । न्याय एव आन्वीक्षिकीत्याख्ययाऽपि समाख्यायते । अत एवास्य शास्त्रस्य सर्वशास्त्रोपकारकत्वमङ्गीकृतं विवेचकैः ।

## न्यायशास्त्रस्यप्रयोजनम् —

तदिदं वेदार्थविरोधितर्कनिरसनौपायिकं वैदिकसिद्धान्तरक्षणोपयोगिप्रमाणादिप्रदिपादनमेव न्यायशास्त्रस्य प्रयोजनम् । अत एवेदं शास्त्रं प्रमाणशास्त्रं तर्कशास्त्रञ्चाप्युच्यते । तर्क्यन्ते यथार्थज्ञानविषयीक्रियन्तेऽर्था यैस्ते तर्काः तेषां शास्त्रं तर्कशास्त्रम् । अत एव भगवता मनुनाऽपि स्मृतम् —

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंन्धत्ते स धर्मं वेद नेतरः ॥

-मनु. अ. १२ श्लो. २०७

निरीश्वरवादिनां चार्वाकप्रभृतीनां वेदप्रमाण्यविप्लावनतत्पराणां कुतर्ककुठारकुण्ठीकरणाय शास्त्रस्यास्य परमोपयोगं मन्यन्त आगामिनः । न खलु तर्कशास्त्रमन्तरेण दुर्दान्तचार्वाकादिनास्तिकानां प्रखरतर्कनिरसनमनायासेन कर्तुं सुकरम् । तन्निरसनार्थमेवाऽस्य शास्त्रस्यावतारः ॥

## वैशेषिक दर्शनम्

दर्शनमिदं महर्षिणा कणादेन प्रतिपादितम्। न्यायवैशेषिकेतिक्रमेण यद्यपि दर्शनमिदं द्वितीयत्वेन गण्यते तथापि कालतः पर्यालोच्यमाने प्रथमतया स्वीकर्तुं शक्यते। यतः वैशेषिके अनुमानप्रणाली संक्षेपेण प्रदर्शिता, न्याये महता विस्तरेण। हेत्वाभासाः वैशेषिकेत्रय एव, न्याये तु पञ्च। इत्येवं कणादप्रोक्तस्य वैशेषिकस्य सङ्कोचविस्ताराभ्यां परिवर्धनमेव न्यायशास्त्रमिति ज्ञायते। अतः तत्तच्छास्त्राध्ययनं कृत्वा शास्त्रान्तरेषु तुलनां कर्तुमपारयन्तः पण्डितप्रकाण्डाः बहून् ग्रन्थान् व्यरचयन्। तत्तादृशपण्डितेषु रामभद्रसिद्धान्तवागीशान्तेवासिना **जयरामन्यायपञ्चानन भट्टाचार्येण** कृतोऽयं **पदार्थमालाग्रन्थः** ॥

अयं ग्रन्थः न्यायमुक्तावलीग्रन्थवत् न्यायवैशेषिकदर्शनयोः प्रकरणग्रन्थो भवति। प्रकरणं नाम –

**" शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।**
**आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः॥ "**

इति हि लक्षणं प्रतिपादितं विष्णुधर्मोत्तरपुराणे। अतः कृतिमिमां प्रकरणग्रन्थमिति मन्यामहे। अयं कविः वङ्गदेशस्थः। सप्तदशशताब्द्यां व्यलसद्भुवि ॥

## कवेरस्य अन्ये ग्रन्थाः [1]

जयरामन्यायपञ्चाननभट्टाचार्यः न्यायशास्त्रे महानैपुण्यं प्राप्तवानास। अतः न्यायशास्त्रे बहून् ग्रन्थान् व्यरचयत्। यथा –

१. अन्यथाख्यातितत्त्वम् ॥
२. आकांक्षावादः ॥
३. आख्यातवादसुधा ॥ (टीका)
४. काव्यप्रकाशस्य तिलकव्याख्या ॥
५. गूढार्थविद्योतनी ॥
६. तत्त्वचिन्तामणेः आलोकविवेकस्य व्याख्या ॥
७. वैशेषिकन्यायकुसुमाञ्जलिकारिका व्याख्या ॥
८. न्यायसिध्दान्तमाला (न्यायसूत्रव्याख्या) ॥
९. पदार्थमाला ॥
१०. अनुमानजयरामी ॥

---

1) **New Catalogus Catalogorum Page 188-190. Vol. VII.**

## मातृकाणां - विवरणम् –

पदार्थमालायाः द्वे व्याख्ये समुपलब्धे । तयोः नाम पदार्थमालाप्रकाशः ; गूढार्थ दीपिकेति च । **पदार्थमालाप्रकाशः** – अस्य व्याख्यानस्य कर्ता लौगाक्षिगोत्रोद्भवः भास्करः इति ज्ञायते । भास्करोऽयं जयरामपञ्चाननशिष्यः इति च प्रतिभाति । पदार्थमालाख्यस्य अस्य ग्रन्थस्य टीकया सह मुद्रणे व्युत्पित्सूनां, विदुषां च महते प्रमोदाय भवेदिति कृत्वा सटीकमिमं ग्रन्थं प्रकाशयामः ।

एतद्ग्रन्थसंपादन विषये पाठभेदस्य अथवाऽन्योन्य विशेषस्य वा विशेषो विद्यते न वेति निम्नलिखित मातृकाः पर्यालोच्य व्युत्पित्सूनामुपयोगाय ग्रन्थेऽस्मिन्प्रदर्शयामः । विदितमेवेदं समेषां विदुषां यत् तञ्जापुरीय सरस्वतीमहालयः भोसलकुलजन्येन स्वनामधन्येन शरभोजिमहाराजेन स्थापितः, पालितः पोषितश्च विलसतितमामिदानीमपीति । अत्र द्वे मातृकेसमुपलभ्येते पदार्थमालानाम्ना । अड्यार् लाइब्रेरी एण्ड् रिसर्च् सेण्टर् संस्थायाः द्वे, मद्रास् प्रान्तीयसर्वकार मातृकाग्रन्थालयस्य तिस्र इति, आहत्य सप्तमातृकाः स्वीकृताः । एवं एतासां संकेतः एवं क्रियते येन पाठकाः सुलभतया जानीयुः । यथा –

अ) T. M. S. Sarasvati Mahal Library — D. No. 5987
आ) — do. — — D. No. 5986

इ) Adyar Library and Research Center — PM 1470
ई) Madras Govt. Oriental MSS Library— D. No. 4267
उ) — do. — — D. No. 19122
ऊ) — do. — — D. No. R. No. 3855 (c)
ऋ) Adyar Library and Research Centere — PM. 1471 इति

पदार्थमालाव्याख्यायाः प्रकाशाख्यायाः तिस्रः मातृकाः प्राप्ताः। तासां विवरणं –

क) T. M. S. Sarasvati Mahal Library — D. No. 5988
ख) — do. — — D. No. 5989
ग) Adyar Library and Research Centere — PM 1472

उपर्युक्तदशमातृका आधारीकृत्य पाठभेदपुरस्सरं अस्य ग्रन्थस्य यथाशक्ति संपादनं कृतम् ॥

## निवेद्यते च कार्तज्ञ्यम् –

अस्य पदार्थमालाग्रन्थस्य संपादनविषये परिशीलनायमातृकां दत्तवद्भ्यः अड्यार् ग्रन्थालयस्याधिकारिकेभ्यः, तथा मद्रास् प्रान्तीयसर्वकारमातृकाग्रन्थालयाधिकारिकेभ्यः च कार्तज्ञ्यं निवेदयामः ।

ग्रन्थस्याऽस्य संपादने प्रस्तावनालेखने च मामधिकारिणं मत्वा सोत्साहां प्रेरणां दत्तवद्भ्यः तञ्जावूर्मण्डलाधिकारिकेभ्यः सरस्वतीमहालयनिर्वाहकेभ्यश्च श्रीयुत श्री T. R. **रामस्वामि,** I. A. S. महाशयेभ्यः, विशेषतश्च महालय निर्वाहकाधिकारिकेभ्यः श्री **पञ्चनद**महाशयेभ्यश्च सादरं सश्रद्धं च कार्तज्ञ्यं निवेदयामः । ग्रन्थमिमं सुन्दरं पठनार्हं च मुद्रितवद्भ्यः सरस्वतींमहालयमुद्राक्षरशालाकर्मचारिभ्यः च धन्यवादान्समर्पयामः ॥

गच्छतस्स्खलनमि'तिरीत्या यत्र कुत्राऽपि अनुपपत्तिः, अन्यथापत्तिः इत्यादयो दोषास्समुपलभ्यन्ते चेत् तान् प्रियपाठकाः संसूच्य धन्यवादमपि स्वीकुर्वन्तु, प्रोत्साहयन्तु चास्मान् उत्तरोत्तरकर्मणीति शम् ॥

इत्थं सविनयः

तञ्जावूर्
१०–६–१९८५

तञ्जावूर् **एन्. श्रीनिवासन्,**
**संस्कृतपण्डितः**

## ॥ विषयाणुक्रमणिका ॥



पुठ-संख्या

पुट-संख्या

पुट-संख्या

पुट-संख्या

पुट-संख्या

।। श्रीमते हयग्रीवाय नमः ।।

श्रीमज्जयरामन्यायपञ्चाननरचिता

# पदार्थमाला

——:○:——

स्वीकृतकुपितयशोदाश्रमहरगोदामबन्धनव्यसनम् ।
नलिनीदलसुकुमारं नन्दकुमारं नमस्यामः ।।

---

श्रीमल्लौगाक्षिभास्करविरचितः

## पदार्थमालाप्रकाशः

श्रीवासुदेवं सुरवैरिभङ्गं रमाधरालिङ्गितसुन्दराङ्गम् ।
[1] पादाब्जसम्भूतपवित्रगङ्गं नमामि तं वारितदोषसङ्गम् ।।
[2] कणादनामानमृषिं प्रणम्य गुरूंश्च लौगाक्षिकुलोद्भवेन ।
वितन्यते भास्करशर्मणेत्थं पदार्थमालानुगतप्रकाशः ।।

चिकीर्षितस्य ग्रन्थस्य [3]निर्विघ्नपरिसमाप्तये कृतमीश्वरनमस्कारात्मकं मङ्गलं शिष्य-शिक्षार्थमादौ निबध्नाति —स्वीकृत इत्यादि । अत्र नमस्याम इत्युत्तमपुरुषबहुवचनप्रयोग-

---

1 पादाम्बुसं° क.
2 कृष्णाद° क.
3 विविघ्नसमा° क.

वशात् वयमित्यस्मद्वचनमध्याहर्तव्यम् । तथा च वयं नन्दकुमारं नमस्याम इत्यन्वयः । वयं चिकीर्षितग्रन्थनिर्विघ्नपरिसमाप्तिकामाः, नन्दस्य गोकुलपतेः कुमारं कंसादिदुष्टदैतेयनिबर्हणेन पाण्डवादिशिष्टजनपरिपालनेन च धर्मस्थापनाय वसुदेवकुलेऽवतीर्य [1]नन्दीयप्राचीनभवसञ्चितपुण्यातिशयवशात् तद्गृहेपुत्रभावेन स्थितं श्रीकृष्णमिति यावत् । तथा च स्मृतिः—

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ [गी–४-८]

इति । नमस्यामः कायवाङ्मनोभिः नमस्कारकर्म [नमस्कारं कुर्मः] इत्यन्वयबोधः । नमस्कारत्वं च कायकादि [कायिकादि] त्रितयसाधारणो जातिविशेषः अनुगतव्यवहारसिद्धः । न च कायिकादौ संयोगत्वादिना सङ्करः । तस्यादूषणत्वात् । अन्यथोपाधिसङ्करस्यापि दूषणत्वापातात् । यद्वा नमस्कारत्वं ज्ञानत्वावान्तरजातिविशेषः । स च नमस्कार्ये स्वापेक्षयोत्कृष्टत्वज्ञानरूप - मानसतावेवा [मानसज्ञान एवा] स्ति । न चैवं कायिक [2]वाचिकानत्योः [ वाचिकनत्योः ] करशिरस्संयोगनमश्शब्दादिरूपयोरव्याप्तिः । तत्रोभयत्र [3]मानसनतिव्यञ्जकतया [4]नतिव्यवहारस्य गौणत्वादिति । एकस्मिन्नपि ग्रन्थकर्तरि वयमितिबहुवचनप्रयोगः 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (पा. सू. १. २. ५८) इत्याद्यनुशासनबलात् समाधेयः ।

नन्वयं कुतो नमस्कारः न श्रीकृष्णस्य स्यात्, नन्दकुमारस्या[5]न्यस्यापि सम्भवात् । अतः तल्लाभाय नन्दकुमारं विशिनष्टि- स्वीकृत इत्यादिना । स्वीकृतं रिङ्गणावसरे दधिदुग्धादिभाण्डचालनप्रभृत्यन्याय्या-चरणा [चरण] दर्शनेनकुपितायाः यशोदायाः श्रमहरं बन्धन-

---

[1] 'नन्दीय' नास्ति – ख.
[2] °वाचिकमनसोः कर° ग.
[3] मानसततिव्य° ग.
[4] ततिव्य° ग.
[5] 'अन्यस्य' नास्ति क.

करणजनितश्रम - निर्वर्तकं [निवर्तकं] गोदाम[1]बन्धनं तद्व्यसनं येनेति विग्रहः । एतद्विशेषणस्य श्रीकृष्ण एव सत्त्वात् अत्र नन्दकुमारः स एव लभ्यत इति भावः । [2]न च श्रीकृष्ण-[3]यशोदादामबन्धनव्यसनेन कथं यशोदायाः [4]श्रमहरणमन्यव्यसनेनान्यस्य श्रमनिवृत्त्यभावादिति वाच्यम् । बालदुश्चरितदर्शनकुपितजनन्याः बालशिक्षाकरणजनितश्रमनिवृत्तिः बालताडनादिना जायत इत्यस्य सर्वजनप्रसिद्धत्वात् । एतेन नन्दकुमारस्य भक्तवत्सलत्वमपि सूचितम् । अन्यथा सर्वेश्वरेण तेन बन्धनव्यसनस्वीकारासम्भवात् । इत्थञ्च भक्तवत्सलत्वलाभेन नमस्कर्तुः [5]स्वस्यापीष्टसिद्धिरावश्यिकीति ध्वन्यते ।

ननु [6]व्यसनयोग्येन व्यसनस्वीकारे कथं भक्तवत्सलत्वलाभ इत्यतः तत्पुनर्विशिनष्टि – नलिनीदलसुकुमारमिति । नलिनीदलसुकुमारत्वात् व्यसनायोग्य इति भावः । यद्वा स्तुत्यर्थमेतद्विशेषणम्, नतिवत् श्रुतेरपि [7]मङ्गलत्वादिति [8]श्लोकार्थः ॥

## प्राचीनमतेन मङ्गलस्य समाप्तिफलकत्वस्थापनम्

ननु मङ्गलस्य समाप्तिफलकत्वे मानाभावः । न चान्वयव्यतिरेकसहकृतप्रत्यक्षमेव मानमिति वाच्यम् । मङ्गलसत्त्वेऽपि क्वचित् समाप्तेरसत्वात् । मङ्गलं विना प्रमत्तनास्तिकादिकर्मणि तत्सत्त्वाच्च । नापि मङ्गलं चिकीर्षितकर्मसमाप्तिफलकम् । [9]तद्विना समाप्तिकामनया सर्वैः क्रियमाणत्वात् । [10]यत् यत्कामनया सर्वैः क्रियमाणं तत् तत्फलकम् । तृप्तिकामनया क्रियमाणतृप्तिफलकभोजनवदिति समाप्तिमूलकम् [11]अनुमानमिति वाच्यम् ।

---

1 °बन्धनेनव्यसनं क.
2 स च ख.
3 °यशोदाबन्धव्य° क.
4 श्रमहरणाल्पव्यसनेनाल्पस्य, ग.
5 स्वस्याप्यभीष्टकी सि° क.
6 व्यसनेऽपि न ख.
7 व्यसनयोग्यत्वमिति ख.
8 भावार्थः ख.
9 तदसमाप्ति° क.
10 यत् यत् यत्काम° ख.
11 अनुमितीति क.

असिद्धेः । प्रमत्तादिभिः तादृश[1]समाप्तिकामनया [2]मङ्गलस्याक्रियमाणत्वात् । नापि 'चिकीर्षितकर्मसमाप्तिकामो मङ्गलमाचरेदि' ति श्रुतिः मानमिति वाच्यम् । तस्याः प्रत्यक्षेणानुपलम्भादिति चेत्—

अत्र प्राञ्चः शिष्टाचारानुमिति [नुमित]श्रुतिरेव मङ्गलस्य समाप्तिफलकत्वे मानम् । तथा हि मङ्गलं चिकीर्षितकर्मसमाप्तिकामकर्तव्यत्वेन श्रुतिबोधितं तादृशसमाप्ति-कामशिष्टाचारविषयत्वात् । यदुक्तं [यदुक्त] [3]साध्यभाववत् तदुक्तं [तदुक्त] [4]साधना-भाववत्, यथा भोजनमिति व्यतिरेकिणि [व्यतिरेकिणा] 'चिकीर्षितकर्मसमाप्तिकामो मङ्गलमाचरेत्' [5]इत्याकारश्रुतिरनुमीयते । अत्र शिष्टत्वमिष्ट-साधनत्वांशेऽम्नातत्वम् [भ्रान्तत्वम्] । [6]न तु वेदप्रामाण्याभ्युगन्तृत्वम्, अनुपयोगात् । समाप्तिकामबौद्धाचार-विषय [7]चैत्यवन्दनादौ व्यभिचारवारणस्य तावतापि सम्भवात् । न च शिष्टाचारस्यैव प्रमाणत्वसम्भवात् । तदनुमित- श्रुत्युपपत्त्यासौ [श्रुत्युपन्यासो] व्यर्थ इति वाच्यम् । शिष्टाचारस्य स्वतन्त्रप्रमाणत्वाभावेन श्रुत्यनुमापकतयैव [8]प्रामाण्यमिति तदुपन्यासात् । अत-एव [9]स्मृतेरिवाचारस्यापि श्रुतिमूलकत्वेनैव प्रामाण्यमिति सिद्धान्तः । अन्यथा [10]शाक्तादि स्मृत्याचारयोरपि [11]प्रामाण्यापत्तेः ।

अत्र समाप्तित्वमेव फलतावच्छेदकम्, आरब्धं कर्म समाप्यतामिति कामनया मङ्गला-नुष्ठानात् लाघवाच्च । न तु निर्विघ्नसमाप्तित्वं, गौरवात् [12]प्रागुक्तकामे [13]तापामनुल्लेखात्

---

1 समष्टिकाम° क. 2 मङ्गलस्य क्रिय° क.
3 साध्याभाविवत् क. 4 साध्याभाविवत् क.
5 इत्यादिनाश्रुति° क. 6 तत्तु ग.
7 °चैत्रव° ग. 8 प्रमाणमिति ग.
9 स्मृतिरिव क. 10 शाक्तादिशक्त्योर्बौद्धादित्याचार° क.
11 प्रमाणभक्तैः ग. 12 प्रागुक्तकामनस्य ख.
13 'तापाः..........................फलत्वेन' इत्यन्तग्रन्थस्त्रुटितः ख.

[तस्य.नुल्लेखात्] । निर्विघ्नं समाप्यतामिति कामनापक्षेऽपि विघ्नाभावस्य न फलत्वेन तत्र विषयत्वम्, किन्तु समाप्त्युपायत्वेनैव । विघ्नाभावपूर्विका समाप्तिरस्त्विति तद्विवरणात् । इत्थञ्च विघ्नाभावो मङ्गलस्य द्वारम् । समाप्तिश्च चरमवृत्ति[चरमप्रवृत्ति]–ध्वंसरूपं सम्पूर्णत्वम् । 'आद्यप्रवृत्तिरारम्भ' इति जैमिनिना प्रारम्भलक्षणानुसारात् । इदं चास्मदादिकृतिसाध्यसमाप्तेरेव लक्षणम् । नातः परमेश्वरकृति[1]साध्य.रण्यकादिसमाप्तावव्याप्तिः । [2]चरमकृतिश्च स्वसमानाधिकरणस्वोत्तरवर्तिकृत्यनपेक्षा कृतिः । तेन प्रथमकृतिमात्रजनितकर्मसमाप्तौ नाव्याप्तिः । तत्र प्रथमकृतेरेव निरुक्तचरमकृतित्वात् । वस्तुतस्तूत्पत्तिक्षणसम्बन्धनाश एव समाप्तिरिति न कोऽपि दोषः ।

केचित्तु चरमवर्णध्वंसः ग्रन्थसमाप्तिरिति विशिष्य लक्षणमाहुः । यद्वा मङ्गलं सफलं, अविगीतशिष्टाचारविषयत्वात्, अग्निहोत्रवत् इत्यनुमानेन मङ्गलस्य सामान्यतः सफलत्वसिद्धौ किं तत्फलमिति विशेषजिज्ञासायां चिकीर्षितकर्मसमाप्तिरेव फलत्वेन कल्प्यते, उपस्थितत्वात् इष्टत्वाच्च । न च 'विश्वजिन्न्यायात्' स्वर्ग एव तत्फलं कल्प्यतामिति वाच्यम् । अदृष्टकल्पनापत्तेः, संभवति दृष्टफलकत्वे अदृष्टकल्पनाया अन्याय्यत्वात् । अन्यथा भोजनादावपि अविगीतशिष्टाचारविषयत्वेन स्वर्गकल्पनापत्तेः । न च प्रागुक्तान्वयव्यतिरेकव्यभिचारज्ञानसत्त्वे श्रुत्यादिनापि कथं समाप्तिफलकत्वबोध इति वाच्यम् । मङ्गलसत्त्वेऽपि यत्र न समाप्तिः तत्र [3] मङ्गलवैगुण्यं कल्प्यते । तदुक्तं अक्षपादैः- 'कर्मकर्तृसाधनवैगुण्यात्' (न्या. सू. २-१-५८) [4] फलाभाव इति । यत्र च मङ्गलं विनैव समाप्तिः तत्र जन्मान्तरीय[5]मेव तत् कल्प्यत इति न कोऽपि व्यभिचार इत्याशयादित्याहुः ।।

## नव्यमतेन मङ्गलस्य विघ्नध्वंसफलकत्वसमर्थनम्

नव्यास्तु मङ्गलस्य विघ्नाभाव एव फलम्। आरब्धे कर्मणि निर्विघ्नमस्त्विति

---

1 °साध्यद्व्यणुकादि° ख. 2 चरमकृतिः स्व° ग.

3 मङ्गलत्वेवैगुण्यं क. 4 फलभाव क.

5 °मेव तमेव तत् क.

कामनयैव मङ्गलानुष्ठानात् । समाप्तिफलकत्वेऽपि तस्य द्वारत्वेनावश्यकत्वाच्च । फलतावच्छेदकं च विघ्नाभावत्वम्, विघ्नप्रतियोगिकानित्याभावत्वम्, तेन विघ्नात्यन्ताभावान्योन्याभावयोः व्युदासः । न चादिमतो विघ्नध्वंसस्य मङ्गलजन्यत्वेऽप्यनादेः तत्प्रागभावस्य कथं तज्जन्यत्वमिति वाच्यम् । [1] योगक्षेमसाधारणमङ्गलजन्यत्वं ध्वंसस्येव प्रागभावस्यापि संभवतीति मूल एव [2] सुव्यक्तत्वात् । न च स्वतस्सिद्धविघ्नात्यन्ताभाववता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम् । पापभ्रमेण [3]कृतस्य प्रायश्चित्तस्येव तादृशमङ्गलस्य निष्फलत्वे क्षतिविरहात् । न च तादृशमङ्गलस्य निष्फलत्वादकरणापत्तिः । पापभ्रमेण प्रायश्चित्तस्येव विघ्नसन्देहेन तादृशमङ्गलस्य करणोपपत्तेः । प्रायश्चित्तादौ पापनिश्चयवत एवाधिकारित्वेऽपि मङ्गले संशयनिश्चयसाधारणविघ्नज्ञानवत एवाधिकारित्वात्, तथैव शिष्टाचारात् । न च मङ्गलं विनाऽपि गङ्गास्नानादितो विघ्नाभावस्य सम्भवात् व्यभिचारः तस्यापि मङ्गलत्वात् । तदुक्तं शशधरेण— 'विघ्नोत्सारणासाधारणं कारणं मङ्गलम्' इति । समाप्तिप्रतिबन्धकदुरितविशेषः विघ्नः, तस्योत्सारणमनित्याभावः, तदसाधारणं कारणं मङ्गलपदवाच्यमित्यर्थः । असाधारणपदं कालादिवारणाय । अत्रापि [4]शिष्टाचारेण श्रुत्यनुमानमपेक्ष्यते । मङ्गलं निर्विघ्नकामकर्तव्यत्वेन श्रुतिबोधितं निर्विघ्नकामशिष्टाचारविषयत्वात् । यदुक्तसाध्याभाववत् तदुक्तसाधनाभाववत्, यथा भोजनमिति व्यतिरेकिणा आरब्धे कर्मणि 'निर्विघ्नकामो मङ्गलमाचरेदि'ति श्रुतिरनुमीयते । अन्यथा मङ्गलस्य भोजनादेरिव लौकिकत्वापत्त्या आरम्भसमये [5]शिष्टानां [6]नियतानुष्ठानं स्यात् । [7]अथ मङ्गलेन [8]विघ्नाभावसम्पादनेऽपि समाप्तिः कुतः ? लोकावगत [9]बुद्धिप्रतिभादिरूपहेतुसमाजादेवेति गृहाण । इत्थञ्च मङ्गलसत्त्वेऽपि क्वचित् सामान्य[समाप्त्य]भावो लौकिकहेतुविरहादेव । न तु तत्र मङ्गलवैगुण्यकल्पनात् । मङ्गलं विनैव क्वचित् समाप्तिरपि स्वतस्सिद्धविघ्नात्यन्ताभाव-

---

[1] योगक्षेमत्वमेव सुव्यक्तत्वात् सिद्धस्य प्रतियोगः सिद्धस्य पालनं क्षेम° इत्यधिकः क.
[2] व्यक्तत्वात् ग.
[3] कृतप्रा° ग.
[4] शिष्टाचारेऽपि क.
[5] अभीष्टानां ग.
[6] नियतानुष्ठानेन ख.
[7] अप्यम° ग.
[8] विघ्नाभावादि° ग.
[9] 'बुद्धि प्रति प्रतिभा उत्तरोत्तरपरिस्फूर्तिः प्रतिभादि°' इत्यन्त ग्रन्थः अधिकः क.

**श्रीमता जयारामेण [1]युक्तिमौक्तिकगुम्फिता ।**
**पदार्थमाला [2]विदुषां [3]विलासाय [4]विधीयते ॥**

---

सहकृतलौकिकहेतुसमाजादेवेति न तत्र जन्मान्तरीयमङ्गलकल्पनम् इत्यपि लाघवमिति प्राहुः ॥

अध्येतृपरम्परया स्वकीर्त्यनुवृत्तये स्वनाम ग्रन्थनाम च दर्शयति – श्रीमतेत्यादि । श्रीमता-सकलशास्त्र[5]पारङ्गतत्वजनिततेजोविशेषवता । तत्वाद्वादिनिरासप्रसृतजयो रमत अस्मिन्नित्यन्वर्थजयरामसंज्ञावता । युक्तयः साधकबाधकप्रामाणोपन्यासरूपाः, [6]ता एव मौक्तिकानि, तैः गुम्फिता ग्रथिता । पदार्थानां [7]द्रव्यादीनां माला तत्प्रतिपादकशब्दानां विलक्षणविन्यासरूपा, तन्नामको ग्रन्थविशेष इति यावत् । विदुषां पण्डितानामेव । विलासाय-[8]अवलोकनादिजन्यसुखविशेषमुद्दिश्येति यावत् । वितन्यते – लिप्यादिव्यापार-[9]विषयीक्रियत इत्यर्थः ।

स्वग्रन्थे निवेशितायाः पदार्थमालासंज्ञायाः प्रवृत्तिनिमित्तभूतं प्रसिद्धमालासाम्यं युक्ति-[10]मौक्तिकेत्यनेन [11]विलासायेत्यनेन च दर्शितम् । प्रसिद्धमाला हि मौक्तिकगुम्फिता, जनानां विलासाय च [12]भवति । [13]इयश्च युक्तिमौक्तिकैः गुम्फिता,विदुषामेव विलासाय इति [14]विशेषः ॥

---

1 सूक्ति° ई.
2 बालानां उ.
3 ग्रहणाय उ, विनोदाय ऋ.
4 विधीयते अ. आ. इ. ऊ., निवध्यते उ.
5 °पारङ्गमत्व° क.
6 तत्र आ. उ.
7 'द्रव्यादीनां' नास्ति क.
8 दर्शनादि° ख.
9 विषयः क्रियते क.
10 मौक्तिकोपनेन ग.
11 विलासोपनेन ग.
12 जायते क. ख.
13 इत्थञ्च ख.
14 शेषः क. ग.

[1]अत्र साधर्म्य वैधर्म्याभ्यां [2]निखिलपदार्थतत्त्वज्ञानं निश्रेयसोपयोगीति पदार्थाः तद्धर्माश्च निरूप्यन्ते ।

प्रेक्षावत्प्रवृत्तये विषयाद्यनुबन्धचतुष्टयं सूचयन् शिष्यावधानाय कर्तव्यनिरूपणं प्रतिजानीते अत्रेत्यारभ्य निरूप्यन्त[3] इत्यन्तेन । अत्र - पदार्थमालासंज्ञकप्रकृतग्रन्थे, इदं च निरूप्यन्त इत्यनेनान्वयि । [4]निरूपणे हेतुमाह- साधर्म्यवैधर्म्याभ्यामिति । तृतीयार्थःप्रकारित्वम् । तथाच साधर्म्यवैधर्म्यप्रकारकं निखिलपदार्थतत्त्वज्ञानं निश्रेयसोपयोगि मोक्षप्रयोजकम् । आत्मतत्त्व[5]ज्ञानद्वारा कारणमिति यावत् । [6]अतोऽत्र पदार्थाः तद्धर्माश्च साधर्म्यवैधर्म्यरूपा निरूप्यन्ते । उद्देशलक्षणपरीक्षाभिः प्रतिपाद्यते[प्रतिपाद्यन्ते]इत्यर्थः ।

पदार्थतत्त्वज्ञानस्य मोक्षप्रयोजकत्वनिरूपणम्

ननु पदार्थतत्त्वज्ञान[7]मपि निश्रेयसहेतुरेव [8]न प्रयोजकमिति वाच्यम् इति चेत्-न । 'तमेव विदित्वातिमृत्युमेति' [श्वेताश्व-३-८] इति श्रुत्या आत्मतत्त्वज्ञानस्यैव मोक्षहेतुत्वप्रतिपादनात् । आत्मानमेव विदित्वा [9]आत्मानं विदित्वैव वा मृत्युं संसारमत्येतीति श्रुत्यर्थः । तत्रैवकारेणात्मेतर[10]पदार्थज्ञानस्य व्यवच्छेदात् । कुतो व्यवच्छेदः ? इति चेत्-न । आत्मनि देहादितादात्म्यज्ञानरूपमिथ्याज्ञानस्य संसारहेतुतया आत्म[11]विषयकतत्त्वज्ञानस्यैव मिथ्याज्ञाननिवर्तकत्वेन संसार- निर्वर्त्तकत्वं[निवर्तकत्वं]सम्भवति नान्यस्येति तद्व्यवच्छेदात् ।

---

1 तत्र आ. उ.
2 तत्त्वं निखिलपदार्थज्ञानं उ.
3 इत्यनेन ग.
4 निरूपेण क.
5 °ज्ञानाद्वा न कारण° ग.
6 अतोहेतोरत्र ग्रन्थे पदार्थाः क.
7 'अपि' नास्ति क.
8 कथं तमेव प्रयोजक° ग. कथं न इति ख.
9 'आत्मानं विदित्वैव वा' नास्ति ख.
10 °'पदार्थस्यान्त्ये वात्मज्ञानेतरस्य' इत्यधिकः ग.
11 विषयकं तत्त्वं ग.

ज्ञानस्य समानविशेष्यकत्वेनैव मिथ्याज्ञाननाशकत्वात् । [1] शुक्तिविशेष्यकतत्त्वज्ञानेनैव [2] शुक्तिविशेष्यकरजतत्वज्ञानस्य नाशदर्शनात् । न चैवमीश्वर(त्व)ज्ञानस्यापि संसारहेतु-मिथ्याज्ञान-निवर्तकत्वा[निवर्तकत्व] सम्भवेन मोक्षहेतुत्वं स्यादिति वाच्यम् । [3] इष्टत्वात् । न चैवं 'द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च' (मैत्रा ६-२२) इति श्रुतिविरोध इति वाच्यम् । ईश्वरो हि तत्त्वतो ज्ञातस्सन् मोक्षहेतुजीवात्मतत्त्वज्ञानं [4]सम्पादयतीत्यत्र तत्-श्रुतितात्पर्यात् । इत्थञ्च शास्त्रात् निखिलपदार्थतत्त्वज्ञाने सति सारासारविवेकेन [5]आत्मतत्त्व-(ज्ञान)जिज्ञासायां प्रयत्न[6]सम्पादितैः श्रवणमनननिदिध्यासनैः आत्मतत्त्वसाक्षात्कारो जायते यतो मोक्षः । [7]श्रुतिवाक्योत्पादात्मज्ञानं श्रवणम्; 'श्रोतव्यः श्रुतिवाक्येभ्यः' इति स्मृतेः । तेनासम्भावनानिवृत्तिः । श्रुतस्य युक्तिभिरनुचिन्तनं मननम्; 'मन्तव्यश्चोप-पत्तिभिः' इति स्मृतेः । तेन विपरीतभावनानिवृत्तिः । मतस्यार्थस्य नैरन्तर्येणानुसन्धानं निदिध्यासनम्; [8]तेनान्य[तेनाल्प]भावनानिवृत्तिः ।

ननु श्रुतिवाक्यादेवात्मश्रवणे स्मृतिपुराणेतिहासादीनां कोपयोग इति चेत्- न । संवादार्थे तदुपयोग इत्येके ।

मिश्रास्तु– 'श्रोतव्यः [9]श्रुतिवाक्येभ्यः' इत्यत्र श्रुतिशब्दोऽप्रामाण्यशङ्काशून्यशब्द-परः, न तु वेदमात्रपरः । तथा च यथाधिकारश्रुतिवाक्यात् स्मृतिवाक्यात् पुराणादेः वा लौकिकवाक्याद्वा देहेन्द्रियादिव्यतिरिक्तमात्मानं श्रुत्वा मनननिदिध्यासनाभ्यामात्मत-त्त्वसाक्षात्कारः [10]सम्पादनीयः । अत एव विदुरादयोऽपि प्राप्य तत्त्वज्ञानं मुक्ता इति [11]श्रूयते । अन्यथा वैदिकवाक्ये तेषामनधिकारात्, मुक्तत्वश्रवणं विरुध्येतेत्याहुः ।

नन्वात्मतत्त्व-[12]ज्ञानमपि न मोक्षत्वावच्छिन्ने हेतुः, तेन विनापि काशीमरणादिना मोक्षोत्पाद[मोक्षोत्पादात्] इति चेत् - न । काश्यां मरणावसरे श्रीविश्वेश्वरविहित-

---

1 °युक्ति° ग.
2 °युक्ति° ग.
3 ईश्वरोहि तत्त्वेन इष्ट° इत्यधिकः ख.
4 सम्पादयतामिति तत् ग.
5 आत्मजिज्ञा° क.
6 °सम्भावितैः क.
7 श्रुतिवाक्योत्पादज्ञान° ग.
8 तेन विपरीतभावना° ख.
9 श्रुतिवाक्योत्पादः ग.
10 सम्पादयामः ग.
11 श्रुतेयम् ग.
12 °ज्ञानं न क.

[1] तारकोपदेशादात्मतत्त्वज्ञानं ततो मोक्ष इत्यभ्युपगमात् । तदुक्तं चिन्तामणिकृता– 'काशीमरणस्य तत्त्वज्ञानजनकत्वं चागमादेव' इति (त चि. पृ. २०१०) ।।

### प्राच्यमतेन मोक्षलक्षणनिष्कर्षः

अथ किं पुनः निश्रेयसम् ? एकविंशतिदुःखाभावः तत् इत्येव हि [इत्यवेहि] । एकविंशति दुःखानि च शरीरं,षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखं चेति [2]मुख्यगौणभेदात् । षड्विषयेषु मनोविषयाः इच्छाद्वेष प्रयत्ना एव ग्राह्याः, न तु बुद्धिसुखदुःखानि । तेषां [3]पृथगुत्कीर्तनात् । न चात्मनोऽपि मनोविषयत्वेन दुःखत्वं स्यात् । तस्य [4] भोक्तृत्वेन विषत्वाभावात् । भोक्तृभिन्नत्वे सति भोगसाधनस्यैव विषयत्वात् विषसम्पृक्तमधुनो विषयत्ववत्सुखस्यापि [5] दुःखमिश्रितत्वात् दुःखत्वम् । न च स्वर्गस्य दुःखमिश्रितत्वात् दुःखत्वं न स्यात्, तस्यापि पातभीतिजन्य दुःखमिश्रितत्वात् । न चैवं 'यन्न दुःखेन संभिन्नं तत्सुखं स्व पदास्पदम्' इत्यनेन विरोधः । पातभीते [पातभीत] दुःखेतरदुःखासम्भिन्नत्वस्य तदर्थत्वात् । अत्रानित्यानां स्वरूपत एव नाशः, नित्यानां मनः प्रभृतीनां तु सम्बन्धत एव नाश इति प्राञ्चः ।

### नव्यमतेन मोक्षस्वरूपनिष्कर्षः

नव्यास्तु आत्यन्तिकदुःखध्वंसो मोक्षः । दुःखध्वंसे आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । स्वं मोक्षत्वेनाभिमतो दुःखध्वंसः, संसारकालीनदुःखध्वंसे [6] अतिव्याप्तिवारणायासमानकालीनान्तं दुःखध्वंसविशेषणम् । शुकमोक्षस्यास्मदादिदुःखप्रागभावसमानकालीनत्वात्, तत्रातिव्याप्तिवारणाय स्वसमानाधिकरणेति प्रागभावविशेषणम् । चरमदुःखकालीनस्योपान्त्यदुःखध्वंसस्य मोक्षत्वानुपगमे तु [7]तत्रातिव्याप्तिवारणाय कालीनान्तं दुःखस्यैव [8]विशेषणम्, [9]न तु ध्वंसस्य । तथा च

---

[1] °तारकोपदेशेनात्म° ख. [2] 'मुख्य' नास्ति. ग.
[3] प्रत्यगुत्कीर्तनात् ग.
[4] 'भोक्तृत्वेन.........................दुःखत्वं' इत्यन्तो ग्रन्थपातः क.
[5] दुःखमिति निश्रितत्वात् ग. [6] अतिप्रसङ्ग° ख.
[7] तत्रातिप्रसङ्ग° ख. [8] विशेषणेन क.
[9] न ध्वंसः स्यात् । तथा च क. तद्ध्वंसस्य ग.

स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखं चरममेव, [1]न तूपान्त्यं, तस्य स्वसमानाधिकरणचरमदुःखप्रागभावासमानकालीनत्वात् । अतः न तद्-ध्वंसेऽतिव्याप्तिः । न च तादृशदुःखध्वंसस्य मोक्षत्वे मानाभावः । 'तरति [2]शोकमात्मवित्' (छान्दो ८-१-३) 'तमेव विदित्वाऽतिमृत्युमेति' (श्वेताश्व ३—८) इत्यादिश्रुतेरेव मानत्वात् । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः' (न्या. सू. १ १. २.) इति । 'बाधनालक्षणं दुःखम्' (न्या. सू. १-१-२१) 'तदत्यन्तविमोक्षोऽपवर्गः' (न्या. सू. १-१-२२) इत्यादिसमानतन्त्रसूत्रेऽपि एतस्यैव मोक्षत्वप्रतिपादनाच्च इत्याहुः ।।

## दीधितिकृदुक्तमोक्षलक्षणखण्डनम्

दीधितिकृतस्तु - नित्यसुखाभिव्यक्तिर्मोक्षः । न च जीवात्मनि नित्यसुखे मानाभावः । 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमि'ति श्रुतेरेव मानत्वात् । आनन्दमिति नपुंसकनिर्देशः छान्दसः । ब्रह्मणो जीवस्यानन्दात्मकं रूपं स्वभावो नागन्तुको धर्म इति यावत् । तच्च रूपं च । मोक्षे आत्म[3]तत्त्वज्ञानान्निश्शेषकर्मक्षये[4]प्रतिष्ठितमभिव्यक्तं भवतीति श्रुत्यर्थः । न च [5]धर्मत्वेन सुखत्वेन कार्यकारणभावात् न श्रुत्या नित्यसुखप्रतिपादनम् । धर्मत्वावच्छिन्ननिरूपितकार्यताया जन्यसुखत्वेनैवावच्छेदात् विजातीयविजातीयसुखं प्रति विजातीयविजातीयधर्मत्वेन हेतुत्वावश्यकतया सामान्यकार्यकारणभावे मानाभावात् चेत्याहुः ।।

तच्चिन्त्यम् । [6]अशरीरं वावसन्तं न प्रियाप्रिये स्पृशत' (छान्दो. ८-१२-१) इति श्रुतिविरोधात् । श्रुतौ निरुपपदानन्दपदात् नित्यानन्दत्वप्रकारकबोधासम्भवेन नित्यसुखासिद्धेश्च । पदात् शक्यतावच्छेदकप्रकारकबोधस्यैवोत्पादात् । न च 'नित्यं विज्ञानमानन्दं ब्रह्म' (बृह.३-९-३४) तीश्वरपरश्रुतौ नित्यज्ञानस्य ज्ञानत्वेन बोधवत् प्रकृतश्रुतावपि मोक्षदशायां शरीराद्यभावे तज्जन्यानन्दबाधात् नित्यानन्दस्यैवानन्दत्वेन बोध इति वाच्यम् । दृष्टान्ते नित्यज्ञानसाधकस्य ज्ञानत्वेन कर्मत्वेन कार्यकारणभावलक्षणतर्कस्य सत्त्वादुचितः सामान्यतस्तस्य बाधः । दार्ष्टान्तिके तु नित्यानन्दसाधकतर्कविरहेण सामान्यतोऽपि

---

[1] तद्रूपात्यन्तस्य क.    [2] शोकमात्मविविशत् ग.
[3] तत्त्वं ग.    [4] 'प्राप्ते' इत्यधिकः ग.
[5] धर्मत्वसुखत्वाभ्यां क.    [6] शरीरं ग.

नित्यानन्दबोधासम्भवात् । तर्कसहकारेणैव श्रुतेरर्थप्रमापकत्वात् । अन्यथाऽतिप्रसङ्गात् । न चानन्दपदाल्लक्षणया नित्यानन्दबोधः । नित्यानन्दस्य प्रमाणान्तरासिद्धतया तत्र लक्षणासम्भवात् । किञ्च धर्मत्वसुखत्वाभ्यामनादिपरम्परागृहीतकार्यकारणभावलक्षणप्रतिकूलतर्कपराहतं नित्यानन्दसाधनम् । न च धर्मत्वजन्यसुखत्वाभ्यामेव कार्यकारणभावः । स च न नित्यानन्दविरोधीति वाच्यम् । नित्यानन्दस्यासिद्धतया कार्यतावच्छेदके तद्व्यावर्तकजन्यत्वविशेषणोपादानानौचित्यात् ।

यच्चोक्तं विजातीय[1]सुखत्वेन विजातीयधर्मत्वेन [2]हेतुहेतुमद्भावावश्यकतया सामान्यकार्यकारणभावोऽसिद्ध इति - तन्न । *[3]यद्विशेषयोरिति न्यायेन तादृशसामान्यकार्यकारणभावस्यापि सिद्धेः । अपि च नित्यसुखाभिव्यक्तेः [4]जन्यायाः मोक्षदशायां शरीराद्यभावादुत्पादासम्भवः । इत्थञ्च [5]नित्यसुखाभिव्यक्तिः [6]मोक्ष इति रिक्तं वचः इति समासः ।

एतेन दीधिति[7]कारणां [8]'नित्यं विज्ञानमानन्दं ब्रह्म' [बृह-३-९-३४]ति श्रुतिबलादीश्वरे [9]नित्यसुखव्यवस्थापनमपि प्रत्युक्तम् ।

यत्त्वत्र भवानन्दः विज्ञानपदं विशेषेण जानातीति कर्तृव्युत्पत्त्या ज्ञानवत्परम् । आनन्दपदमप्यानन्दोऽस्यास्तीति ..............[मत्वर्थीयाच्] प्रत्ययान्ततयाऽऽनन्दव-

---

[1] 'विजातीय सुखं प्रति विजातीय विजा' इत्यधिकः ख.

[2] °हेतुत्वाव° क.

[3] यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरसामान्यकार्यकारणभावे घटकुलालविशेषयोः कार्यकारणभावः न्यायेन यथा घटकुलालविशेषयोः कार्य°' इत्यधिकः ख. ग.

[4] जन्यानां ग. जन्यायाः शरीराद्यभावाः अपि व्यक्तिज्ञानादु° इत्यधिकः क.

[5] 'नित्य' नास्ति क. [6] मोक्षादतिरिक्तं ख. ग.

[7] °कारीयं, क. ° कारीय, ग.

[8] 'नित्यं' नास्ति क. [9] नित्यं सुख° ग.

---

* यद्विशेषयोः कार्यकारणभावः सः तत्सामान्ययोरिति भावः ।

त्परमिति सर्वतार्किकसम्मतम् । तथा च विज्ञानानन्दविशिष्टे ब्रह्मणि नित्यत्वा[1]न्वयात् नित्यज्ञानस्य (च)नित्यानन्दस्यापि तत्र सिद्धिरिति—

तन्न । अनादिपरम्परागृहीतधर्मत्वसुखत्वाभ्यां कार्यकारणभावे जागरूके आनन्दे नित्यत्वा[2]न्वयासंभवात् । तस्मादुभयत्रापि श्रुतावानन्दपदमुभयवादिसिद्धदुःखाभाववल्लाक्षणिकमिति तार्किकरीत्या सर्वमवदातम् । अन्यथाऽपसिद्धान्तस्य दुःखपरिहारादिति दिक् ॥

## अनुबन्धचतुष्टयप्रतिपादनम्

नन्वत्र[3] विषयाद्यनुबन्धचतुष्टयं कथं सूचितमिति चेत्- उच्यते । निरूप्यतयोक्ताः पदार्थतद्धर्मा अस्य ग्रन्थस्य विषयः । [4]प्रतिपाद्यार्थो विषय इति तल्लक्षणात् । निःश्रेयसं मुख्यं प्रयोजनम् । पदार्थ[5]तत्त्वज्ञानं (वा) अवान्तरप्रयोजनम् । ग्रन्थ[6]विषययोः [7]प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । अर्थाः [अर्थात्] निःश्रेयसकामोऽधिका(रः)री इति कथश्चित् सूचितम् । न च ग्रन्थे प्रवृत्तिरिष्टसाधनताज्ञानेनैव स्यादिति किं [8]विषयादिचतुष्टय(क) ज्ञानेनेति वाच्यम् । ग्रन्थप्रवृत्तौ विषयादिचतुष्टयज्ञानजन्येष्टसाधनताज्ञानस्यैव फलबलेन हेतुत्वकल्पनात् । तदुक्तं—

ज्ञातार्थज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धस्सप्रयोजनम् ॥

---

1 '°न्वयात् । प्रमेयो घट इत्यत्र घटत्वविशिष्टे प्रमेयत्वान्वयात् । घटत्वांशेति प्रमेयत्वान्वयस्संभवति । यन्नित्यज्ञानानन्दस्यापि' इत्यधिकः क.

2 °न्वयसं° क. 3 विषयानु° ख.

4 प्रतिपाद्यो क. 5 'तत्त्व' नास्ति क.

6 प्रयोजनयोश्च, ग. प्रयोजनयोजनयोश्च, क.

7 प्रयोज्यप्रयोजकभावः क. 8 'विषयादि' नास्ति क.

## पदार्थोद्देशवाक्यम्

[1]तत्र पदार्थाः — द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः ।

---

इति । अर्थः प्रयोजनम्, ग्रन्थे सम्बध्यतेऽसाविति योगात् सम्बन्धो विषयः । अत एव विषयादिज्ञानाधीनशुश्रूषा-जप [जन्य] श्रुतिविषयसन्दर्भो ग्रन्थ इति तल्लक्षणं सङ्गच्छते ।

ननु तथापि निरूपणप्रतिज्ञया कथं [2]शिष्यावधानमिति चेत्—न । अपूर्वार्थप्रतिज्ञायां विषयान्तरमनो-विचित्र[विनिग्रह]रूपं शिष्याणामवधानं जायत इत्यस्य सार्वजनीनत्वात् इत्यलं [अ] प्रकृतेन ।।

निरूपणप्रतिज्ञायां प्रधानतयोक्ताः पदार्थाः क इति शिष्याकाङ्क्षायां प्रथमं पदार्थनिरूपणमारभते तत्रेत्यादिना । तत्रेति निर्धारणसप्तम्यन्तम् । तथा च पदार्थतद्धर्मयोः मध्ये पदार्थाः द्रव्यादयः सप्तेत्यर्थः । तच्छब्दस्य सर्वनामतया बुद्धिस्थवाचकत्वाल्लाघवाच्च । सामान्यतः पूर्वपरामर्शित्वेनैव नियमः, न त्वव्यवहितपूर्वपरामर्शित्वेन विशेष्यपरामर्शित्वेन वा, गौरवात् । तेन प्रकृते तत्रेत्यनेन पदार्थतद्धर्मयोरेव परामर्शः, न तु तन्निरूपणस्येति भावः । न च तथानियमेऽपि पदार्थतद्धर्मयोरिव तन्निरूपणस्यापि परामर्शः स्यात्, पूर्वत्वाविशेषादिति वाच्यम् । यत्र तात्पर्यं तस्यैव परामर्शात् । अत एव पूर्वोपन्यस्त[3]सर्वेष्वेव तात्पर्ये तत्र सर्वपरामर्शोऽप्युचित एव । यथा—'दधिमधुघृतधानोदकतण्डुलास्तत्संसृष्टं प्राजापत्यमि'त्यत्र तदित्यनेन दध्यादेः ।

केचित्तु प्रतिज्ञातं पदार्थतद्धर्मनिरूपणमारभते—तत्रेत्यादि । तत्रेति *भावसप्तम्यन्तं

---

[1] अत्र — अ. आ. ऋ. [2] 'शिष्या...रूपं' इत्यन्तस्त्रुटितः क.
[3] °सर्वस्येव — ग.

---

* 'यस्य च भावेन भावलक्षणमि'[पा. सू. २-३-३८]ति सूत्रविहितसतिसप्तम्यन्त मित्यर्थः ।।

[1]अत्र [2]पदार्थमुद्दिश्य द्रव्यादिविधानात् द्रव्याद्यन्यतमत्वेन

---

कर्तव्य इत्यध्याहारः । तथा च पदार्थतद्धर्मनिरूपणे कर्तव्ये पदार्थाः द्रव्यादयः सप्तेत्यादि-पदार्थनिरूपणम् । [3]धर्मनिरूपणं तु यद्यपीत्यादिना अग्रे करिष्यत इति भाव इति व्याचख्युः ॥

ननूद्देश्यविधेयभावस्थले विधेयस्योद्देश्यव्यापकत्वं लभ्यते । तथा च प्रकृते[4]ऽपि पदार्थमुद्दिश्य द्रव्यादीनां विधानात् तेषां तद्व्यापकत्वं [5]वाच्यम् । तच्च न संभवति । यः पदार्थः तद्द्रव्यं गुणो वेत्यादिव्यापकतायां मिथो व्यभिचारादित्यत आह—अत्र इत्यादि । अत्र पदार्थाः द्रव्यादय इति विभागवाक्ये । पदार्थमुद्दिश्य इति । नन्विह पदार्थस्य नोद्देश्यत्वम्, नापि द्रव्यादीनां विधेयत्वम् ।

"यच्छब्दयोगः प्राथम्यं भवेदु[6]द्देश्यलक्षणम् ।
तच्छब्दयोगौन्तर्यं स्यात् विधेयस्य लक्षणम् ॥"

इति तल्लक्षणानाक्रान्तत्वादिति चेत्-न । लक्ष्यानुरोधेन हि लक्षणकरणम्, न तु लक्षणानुरोधेन लक्ष्यव्यवस्था । तथा च यत्र [7]प्राथम्यं तदुद्देश्यम्, यत्रानन्तर्यं तद्विधेयम् । [8]यत्तच्छब्दयोगस्त्वौत्सर्गिको न नियतः । यद्वा उद्देश्य विधेयत्वे स्वरूपसम्बन्ध विशेषौ लाघवात् । अत एव 'यजेत स्वर्गकाम' इत्यादौ स्वर्गकामस्योद्देश्यत्वं,यागस्य च विधेयत्वं सङ्गच्छते । इत्थश्च प्रकृते पदार्थद्रव्याद्योरुद्देश्यविधेयतायां न कापि क्षतिरिति दिक् । द्रव्याद्यन्यतमत्वेनेति । यः पदार्थः सः द्रव्यादिसप्तान्यतम इत्येवरूपं द्रव्यादीनां पदार्थव्यापकत्वं तद्वाक्यजन्यार्थबोधेन [9]विषयीक्रियत इत्यर्थः । ननु द्रव्याद्यन्यतमत्वं

---

[1] तत्र अ. ऋ. [2] पदार्थमात्रमु° अ. ऋ.
[3] पदार्थनि° क. [4] 'अपि' नास्ति क.
[5] 'वाच्यम्' नास्ति क. [6] द्देशल° ग.
[7] प्राथम्यन्तं ग. [8] यत्र श° क. ग.
[9] विषयः क्रि° ग.

पदार्थव्यापकत्वं लभ्यते । द्रव्याद्यन्यतमत्वं च द्रव्यादिभेदसप्तकाभाववत्वमिति नाप्रसिद्धिः ।

उद्देश्यव्यापकत्वं विधेये भासत इति निरूपणम्

ननूद्देश्यविधेयभावस्थले विधेयतावच्छेदकरूपेण विधेयस्योद्देश्यव्यापकत्वं लभ्यते । [1]अन्यथा 'वह्निमान्' 'धूमवानि'त्यादौ विधेयस्य द्रव्यत्वा-

---

द्रव्यादिसप्तभिन्नत्वम् । तच्चाप्रसिद्धम् । सप्तातिरिक्तस्याप्रसिद्धेरत आह द्रव्यादीति । तत्तदधिकरणप्रसिद्धद्रव्यादिभेदसप्तकवृत्तिसप्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववत्वं द्रव्याद्यन्यतमत्वमित्यर्थः । द्रव्ये [2]गुणादिभेदषट्कमस्ति, न तु द्रव्यभेदः । एवं गुणादौ द्रव्यादिभेदषट्कम्, न तु गुणादिभेद इति भेदसप्तकस्य कुत्राप्यसत्त्वादिति भावः ।

द्रव्याद्यन्यतमत्वेन पदार्थव्यापकत्वं लभ्यत इत्युक्तम्, तत्राक्षिपति नन्विति । धूमवान्, वह्निमानित्यादौ विधेयतावच्छेदकवह्निमत्वादिना वह्निमतो धूमवद्व्यापकत्वं तादात्म्यसंबन्धावच्छिन्नं लभ्यते । धूमवन्तमुद्दिश्य वह्निमतो धर्मिणस्तादात्म्येन विधानात् । यदि च धूमवन्तमुद्दिश्य वह्निरूपविधानं तदा विधेयतावच्छेदकं वह्नित्वं, तेनैव च धूमवद्व्यापकत्वम्, यः धूमवान् तत्र वह्निरित्येवं रूपं लभ्यते । उद्देश्यव्यापकत्वमप्युद्देश्यतावच्छेदकावच्छिन्नव्यापकत्वं बोध्यम् । इतरथा 'वह्निमान्' 'धूमवानि' त्यादावार्द्रेन्धनप्रभववह्निमत्वावच्छिन्नव्यापकत्वस्य धूमवति सत्त्वेन [3]प्रमाणत्वापत्तिरिति । अन्यथेति । यत्किञ्चिद्रूपेण विधेयस्योद्देश्यव्यापकत्वे वह्निमान्, धूमवानित्यादौ विधेयस्य धूमवतो धूमस्य वा द्रव्यत्वेन सत्त्वेन प्रमेयत्वादिना वा व्यापकत्वलाभः

---

[1] 'अन्यथा' नास्ति ई. ऊ.

[2] 'गुणादि......न तु' इत्यन्तस्त्रुटितः ख.

[3] 'प्रमाण...सत्त्वेन' इत्यन्तस्त्रुटितः क.

[1]दिनोद्देश्यव्यापकत्व[2]लाभप्रसङ्गात् । [3]इष्टापत्तौ नियमपरमपि तद्वाक्यं प्रमाणं स्यात् । आधिक्येऽपि प्रकृते अष्टान्यतमत्वादिना व्यापकत्व-

---

स्यादित्यर्थः । *इष्टापत्तावपीति । वह्निमान्, धूमवानित्यादौ द्रव्यत्वादिना व्यापकत्वे इष्टापत्तौ तद्वाक्यं नियमतात्पर्यकं स्यात् । तत्रापीष्टापत्तौ तद्वाक्यं प्रमाणं स्यादित्यक्षरार्थः । ननु तद्वाक्यस्य द्रव्यत्वादिना नियमपरत्वं प्रमाणत्वं[च] इष्टमेवेत्यरुचेर्दोषान्तरमाह- आधिक्येऽपीति । [4]यद्वा नन्वन्यत्र विधेयतावच्छेदकरूपेणैव विधेयस्योद्देश्यव्यापकत्व[5]लाभोऽस्तु, प्रकृते तु द्रव्यादि[6]सप्तान्यतमत्वेनैव व्यापकत्वं वाच्यम् । अन्यथानुपपत्त्या तथैव स्वीकारादित्यरुचेर्दोषान्तरमाह- आधिक्येऽपीति । अपिः अष्टान्यतमत्वादिनेत्यनेन सम्बध्यते । तथा च यदि यत्किञ्चिद्रूपेण विधेयस्योद्देश्यव्यापकत्वं तदा पदार्थानां सप्ताधिक्यसंभावनायां प्रकृते पदार्थाः द्रव्यादय [7]इति विभागवाक्ये सप्तान्यतमत्वेन [8]इवाष्टान्यतमत्वादिनापि व्यापकत्वं सम्भवतीति द्रव्यादि[9]सप्तान्यतमत्वेन [10]व्यापकत्वबोधात् पदार्थानां न्यूनसङ्ख्याव्यवच्छेदलाभेऽप्यधिकसङ्ख्याव्यवच्छेदलाभोऽनुपपन्न इति भावः । ननु यत्किञ्चिद्रूपेण विधेयस्योद्देश्यव्यापकत्वे उक्तदोषादस्तु विधेयता-

---

1 °दिना धूमादिमतो व्याप° उ. दिनाव्याप° आ.
2 '°लाभ°' नास्ति ई.
3 'इष्टा...स्यात्' इत्यन्तस्त्रुटितः अ. इ. ऊ.
4 'यद्वा......आधिक्येऽपीति' इत्यन्तस्त्रुटितः, ग.
5 °लाभात्, प्रकृते द्रव्यादि° क. 6 °सत्त्वान्यत° क.
7 'इति...बोधात्' इत्यन्तस्त्रुटितः क. 8 वाऽष्टान्य° ग.
9 °सामान्य° ग. 10 व्यापकत्वे बो° ग.

---

* व्याख्यानानुसृतपाठो मूले नोपलभ्यते ।

संभवाच्च । प्रकृते [1]च द्रव्याद्यन्यतमत्वेन न विधेयता,[2]शब्दात् [3]तेनानुपस्थितेः । किन्तु द्रव्यत्वादिना । तेन [4]रूपेण व्यापकत्व[5]न्तु बाधि[6]तमिति चेत्– [7]न । विधेयतासमव्याप्तरूपेण व्यापकत्वस्य संसर्गतया भान-

---

वच्छेदकेनैव व्यापकत्वम्, प्रकृतेऽपि द्रव्यद्यान्यतमत्वं विधेयतावच्छेदकमेवेति तेन व्यापकत्वबोधःनानुपपन्न इत्यत आह– प्रकृते चेति । न विधेयता इति । द्रव्याद्यन्यतमत्वं [8]न [9]विधेयतावच्छेदकमित्यर्थः । शब्दात्–पदार्थाः [10]द्रव्यादयः इति शब्दात् । तेन–द्रव्याद्यन्यतमत्वेन । किन्तु द्रव्यत्वादिनेति । अत्रापि विधेयतेति [11]प्राक्तनं सम्बध्यते । तथा च द्रव्यत्वादिकमेव विधेयतावच्छेदकम् । शब्दात् तेन रूपेण द्रव्यादीनामुपस्थितेः । शब्दात् विधेयस्य येन रूपेणोपस्थितिः तस्यैव विधेयतावच्छेदकत्वादिति भावः । तेन–द्रव्यत्वादिना । आक्षेपं परिहर्तुं समाधत्ते– विधेयतेति । विधेयतासमव्याप्तरूपं विधेयतावच्छेदकमेव । क्वचित् [12]तद्भिन्नशब्दानुपस्थितमपीति तादृशरूपावच्छिन्नव्यापकत्वस्य शाब्दबोधे प्रकारतया भानासम्भवात् । [13]इह घटतत्संयोगावित्यादाविव शब्दो-[13]पस्थितस्यापि संसर्गतया भाने बाधकाभावाच्चोक्तं संसर्गतयेति । तथा च धूमवान् वह्निमानित्यादौ धूमवद्व्यापक[14]तावच्छेदकवह्निमत्वावच्छिन्नतादात्म्येन वह्निमान् धूमवानिति

---

[1] 'च' नास्ति अ. आ. इ. उ. ऋ.
[2] 'दृष्टचादि' इत्यधिकः उ.
[3] तदनुप° ई.
[4] 'रूपेण' नास्ति इ.
[5] 'तु' नास्ति अ. इ.
[6] तमेवेति ई.
[7] 'न' नास्ति अ.
[8] 'न' नास्ति क.
[9] विधेयतावत् ('छेदकमित्यर्थः' नास्ति) क.
[10] 'द्रव्यादयः...विधेयतावच्छेदकमेव इत्यन्तस्त्रुटितः क.
[11] प्राक्तं ख.
[12] 'तत्' नास्ति क.
[13] 'इह . . . . दाविव' इत्यन्तस्त्रुटितः क. ग.
[14] °स्थितसंयोगस्यापि क.

स्वीकारेण प्रकृते द्रव्याद्यन्यतमत्वेन तल्लाभात् । यद्वा [1]सर्वत्र विभाग-

बोधः । प्रकृते च पदार्थ[2]व्यापकताच्छेदकद्रव्याद्यन्यतमत्वावच्छिन्नतादात्म्येन द्रव्यादि-मत्प्रकारवन्तः पदार्था इति वाक्यार्थबोध [3]इति । तल्लाभात्– द्रव्यादीनां पदार्थव्यापकत्व-लाभात् । ननूद्देश्यविधेयभावस्थले उद्देश्यव्यापकतायाः प्रकारत्वेन भानस्य सर्वानुभव-सिद्धत्वात् संसर्गतया भानस्वीकारे *मानाभावः । न च प्रकृते द्रव्याद्यन्तमत्वस्य शब्दा-नुपस्थिततया तदवच्छिन्नव्यापकतायाः प्रकारत्वेन भानानुपपत्तिरेव संसर्गतया भानस्वीकारे मानमिति वाच्यम् । अनुपपत्तिशतेनाप्यनुभवस्य वारयितुमशक्यत्वादित्यरुचेराह— यद्वेति ।

गुरवस्तु– 'ननु प्रकृते द्रव्यादीनां विधेयता द्रव्यादिप्रातिस्विकरूपेण द्रव्यादय इति समूहालम्बनधीविषयत्वेन वा । नाद्यः, तथासति द्रव्यत्वगुणत्वाद्यवच्छिन्नविधेयताभेदात् वाक्य[4]भेदापत्तेः । द्रव्या[5]द्यन्यतमत्वस्य तत्समव्याप्तत्वासम्भवाच्च । नान्त्यः, तादृशधीविशेष्यत्वस्य शब्दानुपस्थितेः । उपस्थितौ वा तेनैव व्यापकत्वमस्तु, न तु शब्दानुपस्थितद्रव्याद्यन्यतमत्वेनेत्यरुचेराह–यद्वेति' इत्याहुः ।।

प्रथमद्वितीयपदश्रवणकाले यावद्विभजनीयानामनुपस्थित्या तत्र पदे तावदन्यतमत्वाव

---

[1] सर्वं वि° अ. आ. ऋ. [2] °व्यापकद्रव्य° क. ग.

[3] 'अत्र व्यापकत्वस्योपदर्शितसंसर्गकोटौ प्रविष्टत्वात् संसर्गतयाभाव (भान)मिति बोध्यम्' इत्यधिकः क. ख.

[4] °भेदापत्तिः क. ग.

[5] °द्यन्यतमत्वं गुणादौ विद्यते । तत्र द्रव्यत्वाद्यवच्छिन्नविधेयता नास्तीति, तस्य तत्समव्याप्तत्वासंभवाच्चेद्यन्यतमत्वस्य' इत्यधिकः ख. ग.

---

* गादाधरीयपक्षतायां––सम्यग्विवेचितोऽयं विषयः ।

**वाक्ये चरमपदे [1]तावदन्यतमत्वे निरूढलक्षणास्वीकारात् नैष[2] दोषः ।**

च्छिन्ने निरूढलक्षणा न संभवतीत्यतः चरमपद इति । तावदन्यतमत्वे– तावदन्यतमत्व-रूपलक्ष्यतावच्छेदकावच्छिन्ने । तत्र लक्षणा(न)भ्युपगमादिति भावः । निरूढलक्षणेति । इत्थञ्च प्रकृतेऽप्यभावपदे द्रव्याद्यन्यतमत्वावच्छिन्ने निरूढलक्षणास्वीकारेण द्रव्याद्यन्यतमत्वेन द्रव्यादीनामुपस्थिति[3]सम्भवात् । तदपि विधेयतावच्छेदकमेवेति तेनैव पदार्थव्यापकत्वं निष्प्रत्यूहम् । तथा च सर्वत्र विधेयतावच्छेदकरूपेणैव विधेयस्योद्देश्य-व्यापकत्वात् वह्निमान् धूमवानित्यादौ विधेयस्य द्रव्यत्वादिना व्यापकत्वप्रसङ्गरूपः प्रागुक्त-दोषो नेत्यर्थः । एतत्कल्पे व्यापकत्वस्य प्रकारतयैव भानात् । धूमावान् वह्निमानि-त्यादौ[4] तादात्म्यसंबन्धावच्छिन्नधूमवद्व्यापकताशालिवह्निमत्वावच्छिन्नवान् धूमवानिति बोधः । प्रकृतेऽपि तादात्म्यसंबन्धावच्छिन्नपदार्थव्यापकताशालिद्रव्याद्यन्यतमत्वावच्छिन्न वन्तः पदार्था इति बोधः । उद्देश्यधूमवदादौ विधेयतावच्छेदकावच्छिन्नवत्ता च तादा-त्म्यसंबन्धेन । निरूढलक्षणात्वं चान्वयाद्यनुपपत्तिप्रतिसन्धानं विना यतोऽर्थविशेषः प्रती-यते तत्त्वमिति निगर्वः ॥

**ननूद्देश्यविधेयभावस्थले[5] विधेयस्योद्देश्यव्यापकत्वबोधः शक्त्या लक्षणया वा ।**

---

[1] °दन्यतमत्वेन अ. आ. इ., 'अन्यतमत्वे' नास्ति ई.

[2] 'एष' नास्ति अ इ. ई. [3] सम्भवति क. ग.

[4] 'धूमवव्द्यापकतावच्छेदकवह्निमत्वावच्छिन्नाभिन्नो धूमवानित्यभेदसंसर्गको बोधः । प्रकृतेऽपि पदार्थव्यापकतावच्छेदकेत्या (द्रव्या) दिसप्तान्यतमत्वाव-च्छिन्नाः भिन्नाः पदार्थाः इत्यभेदसंसर्गक एव बोधः । उभयत्रापि विधेयस्यो-(विधेयो) द्देश्यव्यापकत्वं तादात्म्येनेत्युक्तप्रायम् । अत्र व्यापकत्वस्योप-दर्शितप्रकारक (पदार्थ) कोटौ प्रविष्टत्वा (त्) प्रकारतया भानमिति बोध्यम् । निरूढलक्षणात्वं' इत्यस्ति क. ख.

[5] 'विधेयस्य...............उद्देयपदे' इत्यन्तस्त्रुटितः ग.

[1]एतेन द्रव्यत्वाद्यवच्छिन्नविधेयताभेदेऽपि न क्षतिः । [2]तथाप्याधिक्यव्यवच्छेदो [3]लब्धः, [4]परीक्षालभ्यः *विभाजकोपाधीनां [5]मिथोऽसामानाधि-

---

नाद्यः; उद्देश्यविधेयपदयोः तत्र शक्तिविरहात् । नान्त्यः; उद्देश्यपदे विधेयपदे वा लक्षणायां विनिगमकाभावादिति चेत् – न । बोधे उद्देश्यस्य [6]मुख्यविशेष्यत्वात् तत्पदे [7]लक्षणाया अयुक्तत्वेन विधेयपद एवोद्देश्यव्यापकत्वविशिष्टविधेयतावच्छेदकावच्छिन्नलक्षणायाः तद्बोधसम्भवात । न च वीप्सितपदस्येवोद्देश्यपदसमभिव्याहृतविधेयपदस्यापि व्यापकत्वे शक्तिरस्त्विति वाच्यम् । दृष्टान्ते 'नित्यवीप्सयोः' [पा. सू. ८-१-४] इत्यनुशासनस्य व्यापकत्वशक्तिग्राहकस्य सत्त्वादत्र च तद्विरहात् ॥

केचित्तु–उद्देश्यविधेयसमभिव्याहारवशादुपस्थितस्योद्देश्यव्यापकत्वस्य मनसैव विधेयतावच्छेदकावच्छिन्नसंसर्गबोध इत्याहुः ।

एतेनेति । यद्वेति कल्पाश्रयेण, द्रव्यत्वाद्यवच्छिन्नविधेयताभेदे या वाक्यभेदरूपा क्षतिः सापि नेत्यर्थः । द्रव्याद्यन्यतमत्वावच्छिन्नविधेयताया एकस्या एव सप्तसु स्वीकारादिति भावः । शङ्कते–तथापीति । द्रव्याद्यन्यतमत्वेन पदार्थव्यापकत्वलाभेऽपीत्यर्थः । विभाजकोपाधीनाम्– द्रव्यत्वगुणत्वादीनाम् । परीक्षालभ्यः- परीक्षयैव

---

1 'एतेन........क्षतिः इत्यन्तस्त्रुटितः,                                        अ. इ.
2 अथाप्या° ऊ. तथाधि° अ.    ननु तथापि भवत्वाधि°    ई.
3 लाभः    ई.
4 'परीक्षालभ्यः' नास्ति अ. आ. इ. ई.    ऊ. ऋ.
5 'प्रकृते' इत्यधिकः    अ. इ. उ. ऋ.
6 मुख्यत्वात्    ख.    7 लक्षणामात्रायु°    ग.

---

* व्याख्यानुसारेण परीक्षालभ्य इति पदं विभाजकोपाधीनामित्यनन्तरं पठनीयम् ॥

[1]करण्यात्मकन्यूनत्वव्यवच्छेदः [2]कुतो [3]लभ्यः । पृथङ्निर्देशस्य प्रमाण-[4]प्रमेयेत्यादाविव [5]तेषां सामानाधि [6]करण्येऽपि सम्भवात् । [7]अन्यतमत्व-बलादेव[8] [9]न्यूनत्वे पृथिवीघटान्यतरत्ववत् तस्यासम्भवात् । घटभेद-

---

[10]लब्धुं योग्यः । इदञ्च न्यूनत्वव्यवच्छेदविशेषणम् । कुत इत्यनेन उक्तव्यापकत्व-बोधादपि स न संभवतीति सूचितम् । ननु द्रव्यगुणेत्यादिपृथङ्निर्देशादेव पदार्थन्यूनत्व-व्यवच्छेदलाभः स्यादत आह-पृथङ्निर्देशस्येति । तेषां- विभाजकोपाधीनाम् । संभ-वात्- प्रकृतेऽपि संभवात् । शङ्कां परिहरति- अन्यतमत्व इति । पदार्थव्यापकताव-च्छेदकद्रव्याद्यन्यतमत्वबलादेव निरुक्तन्यूनत्वव्यवच्छेदलाभ इत्यर्थः । उद्देश्यव्यापक-तावच्छेदकतावदन्यतमत्वस्य न्यूनत्वव्यवच्छेदव्याप्यत्वात् । व्याप्येन च व्यापकस्योन्नय-नादिति भावः । इत्थञ्च व्यापकस्य [11]न्यूनत्वव्यवच्छेदस्य निवृत्तौ [12]व्याप्यीभूततावदन्य-तमत्वस्य निवृत्तिरावश्यकीत्यत आह—न्यूनत्व इति । पदार्थानां न्यूनत्वे इत्यर्थः । पृथिवीघटेति । पृथिवीभेदवृत्तिघटभेदवृत्तिद्वित्वावच्छिन्नाभाववदित्यर्थः । तस्यद्रव्य-

---

1 °करण्यरूपन्यून° अ. आ. इ. उ. ऊ. ऋ. 2 'तु' इत्यधिकः अ. आ. इ. उ.
3 'लभ्यः' नास्ति अ. आ. इ. उ. ऋ. 4 °प्रमेयेत्यादीनामेव ई.
5 'तेषां सामानाधिकरण्येऽपि' नास्ति इ. ऊ.
6 °करण्येनापि आ. ई.
7 'अत्र (हि, ऊ.) प्रमाणत्वप्रमेयत्वाद्युपाधीनां षोडशत्वस्यैव न्यूनत्वव्यवच्छेदकत्वं तथैव परीक्षया लाभात् (इति चेत्, ऊ.)' इत्यधिकः, आ. उ. ऋ.
8 'तस्य' इत्यधिकः ई. ऋ. 9 न्यूनत्वं इ. ऋ. न्यूनत्व आ.
10 लघु ग. 11 न न्यूनत्वे इति व्यव° क.
12 व्याप्योद्भूत° ग.

[1]वृत्तित्वाद्यंशे वैयर्थ्येन पृथिवीभेद[2]वृत्तिघटभेदवृत्तिद्वित्वादेः प्रतियोगितानवच्छेदकत्वात् [3]तदवच्छिन्नाभावाभावात् । न च भूतमूर्तान्यत[4]रत्ववत् द्रव्यगुणाद्यन्यतमत्वं द्रव्यत्वगुणत्वादेः साङ्कर्येऽपि सम्भवतीति वाच्यम् । तद्बलाद्व्याप्यव्यापकभावासिद्धौ जाति[5]साङ्कर्यादिवाधकान्तरात्तदसाङ्कर्य-

---

भेदवृत्ति[6]गुणादि[7]पदङ्भेदवृत्तिसप्तत्वावच्छिन्नाभावरूपद्रव्याद्यन्यतमत्वस्य । वैयर्थ्येनेति । यथा घटस्यापि [8]लाभात् तद्वैयर्थ्यमिति द्रव्यभेदवृत्तिगुणादिषड्भेदवृत्तिसप्तत्वावच्छिन्नाभावोऽप्यसिद्ध इत्यर्थः । साङ्कर्येऽपि– सामानाधिकरण्येऽपि । द्रव्याद्यन्यतमत्वेन पदार्थद्रव्याद्योः व्याप्यव्यापकभावासिद्धौ द्रव्यत्वगुणत्वादेः साङ्कर्येन्यूनत्वव्यवच्छेदभावरूपं* सर्वथैव वक्तुमशक्यम् । तदन्यतमत्वव्यापकस्य न्यूनत्वव्यवच्छेदस्य निवृत्तौ व्याप्यीभूततदन्यतमत्वस्यापि निवृत्ति[9]प्रसङ्गात् । अतः तदन्यतमत्वेन पदार्थद्रव्याद्योः व्याप्य[10]व्यापकभावासिद्धावेव तत्साङ्कर्यं वक्तुमुचितम् । तथा च तत्साङ्कर्योपपत्तये क्वचिदसाङ्कर्यमप्यभ्युपेयम् । तत्र तत्रासङ्कीर्णजात्योरेकत्र साङ्कर्यस्यैव जातिसाङ्कर्यपदार्थत्वात् । एवञ्च द्रव्यत्वगुणत्वादेः क्वचिदसाङ्कर्यसिद्धौ पदार्थानां सप्तन्यूनत्वव्यवच्छेदसिद्धि[11]रावश्यकीत्याशयेन [12]प्रागुक्तशङ्कां परिहरति– तद्बलादिति । द्रव्याद्यन्यतमत्वबलात् । पदार्थद्रव्याद्योः यो व्याप्य-

---

[1] वृत्तीत्यंशे इ. वृत्त्यंशे उ. वृत्तिद्वित्वांशे ई.
[2] °वृत्तिषुघट° उ. [3] तत्तदवच्छिन्नाभावाच्च ई.
[4] °तमत्ववत् अ. आ. इ. ई. ऊ. ऋ. [5] °सांकर्येण बाधकान्तरेण ई.
[6] °गुणवद्भेद° क. [7] °षट्केभेद° ग
[8] 'लाभात् वैयर्थ्यमिति । पृथिवीभेदवृत्तिघटभेद–†वृत्तिद्वित्वावच्छिन्नाभावोऽसिद्धः । तथा पदार्थानां न्यूनत्वे गुणस्यापि द्रव्यत्वाद्द्रव्यभेदवृत्तीत्यनेनैव गुणभेदवृत्तित्वस्यापि लाभाद्वैयर्थ्यमिति' इत्यधिकः ग.
[9] °संभवात् क. [10] °व्यापकसिद्धौ भावसिद्धौ क.
[11] °रावश्यकेत्याशयेन, ग. [12] 'प्रसिद्धौ सत्यामेवोच्यमानत्वात्' इत्यधिकः क.

---

* मध्ये अत्र किमपि पदं वाक्यं वा लुप्तम् ।

† ['वृत्ति.........लाभात्' इत्यन्तस्त्रुटितः] क.

स्यापि [1]सिद्धेरिति दिक् ॥

मतान्तरेण न्यूनाधिकसङ्ख्याव्यवच्छेदकथनम्

परे तु— [2]विशेषविधिनिषेधयोः शेषानिषेधाभ्यनुज्ञाफलकत्ववत् [3]सामान्यावगतानां विशेषरूपैरभिधानस्य न्यूनाधिकसङ्ख्याव्यवच्छेदकत्वं व्युत्पत्तिसिद्धम् । अत एव न्यूनाधिकत्वयोः [4]विभागव्याघातं वदन्ति

---

व्यापकभावः, तदसिद्धौ सत्यमेवोच्यमानात् । [5]द्रव्यत्वगुणत्वादिजातिसाङ्कर्यादिबाधकान्तरात् तदसाङ्कर्यस्यापि संभावादिति [6]अक्षरार्थः । दिगर्थस्तु उक्तव्यापकत्वस्याधिक्यव्यवच्छेदरूपत्वे उपगते न्यूनत्वव्यवच्छेदरूपत्वमभ्युपेयम्;तुल्यन्यायात । इत्थञ्च न्यूनत्वव्यवच्छेदस्तु कुत इति प्रश्नानुपपत्तिरेव ॥

उक्तव्यापकत्वबोधं विनैव ये न्यूनाधिकसङ्ख्याव्यवच्छेदबोधं वर्णयन्ति तन्मतं दूषयितुमुपन्यस्यति परेत्विति । [7]विशेषेत्यादि । वामेन पश्यतीत्यादिविशेषविधेः दक्षिणेन न पश्यतीत्यादिनिषेधबोधः, दक्षिणेन न पश्यतीत्यादिविशेषनिषेधस्य च वामेन पश्यतीत्यादिविधिबोधः फलम् । तद्वत्प्रकृतेऽन्यत्र [8]च सामान्यरूपेण पदार्थत्वादिनाऽवगतानां द्रव्यत्वगुणत्वादिविशेषरूपैरभिधानस्य न्यूनाधिकसङ्ख्याव्यवच्छेदबोधफलकत्वम् । व्युत्पत्तिसिद्धम्—अनादितात्पर्यासिद्धमित्यर्थः । अत एव—विशेषरूपेणाभिधानस्य न्यूनाधिकसङ्ख्याव्यवच्छेदबोधकतया व्युत्पत्तिसिद्धत्वादेव । विभागव्याघातम्— विभाग-

---

1 सिद्धि उ.

2 'विशेष' नास्ति, इ. उ. ऊ. ऋ. 3 सामान्यतोऽव° आ. ई.

4 'विभागवाक्यव्या° अ. इ. उ. ऊ. ऋ. 5 द्रव्यगुण° ग.

6 लक्षणार्थः ग.

7 विशेषनिषेधस्य च वामेन पश्यतीत्यादिबोधं वर्णयन्ति, तन्मतं दूषयितुमुपन्यस्यति परे तु इति' इत्यधिकः ग.

8 'वसामः अन्यरूपेइत्यधिकः ग.

तान्त्रिकाः । अन्यथा [1]द्रव्याणि पृथिव्यप्तेजां[2]सीत्यादेरयोग्य[3]त्वासम्भवात् इत्याहुः ॥

तत्खण्डनम्

तन्न । [4]पदार्थेषु सप्ताधिकत्वं नास्तीत्यादेः [5]सिद्ध्यसिद्धिभ्यां व्याहततया निरुक्त[6]व्यापकत्वस्यैव न्यूनाधिकसङ्ख्याव्यवच्छेदरूपत्वात् । उक्तव्या[7]पकत्वबोधं विना अधिकसङ्ख्या[8]व्यवच्छेदबुद्ध्यसम्भवात् ।

---

[9]विरोधं विभागाभासत्वमिति यावत् । तादृशविभागेन न्यूनाधिकसङ्ख्याव्यवच्छेदबोधासंभवादिति भावः । अन्यथा--विशेषरूपेणाभिधानस्य न्यूनाधिकसंख्याव्यवच्छेदबोधकत्वाभावे । अयोग्यत्वासम्भवादिति । द्रव्याणि पृथिव्यप्तेजांसीत्यादेः न्यूनाधिकसंख्याव्यवच्छेदरूपविषय[10]बाधप्रयुक्तमयोग्यत्वं वाच्यम् । तच्च न संभवति । तव मते तत्र तद्विषयकत्व[11]स्यैवाभावात् । तदन्यविषयत्वबाधादयोग्य[12]त्वासम्भवादित्यर्थः ।

मतं दूषयति -- तन्नेति । नास्तीत्यादेरिति । आदिना पदार्थेषु सप्तन्यूनत्वं नास्तीत्यस्य सङ्ग्रहः । निरुक्त इति । द्रव्याद्यन्यतमत्वेन व्यापकत्वस्यैवेत्यर्थः । ननु निरुक्तव्यापकत्वबोधस्यैव यदि न्यूनाधिकसंख्याव्यवच्छेदबोधरूपत्वं तर्हि निरुक्तव्यापकत्व-

---

1 'द्रव्याणि' नास्ति ऊ.
2 °त्यादेर्द्रव्याणि अयो° ऊ.
3 °त्वासंभवः उ.
4 'पदार्थेषु......रूपत्वात्' इत्यन्तस्त्रुटितः अ. इ. ई. ऊ.
5 सिद्धचसिद्धव्याघततया उ.
6 '°व्यापक...उक्त' इत्यन्तस्त्रुटितः उ.
7 °यापकत्वस्यैवाधिक° इ. ई. व्यापकत्वस्याधिका° उ.
8 °व्यवच्छेदरूपत्वात् इ. ई. ऊ.
9 °विधेयं विभा° क.
10 °बाधोपयुक्तं ग.
11 °स्यैवाक्षतत्वात् ग.
12 °त्वासम्भव ग.

तद्बोधस्य [1]चोक्तरीत्यैव युक्तत्वात् । सर्वत्र विभागवाक्ये [2]औत्सर्गिकस्यान्वयितावच्छेदकावच्छेदेनान्वयस्य स्वीकारात् । न चास्तु [3]विशेषनिषेधाभ्यनुज्ञाबोधवत् तद्बोधो [4]मनसाऽनुमानादेव [5]वेति[6] वाच्यम् ।

---

बोधकत्वमेव विशेषरूपेणाभिधानस्य स्वीक्रियतामत आह तद्बोधस्य चेति । निरुक्तव्यापकत्वबोधस्य चेत्यर्थः । उक्तरीत्यैव विधेयतासमव्याप्तरूपेणेत्याद्युक्तरीत्यैव । युक्तत्वादिति । विशेषरूपेणाभिधानस्य निरुक्तव्यापकत्वबोधकत्वे स्वतन्त्रव्युत्पत्तिकल्पनापेक्षया उक्तरीत्या लघुत्वादिति भावः । ननु पदार्थत्वसामानाधिकरण्येन द्रव्यादीनां द्रव्यत्वादिनाऽन्वयसम्भवे किमुक्तरीत्यादरेणापीत्यत आह—सर्वत्रेति । तथा च पदार्थत्वावच्छेदेन द्रव्यादीनामन्यतमत्वेनैवान्वयो वाच्यः । स च नोक्तरीतिं विनेति तदादर इति भावः । विशेषरूपेणाभिधानस्थले न्यूनाधिकसङ्ख्याव्यवच्छेदबोधः मनसाऽनुमानेनैव वा भविष्यति, किं निरुक्तव्यापकत्वेन इत्यभिप्रायवा[7]नाशङ्कते— न चास्तु इति । तद्बोधः — न्यूनाधिकसङ्ख्याव्यवच्छेदबोधः । मनसा इति । व्याप्तिज्ञानसत्त्वे । तत्सत्[8]वेत्याह—अनुमानादेव वेति । अयं वामेन पश्यतीति विशेषविधौ दक्षिणेन न पश्यतीति विशेषनिषेधे वा श्रुते, अयं दक्षिणाक्षिकरणक[9]ज्ञानशून्यः वामाक्षिकरणकज्ञानवत्त्वे सत्यपि चाक्षुषज्ञानशून्यत्वादहमित्येवानुमानात् शेषनिषेधस्य । अयं वामाक्षि[10]करणकज्ञानवान् दक्षिणाक्षिकरणकज्ञानशून्यत्वे सत्यपि चाक्षुषज्ञानवत्त्वादहमित्येवानुमानात् शेषविधेश्च बोध इति प्रकारः दृष्टान्ते । एवं प्रकृतेऽपि पदार्थाः द्रव्यादय इति श्रुते पदार्थाःसप्तभ्यो न

---

1 'च' नास्ति अ. आ. उ. ऊ. ऋ.
2 औत्सर्गस्या° आ. इ. ई. उ.
3 शेष° अ.
4 मानस एवानुमानाद्वा ई.
5 'वा' नास्ति अ.
6 'इति' नास्ति उ.
7 वान् शङ्कते -नास्तु ग.
8 °त्याह ग.
9 'ज्ञान' नास्ति ग.
10 'करणक' इत्यधिकः क.

## तर्हि व्युत्पत्ति [1]सिद्धत्वोक्तिविरोधात् । न्यूनत्वाधिकत्वयोः विभागवाक्ये व्याघाता[2]नुपपत्तिश्चेति दिक् ॥

---

[3]न्यूनाधिकाः द्रव्यत्वादिसप्तविधरूपेणाभिहितत्वे सति सप्तविधातिरिक्तरूपेणानभिहितत्वात् । यत् यत्संख्याकरूपेणाभिहितत्वे सति त[4]दतिरिक्तरूपेणा[5]नभिहितं तत् तत्संख्याकात न न्यूनं नापि अधिकम् । यथा पृथिवीत्वादिनवविधरूपेणाभिहितत्वे सति नवविध[6]रूपातिरिक्तरूपेणानभिहितं द्रव्यं [7]नवकात् न न्यूनं नाप्यधिकमिति सामान्यव्याप्ति[8] फलकानुमानात् पदार्थानां न्यूनादिकसंख्याव्यवच्छेदबोध इत्यर्थः । तर्हि[9] व्युत्पत्ति इति । शाब्दबोध एव व्युत्पत्तेः तन्त्रत्वात् मानसे आनुमानिके च बोधेऽतन्त्रत्वाच्च । विशेषरूपेणाभिधानस्यान्यूनाधिकसङ्ख्याव्यवच्छेदबोधकत्वे व्युत्पत्तिसिद्धत्वोक्तिविरुद्धेत्यर्थः । व्याघातानुपपत्तिश्चेति । विभागवाक्ये न्यूनाधिकत्वयोरपि मनसा अनुमानेन वा न्यूनाधिकसङ्ख्याव्यवच्छेदबोधसम्भवात् व्याघातानुपपत्तिरित्यर्थः । वस्तुतस्तु न्यूनाधिकसङ्ख्याव्यवच्छेदबोधः न विशेषरूपेणाभिधानात् तयो [तत्रो] र्व्यव्यापकत्वबोधात्; [10]किन्तु विभागपरीक्षयैवेति तत्त्वम् । अत एवोक्त दिक् इति ।

---

[1] सिद्धोक्ति° इ.

[2] °नुपपत्तिरिति अ. °नुपपतेश्चेति आ.

[3] न्यूनमप्यधिकः क. [4] 'अतिरिक्त' नास्ति ख.

[5] नभिहितं.........रूपेणा' इत्यन्तस्त्रुटितः ग.

[6] °रूपं, इत्यधिकः क. ग. [7] नवकालशून्यं ना° क.

[8] मूलका° क. [9] व्युत्पन्नेति ख.

[10] 'किन्तु' नास्ति ख. ग.

### तत्रैव मतान्तरं तत्खण्डनं च

यत्तु—*सर्वत्र विभागवाक्ये एवकारादेव[1] श्रुतादध्याहृ[2]ताद्वाऽऽधिक्य-व्यवच्छेदलाभ इति— तन्न । प्रकृते तदसम्भवात् । तथा हि - 'पार्थ एव धनुर्धरः' इत्यादिवत् 'सप्त एव [3]पदार्थाः' इत्यन्ययोगव्यवच्छेदः[4] । 'शङ्खः पाण्डर एव' [5]इत्यादिवत् 'पदार्थाः [6]सप्तैव' इत्ययोगव्यवच्छेदः[7] । 'नीलं सरोजं भवत्येव' इत्यादिवत् 'पदार्थाः सप्त [8]भवन्त्येवे'त्यत्यन्तायोग-व्यवच्छेदो वा [9]इत्यभिप्रेतः । नाद्यः; प्रकृते विशेष्य[10]सङ्गतत्वाभावात् न च पदार्थोद्देशेन सप्तत्व[11]स्यैव सप्तो[12]द्देशेन पदार्थ[13]त्वस्या

---

प्रकृते— पदार्थाः, द्रव्यादय इति विभागवाक्ये । विशेष्य[14]संगतत्व इति । विशेष्यसंगतैवकारेणैवान्ययोगव्यवच्छेदबोधनादिति भावः । विशेषणविशेष्यभावे कामाचारात् सप्तैव पदार्था इत्यत्रैवकारस्य विशेष्यसङ्गतत्वमाशङ्कते— न चेति । ज्ञातस्य पदार्थत्वस्य विधेयत्वं न सम्भवति । ज्ञातं धर्मिण मुद्दिश्याज्ञातस्यैव विधानादत उक्तं

---

1 स्मृता° ई.
2 °ताच्चाधि° इ. °ताद्वाधिकत्वव्य आ
3 पदार्थ अ.
4 'वा, इत्यधिकः ई.
5 इतिवत् ई.
6 'सप्तैव' नास्ति इ. ऊ. ऋ
7 'वा' इत्यधिकः ई. उ.
8 संभवन्त्येव इ.
9 'इति' नास्ति इ. ई. उ. ऊ. ऋ.
10 °सम्मतत्वा° अ. इ.
11 °स्यैव इ.
12 °द्देश्येन इ.
13 'त्व' नास्ति ई.
14 °सम्मतत्व ग.

---

* सामानाधिकरण्येन व्यापकत्वसिद्धावुक्तव्यापकत्वबोधाय किमुक्तरीत्याऽऽदरेणेत्यत आह— सर्वत्र इति ।

प्यज्ञातस्य कदाचित् विधानात् तत्त्वम् । तथापि सप्तान्याप्रसिध्या [1]तद्योगव्यवच्छेदासम्भवात् । अत एव *नेतरौ सप्तत्वस्यायोगात्यन्तायोगयो[2]रप्रसिद्धेः ।

किञ्चाश्रुतपदकल्पनातः श्रुतपदादेव निरूढलक्षणया व्युत्पत्तिभेदाच्चाभिमतार्थलाभो युक्त इति दिक् ॥

---

अज्ञातस्येति । तत्त्वं— विशेष्य सङ्गतित्वम् [सङ्गतत्वम्] ॥

ननु सर्वत्रैवकारार्थः अयोगव्यवच्छेदः । स्वसमभिव्याहृतपदार्थतावच्छेदकावच्छिन्नानु (प) योगिकेतरपदार्थतावच्छेदकावच्छिन्ननिरूपिततादात्म्यसंबन्धावच्छिन्नव्यापकत्वपर्यवसितः । स्वपदमेवकारपरम् । 'शङ्खः पाण्डर एव' इत्यादौ पाण्डरत्वावच्छिन्ने शङ्खत्वावच्छिन्ननिरूपितस्य तादात्म्यसम्बन्धावच्छिन्नव्यापकत्वस्य सत्त्वात् । प्रकृतेऽपि पदार्थाः सप्तैवेत्यादौ सप्तान्यतमत्वरूपसप्तत्वावच्छिन्ने पदार्थत्वावच्छिन्ननिरूपितस्य तादात्म्यावच्छिन्नव्यापकत्वस्य सत्त्वाच्च । 'नीलं सरोजं भवत्येवे'त्यादौ तु सरोजत्वे नीलभवनकर्तृत्वसामानाधिकरण्यप्रतीतिः एवकारलक्षणया इत्यस्वरसादाह किञ्च इति । अश्रुतपद इति । एवकाराध्याहारादित्यर्थः । श्रुतपदादेव— विभागवाक्यस्य चरमपदादेव । निरूढलक्षणया— तावदन्यतमत्वनिरूढलक्षणया । व्युत्पत्तिभेदादिति । इदं 'परेत्वि'ति मतेन । अभिमतार्थ इति । यत्र न एवकारश्रवणं तत्रापि न्यूनाधिकसंख्याव्यवच्छेदलाभ इत्यर्थः । अयोगव्यवच्छेदार्थकत्वमप्यग्रे दूष्यमित्याशयेनाह— दिगिति ॥

---

[1] तदन्ययोगव्य° ई. [2] °रसिद्धेः अ. ई. रसिद्धिः उ.

---

* अयोगात्यन्तायोगव्यवच्छेदावित्यर्थः

P· 8

एवकारार्थविचारः

अत्र एवकारस्य व्यवच्छेदमात्रे शक्तिः । अयोगान्ययोगात्यन्तायोगानां समभि[1]व्याहारविशेषात् लाभ इति [2]प्राञ्चः । तन्न । [3]यतः समभिव्याहारो नाम आकाङ्क्षा, [4]तल्लभ्यो वाक्यार्थः; न तु पदार्थः । पदोपस्थितानामर्थानां संसर्गस्यैव तल्लभ्यत्वात् । न चास्तु व्यवच्छेदेन शक्येनाक्षिप्तानां तेषां संसर्गः तल्लभ्यः । तेन प्रतियोगित्वेन तेषामाक्षेपेऽप्ययोगत्वादिनानाक्षेपात् । [5]'शाब्दी'ति न्यायात् [6]पदानुपस्थितानां तेषां शाब्दबुद्ध्यसम्भवाच्च । तस्मादयोगान्ययोगात्यन्तायो-

---

प्रसङ्गादेवकारार्थं विवेचयितुमाह—अत्र इत्यादि । अत्र एवार्थविचारे । अस्य 'इति प्राञ्च' इत्यग्रतनेनान्वयः । समभिव्याहार इति । विशेषणपदसमभिव्याहारादयोगव्यवच्छेदस्य विशेष्यपदसमभिव्याहारादन्ययोगव्यवच्छेदस्य क्रियासमभिव्याहारादत्यन्तायोगव्यवच्छेदस्य लाभ इत्यर्थः । तल्लभ्यत्वात्— समभिव्याहारलभ्यत्वात् । आक्षिप्तानामिति । व्यवच्छेदोऽभावरूपत्वात् प्रतियोगिनं विनाऽनुपपन्न इति अनुपपत्तिरूपाक्षेपवशादुपस्थितानामयोगान्ययोगात्यन्तायोगानां इत्यर्थः । ननु तादृशानुपपत्त्यैव उद्बोधकवशात् अयोगत्वादिनाऽप्याक्षेपः सम्भवत्येवेत्यरुचेराह— शाब्दीति । 'शाब्दाद्याकाङ्क्षा [शाब्द्याकाङ्क्षा] शब्देनैव [7]पूर्यत' इति न्यायात् [8]पदानुपस्थितानां अयोगादीनां शाब्दबुद्धौ प्रकारत्वासम्भवादित्यर्थः ।

---

1 °व्याहारात् लभ्यन्त इति, ई. °व्याहारविशेषालाभः आ.
2 प्राहुः अ. उ. 3 'यतः' नास्ति अ. ऋ.
4 तल्लाभो हि इ. 5 शाब्दी हीति ई.
6 पदार्थोपस्थितानां अ. पदानुपस्थितीनां
7 'पूर्यते' नास्ति ग. 8 तदानुप° ग.

गव्यवच्छेदाः विशेषणविशेष्यक्रियासङ्गतेवकारशक्या इति सम्प्रदायः ॥

दीधित्यनुसारेणात्यन्तायोगव्यवच्छेदस्यैवकारार्थत्वखण्डनम्

दीधितिकृतस्तु नात्यन्तायोगव्यवच्छेदो वाच्यः । किन्तु अयोगान्ययोगव्यवच्छेदौ, [1]अन्ययोगव्यवच्छेद एव [2]वा इत्याहुः । [3]तथा हि – [4]नात्यन्तायोगव्यवच्छेदोऽर्थः । स हि आत्यन्तिकस्यायोगस्य व्यवच्छेदो आत्यन्तिकोऽयोगव्यवच्छेदो [6]वा । [7]नाद्यः, आत्यन्तिक[8]त्वस्या[9]न्वयितावच्छेदकव्यापकत्वरूपतया सरोजत्वादि[10]व्यापकस्य नीलाद्ययोगस्य सिध्यसिद्धि[11]व्याहततया तद्व्यवच्छेदासम्भवात् । न च खण्डशः शक्त्या तदंशे

---

संप्रदायमतं दूषयितुं नव्यमतमुपन्यस्यति दीधितिकृतस्त्विति । अन्वयितावच्छेदकेति । यद्धर्मवति व्यवच्छेदान्वयः । तदन्वयितावच्छेदकं सरोजत्वादितद्व्यापकत्वरूपतया इत्यर्थः । सरोजत्वादिव्यापकस्य 'नीलं सरोजं भवत्येव' इत्यादौ व्यवच्छेदान्वयितावच्छेदकं सरोजत्वादि तद्व्यापकस्य । खण्डशः शक्त्या इति । अन्वयितावच्छेदकव्यापकत्वं[व्यापकत्व]रूपात्यन्तिकत्वे [12]अयोगे व्यवच्छेदे च त्रिषु विशकलितया एवकारशक्त्या इत्यर्थः । प्रागुक्तसिध्यसिद्धिव्याघातस्य विशिष्टे शक्तिपक्ष एव सम्भवात् खण्डशः शक्तिपक्षे सरोजत्वादिव्यापकत्वस्य द्रव्यत्वादौ प्रसिद्धस्य नीलाद्ययोगे भानाभ्युपगमेन व्याप-

---

[1] 'एव' इत्यधिकः   उ. ऊ.
[2] 'वा' नास्ति   अ. आ. ई. ऊ.
[3] तथापि   ऊ.   'तथाहि' नास्ति, आ. इ. ई. ऋ.
[4] न चात्यन्ता°   उ.
[5] न हि   ई.
[6] 'वा' नास्ति   अ. आ इ. ऊ. ऋ.
[7] 'नाद्यः' नास्ति   अ. आ. ऋ.
[8] 'त्व' नास्ति   अ आ. ऋ.
[9] 'अन्वयितावच्छेदक' नास्ति इ. ई. उ. ऊ.
[10] °व्यापकत्वस्य अ. आ. इ. ई. ऊ. ऋ.
[11] पराहततया   उ.
[12] 'अयोगे......शक्तिपक्ष एव' इत्यन्तस्त्रुटितः   ग.

[1]आहार्यशाब्दधीः तस्याः अनाहार्यत्वानियमात् । तदंशे वाक्यस्याप्रामाण्यापाताच्च । न द्वितीयः नीलाद्ययोगव्यवच्छेदे सरोजत्वादिव्यापकत्वस्य बाधितत्वात् ।

अथायोगे आत्यन्ति[2]कत्वस्य व्यवच्छेदोऽर्थः । अस्ति च नीलाद्ययोगे सरोजत्वादिव्यापकत्वव्यवच्छेदः । न च [3]सरोजत्वत्वादिना पृथक्सरोजत्वाद्युपस्थितिं विना [4]अयमशक्यप्रतिपादनः [5]खण्डशः [6]शक्त्या सरोजत्वादिनिष्ठात्यन्ताभावाप्रति[7]योगित्वव्यवच्छेदस्य नीलाद्ययोगे प्रतिपाद्यत्वादिति चेत् न । नीलाद्ययोगे निरुक्तात्यन्ता[8]भावाप्रतियोगित्व-

---

कत्वांशे आहार्या सरोजं सरोजत्वव्यापकनीलाद्ययोगव्यवच्छेदवदित्याकारा शाब्दधीरुत्पद्यते । आहार्यबुद्धौ बाधस्याप्रतिबन्धकत्वात् । विशेषदर्शनाप्रतिबध्य(द्ध)स्य विपयं विना इच्छामात्रजन्यस्य वा ज्ञानस्यैवाहार्यत्वादिति भावः । तस्याः-शाब्दधियः । नियमादिति । आहार्यज्ञानं प्रत्यक्षमेवेति सिद्धान्तात् तद्व्यतिरिक्तज्ञानस्यानाहार्यत्वनियम इति भावः । नन्वनुकूलतर्काभावेन तादृशनियमस्यासिद्धत्वात् आहार्यशाब्दधीरुत्पद्यत एवेत्यरुचेर्दूषणान्तरमाह– तदंश इति । सरोजत्वादिव्यापकत्वांश इत्यर्थः ॥

सरोजनिष्ठनीलाद्ययोगे आत्यन्तिकत्वव्यवच्छेदान्वयमभ्युपेत्य शङ्कते- अथेति । अर्थः-अत्यन्तायोगव्यवच्छेदशब्दार्थः । अयं-नीलाद्ययोगे सरोजत्वादिव्यापकत्वव्यवच्छेदः । अशक्येति । सरोजत्वस्य सरोजविशेषणत्वेन उपस्थिततया व्यापकत्वे अन्वयासम्भवादिति भावः । प्रतिपाद्यत्वादिति । तथा च त्रिपु [9]खण्डशः शक्तिरपि आत्यन्तिकत्वेऽन्वयि-

---

[1] आहार्या आ. [2] °कव्यव° अ. आ. इ. ई. ऊ. ऋ.
[3] सरोजत्वादिना आ. इ. ई. उ.ऊ. ऋ [4] अयंशक्य° ई.
[5] 'खण्डशः' नास्ति अ. [6] शक्या अ.
[7] °योगित्वं व्यव° ई. [8] °भावप्रति° ई.
[9] खण्डशक्ति° ग.

व्यवच्छेदस्य [1]निरुक्तात्यन्ता[2]भावाप्रतियोगित्वरूपतया नीलाद्ययोगव्यवच्छेदे सरोजादिनिष्ठत्व[3]पर्यवसानात् । [4]तथाचायोगव्यवच्छेद एवार्थः । [5]स च यत्र *सामानाधिकरण्यमात्रेणान्वेति तत्रात्यन्तायोगव्यवच्छेद [6]इति [7]गीयते । यथा 'नीलं सरोजं भवत्येव' इत्यादौ । यत्र तु अवच्छेदकावच्छेदेन [8]अन्वेति तत्रायोगव्यवच्छेद इति । [9]यथा 'ज्ञानमर्थं गृह्णात्येव' इत्यादौ ज्ञानत्वावच्छेदेन अर्थग्राहकत्वाद्ययोगव्यवच्छेदान्वयात् । अन्यथा 'ज्ञानं रजतं गृह्णात्येव' 'नरो वेदानधीत एव' इत्यादि-

---

तावच्छेदकसरोजत्वाद्यधिकरणान्तर्भावेणैव, न तु सरोजत्वाद्यन्तर्भावेण इति पृथक्सरोजत्वाद्युपस्थितिः नापेक्षिता । तस्य सरोज एवान्वयादिति भावः । तथा च-[10]आत्यन्तिकायोगव्यवच्छेदस्य नीलाद्ययोगव्यवच्छेदपर्यवसाने च । 'नीलं सरोजं भवत्येव' इत्यादावत्यन्तायोग-[इत्यदावयोग] व्यवच्छेदार्थकत्वे क्रियासङ्गतैवकारस्य अत्यन्तायोग- व्यवच्छेदाद्यत्वे [व्यवच्छेदार्थकत्वं] विशेषणसङ्गतैवकारस्य अयोगव्यवच्छेदार्थकत्वमिति प्रसिद्धिः विरुद्धेत्यतः तामप्युपपादयति– स च इत्यादि । सामानाधिकरण्येन -अन्वयितावच्छेदकसामानाधिकरण्येन । यथा नीलमिति । अत्र किञ्चित् सरोजं नीलाद्ययोगव्यवच्छेदवदित्येवान्वयबोधादिति भावः । अवच्छेदकावच्छेदेन-अन्वयितावच्छेदकावच्छेदेन । अन्यथा-ग्रहणा-

---

[1] 'निरुक्त...... रूपतया 'इत्यन्तस्त्रुटितः  अ. आ. ई.
[2] °भावप्रति°  ऋ.  [3] 'मात्रे' इत्यधिकः  अ.
[4] तथाचास्त्वयोग°  अ ई. उ.  तथाचासत्ययोग  ऋ.
[5] न च  ऋ.  [6] 'इति' नास्ति  अ. आ. ऋ.
[7] अङ्गीक्रियते  इ. ई. ऊ. ऋ.
[8] 'अन्वेति' नास्ति अ. आ. इ. उ. ऊ. ऋ.  [9] 'यथा' नास्ति  ऋ.
[10] 'आत्यन्तिक...........अत्यन्तायोग' इत्यन्तस्त्रुटितः,  क.

---

* अत्र व्याख्यातुः 'सामानाधिकरण्येन' 'इति पाठः सम्मतः । स च नोपलभ्यते ।

प्रयोगापत्तेः । अन्वय[1]विशेषभाने [2]नियामकस्तु क्रियाविशेषयोगादिरेव ॥

एवकारस्यायोगव्यवच्छेदार्थकत्वखण्डनम्

वस्तुतस्तु [3]'गुणवत् द्रव्यमेव' 'शङ्खः पाण्डर एव' इत्यादौ [4]द्रव्यत्वादेरनुपस्थितेः द्रव्यत्वादेः इतरविशेषणत्वेन उपस्थितेश्च तदयोगव्यवच्छेदबोधासम्भवात् [5]गुणवत्वाद्यवच्छेदेन द्रव्याद्यन्ययोगव्यवच्छेद एव

---

ध्ययनार्थकक्रियायोगेऽपि अन्वयितावच्छेदकसामानाधिकरण्येन व्यवच्छेदा[6]न्वयस्वीकारे । [7]प्रयोगापत्तेरिति । *ज्ञानत्वनरत्वसामानाधिकरण्येन रजतग्राहकत्ववेदाध्ययनकर्तृत्वायोगव्यवच्छेदान्वयसम्भवादिति भावः । नन्वयोगव्यवच्छेदस्य क्वचिदन्वयितावच्छेदकसामानाधिकरण्येन क्वचिदन्वयितावच्छेदकावच्छेदेनान्वये किं नियामकमत आह— अन्वयविशेषभान इति । क्रियाविशेष इति । सामानाधिकरण्येनान्वये भवत्यादिक्रियायोगोऽवच्छेदेनान्वये च ग्रहणाध्ययनाद्यर्थक्रियायोगो नियामक इत्यर्थः ॥

अयोगव्यवच्छेदार्थकत्वं दूषयन् अन्ययोगव्यवच्छेदमात्रे शक्तिं व्यवस्थापयति- वस्तुतस्तु इति । ननु 'शङ्खः पाण्डर एव' इत्यादौ पाण्डराद्यन्ययोगव्यवच्छेदबोधसम्भवेऽपि क्वचिदयोगव्यवच्छेदार्थकत्वं दुर्वारम् । 'ज्ञानमर्थं गृह्णात्येव' इत्यादौ अर्थग्राहकत्वान्ययोग-

---

1 °विशेष मात्रे अ. 2 नियामकस्य ऋ.
3 गुणः द्रव्यमेव अ. ऋ. गुणवत् द्रव्यं भवत्येव आ. ई.
4 द्रव्यत्वादे° ऋ. 5 गुणत्वाद्य° आ.
6 'अन्वयस्वीकारे' नास्ति ग. 7 प्रयोगापत्तिरिति ग.

---

* ज्ञानत्वसामानाधिकरण्येन रजतग्राहकत्वायोगव्यवच्छेदान्वयसम्भवात्, नरत्वसामानाधिकरण्येन वेदाध्ययनकर्तृत्वायोगव्यवच्छेदान्वयसंभवात् इति यथाक्रममन्वयः ।

[1]प्रत्याय्यः । तथा च 'ज्ञानं अर्थं गृह्णात्येव' इत्यादावपि [2]तिङो धर्मिपरतया अर्थ[3]ग्राहकाद्यन्ययोगः, 'नीलं सरोजं भवत्येव' [4]'जातिमत् द्रव्यं भवत्येव' इत्यादौ नीलभवना[5]श्रयाद्यन्ययोगो नीलाद्यन्ययोगो वा व्यवच्छेद्यः ।

## एवकारस्यान्ययोगव्यवच्छेदार्थकत्वस्थापनम्

तथा चायोगव्यवच्छेद [6]एवार्थः । शक्तिद्वयकल्पने गौरवात् । अयोगव्यवच्छेदस्यैवान्ययोगव्यवच्छेदस्यापि 'नीलं सरोजं भवत्येवे'त्यादौ सामानाधिकरण्यमात्रेण । [7]'ज्ञानमर्थं गृह्णात्येवे'त्यादौ [8]तु अवच्छेदकावच्छेदेन [9]अन्वये क्रियाविशेषयोगादेः [10]नियामकत्वध्रौव्ये [11]तन्मात्रे शक्ति-

---

व्यवच्छेदबोधासम्भवादित्यत आह —तथाचेति । धर्मिपरतया- अर्थग्राहकरूपधर्मिलक्षणया । ननु नीलादेः नामार्थस्य भवनादिक्रियायां नान्वयः । नामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयबोधस्याव्युत्पन्नत्वात् । अन्यथा 'ओदनःपचती'त्यादौ कर्मतासंसर्गेणोदनपाकयोः अन्वयबोधः स्यादत आह– नीलाद्यन्ययोगो वेति । [12]न च 'नीलं सरोजं भवत्येवे' त्यादौ नीला[13]द्यन्ययोगस्यैव [14]व्यवच्छेद्यत्वे भवनादेरनन्वयः । सरोजं नीलान्ययोगव्यवच्छेदवत् भवनाश्रयश्चेति महावाक्यार्थबोधोपगमेन तदन्वयोपपत्तेरिति भावात् ।

[15]तथाचेत्यनन्तरं 'सर्वत्रे'ति शेषः । तन्मात्र इति । अन्ययोगव्यवच्छेदमात्रे

---

[1] प्रतिपाद्यः ई.
[2] तद्बोधधर्मि° ऋ.
[3] °ग्राहकान्य° अ.
[4] जातिमान् अ. इ. ऊ. ऋ. 'जातिमद्द्रव्यं भवत्येव' नास्ति ई.
[5] °श्रयान्य° ई. ऋ.
[6] 'एव' नास्ति इ.
[7] °मर्थग्राहकं भवत्येवेत्यादौ अ. इ.
[8] 'तु' नास्ति ऊ.
[9] अन्वयः ई.
[10] नियामकत्वात् ध्रौव्ये ई. ऊ. ऋ. नियामकत्वध्रुवे इ.
[11] तन्मात्रकल्प° अ आ. ई. उ. ऊ. ऋ.
[12] 'न च......भावात्' इत्यन्तस्त्रुटितः ग.
[13] द्ययोग° ख.
[14] व्यवच्छेदार्थत्वे ख.
[15] तथेत्य° ग.

कल्पनाया एव युक्तत्वात् । 'ज्ञानमर्थं गृह्णात्येव' 'ज्ञानमर्थग्राहकं भवत्येवे'-त्यादौ [1]ज्ञान[2]त्वाद्यवच्छेदेन अर्थ[3]ग्राहकान्ययोगव्यवच्छेदबोधं प्रत्येवकारत्वेनैव [प्रत्येतदुत्तरैवकारत्वेनैव]हेतुत्वम् । केवलं 'गृह्णात्येव' [4]इत्यतः तादृशबोधो न जायते । [5]ज्ञानस्य अर्थग्राहकस्य [6]शाब्दबोधं प्रति पदजन्यतदुपस्थितेः [7] कारणस्याभावात् ।

क्रियासंगतैकारस्याप्ययोगव्यवच्छेदार्थकत्वम्

[8]वस्तुतः 'अर्थं गृह्णाति इत्याद्युत्तरैव[9]कारत्वेन [10]एतादृशशाब्दबोधं प्रति हेतुत्वम् । 'ज्ञानमेव अर्थं गृह्णाति' 'ज्ञानमर्थमेव गृह्णाति

---

शक्तिकल्पनाया एवेत्यर्थः । अन्ययोगव्यवच्छेदस्यान्वयविशेषभाने क्रियाविशेषयोगादेः पृथङ्नियामकत्वकल्पनायां गौरवादाह-ज्ञानमर्थं गृह्णात्येव इत्यादि । ज्ञानात्वावच्छेदेनार्थग्राहकान्ययोगव्यवच्छेदबोधं प्रति यद्येवकारत्वेनैव हेतुत्वं तदा 'गृह्णात्येव' इत्येतन्मात्रादपि तादृशबोधः स्यादत आह– केवलं इति ।

नन्ववच्छेदकावच्छेदेनान्ययोगव्यवच्छेदबोधं प्रति यद्येवकारत्वेनैव हेतुत्वं तदा 'ज्ञानमेवार्थं गृह्णाति' इत्यादौ तादृशबोधः स्यात् । तत्तत्पदार्थोपस्थितेः सत्त्वात् इत्यरुचेराह—वस्तुत इति । अर्थं गृह्णातीत्यादीति । आदिना अर्थग्राहकमेव । 'अर्थग्राहकं भवत्येव' 'द्विजो वेदानधीत एव' इत्यादेः सङ्ग्रहः । तथा चैतदुत्तरैवकारत्वेनैवावच्छेदेन बोधं प्रति हेतुत्वमित्यर्थः ।

---

[1] 'च' इत्यधिकः आ. [2] °त्वाव° अ. इ. ई. उ. ऊ. ऋ.
[3] °ग्राहकान्यत्वव्यव° आ. इ. ई. [4] इत्यत्र अ.
[5] ज्ञातस्य इ. [6] शाब्दं प्रति इ.
[7] कारणत्वस्या° ऊ. हेतोरभा° इ.
[8] 'वस्तुत . . . . . . बोधाभावात्' इत्यन्तस्त्रुटितः उ.
[9] °कारस्य इ. ऊ. [10] तादृशबोधं अ. ऋ.

[1]इत्यादित: [2]तथाबोधाभावात् ।

न च 'ज्ञानमर्थं ग्राहकं भवत्ये[3]वे'त्यत्र सामानाधि[4]करण्येन अन्वयः [5]स्यात् । ग्रहणाध्ययनार्थकक्रियोत्तरैवकारस्यैवावच्छेदकावच्छेदेन [6]बोधजनकत्वादिति वाच्यम् । तत्रापि 'ज्ञानमर्थग्राहकमेवे'त्यादाविव विशेषणान्य[7]योगव्यवच्छेदस्यैव बोधात् भवन[8]क्रियायामर्थग्राहकादेः [9]भेदेनानन्वयात् । अर्थग्राहकभवनकर्त्रन्ययोगव्यवच्छेदबोधासम्भवात् । अत एव-'नीलं सरोजं भवत्येव इत्यादौ नीलाद्यन्य [10]योगव्यवच्छेद इत्युक्तम् ॥

---

[11]ननु भवत्यादिक्रियोत्तरैवकारस्य नान्वयितावच्छेदकावच्छेदे[12]नान्ययोगव्यवच्छेदबोधकत्वं, किन्तु ग्रहणाध्ययनार्थकक्रियोत्तरैव[13]कारस्यैवेति युक्तम् । [14]'दीधिते'रपि तथैव स्वरसात् । 'ज्ञानमर्थग्राहकं भवत्येवे'त्यादौ तु 'नीलं सरोजं भवत्येवे'त्यादाविव सामानाधिकरण्येनान्वयोऽस्तु, बाधकाभावादित्याशंक्य निषेधति- न चेति । तत्रापि- ज्ञानमर्थग्राहकं भवत्येव' इत्यादावपि ।

---

| | | | |
|---|---|---|---|
| [1] इत्यादिषु | अ. | [2] तदभावात् | ऋ. |
| [3] °वेत्यादौ | इ. ई. ऊ. | [4] °करण्येनैव | अ. |
| [5] 'स्यात्' नास्ति | अ. आ. | [6] अन्वयबोधकत्वादिति | इ. |
| [7] °योगस्यैव | इ. ऋ. | [8] °क्रियामर्थग्राहकादिभेदेना° | ऋ. |
| [9] भेदनान्वयात् | आ. | [10] °योगो वा व्यवच्छेद्यः | अ. उ. |
| [11] 'ननु......नचेति' इत्यन्तस्त्रुटितः | ग. | [12] °नान्वययोग° | क. |
| [13] °कारस्येति° | क. | [14] दीधितेरितरेपि | क. |

[1]वस्तुतः 'चैत्रः पण्डितोऽभवत्' 'पण्डित आसीत्' 'पण्डितो भविष्यति' इत्यादिप्रयोगात् [2]तादात्म्ये भ्वाद्यर्थे विशेषणान्वयो व्युत्पन्नः, तत्तद्विशेषणतादात्म्य एव वा तदर्थः । तथा च नीलादितादात्म्याश्रयान्ययोग एव व्यवच्छेद्यः । [3]इत्थञ्च विशेषणविशेष्यग्रहणाध्ययनार्थक्रियासङ्गतैवकारस्य अवच्छेदकावच्छेदेन [4]बोधे, एवकारमात्रस्य सामानाधिकरण्येन बोधे नियामकत्वात् 'सरोजं नीलमेव' 'ज्ञानं रजतग्राहकं [5]भवत्येव' इत्यादिप्रयोगो निष्प्रत्यूहः ॥

---

'नीलं सरोजं भवत्येव' इत्यादौ नीलभवनाश्रयान्ययोगव्यवच्छेदबोधस्यानुभवसिद्धस्यापलापोऽनुचित इत्यतस्तमुपपादयितुमाह—वस्तुतस्तु इति । तादात्म्ये-भवने अस्तित्वरूपसत्तायामिति यावत् । विशेषण इति । विशेषणस्य पण्डितादेः भुवाद्यर्थे[भ्वाद्यर्थे] अन्वयो व्युत्पन्न इत्यर्थः । अतीतपण्डिततादात्म्यस्य भविष्यत्पण्डिततादात्म्यस्य चाश्रयः चैत्र इत्येवं ततोऽन्वयबोधात् । तथा च नामार्थधात्वर्थयोरिति व्युत्पत्तौ भुवादि [भ्वादि] भिन्नधात्वर्थो ग्राह्य इति भावः । एतद्व्युत्पत्तिसङ्कोचभयात् 'पण्डितोऽभवत्' इत्यादौ तादृशबोधोपपत्तये कल्पान्तरमाह – तत्तद्विशेषण इति । पण्डितादितादात्म्यमेव लक्षणया भ्वाद्यर्थः । पण्डितादिपदं तु तात्पर्यग्राहकमिति भावः । इत्थञ्च-सर्वत्रैवकारस्यान्ययोगव्यवच्छेदबोधकत्वव्युत्पादनेन च ।

---

[1] वस्तुतस्तु आ. [2] तादात्म्येन ई.
[3] तथात्व वि° आ. [4] बोधः ऋ.
[5] 'एवेत्यादि (अ) प्रयोगेऽपि 'सरोजं नीलं भवत्येव' 'ज्ञानं रजतग्राहकं' इत्यधिकः आ. इ. ऋ.

यदि च [1]'द्रव्यं रूपवत् भवत्येव' इत्यादिवत् 'घटो रूपवान् भवत्येव' [2]इत्यादिः न प्रयोगः । तदा अन्वयितावच्छेदकाव्यापकव्यवच्छेदीय-विशेषणतया तदन्वये ग्रहणाध्ययनार्थक-इतर[3]क्रियासङ्गतैवकारः [4]तन्त्रम् । अत एव सामानाधिकरण्यमात्रेणा[5]न्वये क्रियाविशेषयोगादेर्नियामकत्वमिति [6]दीधितिः ॥

एतेन 'घटो रूपवान् भवत्येव' इत्याद्यप्रयोगात् अन्वयितावच्छेद[7]का-व्यापकत्वं व्यवच्छेदान्वयि भवत्यादिक्रियोत्तर–एव[8]कारार्थ इति अत्यन्ता-योगव्यवच्छे[9]दार्थत्वप्रसिद्धिरित्यपास्तम् । शक्तिद्वयकल्पनातोऽन्य[10]योग-

---

शुद्धैवकारस्यान्वयितावच्छेदकसामानाधिकरण्येन व्यवच्छेदबोधकत्वे वक्ष्यमाण-'दीधिति'ग्रन्थविरोधभयादाह-यदि चेति । बाधकाभावत्। 'घटो रूपवान् भवत्येव' इति प्रयोगस्वीकारे अयं कल्पो न संभवतीत्यत उक्तं यदि चेति । तथा च पूर्वकल्प एव साधीयान् । निर्दुष्टमते 'दीधिति' विरोधोऽकिञ्चित्कर इति भावः । अन्वयितावच्छेदकेति । अन्वयितावच्छेदकस्य सरोजत्वादेरव्यापको यो व्यवच्छेदः नीलाद्ययोगव्यवच्छेदः तदीयविशेषणतया अन्वयितावच्छेदकसामानाधिकरण्येनेति यावत् इत्यर्थः । तदन्वये-अन्ययोगव्यवच्छेदान्वये ।

---

1 'द्रव्यं' नास्ति अ. इ. ऊ. ॠ. 2 इत्यादिना प्र° ॠ.
3 °क्रिया° नास्ति ई. 4 तन्त्र: ॠ.
5 °न्वय: क्रि° अ. ॠ. 6 दीधितिकृत: अ.
7 °कव्या° ई.
8 '°कारार्थ ..... व्यवच्छेदार्थत्व' इत्यन्तस्त्रुटित: ई.
9 °दार्थप्र° ॠ. 10 °योगस्यैव ॠ.

व्यवच्छेदस्यैव उक्तसंसर्गेणान्वयकल्पनायाः [1]युक्तत्वात् ॥

[2]अत्र चान्ययोगव्यवच्छेदमात्रे शक्तौ यत्रान्वयितावच्छेदकसामानाधि-[3]करण्येन, यत्र च विशेष्ये तदवच्छेदेन अन्ययोगव्य[4]वच्छेदान्वयः, [5]तत्रात्यन्तायोगायोगव्यवच्छेदयोः;यत्र तु [6]विशेषणे तदन्वयः, तत्रान्य-योगव्यवच्छेदस्य [7]च प्रसिद्धिः [8]बोद्धव्या ।

अन्ययोगे व्यवच्छेदे च एवकारशक्तिः

[9]ननु अन्य[10]योगप्रतियोगिकव्यवच्छेदो नार्थः; 'पार्थ [11]एव मनुष्यः' इत्यादेः प्रसङ्गात् । नाप्यन्योगत्वावच्छिन्नव्यवच्छेदः,'पार्थ एव धनुर्धरः' इत्यादावप्रसिद्धेः, पार्थ एव धनुर्धरत्वमित्यादौ बाधितत्वाच्च । अन्यसम-

---

उक्तसंसर्गेण- अन्वयितावच्छेदकाव्यापकव्यवच्छेदीयविशेषणतासंसर्गेण ॥

[12]त्रितयार्थकत्वमेवकारस्येति प्राचीनप्रसिद्धिमप्युपपादयति– अत्र च इत्यादिना ।

प्रसङ्गात् इति । पार्थान्यो घटः तद्योगप्रतियोगिकव्यवच्छेदस्य मनुष्ये सत्त्वादिति भावः । अप्रसिद्धेरिति । सर्वस्यापि यत्किञ्चिदपेक्षयान्यत्वादन्ययोगत्वावच्छिन्नप्रति-योगिताकव्यवच्छेदोऽप्रसिद्ध इत्यर्थः । ननु पार्थपदसमभिव्याहारेण पार्थान्ययोगत्वाव-च्छिन्नप्रतियोगिताव्यवच्छेदस्य धनुर्धरे सत्त्वात्नाप्रसिद्धिरत आह- पार्थ एव धनुर्धरत्व-

---

1 'एव' इत्यधिकः उ.
2 इत्थश्च अ. ऊ. इत्थश्चात्रान्य° उ.
3 °करण्यमात्रेण अ. आ. इ. उ.
4 °व्यवच्छेदेनान्वयः आ. ई.
5 अत्रा° आ.
6 विशेषणेन अ. विशेषतो ऋ.
7 'च' नास्ति इ. ई. उ.
8 बोदध्या इ.
9 'ननुअन्य' नास्ति उ. ऊ.
10 °योगव्यव° इ.
11 इव आ.
12 अत्र तृतीयार्थ° ख. ग.

वेतत्वाद्यवच्छिन्नाभावस्य सत्वेऽप्यसमवेतमात्रनिष्ठत्वात् । पार्थान्यतादात्म्य-त्वाद्यवच्छिन्नव्यवच्छेदस्यार्थत्वे तु [1]शक्त्यानन्त्यम् । 'ज्ञानमर्थं गृह्णात्येव' इत्यादावर्थग्राहकत्वाद्ययोगव्यवच्छे[2]दार्थकत्वं दुर्वारम् । तिङो [3]धर्मिपर-तया [धर्मिपरतायाः] अन्याय्यत्वादिति चेत्—

न, अन्ययोगे व्यवच्छेदे च शक्तिस्वीकारात् । 'नीलो घटो नास्ति' इत्यादौ नीलान्वितस्य घटादेः [4]नञर्थे अन्वये नीलघट[5]त्वाद्यवच्छि-

---

मिति । धनुर्धरस्य पार्थान्यत्वात् पार्थान्य[6]योगत्वावच्छिन्नव्यवच्छेदो धनुर्धरत्वे [7]बाधित इत्यर्थः । सत्वेऽपि- पार्थे एव धनुर्धरत्वमित्यादौ सत्वेऽपि । धनुर्धरत्वे पार्थान्यसम-वेतत्वत्वावच्छिन्नाभावस्य सत्वात् । धनुर्धरपदे उत्कृष्टधनुर्धरलक्षणाया वक्ष्यमाणत्वादिति भावः । असमवेतमात्र इति । असमवेतयावन्निष्ठत्वादित्यर्थः । तथा च 'पार्थ एव धनुर्धर' इत्यादौ धनुर्धरे पार्थान्यतद्वयवसमवेतत्वसत्वात् पार्थान्यसमवेतत्वत्वावच्छिन्नव्य-वच्छेदबोधो बाधितः । 'पार्थ एव आकाश' इत्यादेः प्रसङ्गश्च । आकाशे पार्थान्यसमवेत-त्वत्वावच्छिन्नव्यवच्छेदस्य सत्वादिति भावः । शक्त्यानन्त्यं इति । 'पार्थ एव धनुर्धर' इत्यत्र धनुर्धरे पार्थान्यतादात्म्यव्यवच्छेदस्य सम्भवेऽपि पार्थे एव धनुर्धरत्वमित्यादौ धनुर्धरत्वे पार्थान्यसमवेतत्वव्यवच्छेदस्यैव वक्तव्यत्वात् शक्त्यानन्त्यमित्यर्थः । दुर्वार-मिति । तथा चान्ययोगव्यवच्छेदमात्रे शक्तिरित्यनुपपन्नमिति भावः ।

नन्वन्ययोगव्यवच्छेदे शक्तावपि पार्थान्ययोगत्वावच्छिन्नप्रतियोगिताकत्वस्यापदार्थस्य व्यवच्छेदे लाभः कथम् । अन्यथा तत्र प्रमेयत्वादेरपि भानं स्यात् अविशेषादत आह— नीलो घट इत्यादि ।

---

[1] शक्त्यनेकत्वात् ऋ. 'शक्त्यानन्त्यम्' नास्ति ई.

[2] °दार्थकंदु° इ. [3] धर्मपर° ऋ.

[4] नङर्थेऽन्वयात् उ. ऋ. [5] °त्वाव° ऋ.

[6] °योगव्यवच्छिन्न° ख. [7] बाधः ख.

न्नप्रतियोगि[1]ताकत्वस्य संसर्गत्ववत् [2]व्युत्पत्तिबलात् 'पार्थ एव धनुर्धर' इत्यादौ पार्थाद्यन्वितस्यान्ययोगस्य व्यवच्छेदा[3]न्वये पार्थान्ययोग[4]त्वाद्यव-च्छिन्नप्रातियोगिता[5]कत्वस्य संसर्गत्वात् नातिप्रसङ्गः ॥

न चैवं प्रतियोगितामात्रेणान्ययोगविशिष्टव्यवच्छेद [6]एवार्थः । व्युत्पत्तिबलात् [7]उक्तप्रतियोगिता[8]कव्यवच्छेदस्य लाभसम्भवादिति वाच्यम् । ※पदार्थलाभे व्युत्पत्तेरतन्त्रत्वात् वाक्यार्थ[9]लाभ एव [10]अन्यत्र [11]तत्तन्व-

व्युत्पत्तिबलात्- नञादिपदोपस्थाप्येऽभावे प्रतियोगिनोऽन्वयितावच्छेदकावच्छिन्न-प्रतियोगिताकत्वसंसर्गेणैवान्वयो नान्यथेतिव्युत्पत्तिबलात् । नातिप्रसङ्गः—न प्रमेयत्वादेः भानप्रसङ्गः । 'पार्थ एव मनुष्य' इत्यादेः न प्रसङ्ग इति वा । अन्यत्र- 'नीलो घटो नास्ती'त्यादौ ।

1 °ताकत्वसंसर्गवत् ऋ. 2 'च' इत्यधिकः आ.
3 °न्वयात् पा° अ. आ. 4 °त्वाव° ऋ.
5 °कत्व संसर्गेणेति ना° ऋ.
6 वा अर्थः ऋ. एवास्तु आ. इ. एवार्थे ई.
7 °तत्प्रतियोगि° ई. 8 °कत्वस्य ऋ.
9 °लभ्य ई. 10 'अन्यत्र' नास्ति उ.
11 'तत्' नास्ति आ.

※ व्युत्पत्तिवादे– 'नीलो घट' इत्यादौ विशेषणविभक्तेरभेदार्थकत्वनिरूपण-प्रकरणे एकपदशक्तिलभ्ययोरर्थयोःविशेष्यविशेषणभावापन्नयोः संसर्गः आकाङ्क्षया न भासत इति निरूपितम् । तदत्रानुसन्धातव्यम् ।

तायाः क्लृप्तत्वात् ।

## एवकारार्थैकदेशेऽप्यन्यत्वे पदार्थान्वयनिरूपणम्

ननु [1]अन्ययोगे शक्तावपि तदेकदेशेऽन्यत्वे कथं [2]पार्थादेः पदार्थस्यान्वयः, 'पदार्थः [3]पदार्थेन अन्वेति, न तु पदार्थैकदेशेन' इति व्युत्पत्तेः । अन्यथा 'पशुः न पशुः' इत्यादेरपि योग्यतापातादिति चेत्—न, व्युत्पत्तिवैचित्र्यात् । घटात् पृथक् [4]परः अपरः पूर्वः उत्तर इत्यादौ पदार्थैकदेशे पृथक्त्वादाववधित्वादेः पदार्थान्तरस्यान्वयात्, क्वचित् तादृशा[5]न्वयस्वीकारात् । अत एव 'पक्त्वा भुक्तवान्' इत्यादौ कृदर्थकर्त्रेकदेशे कृतौ

---

अन्यथा-एकदेशान्वयस्य व्युत्पन्नत्वे । योग्यतापातादिति । पशुप्रतियोगिकभेदस्यापरपशुपदार्थैकदेशे लोमादौ सत्वात् योग्यतापातः । उच्चैःश्रवसि तेजस्त्वेन सङ्करभिया लोमवल्लाङ्गूलवत्त्वमेव पशुत्व[6]मित्यभ्युपगमात् । तेजस्त्वपृथिवीत्वव्याप्यनानापशुत्वस्वीकारे तु पशुत्वजातावेकदेशे पशुप्रतियोगिकभेदसत्वात् योग्यतापात इत्यर्थः । व्युत्पत्ति इति । 'पदार्थः पदार्थेने'ति व्युत्पत्तिविलक्षणव्युत्पत्तिबलात् आकाङ्क्षाबलादिति यावत् । अवधित्वादेः पदार्थान्तरस्य पृथक्त्वादावेकदेशेऽन्वयोऽस्तीत्यतः क्वचित् ससंबन्धिकस्थले एकदेशान्वयस्यापि स्वीकारादित्यर्थः । अत एव—एकदेशान्वयस्वीकारादेव । पक्त्वा इत्यादि । *पाकवर्तमानकृतिमान् भोजना[7]तीतकृतिमान् इत्यादिबोधे कृतावेव पाकादेरन्वयादिति भावः ।

---

| | | | |
|---|---|---|---|
| [1] अयोगश° | अ. अन्ययोग श° | | ऋ. |
| [2] पार्थस्यान्वयः | अ. | [3] पदार्थेनेति | अ. |
| [4] परं पूर्वः | आ. इ. ऋ. | [5] °न्वयस्य स्वी° | आ. |
| [6] °मित्युप° | ग. | [7] °तीत्यकृ° | ग. |

---

* अनुकूलतासम्बन्धेन पाकविशिष्टा या वर्तमानकृतिः तद्वानित्यर्थः । एवमग्रेऽपि ।

[1]क्रियाया अन्वयः । अत एव [2]च कृतः कृति[3]योग्ये लक्षणयोपपत्तौ न पाचकादिपदे [4]रूढिः । कृतियोग्यत्वं [5]च कृति[6]प्रयुक्तवृत्तिभागित्वम्, अत एव तन्निवृत्तौ नैतेऽधुना राज्ञः पाचकाः, किन्त्वन्य इत्यादिव्यवहारः ।

न चास्तु पाचकादिपदे पाककृतियोग्यादौ रूढिः, एकदेशान्वयस्यान्याय्यत्वादिति वाच्यम् । [7]तर्हि ओदनस्य पाचक इत्यादौ [8]कर्मत्वाद्यनन्वयप्रसङ्गात्; पाकादेरेकदेशत्वात् ।

परे तु पाचकः इत्यत्र कृतः कर्तैवार्थः । न तु कृतियोग्ये लक्षणा । पाकरक्ते श्याम [9]इतिवत् 'अपचति [10]पाचकः' [11]इत्यत्र [12]कृत्प्रयोगसम्भवादि[13]त्याहुः ।

---

कर्मत्वादि इति । षष्ठ्यर्थकर्मत्वादीत्यर्थः ।

[14]अपचति-पाकानुकूलवर्तमानकृतिशून्ये । कृत्प्रयोग इति । कालसामान्यमादाय वर्तमानार्थककृत्प्रयोग इत्यर्थः ।

---

| | | | |
|---|---|---|---|
| [1] क्रियान्वयः | ई. | क्रियायामन्वयः | ऋ. |
| [2] 'च' नास्ति | आ. | [3] °योग्यत्वलक्षणाया एवोप | ऋ. |
| [4] रूढः | ई. | [5] 'च' नास्ति | ऋ. |
| [6] °प्रयुक्तवेतनाभा° | ई. | [7] 'तर्हि' नास्ति | ऋ. |
| [8] कर्मत्वाद्यन्वय आ. कर्मत्वानन्वय | उ. | कर्मताद्यनन्यत्वप्र° | ऋ. |
| [9] अयमित° | इ. | [10] पाकः | अ. |
| [11] इत्यादौ उ. 'इत्यत्र' नास्ति | आ. | [12] कृति आ. कृदिति प्रयोग इत्याहुः | अ. |
| [13] 'आहुः' नास्ति | इ. | [14] अपि चेति | ख. |

तन्न । 'सूपकारस्तु पाचकः' इत्यादिकोशात् सूपकारत्वविशिष्टे पाचक[1]पदस्य रूढेः लक्षणाया वा आवश्यकत्वात् । पङ्कजपदस्य पद्मत्वविशिष्टे इव । सूपकारत्वं [2]तु प्रागुक्तमेव [3]इति दिक् ।

[4]अथ तथाप्यन्यत्वे नामार्थस्य पार्थादेः कथं भेदेनान्वयः । 'पार्थो भूतलम्' इत्यादवनन्वयाय विशेष्यतया [5]अभेदातिरिक्तसंसर्गकनामार्थप्रकारकबोधे तया [6]तदुत्तरप्रत्ययजन्योपस्थितेः हेतुत्वस्वीकारात् । 'पार्थमानय' इत्यादौ प्रत्ययार्थे एव तदन्वयादिति चेत् न । 'नायं पार्थ'

---

प्रागुक्तमेवेति । रूपानुकूल[सूपानुकूल]कृतिप्रयुक्तवृत्तिभागित्वमित्युक्तप्रायमित्यर्थः ।

अथेति । तथापि -एकदेशान्वयस्वीकारेऽपि । अनन्वयाय-आधेयतासंसर्गेण [7]भूतले पार्थान्वयवारणाय । तया- विशेष्यतया । प्रत्यय इति । सुप्प्रत्ययजन्योपस्थितेरित्यर्थः । हेतुत्व इति । घटमित्यादौ घटप्रकारकद्वितीयार्थकर्मत्वविशेष्यकबोधस्यैवोदयादिति भावः । ननु विशेष्यतासंबन्धेन नामार्थप्रकारकबोधे तेन संबन्धेन सुप्प्रत्ययजन्योपस्थितेः हेतुत्वे 'पार्थमानय' इत्यादौ यथा [पृथा] प्रकारकतद्धितीयार्थ [तद्धितार्थ][8]सुतविशेष्यकबोधो न स्यादत आह- पार्थमिति । प्रत्ययार्थे एवेति । द्वितीयार्थ एव पृथायाःतद्धितीयार्थ-[तद्धितार्थ]द्वारा अन्वयात् न व्यभिचार इत्यर्थः । नायमित्यादि । अत्र प्रतियोगित्वनिरूपकत्वसम्बन्धेन पार्थान्योन्याभाववान् पार्थसादृश्यवान् इत्यन्वयबोधदर्शनात् निपाततद्धि-

---

[1] पदस्य निरूढलक्षणया आ., पदस्यैव इ. पदे ई.

[2] 'तु' नास्ति ई.

[3] 'इति' नास्ति ई.

[4] ननु उ.

[5] भेदा° अ. आ. ई.

[6] तत्प्रत्यय° ई., 'तदुत्तर' नास्ति ऋ.

[7] भूतलप्रकारकपदार्थान्वय° क.

[8] °सुतप्रकारक° क.

इत्यादौ [1]नञर्थे, 'पार्थ [2]इव' इत्यादौ [3]इवाद्यर्थे पार्थादेः भेदेनान्वयात् । निपात[4]तद्धितार्थातिरिक्तविशेष्यके *तादृशबोधे ‡तस्याः हेतुत्वात् ।

पृथिव्यामेव गन्ध इत्यादौ एवकारार्थविवेचनम्

अत्र 'पृथिव्यामेव गन्धः' 'वह्निमत्येव धूमः' इत्यादौ गन्धादेस्संयुक्तसमवायादिना पृथिव्याद्यन्यवृत्तित्वेऽपि पृथिव्यन्यसमवेत [त्व] त्वादिना व्यवच्छेदादन्यसमवेत [त्व] त्वादिनैव [5]योगोऽर्थः [6]एवं च सति क्वचिदन्यसम-

---

तार्थातिरिक्तविशेष्यकनामार्थप्रकारबोधत्वावच्छिन्ने सुप्प्रत्ययजन्योपस्थितेःहेतुत्वमित्यर्थः । एवञ्च [7]'पार्थमानय' इत्यादौ [8]तद्धितार्थविशेष्यक[9]बोधस्वीकारेऽपि न व्यभिचारः । तस्य कार्यतावच्छेदकानाक्रान्तत्वादिति भावः ।

नन्वेवकारस्यान्ययोगत्वेन तत्र शक्तौ 'पृथिव्यामेव गन्ध' इत्यादौ पृथिव्यन्ययोगाभाववान् गन्ध इति बोधो [10]वाच्यः । स च न संभवति । संयुक्तसमवायाद्यात्मकयोगेन पृथिव्यन्यस्मिन् गन्धादेस्सत्त्वादत आह-अत्र पृथिव्यामेवेत्यादिना । व्यवच्छेदादिति ।

---

1 नङर्थे ऋ. 2 एव ई.
3 इवार्थे ऋ. इवाद्यर्थे च आ.
4 °तद्धितार्थ°नास्ति आ. ई. ऋ. °अव्ययार्था° अ.
5 योगार्थः ई. 6 एवं सति उ. एवं च क्वचि° ऋ.
7 "पार्थ एव धनुर्धर इत्यादौ तथा पार्थभूतल इत्यादौ भूतलप्रकारकाधेयत्वविशेष्यकबोधः । अत्राप्याधेयत्वस्य सप्तमीविभक्त्युपस्थितत्वात् पार्थप्रकारकान्यत्वविशेष्यकबोधस्य "इत्यधिकः क. ख.
8 'पृथक्प्रकारक' इत्यधिकः क. ख. 9 °बोधस्य च स्वी° ख.
10 स्यात् ग.

---

* अभेदातिरिक्तसंसर्गकनानार्थप्रकारकबोधे इत्यर्थः ।

‡ नामोत्तरप्रत्ययजन्योपस्थिते इत्यर्थः ।

वेतत्वं क्वचिदन्यसंयुक्तत्वादि[1]कमर्थ इत्यत्र किं नियामकम्? तात्पर्यादिकमिति गृहाण । न च तथापि तात्पर्य[2]सत्त्वे 'पृथिव्यामेव [3]सत्ता' इत्यतोऽपि पृथिव्यन्यसंयुक्तत्वाभाववती पृथिवीसमवेता सत्तेति बोधः स्यात् । संयुक्तत्वबोधक[4]समभिव्याहाराभावात् [5]एवकारेणान्यसंयुक्तत्वबोधासम्भवात् । तात्पर्यादिकामित्यादिना समाभिव्याहारविशेषसङ्ग्रहात् ।

अथै[6]वं 'पृथिव्यामेवाकाशमि'त्यादि स्यात् । पृथिव्यन्यसमवेतत्वादिव्यवच्छेदस्याकाशे सत्त्वात् । अतः पृथिवीसमवेतत्वाद्ययोगव्यवच्छेद एव अर्थो वाच्य इति चेत्—न । 'पृथिव्यामेव सत्ता' इत्यादेः प्रसङ्गात् । 'पृथिव्यामेव गन्ध' इत्यादितश्च गन्धादौ पृथिव्यादिवृत्तित्वं तदन्यवृत्तित्वव्यवच्छेदश्च प्रतीयत इति न 'पृथिव्यामेव [7]आकाश' इत्यादेः प्रसङ्गः ।

---

तथा च पृथिव्यन्यसमवेतत्वाभाववान् गन्धः । वह्निमदन्य-संयुक्त [संयुक्तत्वा]भाववान् धूम इत्येव बोध इति । एवञ्च -एवकारस्य [8]नानार्थत्वे च । तथापि-[9]एवकारेणान्यसमवेतत्वादिरूपयोगो[10]पस्थापने तात्पर्यादेर्नियामकत्वेऽपि । संयुक्तत्वबोधक इति । धूमादिपद इत्यर्थः ।

प्रसङ्गादिति । सत्तायां पृथिवीसमवेतत्वायोगव्यवच्छेदस्य सत्त्वादिति भावः । प्रतीयत इति । तथा च पृथिव्यन्यसमवेतत्वाभाववान् पृथिवीसमवेतत्ववांश्च गन्ध

---

1 °कमित्यत्र इ. 2 °सत्त्वेऽपि ऋ.
3 इत्यत्र आ. इ. 4 समभिव्यवहाराभावात् आ.
5 एवकारणान्य° ऋ. 6 'एवं' नास्ति इ.
7 आकशं ई. 8 'अन्ययोगांशे' इत्यधिकः क. ख.
9 'एवकारेण' नास्ति ग. 10 °पस्थितौ ग.

### चैत्रस्यैवेदं धनमित्यादौ एवकारार्थः

एवं 'चैत्रस्यैवेदं धनं' [1]'मैत्रस्यैवायं भ्राता' इत्यादौ चैत्रान्यस्वत्व-मैत्रान्यभ्रातृत्वादेर्व्यवच्छेदः । न तु चैत्रादिस्वत्वाद्ययोगस्योभय[2]स्वामिकादावपि [3]चैत्रस्यैवेत्यादेः प्रसङ्गात् । अत्र यद्यपि[4]मैत्रान्यभ्रातृत्वं न [5]मैत्रान्यजनकजन्यत्वं,मैत्रान्य[6] स्वजनकजन्यत्वस्य स्वस्मिन्न[7]पि सत्त्वेन तद्व्यवच्छेदायोगात् । नापि[8]मैत्रान्यत्वेन विशिष्टं तत् । मैत्रान्ययत्किञ्चिदन्यत्वस्याव्यावर्तकत्वात् । मैत्रान्यत्वावच्छिन्न [9]भदेस्य तु मैत्र एव सत्त्वात्, चैत्रमैत्रोभयभ्रातृके [10]'मैत्रस्यैवायं भ्राता' इत्यादेः [11]प्रसञ्जकत्वात् । तथापि मैत्रान्यो [12]यः चैत्रादिस्त्वत्त्वाद्यवच्छिन्नान्यत्वे सति तज्जनकजन्यत्वं

---

इत्यादिरेव बोधः । अन्यथा अन्यसमवेतत्वबोधस्य एवकारादेव सम्भवात् सप्तम्युपस्थापितसमवायादेरनन्वितत्वापत्तेरिति भावः ।

तत्-मैत्रान्यजनकजन्यत्वम् । अव्यावर्तकत्वादिति । मैत्रान्यघटान्यत्वविशिष्टस्य मैत्रान्यस्वजनकजन्यत्वस्य स्वस्मिन् सत्त्वेन तद्व्यवच्छेदायोगादित्यर्थः । प्रसञ्जकत्वादिति । चैत्रमैत्रोभयभ्रातृके अयंपदार्थः [पदार्थे ] मैत्रान्यजनकजन्यत्वस्य सत्त्वेऽपि मैत्रान्यत्वावच्छिन्नभेदस्य विशेषणस्यासत्त्वेन विशिष्टव्यवच्छेदसम्भवादिति भावः । चैत्रादिरिति । आदिना डित्थादेः सङ्ग्रहः । तत्त्वाद्यवच्छिन्न इति । चैत्रत्वाद्यवच्छिन्ना(चैत्रत्वादित्व-

---

1 चैत्रस्येव ऋ.
2 °स्वामिकेऽपि तथा प्रस° ई.
3 चैत्रस्य वेत्यादेः ऋ.
4 चैत्रान्य° ऋ.
5 'मैत्रान्यजनकजन्यत्वं' नास्ति ई.
6 'स्व' नास्ति ऋ.
7 'अपि' नास्ति इ
8 मैत्रान्यान्यत्वेन आ. मैत्रान्यत्वविशिष्टं उ. ऋ.
9 'भेदस्य.........प्रातिस्विकरूपेण तेन' इत्यन्तस्त्रुटितः आ.
10 'अपि' इत्यधिकः अ.
11 'प्रसञ्जकत्वात्'नास्ति अ.प्रसङ्गात् ई.
12 यत् ऋ.

तत्तद्भ्रातृत्वं तावदन्यतमत्वावच्छिन्नव्यवच्छेदो वाच्यः । इत्थञ्च भ्रातृपदं नानार्थकमिति एके ॥

मैत्रस्यैवायं भ्रातेत्यादौ मतान्तरेण एवकारार्थः

*[अन्ये तु]—अन्यत्वं जनकजन्यत्वं च भ्रातृपदार्थः । इत्थञ्च

---

त्वाद्यवच्छिन्ना)[1]न्यत्वे सति चैत्रडित्थादिजनकजन्यत्वं चैत्रडित्थादिभ्रातृत्वमित्यर्थः । तावदन्यतमत्व इति । तथा च 'मैत्रस्यैवायं भ्राता' इत्यादौ मैत्रान्य[त्व]विशिष्टचैत्रत्वडित्थत्वाद्यवच्छिन्नान्यत्वविशिष्ट-चैत्रडित्थादिजनकजन्यत्वाद्यन्यतमत्वावच्छिन्नव्यवच्छेदवानय-मिति बोधः इति । इत्थञ्च—चैत्रमैत्रादिभ्रातृत्वस्य भिन्नभिन्नस्यैव वाच्यत्वे च । एके इत्यस्वरसस्तु भ्रातृपदे नानार्थत्ववर्णनम् ।

मतान्तरमाह अन्ये त्विति । अन्यत्वत्वं जनकजन्यत्वत्वं चोभयं भ्रातृपदशक्यतावच्छेदकम् । शक्यतावच्छेदकता च व्यासज्यवृत्तिः, अन्यथा नानार्थता स्यादिति । [2]इत्थं च- अन्यत्वजनकजन्यत्वोभयस्य भ्रातृपदार्थत्वे च । [3]ननु भ्रातृपदात् यदि समभिव्याहृत-पदार्थता [4]वच्छेदकावच्छिन्नान्यत्वविशिष्टं तदवच्छिन्नजनकजन्यत्वं अन्वयितावच्छेदकावच्छि-

---

[1] °न्यचैत्र° क.

[2] 'इत्थञ्च ........वाच्यत्वे च' इत्यन्तस्त्रुटितः ग.

[3] 'ननु जन्यजनक (अन्यत्वजनकजन्य) त्वोभयमात्रस्य भ्रातृपदार्थत्वेऽपि मैत्र-भ्रातेत्यादौ यद्यपि समभि°' इत्यधिकः क. ख.

[4] °वच्छेदकमैत्रत्वावच्छिन्नान्यत्वे सति मैत्रान्यत्वावच्छिन्नान्यत्व° इत्यधिकः क.

---

* व्याख्यानुसारेण पाठोऽयं निवेशितः

मैत्रभ्रातेत्यादौ [1]मैत्रत्वाद्यवच्छिन्नान्य[2]त्वे सति तदवच्छिन्न[3]जनक-जन्यत्वं अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताक[4]त्व[5]व्युत्पत्त्यनुरोधेनैव प्रतीयते । [6]मैत्रान्यभ्रातेत्यादौ तु [7]स्वसमभिव्याहृतपदार्थस्य [8]मैत्रान्यादेः चैत्रत्वादियज्जात्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेना[9]न्यत्वे अन्वयः, तज्जा-त्यवच्छिन्न[10]कार्यतानिरूपित[11]कारणताकत्वसम्बन्धेन तज्जनके [12]अन्वयः। व्युत्पत्तिवैचित्र्यात् । नातः भ्रातृपदस्य नानार्थकत्वम् । न वा शिशु[13]शरी-

---

न्नप्रतियोगिताकत्वव्युत्पत्तिवशात् प्रतीयते, तदा मैत्रान्यभ्रातेत्यादावनन्वयः । मैत्रान्यत्वावच्छिन्नान्यत्वस्य मैत्र एव सत्त्वेन मैत्रान्यभ्रातर्यसत्त्वादित्यत आह -मैत्रान्य [14]इत्यादि । चैत्रत्वादियज्जातीति । तथा च मैत्रान्यभ्रातेत्यादौ मैत्रान्यनिष्ठ[15]चैत्रत्वावच्छिन्नप्रतियोगिताकान्यत्वे सति चैत्रत्वावच्छिन्नकार्यतानिरूपित[16]कारणताकत्ववज्जनकजन्योऽयमिति बोध इति भावः । व्युत्पत्तिवैचित्र्यादिति । तात्पर्यवशादित्यर्थः । मैत्रान्यभ्रातेत्यादौ मैत्रान्यपदस्यापि चैत्रादिपरत्वोपगमेन चैत्रत्वादेरपि समभिव्याहृतपदार्थतावच्छेदकतया अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकव्युत्पत्त्यैव निर्वाहात् विलक्षणव्युत्पत्त्यस्वीकारादिति भावः । यज्जात्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्यत्वे अन्वयः तज्जात्यवच्छिन्नकार्यतानिरूपितकारणताकत्वसंबन्धेन जनके अन्वय इति विवक्षायाः फलमाह-न वा शिशु इति । अन्यथा शिशु-

---

[1] मैत्राद्य° ऋ.
[2] °न्यत्वत्वांस्तद° इ.
[3] जन्यजनकः इ. जनकजन्यः ई.
[4] 'त्व' नास्ति ई.
[5] व्युत्पत्तिविरोधेनैव अ.
[6] मैत्राभ्राते° ई.
[7] नसम° ई.
[8] मैत्रादेः ई. 'मैत्रादेराधेयत्वकालिकोभयसम्बन्धेनोभयविशिष्टा............ चेष्टावद्वृत्तियज्जात्य° इत्यधिकः उ.
[9] °न्यत्वेनान्वयः ई
[10] कार्यत्वनिरूपितत्वसंब° अ.
[11] °कारणतावत्व° इ.
[12] अन्ययोगः उ.
[13] °शरीरादौ ई.
[14] 'इत्यादि । इत्थश्चात्र मैत्रान्यपदेन विशिष्यचैत्रादिरेव .....इति भावः । यदवच्छिन्नान्यत्वं तदवच्छिन्नजनकजन्यत्वमिति बोध' ग.
[15] चैत्रत्वाद्यव° क.
[16] °कारणतावच्छेदकत्वव° क.

रादेः युव[1]शरीरादौ भ्रातृत्वम् । न च ब्राह्मणत्वादिव्याप्यस्य विश्वामित्रादेः [2]नानात्वेन एकविश्वामित्रत्वा[3]द्यवच्छिन्नस्य भ्रातृत्वं कुतो न, अपरविश्वामित्रत्वाद्यवच्छिन्न इति वाच्यम् । ब्राह्मणत्वादिव्याप्यविश्वामित्रत्वाद्यवच्छिन्नस्य क्षत्रिय-पितृ[†][पित्र] जन्यत्वात् । एतत्पुत्रो ब्राह्मणो जात इत्यादिकं [4]तु गौणमिति [5]एके ।

---

शरीरान्यत्वेसति तज्जनकजन्यत्वस्य युवशरीरे सत्त्वात् 'अयं [6]मैत्रस्य भ्राता' इति प्रयोगः स्यात् । तद्विलक्षणे च [7]तदुभयशरीरनिष्ठचैत्रत्वादिजातेरेकत्वेन [8]तदवच्छिन्नान्यत्वस्य तत्रासत्त्वात् न तत्प्रयोग इति भावः । नानात्व इति । ब्राह्मणत्वं विना [9]विश्वामित्रत्वस्य क्षत्रियविश्वामित्रे सत्त्वात्,विश्वामित्रत्वं विना ब्राह्मणत्वस्य च वसिष्ठादौ सत्त्वात् तदुभयं ब्राह्मणविश्वामित्रे सङ्कीर्णम् । एवं [10]क्षत्रियत्वमादायापीति विश्वामित्रस्य तत्तद्व्याप्यस्य नानात्वमित्यर्थः । क्षत्रियपितृजन्यत्वादिति । तपोबलेन क्षत्रियावयवानां निर्गमे सति भक्ष्यविशेषप्रयुक्तमांसाद्यारब्धखण्डशरीर एव ब्राह्मणत्वस्वीकारात् । तत्र यद्यपि तदेव विश्वामित्रत्वं खण्डपटे पटत्वमिवोपपद्यते, तथापि प्रागुक्तसङ्करपरिहारायान्यदेव तत्स्वीक्रियत इति । न च तत्र विशुद्धमातापितृजन्यत्वस्य व्यञ्जकस्याभावात् न ब्राह्मणत्वमिति वाच्यम् । सर्गाद्यकालीने ब्राह्मणे तदभावेन तस्य ब्राह्मणत्वं [ब्राह्मणत्व] व्यञ्जकत्वाभावादिति भावः । एतत्पुत्रः-गाधिपुत्रः । गौणमिति । गाध्यारब्धसदृशसंस्थानविषयकत्वात् स व्यवहारो गौण इत्यर्थः ।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | °शरीरादेः | ई. | 2 | नानात्वे | ई. |
| 3 | °द्यवच्छिन्नभ्रातृत्वं | ई. | 4 | 'तु' नास्ति | इ. ऋ. |
| 5 | अन्ये | इ. | 6 | एतस्य | ख. |
| 7 | तत्तदुभयनिष्ठ° | ख. | 8 | तदवच्छिन्नसत्त्वस्य | ग. |
| 9 | विश्वामित्रस्य | ख. | 10 | क्षत्रियवृत्तिमादाया° | क. |

---

† व्याख्यानुसारेण पाठोऽयं निवेशितः

शीतस्यैव स्पर्शस्य जलवृत्तित्वमित्यत्र एवकारार्थः

एवं 'शीतस्यैव [1]स्पर्शस्य जलवृत्तित्वम्' इत्यत्र जलवृत्तित्वे शीतान्यस्पर्शसंबन्धस्य व्यवच्छेदः, न तु स्पर्शे शीतान्यत्वस्य । 'शीतस्यैव गुणस्य जलवृत्तित्वम्' इत्यादि [2]प्रयोगप्रसङ्गात् ।

चैत्रः जलमेव भुङ्क्त इत्यत्र एवकारार्थः

'चैत्रःजलमेव [3]भुङ्क्त' इत्यत्र चैत्रे जलान्य[4]भोजन[5]कर्तृत्वस्य [*]व्यवच्छेदः, न तु भोजने जलान्य [6]कर्मत्वस्य जलमन्नं च भोक्तरि तथाप्रयोगापत्तेः ।

---

न तु स्पर्शे इति । एतत्पक्षे शीतान्यत्वा-[7]भाववितः[भाववतः] स्पर्शस्य जलवृत्तित्वमिति बोध इति । शीतस्यैव गुणस्येति । शीतान्यत्वाभाववद्गुणस्य जलवृत्तित्वमिति बोधसंभवात् तादृशप्रयोगः स्यादिति भावः ।

न तु भोजने इति । एतत्पक्षे जलान्यकर्मकत्वाभाववत् भोजनकर्ता चैत्र इति बोध इति । जलमन्नं चेति । उभयभोक्तर्यपि तदीयजलभोजनमादाय जलान्ये[जलान्य]कर्मकत्वाभाववद्भोजनकर्तृत्वबोधसंभवात् तत्रापि 'जलमेव भुङ्क्त' इति प्रयोगस्स्यादिति भावः ।

---

1 स्पर्शजल° ऋ. 2 'प्रयोग' नास्ति ऋ.
3 भुञ्जते ई. 4 °भक्षण अ. 'भोजन' नास्ति उ.
5 कर्मत्वस्य उ. 6 कर्मकत्वस्य अ. कर्तृत्वस्य ऋ.
7 °भाववत् ख.

---

* तथा च 'जलमेव भुङ्क्त' इति वाक्यात् जलान्यकर्मकभोजनकर्तृत्वाभाववानिति बोधः । जलमन्नं च भोक्तरि जलान्य-अन्नकर्मकभोजनकर्तृत्वस्यैव सद्भावात् न तथाप्रयोग इति भावः ।

## चैत्रेणैवायं दृश्यत इत्यत्र एवकारार्थः

'चैत्रेणैवायं दृश्यत' इत्यत्रास्मिन् *चैत्रान्यवृत्तिदर्शनविषयत्वव्यवच्छेदः, न तु दर्शने चैत्रान्यवृत्तित्वस्य [1]चैत्रदर्शनस्य [2]तदन्यावृत्तित्वात्, उभाभ्यां दृश्यमानेऽपि [3]तथाप्रयोगापत्तेः ।

नन्वेवमन्य -[4]भ्रातृत्वान्यस्पर्शसम्बन्धादेरन्य- [5]संबन्धत्वाभावात् कथं तत्रान्ययोगव्यवच्छेदार्थकतेति चेत्—[6]सत्यम्, अन्ययोगेत्यस्यान्यसम्बन्धे— त्यर्थात् ।

---

अस्मिन्- अयं पदार्थे । न तु दर्शन इति । एतत्पक्षे चैत्रान्यवृत्तित्वाभाववद्दर्शनविषयोऽयमिति बोध इति । तदन्यावृत्तित्वात्- [7]चैत्रान्यावृत्तित्वात् । अयं च तादृशप्रयोगापत्तेरित्यत्र हेतुः । उभाभ्यामिति । चैत्रमैत्राभ्यां दृश्यमानेऽपि चैत्रवृत्तिदर्शनमादाय चैत्रान्यवृत्तित्वाभाववद्दर्शनविषयोऽयमिति बोधसंभवात् तत्रापि 'चैत्रणैवायं दृश्यत' इति प्रयोगः स्यादितिः भावः ।

---

1 'चैत्रदर्शनस्य' नास्ति ई. 2 तदन्यवृ° ऋ.
3 तादृशप्र° ई. 4 °भोक्तृत्वा° ई.
5 °संबन्धाभावात् ऋ. 6 'न' इत्यधिकः ई.
7 चैत्रावृत्ति° ख.

---

* चैत्रान्यवृत्ति यद्दर्शनं तद्विषयत्वस्य व्यवच्छेद इत्यर्थः ।

इयांस्तु [1]भेदः—[2]यदत्रान्यसमवेतत्वादि, [3]साक्षादन्यभक्षणकर्तृत्वादि, परम्परयान्य-संबन्ध [संबद्ध] मिति [4]तद्व्यवच्छेदस्तु प्रातिस्विकरूपेण, तेनान्य-सम्बन्धस्य [5]प्रमेयत्वादेः [6]सार्वत्रिकत्वेऽपि न क्षतिः ।

---

साक्षादिति । अन्यानुयोगिकसमवायवत्त्वादिरूपान्यसमवेतत्वादेरन्यस्मिन् साक्षादेव सम्बद्धत्वमित्यर्थः । परम्परयेति । जलान्यभक्षणकर्तृत्वस्य कृतिरूपस्य स्वविषयभक्षण-कर्मत्वसम्बन्धेन जलान्यस्मिन्नोदनादौ सम्बद्धत्वम् । चैत्रान्यवर्तिदर्शनविषयत्वस्य[7] च स्व निरूपकदर्शनसमवायित्वेन चैत्रान्यस्मिन् मैत्रादौ [8]सम्बन्धत्वं [9]मैत्रान्यजनकजन्यत्वपरूस्य-मैत्रान्यभ्रातृत्वस्य स्वनिरूपकनिरूपकत्वसंबन्धेन मैत्रान्यस्मिन् संबन्धत्वं शीतान्यस्पर्शसंबन्ध-स्य [10]च [11]स्वनिरूपकस्पर्शतादात्म्येन शीतान्यस्मिन् संबन्धत्वम् । [12]एवमन्यत्राप्यूह्यम् । ननु 'पृथिव्यामेवगन्ध' इत्यादौ पृथिव्यन्य[13]संबन्धप्रतियोगिताकव्यवच्छेदस्यार्थत्वे 'पृथिव्यामेव रूपम्' इत्यादिप्रसङ्गात् । गन्धे पृथिव्यन्य[14]संबन्धत्वावच्छिन्नव्यवच्छेदो वाच्यः । स च न संभवति । अन्यसंबन्धप्रमेयत्वादेस्तत्र सत्त्वादित्यत आह-तद्व्यवच्छेदस्त्विति । प्रातिस्विक इति । अन्यसमवेतत्वत्वादिनेत्यर्थः ।

---

[1] विशेषः उ. [2] यत्रान्य° ई. साक्षादन्य° उ.
[3] साक्षाद्भक्षण° ई. [4] लघ्वपाटर एवेत्यादौ व्यव° अ.
[5] मेयत्वादेः आ. [6] सार्वत्रिक इति न आ.
[7] 'च' नास्ति ग. [8] संबद्धत्वं ग.
[9] 'मैत्रान्य......... शीतान्यस्मिन संबन्धत्वम्' इत्यन्तस्त्रुटितः ग.
[10] 'च' नास्ति ग. [11] स्वनिरूपकस्य तादा° क.
[12] एवमत्रा° ग. [13] °सम्बद्ध° ग.
[14] °सम्बद्ध° ग.

## शङ्खः पाण्डर एवेत्यत्र एवकारार्थः

'शङ्खः [1]पाण्डर एव' इत्यादौ पाण्डरान्यतादात्म्यं व्यवच्छेद्यम् । न च 'पाण्डरेणैव चैत्रस्य धनम्' इत्यादौ इव तादात्म्योपस्थापक[2]समभिव्याहाराभावात् नैवं [3]युक्त[4]मिति वाच्यम् । तादात्म्यसंबन्धेन [5]तद्विशेष्ये तदन्यतादात्म्यव्यवच्छेदबोधं प्रति [6]विशेष्ये तादात्म्येन तत्प्रकारकबोधप्रयोजकपदोत्तर- एवकारत्वेनापि हेतुत्वात् ।

'पाण्डरेणैव धनम्' इत्यादौ [7]तु [8]न धनं तादात्म्येन *पाण्डरान्वयि,

---

पाण्डरेणैवेति । अत्र पाण्डरान्यतादात्याभाववत् धनं चैत्रस्वत्ववदिति बोधः । तृतीयया तादात्म्यस्य षष्ठ्या च स्वत्वस्योपस्थापनादिति भावः । नैवमिति । 'शङ्खः पाण्डर एव' इत्यत्र पाण्डरान्यतादात्म्यव्यवच्छेदबोधो न युक्त इत्यर्थः । तादात्म्यसंबन्धेनेति । [9]'शङ्खः पाण्डर एवे'त्यादौ तादात्म्येन पाण्डर[10]विशेष्ये शङ्खादौ पाण्डरान्यतादात्म्यव्यवच्छेदबोधत्वावच्छिन्नं प्रति [11]विशेष्ये शङ्खादौ तादात्म्येन पाण्डरप्रकारकबोधप्रयोजकपाण्डरादिपदोत्तरैवकारत्वेन हेतुत्वमित्यर्थः ।

ननु 'पाण्डरेणैव धनमि'त्यादौ तु ‡तादात्म्येन धनविशेष्यकपाण्डरान्यतादात्म्यव्यवच्छेदबोधे प्रागुक्तकार्यतावच्छेदकाक्रान्ते व्यभिचारः । धनविशेष्यकपाण्डरप्रकारक[12]बोधप्रयोजकपदोत्तरैवकारस्य हेतोरभावात् । [13]एवकारसंवलनेऽप्यत्र तृतीयोपस्थापित पाण्डरतादात्म्यप्रकारकधनविशेष्यकबोधस्यैव जायमानत्वादत आह- पाण्डरेणैव इति ।

---

[1] पाण्डरन्यतेत्यादौ ई. [2] समभिव्याहाराभावे नैवं ई समभिव्याहारे भावे नैवं ऋ.
[3] उक्तं आ. [4] 'इति वाच्यम्' नास्ति ऋ. [5] तद्विष्शेयतदन्य° ऋ.
[6] विशेष्यता° ऋ. [7] 'तु' नास्ति ऋ. [8] 'न' नास्ति ऋ. [9] 'शङ्खः... प्रति' इत्यन्तस्त्रुटित ग. [10] °विशेष्यश° ख. [11] °विशेष्यश° ख.
[12] 'बोध .. धनविशेष्यक' इत्यन्तस्त्रुटितः ख.
[13] एवकारासं° ग.

---

* पाण्डरान्वयानुयोगीत्यर्थः । धने तादात्म्यसंबन्धेन पाण्डरस्य न प्रकारत्वमिति भावः ।

‡ तादात्म्यसंबन्धेन पाण्डरस्य विशेष्यभूतं यद्धनं तद्विशेष्यकेत्यर्थः ।

किन्तु ‡ पाण्डरतादात्म्या-न्वयेवे [न्वय्येवे] ति व्यभिचारः । एवं तादात्म्येन तद्विशेषणे तदन्यतादात्म्यव्यवच्छेदबोधं प्रति तद्विशेष्यक- [1]बोधप्रयोजक-पदोत्तरैवकारत्वेन हेतुत्वात् ।

पार्थ एव धनुर्धर इत्यादावेवकारार्थनिरूपणम्

'पार्थ एव धनुर्धर' इत्यादौ विशेषणे धनुर्धरे पार्थान्यतादात्म्यव्यव-च्छेदो [2]बोध्यः । [3]उभयत्र [4]विशेष्यता मुख्यैव ग्राह्या । तेन 'शीत-

---

किन्त्विति । तथाचात्र तादात्म्येन पाण्डरविशेष्ये न पाण्डरान्यतादात्म्यव्यवच्छेदबोधः, किन्तु पाण्डरतादात्म्यविशेष्ये धने पाण्डरान्यतादात्म्यव्यवच्छेदबोधः; तस्य च प्रागुक्तकार्यतावच्छे-दकाक्रान्तत्वाभावात् न व्यभिचार इत्यर्थः । विशेष्ये विशेषणान्ये [विशेषणान्य] तादा-त्म्यव्यवच्छेदबोधोपयुक्तकार्यकारणभावं दर्शयित्वा विशेषणे विशेष्यान्यतादात्म्यव्यवच्छेद-बोधोपयुक्तकार्यकारणभावं दर्शयति- एवं तादात्म्येन इति । 'पार्थ एव धनुर्धर' इत्यादौ तादा-त्म्येन पार्थविशेषणे धनुर्धरादौ पार्थान्यतादात्म्यव्यवच्छेदबोधत्वावच्छिन्नं प्रति पार्थविशे-ष्यकबोधप्रयोजकपार्थादि पदोत्तरैवकारत्वेन हेतुत्वमित्यर्थः ।

उभयत्रेति । विशेषणान्यतादात्म्यव्यवच्छेदबोधोपयुक्तकार्यकारणभावे च प्रविष्टविशे-ष्यता मुख्यैव ग्राह्येत्यर्थः । मुख्यविशेष्यत्वं च तद्ज्ञानाविशेषणत्वे सति तद्ज्ञानविशेष्यत्वम् । यथा शीत(स्य)स्पर्शवत् जलमित्यादौ तद्विशेष्यत्वं जले एव न तु स्पर्शे । तस्य शीतविशेष्यत्वे-ऽपिजलविशेषणत्वादिति । उभयत्र मुख्यविशेष्यत्वविवक्षायाः क्रमेण फलमाह- तेनेति ।

---

[1] °बोधं प्र° ऋ. [2] बोधः आ. ई. उ.
[3] उत्तरत्र आ. [4] विशेष्यताकमु° ऋ.

---

‡ पाण्डरतादात्म्यान्वयानुयोगीत्यर्थः । धने पाण्डरतादात्म्यं प्रकारतया भासत इति यावत् ।

स्यैव स्पर्शस्य जलवृत्तित्वं' 'समवेतस्य नित्यस्यैव [1]'गुणवृत्तित्वं' इत्यादौ विशेष्ये स्पर्शे विशेषणस्य शीतस्य विशेषणे च [2]समवेते विशेष्यस्य नित्यस्य [3]नान्यतादात्म्य[4]व्यवच्छेदबोधः । न च 'शीत एव स्पर्शो जलवृत्तिरि' त्यादौ [5]विशेष्ये स्पर्शे शीतान्य[6]त्वस्य व्यवच्छेदबोधापत्तिः । इष्टत्वात् । जलवृत्तिस्पर्शत्वावच्छेदेन तद्बोध[7]स्याग्रे वाच्यत्वात्, तदस्वीकारे तु [8]तत्प्रकारकेत्यत्र तद्विधेयकेति वाच्यम् । मुख्यविशेष्यता न

---

बोधापत्तिरिति । स्पर्शे निरुक्तमुख्यविशेष्यतायाः सत्त्वादिति भावः । ननु 'शीत एव स्पर्शो जलवृत्तिरि'त्यत्र स्पर्शत्वावच्छेदेन शीतान्यत्वव्यवच्छेदबोधो न संभवतीति कथमिष्टापत्तिरत आह -जलवृत्ति इति । ननु 'शीत एव स्पर्शो जलवृत्तिरि'त्यत्र विशेष्यतानवच्छेदकजलवृत्तिस्पर्शत्वावच्छेदेन यदि शीतान्यत्वव्यवच्छेदबोधः तदा 'घटः पाण्डर एव ' इत्यपि प्रयोगः स्यात् । [9]शुक्लघटत्वावच्छेदेन पाण्डरान्यत्वव्यवच्छेदसम्भवादित्यरुचेराह-तदस्वीकारेत्विति । जलवृत्तिस्पर्शत्वावच्छेदेन शीतान्यत्वव्यवच्छेद[10]बोधास्वीकारे [11]तु इत्यर्थः । जलवृत्तौ शीतान्यस्पर्शे तादात्म्यव्यवच्छेदबोधस्यैव स्वीकारादिति भावः । तत्प्रकारकेत्यत्रेति । आद्यकार्यकारणभावे तत्प्रकारकेति विहाय तद्विधेयकबोधप्रयोजकपदो-

---

[1] गुणे वृ° आ.
[2] समवेतवि° ई.
[3] न तदन्य° आ.
[4] व्यवच्छेदो बोध्यः आ.
[5] विशेष्यस्पर्शे ऋ.
[6] °त्वस्य' नास्ति ऋ.
[7] °स्याप्यग्रे आ.
[8] तद्विषयकत्वेत्यत्र ई.
[9] नीलाद्यन्यघट° क. नीलान्यघट° ख.
[10] °बोधस्वी° ख.
[11] 'तु' नास्ति ख.

[1]निवेश्या इत्यदोषः । अस्तु वा[2]ऽत्र लाघवात् पाण्डरान्यत्वादेरेव-व्यवच्छेदः । पाण्डरान्यत्वादिव्यवच्छेदबोधत्वस्य जन्यतावच्छेदकत्वे लाघवात् । इत्थञ्चा[3]न्यत्वे शक्तिः अन्यसम्बन्धे लक्षणा ।

पृथिव्यामेव गन्ध इत्यादौ सप्तम्यर्थविशेषणस्यापि पृथिव्यादेरेवकारार्थे अन्वयोपपादनम्

ननु 'पृथिव्यामेव गन्ध' इत्यादौ [4]सप्तम्यर्थे विशेषणस्य पृथिव्यादेरे-वकारार्थे साक्षादन्वयायोगात् कथं पृथिव्याद्य[5]न्यलाभ इति चेत् -न, एवकार-

---

त्तरैवकारत्वेन हेतुत्वं वाच्यमित्यर्थः । 'शङ्खः पाण्डर एवे'त्यादौ पाण्डरस्य विधेयत्वात् पाण्डरविधेयकबोधप्रयोजक-[7]पाण्डरोत्तरैवकारसत्त्वात् उपपत्तिः । 'शीत एव स्पर्श' इत्यादौ तु शीतस्य विधेयत्वात् शीतविधेयकबोधप्रयोजकपदोत्तरैवकारा-[8]भावात् स्पर्शे शीतान्यत्वव्यव-च्छेदबोध इति भावः । न निवेश्या इति । मुख्यविशेष्यतानिवेशप्रयोजनस्य [9]तद्विधेयकेत्यने-नैव संभवात् । 'शीतस्यैव स्पर्शस्य जलवृत्तित्वमि'त्यादौ शीतस्य विधेयत्वात् शीतविधेयक-बोधप्रयोजकपदोत्तरैवकाराभावात् स्पर्शे शीतान्यतादात्म्यव्यवच्छेदबोधापादनासम्भवादिति भावः । अन्ययोगशक्तौ तदेकदेशान्यत्वे शङ्खादेरन्वयोऽनुचितः । 'पदार्थः पदार्थेने'त्येव व्युत्पत्तेरित्यपरितोषात् कल्पान्तरमाह-अस्तु वेति । इत्थञ्चेति । क्वचिदन्यत्वव्यवच्छेद-बोधसत्त्वे क्वचिदन्यसमवेतत्वादिव्यवच्छेदबोधसत्त्वे चेत्यर्थः । शङ्खः पाण्डर एवेत्याद्यभि-प्रायेणाह अन्यत्त्वे इति । शङ्खे पाण्डरान्यत्वव्यवच्छेदस्यैव बोधादिति भावः । 'पृथि-व्यामेवगन्ध'इत्याद्यभिप्रायेणाह-अन्यसम्बन्धे इति । गन्धादौ पृथिव्यन्यसमवेतत्वादिव्-यवच्छेदस्यैव बोधादिति भावः ।

सप्तम्यर्थे— सप्तम्युपस्थापितसमवेतत्वादौ । एवकारार्थे— एवकारोपस्था-पितान्यसमवेतत्वैकदेशे अन्यत्वे । 'घटमानये'त्यादौ द्वितीयार्थे विशेषणीभूतस्य घटादेः तद्द्वारानयनान्वयादाह- साक्षादिति । विभक्त्यर्थमद्वारीकृत्येत्यर्थः । एवकार-

---

[1] निवेश्यतेत्यदोषः उ.
[2] 'अत्र'नास्ति ऋ.
[3] न्यत्र ऋ.
[4] सप्तम्यर्थवि° आ. ऋ.
[5] °न्यत्वला° ऋ.
[6] 'न' इत्यधिकः क.
[7] पाण्डरादिपदोत्तरैव ख.
[8] भावान्तस्य स्पर्शः क. भावान्तस्पर्शः ख.
[9] तद्विधेयकल्पनेनैव ख.

(स्थल)[1] नियन्त्रितव्युत्पत्तिवैचित्र्यादेव, पृथिव्यादेः सप्तम्यर्थैवकारार्थयोः युग[2]पदेवान्वयात् ।

यदि च सप्तम्यर्थे पृथिव्यादे[3]रन्वयसामग्र्याः प्राथमिकत्वात् कुतो [4]नान्वयधीः, एवार्था[5]विषयकतद्बोधे तत्समभिव्याहृत-एवकारधियो विरोधित्वे तु गौरवमिति विभाव्यते । तदाऽस्तु तदादेः बुद्धिविषयतावच्छेदकावच्छिन्न-

नियन्त्रित इति । एवकारघटितवाक्ये [6]विभक्त्यर्थे विशेषणीभूतमप्येवकारार्थं विशेष्यत्वेनाकाङ्क्षतीति व्युत्पत्तिवैचित्र्यादेव पृथिव्याद्यन्यत्वलाभ इत्यर्थः । ननु[7] सप्तम्यर्थे विशेषणत्वेनान्वितं पृथिव्यादिनिराकाङ्क्षत्वात् कथमेवार्थे अन्व [अन्वि] यादत आह - पृथिव्यादेरिति । पृथिव्यादिपदोपस्थापितस्य सप्तम्यर्थैवकारार्थयोः युगपदेव 'खले कपोतन्यायाद'न्वयः । न तु पूर्वं सप्तम्यर्थ एवेति न निराकाङ्क्षत्वमिति भावः ।

'राजपुरप्रवेशन्यायमा'श्रित्य सप्तम्यर्थे प्रथमं पृथिव्याद्यन्वयबोधमाशङ्कते यदि चेति । अन्वयसामग्र्याः -सप्तम्यर्थोपस्थितिरूपायाः । प्राथमिकत्वात्- एकारात्पूर्वं श्रूयमाणसप्तम्या संपादितत्वात् । एवार्थ इति । एवकारार्थाविषयकसप्तम्यर्थविशेष्यकपृथिव्याद्यन्वयबोध इत्यर्थः । तत्समभिव्याहृत इति । पृथिव्यादिपदसमभिव्याहृत-एवकारज्ञानस्येत्यर्थः । गौरवमिति । तादृशैवकारधियः तत्र विरोधित्वे तदभावस्यापि कारणत्वं वाच्यमिति गौरवमित्यर्थः । शङ्कां निरस्यति - तदाऽस्त्विति । तदादेरिति । बुद्धिस्थत्वेन बुद्धिस्थ-

1 °नियन्त्रितत्वात् व्यु° ऋ. 2 °पदन्वयात् ई.
3 °रन्वयबोधसाम° आ. 4 नान्वयबोधः एवार्थवि° उ.
5 °विशेष्यके त° अ.
6 एवकारसमभिव्याहृत (प्रकृत्यर्थे) विभक्त्यर्थं चैवकारार्थं क. ख.
7 सप्तम्यर्थविशेष्यत्वेना° क.

बोधकत्ववत् एवकारस्यापि समभिव्याहृतपदार्थतावच्छेदकावच्छिन्नान्यत्वादिबोधकत्वम् ।

---

मात्रे तदादेः शक्तावपि बुद्धिस्थतावच्छेदकघटत्वपटत्वाद्यवच्छिन्नबोधकत्वं फलबलात् [1]आश्रीयते तद्वदित्यर्थः । अत एव 'तमानये'त्यादौ 'घटमानये'त्येव शाब्दबोधः, न तु बुद्धिस्थमानय इति । न च शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वेन कार्यकारणभावात् बुद्धिस्थत्वप्रकारकशक्ति[2]ग्रहात् बुद्धिस्थत्वेनैव घटाद्युपस्थितिः शाब्दबोधः [च] [3]स्यात्, न तु घटत्वादिनेति वाच्यम् । पदान्तरे तादृशकार्यकारणभावसत्त्वेऽपि सर्वनाम्नि तद्विरहात् । कार्यकारणस्य फलबलकल्प्यत्वात् । अत एव [4]सर्वनाम्नि न लक्षणेति सिद्धान्तः । बुद्धिस्थत्वप्रकारकशक्तिग्रहादेव तात्पर्यसहकृतात् विशेषरूपेण सर्वस्योपस्थितिसंभवादिति सम्प्रदायः ।

नव्यास्तु-तदादिः [तदादेः]प्रातिस्विकरूपेणैव तत्र तत्र शक्तिः । शक्ति[5]ग्रहपदार्थोपस्थित्यादीनां समानप्रकारकत्वेनैव कार्यकारणभावग्रहात् । न चायं कार्यकारणभावग्रहः पदान्तर एवेति वाच्यम् । सङ्कोचे मानाभावात् । प्रत्युत तत्तत्प्रकारकशाब्दबोधबलेन तत्तदवच्छिन्न एव शक्तिसिद्धेः । न चैवं कदाचित् 'तमानय' इत्यतः 'कम्बुग्रीवादिमन्तमानये'ति बोधो [6]लक्षणां विना [7]न स्यात् कम्बुग्रीवादिमत्त्वस्य गुरुतया शक्यतानवच्छेदकत्वादिति वाच्यम् । इष्टत्वात् । न च सर्वनाम्नि न लक्षणेति सिद्धान्तव्याकोपः ;तस्य निर्युक्तिकत्वेनानुपादेयत्वात् । इत्थञ्च तदादिपदं नानार्थमित्याहुः ।

एवकारस्यापीति । अन्ययोगे अन्यत्वे वा तस्य शक्तावपि समभिव्याहृतपदार्थतावच्छेदकपाण्डरत्वावच्छिन्नान्यत्वादिव्यवच्छेदबोधकत्वं फलबलादाश्रीयते । इत्थञ्च 'पृथिव्यामेव गन्ध' इत्यादौ पृथिव्यादेः सप्तम्यर्थ एवान्वयः, न तु एवार्थे । पृथिव्यन्यत्वलाभस्तु एवकारादेवेति भावः ।

---

[1] आश्रयते ग.
[2] °ग्रहाबुद्धित्वेनैव ग.
[3] स्यात् अन्ते तु ग.
[4] सर्वासां नाम्नि ग.
[5] °ग्रहेप° ग.
[6] लक्षणं ग.
[7] 'न' नास्ति क.

अस्तु वा व्यवच्छेदमात्रे शक्तिः। समभि[1]व्याहारविशेषोपस्थापित-[2]पदार्थान्यत्वादौ [3]लक्षणा। शक्यलक्ष्ययोः अन्वयः [4]अत्र व्युत्पत्तिवैचित्र्यात्।

यत्तु—व्यवच्छेदमात्रे शक्तिः, विशिष्टे तु पार्थान्यत्वादिव्यवच्छेदादौ लक्षणा इति। तन्न। [5]तथा सति पार्थ एवेत्यादितः कदाचित् पार्थादिव्यवच्छेदमात्र[6]बोधापत्तेः। न च तवाप्ययमनुयोगः [7]तत्तत्समभि-व्याहृतैवकारस्य तत्तदन्यत्वव्यवच्छेदबोधत्वमेव जन्यतावच्छेदक[8]मिति तु तुल्यमिति वाच्यम्। एवपदे व्यवच्छेदमात्रे शक्तिकल्पकस्य तन्मात्रबोधकत्वस्य क्वचिदप्यभावे[9]ऽपि विशिष्टे लक्षणार्थमेव तत्र

---

अन्यत्वे व्यवच्छेदेऽपि च शक्तिकल्पनायां गौरवादाह - अस्तुवेति। समभिव्याहार इति। पार्थादिपदसमभिव्याहारेत्यर्थः। शक्यलक्ष्ययोः - व्यवच्छेदपार्था[10]न्यत्वाद्योः।

तथा सति -एवकारस्य विशिष्टव्यवच्छेदे लाक्षणिकत्वे। कदाचित् -अन्वयाद्यनुप-पत्तिप्रतिसन्धानानवसरे। तवापि - पार्थान्यत्वादिमात्रलक्षणा [11]वादिनोऽपि। अयम् -व्यव-च्छेदमात्रबोधापत्तिरूपः। विशिष्टे - [12]पार्थाद्यन्यत्वव्यवच्छेदे। तत्र - व्यवच्छेदमात्रे।

---

1 °व्याहारवलोपस्थापितेः पार्थान्यत्वादौ अ.इ.
2 °पदार्थान्यत्वे ई. 3 लक्षणा इति। लाक्षणिकयोः ई.
4 'अत्र' नास्ति ऋ
5 तथा सति तथापि पा° उ.तथापि पा° ऋ.
6 °बोधापत्तिः ऋ. 7 तत्समभि° ऋ.
8 °मिति तुल्य° आ. °मिति वाच्यम् ऋ. 9 'अपि' नास्ति ऋ.
10 °न्यत्वयोः तवापि ग. 11 °वादिनाऽपि ग.
12 पार्थाद्यन्यतमत्व° ख.

[1]शक्तौ ज्ञेयत्व-वाच्यत्व- घटपटादावपि शक्त्यापत्तेरिति दिक् ॥

गुणवदेव द्रव्यमित्यादावेवकारार्थविवेचनम्

ननु 'गुणवदेव द्रव्यम्' इत्यादौ द्रव्यत्वादौ न गुणवदन्यवृत्तित्व-व्यवच्छेदान्वयः । [2]द्रव्यत्वत्वादेरनुपस्थितेः । तत्रेतरविधेयकबोधे सप्रकारकतदुपस्थितेः [3]हेतुत्वात् ।

किञ्च '[4]गुणवत्येव [5]द्रव्यम्' [6]इत्यादाविव तादृशान्वयनियामिकाया वृत्तित्वबोधकविभक्तेरभावात् द्रव्यत्वादेः पदार्थैकदेशत्वाच्च न [7]तथान्वयः । एतेन 'पार्थ एव धनुर्धर' इत्यादौ धनुर्धरत्वं धनुस्संयोगानुकूलशिक्षाविशेषः ।

---

शक्त्यापत्तेरिति । तावतापि शक्यसंबन्धरूपलक्षणोपपत्तिरिति भावः । दिगर्थस्तु लक्ष्यतावच्छेदकरूपम् ।

तत्र - उद्देश्ये । सप्रकारकेति । सप्रकारकोद्देश्योपस्थितेरित्यर्थः । अन्यथा निर्विकल्पकोपस्थिते पर्वतादौ वह्निविधेयकबोधापत्तेरिति भावः ।

ननु द्रव्यादिपदे द्रव्यत्वत्वादि[8]मद्द्रव्यत्वादिविशिष्ट[9]लक्षणया द्रव्यत्वत्वादिनोपस्थिते द्रव्यत्वादौ गुणवदन्यवृत्तित्वव्यवच्छेदान्वयो निष्कलङ्क इत्यरुचेराह - किञ्चेति । समवेतत्वादिरूपवृत्तित्वादिबोधकसप्तम्यादिविभक्त्यभावात् द्रव्यत्वादेः पदार्थैकदेशत्वाच्च ।

---

1 शक्तौ ज्ञेय ज्ञेयत्व° ऋ.
2 द्रव्यत्वत्वाद्यनु आ. द्रव्यत्वादेरनु° ऋ.
3 हेतुकत्वात् ऋ.
4 गुणत्वमेव इ.
5 द्रव्यत्वमि° ऋ.
6 'इति' नास्ति इ.
7 'इति' इत्यधिकः इ.
8 °मद्युक्तत्वादि° ग.
9 लक्षणायाः क.

शिक्षा च विलक्षणं ज्ञानं कृतिः वेति तत्त्वेनोपस्थितिरस्ति । द्रव्यादिपदे च [1]द्रव्यत्वादिमत् (द्रव्यत्ववत्वेन) [2]द्रव्यत्वविशिष्टे लक्षणेति तथा [3]अन्वयः संभवतीत्यपास्तम् । नापि द्रव्यादौ गुणवदन्यत्वव्यवच्छेदान्वयः, 'गुणवदेव द्रव्यम्'[4]इत्यादेरापत्तेरिति—

---

'गुणवदेव द्रव्यमि'त्यादौ 'गुणवत्येव द्रव्यत्वमि'त्यादाविव द्रव्यत्वादौ गुणवदन्यवृत्तित्वव्यवच्छेदबोधो न युक्त इत्याखण्डलार्थः । तत्त्वेन इति । ज्ञानस्य कृतेर्वा जातिविशेषरूपवैलक्षण्येनोपस्थितिरस्तीत्यर्थः । तथा च धनुर्धरत्वे पार्थान्यवृत्तित्वव्यवच्छेदबोधो युक्त इति भावः । इदमापाततः — धनुर्धरत्वस्य ज्ञानादिरूपत्वे तत्र पार्थान्यतदात्मवृत्तित्वसत्त्वेन तद्व्यवच्छेदासम्भवात् । [5]पार्थत्वस्य शरीरनिष्ठत्वात् । यदि चावच्छेदकतासम्बन्धेन धनुर्धरत्वस्य पार्थशरीरनिष्ठतया तत्सम्बन्धेन पार्थान्यवृत्तित्वव्यवच्छेदस्तत्र वाच्यः, तदापि तत्सम्बन्धस्य [6]वृत्त्यनियामकतया तत्सम्बन्धेन वृत्तित्वाप्रसिद्धेः तद्व्यवच्छेदासम्भव एवेति । वस्तुतस्तु धनुर्धरत्वं धनुस्संयोगानुकूलचेष्टाविशेषः, तत्र पार्थान्यवृत्तित्वव्यवच्छेदः संभवति । अत एव धनुर्धरे पार्थान्यतादात्म्यव्यवच्छेदबोधस्तत्र तत्र वर्णितः सङ्गच्छत इति । द्रव्यादिपदे च इति । *व्याख्यातपूर्वमेतत् । आपत्तेरिति । प्रमेयत्वसामानाधिकरण्येन गुणवदन्यत्वव्यवच्छेदबोधसंभवादिति भावः ।

---

1 द्रव्यत्ववत्ववत् अ. 2 द्रव्यवि° अ. तद्द्रव्यवि° आ.
3 अन्वयसम्भवात् । नापि ऋ. 4 इत्यादेरर्थोपपत्तें° आ.
5 'पार्थत्वस्य .................... .तत्संबन्धेन' इत्यन्तस्त्रुटितः क.
6 वृतिनि° ख.

---

'*ननु द्रव्यादिपदे द्रव्यत्ववत्वादिमद्द्रव्य (युक्त) त्वादिविशिष्टलक्षणया द्रव्यत्ववत्वादिनोपस्थिते द्रव्यत्वादौ गुणवदन्यवृत्तित्वव्यवच्छेदान्वयो निष्कलङ्क इत्यरुचेराह - किञ्चेति' [पदा - पृ - ६२] इति किञ्चेत्यस्यावतारिका अत्रानुसन्धेया ।

मैवम्[1] द्रव्यत्वाद्यवच्छेदेन गुणवदाद्यन्यत्वव्यवच्छेदान्वयात् । एवं 'इह चैत्र एव पचति' 'मैत्रेण ओदन एव भुज्यते' इत्यादौ लक्षणोपस्थित [लक्षणोपस्थिते][2] तादृशकर्त्रादौ [3]चैत्रान्यत्वादिव्यवच्छेदः। [4]विनापि वृत्तित्वबोधक[5]विभक्तिसमभिव्याहारं तात्पर्यवशात् लक्षणया [6]वोपस्थितस्य [7]चैत्रान्यवृत्तित्वस्य [8]तादृशकर्तृत्वादौ व्यवच्छेद इत्यन्ये ।

आत्मनैव ज्ञायत इत्यादावेवकारार्थः

'आत्मनैव ज्ञायते' 'इष्यते' 'यत्यते' इत्यादौ ज्ञानादावात्मान्य[9]समवेतत्वस्य व्यवच्छेदः । समवेतत्वोपस्थापकतृतीयायाः सत्त्वात् ।

---

कृतिफलयोः शक्ताभ्यां कर्तृकर्माख्याताभ्यां कर्तृकर्मणोरनुपस्थितेराह - लक्षणेति । आख्यातलक्षणया । उपस्थिते - इहदेशाधिकरणपाककर्तरि । आदिना मैत्रकर्तृकभोजनकर्मणीत्यस्य सङ्ग्रहः । आद्ये चैत्रान्यत्वस्य, द्वितीये चोदनान्यत्वस्य व्यवच्छेद इत्यर्थः । मतान्तरमाह - विनापीत्यादिना । तात्पर्यवशादुपस्थितस्य शाब्दप्रकारत्वेन भानासंभवादाह -लक्षणया वेति । एवकारलक्षणया वेत्यर्थः । तादृश इति । इह देशाधिकरणपाककर्तृत्वे । आदिना मैत्रकर्तृकभोजनकर्मत्व इत्यस्य सङ्ग्रहः । आद्ये चैत्रान्यवृत्तित्वस्य द्वितीये चोदनान्यवृत्तित्वस्य व्यवच्छेद इत्यर्थः । जलवृत्तिस्पर्शे वेति वाऽऽकारो पूर्वकल्पस्यैव साधीयस्त्वात् । एतत्तत्त्वं व्याख्यातमधस्तात् ।

---

1 द्रव्यत्वाव° इ. 2 तादृशशक्त्यादौ ऋ.
3 चैत्रान्यत्वव्य° ऋ. 4 विना चैत्रादौ परम्परया पायससंबन्धतद्भोक्त्राद्यभेदेनैवा . . . . . . . . . . . . . . . तितत्तत्पायसान्नभोक्त्रादेरन्योन्याभावरूपएव व्यवच्छेद इत्यर्थः' इत्यस्ति अ.
5 'विभक्ति' नास्ति ऋ. 6 'वा' नास्ति ऋ.
7 चैत्रान्यप्रवृत्ति° ऋ. चैत्राद्यन्यवृत्ति° उ. 8 'तादृश' नस्ति ई.
9 समवेतत्वव्य° ई. समवेतव्य° ऋ.

## शीत एव स्पर्शो जलवृत्तिरित्यादौ एवकारार्थः

एवं 'शीत एव स्पर्शो जलवृत्तिः' इत्यत्र [1]'जलवृत्तौ शीतान्यस्पर्श-तादात्म्यस्य जलवृत्तिस्पर्शो वा शीतायन्त्वस्य व्यवच्छेदः । व्यवच्छेदोऽपि [2]द्धेधा, अत्यन्ताभावोऽन्योन्याभावश्च । तत्र यत्र [3]यत्संबद्धं भेदेनान्वेति तत्र [4]तदन्यसंबद्धस्यात्यन्ताभावः । यथा 'पृथिव्यामेव गन्ध' इत्यादौ । यत्र त्वभेदेन तत्रान्योन्याभावः । यथा 'पायसमेव [5]भुङ्क्ते चैत्र' इत्यादौ पायसान्यभोक्तृभेदः प्रतीयते ॥

---

व्यवच्छेदोऽपीत्यत्रापि अन्यसम्बन्धद्वैविध्यं साक्षात्परम्पराभेदेन प्रागुक्तं समुच्चिनोति तत्र यत्रेति । गन्धादौ पृथिवीसम्बद्धसमवेतत्वादि भेदेनैवान्वेतीति तत्र पृथिव्यन्यसमवेतत्वा-देरत्यन्ताभावरूप एव व्यवच्छेद इत्यर्थः । यत्र त्विति । चैत्रादौ परम्परया पायससम्बद्धं तद्भोक्त्राद्यभेदेनैवान्वेतीति तत्र पायसान्यभोक्त्रादेरन्योन्याभाव[6]रूपव्यवच्छेद इत्यर्थः । सर्वत्रैवकारघटितवाक्ये तदसंवलनेऽपि यादृशबोधो जायते तादृशबोध[7]स्याप्यभ्युपगमात् । अत एव 'पायसमेव भुङ्क्ते' इत्यादौ चैत्रः पायसकर्मकभोजनकर्ता पायसान्यकर्मकभोजनकर्तृ-भेदवांश्चैत्र इति बोधोऽनुभवसिद्ध इति ।

---

[1] जलवृत्ति शी° ई. [2] द्वयी इ., द्विधा ई.

[3] यत्सम्बन्धं ऋ. [4] तत्सम्बन्धमंत्य° ऋ.

[5] भोक्ता इत्यादौ अ. आ. इ. [6] °रूपत्वव्य° क. ग.

[7] °स्याभ्यु°

### जातिमत्येव सत्ता इत्यादावेवकारार्थः

'जातिमत्येव सत्ता' इत्यादौ सत्ताया एवकारार्थसमवायेन सामान्यदौ वृत्तेः जातिमदन्यवृत्तित्वसामान्यस्य न व्यवच्छेदः । नापि जातिमदन्यसमवेतत्वस्याप्रसिद्धत्वात् । किन्त्वनन्य-[1]गत्या 'समवेती'त्याहारात् [2]सत्तासमवाये जातिमदन्यवृत्तित्वव्यवच्छेदः ।

### अन्ययोगव्यवच्छेदस्य द्वेधा निरूपणम्

यद्वा अन्ययोगव्यवच्छेदोऽपि [3]द्वेधा, अन्ययोगस्य साक्षात्परम्परा-[4]साधारणान्ययुक्तस्य वा व्यवच्छेद इत्येकः । [5]अन्यस्मिन् योग-[6]व्यवच्छेदो व्यवच्छेदमात्रमन्यान्वितो वा व्यवच्छेद इत्यपरः ।

---

जातिमदिति । जातिमदन्यवृत्तित्वस्य स्वरूपसंबन्धावच्छिन्नस्य जातित्वादौ प्रसिद्धस्य सत्तासमवाये व्यवच्छेद इत्यर्थः । 'सकृदुच्चरितः शब्दः सकृदर्थं प्रत्याययति' इति व्युत्पत्तेः सकृदेवकारात् शक्तिभ्यां शक्तिलक्षणाभ्यां वा अन्ययोगव्यवच्छेदयोरुपस्थित्यसम्भवात् ।

विशिष्टव्यवच्छेदे शक्तिमभ्युपगम्य कल्पान्तरमाह - यद्वेति । पायसान्यभोक्तृत्वादेरन्ययोगत्वाभावात् तत्साधारण्यार्थमाह - साक्षात्परम्परा इति । अन्यस्मिन् योगव्यवच्छेदस्य शक्यतत्रे योगप्रवेशात् गौरवमत आह-व्यवच्छेदमात्रमिति । अन्यस्मिन् तत्तत्सम्बन्धेन व्यवच्छेदमात्रमित्यर्थः । 'जातिमत्येवसत्ते'त्यादावपि जातिमदन्यस्मिन् समवायेन सत्ताव्यवच्छेदबोधः संभवतीति न किञ्चिद्बाधकमत्रकल्पे इति भावः । *वक्ष्यमाण-[वक्ष्यमाणा] स्वरसादाह-अन्यान्वित इति । अन्यस्मिन् अन्वितो व्यवच्छेद इत्यर्थः ।

---

[1] °गता ऋ. [2] 'सत्ता नास्ति इ.
[3] द्वयी ई. [4] °साधारणस्यान्य° आ.
[5] अन्ययोग° ऋ. [6] 'व्यवच्छेदो' नास्ति उ.

---

* 'पृथिव्यामेव सत्ते' ति प्रयोगापत्तिरूपादस्वरसादित्यर्थः ।

[1]तत्र प्रथमः । '[2]चैत्रस्यैव इदं धनम् 'शङ्खः पाण्डर एव' इत्यादावन्यत्वस्याप्यन्यसम्बद्धत्वात् ।

अस्तु वा अन्यतादात्म्य-[3]मात्रं व्यवच्छेद्यम् । तेनान्यसम्बद्धत्वमन्यघटितत्वम् । न चान्यत्रैव तत्सम्भवः इत्युक्तावपि न क्षतिः । न चात्र प्रथमे चैत्रान्यस्मिन् धनस्वामित्वव्यवच्छेदबोधस्य धन[4]स्वामित्वत्वेनोपस्थापकपदाभावात् असंभवेऽपि द्वितीये [5]पाण्डरान्यस्मिन् [6]शङ्खभेद-बोधसंभवात् कथमाद्य-[7]कल्प एव [8]तदुदाहृतमिति वाच्यम् । [9]पाण्डरान्यस्मिन् शङ्खभेदबोधे [10]पाण्डर एव शङ्ख इति विशेष्यसंगतस्य, शंखत्वावच्छे-

---

चैत्रस्यैवेदमित्यादि । धने चैत्रान्यस्वत्वस्य शङ्खे पाण्डरान्यत्वस्य [11]व्यवच्छेद इत्यर्थः । ननु चैत्रान्यस्वत्वस्यान्ययुक्तत्वसम्भवेऽपि पाण्डरान्यत्व[12]स्यान्ययुक्तत्वाभावात् तत्र कथमन्ययुक्तव्यवच्छेदार्थकतेत्यत आह - अन्यत्वस्यापीति । तथा च पाण्डरान्यत्वं न तदन्योन्याभावरूपम् । किन्त्वन्यस्य भावो धर्म इति व्युत्पत्त्या पाण्डरान्यनिष्ठनीलत्वादिकं तस्य चान्यसम्बद्धत्वं संभवतीति भावः ।

ननु पाण्डरान्यत्वस्य तदन्यनिष्ठधर्मपरत्वे गौरवात् अन्यत्वं अन्योन्याभावरूपमेव वक्तव्यम् । तत्र चान्यघटितान्यसम्बद्धत्वं न संभवतीत्यस्वरसादाह- अस्तु वेति ।

---

[1] अत्र ऋ. [2] मैत्रस्यैव उ.
[3] °मत्रव्य° आ. [4] °स्वामित्वेनोप° ई.
[5] पार्थान्य° उ. [6] शङ्खे भेद° आ.
[7] पक्ष ई. [8] तत्त्वमिति ई.
[9] 'पाण्डरा ............... शङ्ख'-इत्यन्तस्त्रुटितः अ.
[10] 'पाण्डरत्वावच्छेदेन शङ्खान्यत्वव्यवच्छेदबोधेच' इत्यधिकः ई.
[11] 'व्यवच्छेदः......... पाण्डरान्यत्वस्य' इत्यन्तस्त्रुटितः क.
[12] °स्यायुक्त° ख.

देन पाण्डरान्यत्वव्यवच्छेदबोधे 'शङ्खः पाण्डर एव' इति विशेषणसंगतैवका-रस्य [1]प्रयोजकत्वात् [2]बोधे वैलक्षण्यस्यानुभाविकत्वादिति ।

द्वितीयस्तु 'जातिमत्येव सत्ता' इत्यादौ जातिमदन्यस्मिन् सत्ता[3]-समवायस्य समवायेन वा सत्ताया [4]अभावस्य सत्त्वात् ।

'पार्थ एव धनुर्धर' इत्यत्र पार्थान्यस्मिन् धनु[5]र्धरभेदो [6]व्यवच्छेदस्य द्वैरूप्यात्, न तु धनुर्धरे पार्थान्यत्वव्यवच्छेदः । 'धनुर्धरः पार्थ एव' इत्यत्रैव तद्बोधात् । 'पृथिव्यामेव गन्ध' इत्यादौ द्वयमेव [7]सम्भवति । गन्धे पृथिव्यन्यसमवेतत्वस्य पृथिव्यन्यस्मिन् समवायेन गन्धस्य [8]वाऽभावस्य सत्त्वात् । न चैवं 'पृथिव्यामेव सत्ता'[9]इत्यपि स्यात् पृथिव्यन्यस्मिन् सामान्यादौ सत्ताभावसत्त्वादिति वाच्यम् । *अन्वयितावच्छेदका-[10]वच्छेदेनैवान्वयितावच्छेदका-[11]वच्छिन्नस्यापि [12]क्वचित् व्यवच्छेदान्वय-बोधात् । प्रकृते तथैव स्वीकारात् [13]इत्यत एवास्व रसात् अन्यान्वितो वा व्यवच्छेद इत्युक्तम् । तथा चावच्छेदकावच्छेदेनान्यविशेष्यकबोध-स्वीकारात् अदोषः ।

---

प्रकृते- अन्यस्मिन् योगव्यव च्छेद इति द्वितीयकल्पे । अन्यान्वितो वेति यथाश्रुतकल्पे न पृथिव्यामेव सत्तेत्यस्य[सत्तेत्यस्या]वारणात्तस्यार्थमाह - तथा चेति । अदोष इति । 'पृथि-

---

[1] प्रयोजनत्वात् ऋ. [2] बोधवै° अ. [3] °समवायासम° ऋ.
[4] वाऽभा° ई. वाऽभावार्थस्य उ. [5] °र्धरस्यभेदो आ.
[6] व्यवच्छेदादस्य आ. व्यवच्छेदः वैरू° ई. ऋ. [7] 'तु' इत्यधिकः अ.
[8] चाऽभा° आ. ऋ. [9] इत्यत्रापि ई. [10] °वच्छिन्न इवा° अ.
[11] °वच्छिन्नेऽपि ऋ. [12] क्वचिदन्वय° अ. [13] इत एव वाऽस्व° आ.

---

* तथा च पृथिव्यन्यस्मिन् सामान्यादौ सत्ताभावसत्त्वेन पृथिव्यन्यत्वसामाना-धिकरण्येन सत्ताभावस्य सत्त्वेऽपि पृथिव्यन्यस्मिन् जलादौ सत्ताभावस्य सत्त्वेन पृथिव्य-न्यत्वावच्छेदेन सत्ताभावस्य वाधितत्वात 'पृथिव्यामेव सत्ते'ति नापादयितुं शक्यत इति भावः । अत्र प्रथममन्वयितावच्छेदकपदं अनुयोगितावच्छेदकपृथिव्यन्यत्वपरम् । द्वितीयमन्वयितावच्छेदकपदं प्रतियोगितावच्छेदकसत्तात्वपरम् ।

इह भवने चैत्रेणैव पक्ष्यते तेमनं इत्यत्र एवकारार्थः

'इह भवने [1]चैत्रेणैव [2]पक्ष्यते तेमनम्' इत्यादौ [3]चैत्रान्यस्मिन् [4]इह-भवनीयतेमनपाकानुकूलभविष्य[5]त्कृतियोगव्यवच्छेदो लक्षणया प्रत्याय्यः [6]योग[7]व्यवच्छेदमात्रवाचिनोऽप्येवकारस्य विशिष्टव्यवच्छेदे लाक्षणिकत्वसम्भवात्, न तु तेमने [8]चैत्रान्यभविष्यत्कृतिविषयतत्रत्यपाककर्मत्वस्य [9]तत्रत्यतेमने वा चैत्रान्यभविष्यत्कृतिविषयपाककर्मत्वस्य व्यवच्छेदः । तत्र चैत्रान्यकर्तृकपाकविरहात् । अन्यत्र तरुणीपक्ष्यमाणतेमनस्य [10]तत्रानेष्यमाणत्वाच्च ।

---

यामेव सत्ते'त्यपप्रयोगनिरासः। पृथिव्यन्यत्वावच्छिन्नविशेष्यकसत्ताव्यवच्छेदबोधस्य तत्राभावादिति भावः ।

प्रत्याय्य- इति । तद्भवनाधिकरणकचैत्रवृत्तिभविष्यत्कृतिविषयपाककर्म तेमनमिति बोध एवकाराघटितवाक्योत्थः । वृत्तित्वस्य [11]तृतीयार्थस्य कृतावन्वयात् । मैत्रान्यत्वावच्छिन्नः तद्भवनीयतेमनपाकानुकूलभविष्यत्कृतियोगव्यवच्छेदवानिति बोधस्तु एवकारलक्षणयैवेत्यर्थः 'तत्रत्यतेमने वा' इति। कल्पं दूषयति- अन्यत्र तरुणी इति । अन्यदेशे [12]तरुणीपक्ष्यमाणतेमनस्यतत्र नेष्यमाणस्य तत्रत्यतेमनतया तत्र चैत्रान्य[13]तरुणीभविष्यत्कृतिविषयपाककर्मत्वसत्त्वेन तद्व्यवच्छेदासम्भवादिति भावः । तेमनम्- शाकविशेष इति ।

---

1 मैत्रेणैव ई. 2 पच्यते ऋ.
3 मैत्रा° ई. 4 तद्भव° आ. ई.
5 °कृतिव्यव° आ. °कृत्यन्ययोगव्यव° उ. 6 'योग' नास्ति इ.
7 °व्यवच्छेदे ऋ. 8 मैत्रान्य° ई.
9 'तत्रत्य ............ पाककर्मत्वस्य' इत्यन्तस्त्रुटितः अ. आ. इ. उ.
10 तत्रान्वेष्य° उ. तत्र नेष्य ऋ. 11 तृतीयार्थपरस्य क.
12 'तरुणी . . . चैत्रान्य°' इत्यन्तस्त्रुटितः क.
13 °तरुणीयभवि° क.

[1]यत्तूक्तस्थले [2]व्यवच्छेदस्य शक्त्यैव [3]बोधः । तादृशकृतिमात्रे आख्यातस्यैव लक्षणा इति । तन्न । व्यवच्छेद-शक्त्यैव [शक्तैव] कारजन्यतादृशबोधे तादृशकृत्युपस्थापकसमभिव्याहारापेक्षायाः [4]'चैत्र एवात्र तेमनं [5]पक्ष्यते' इत्यादौ क्लृप्तत्वात् तदभावे [6]शक्त्या तद्बोधासंभवात् । न च उदाहृतेऽपि लक्षणया तादृशकृत्युपस्थापकं कर्माख्यातम्, आख्यतस्यैवैकदा कर्तृकर्मत्वबोधकत्वे [7]'चैत्रः पक्ष्यते तण्डुल' इत्यादिप्रयोगापत्तेः ।

एवं 'आत्मनैव तेमनं ज्ञायते' 'पच्यते' [8]'इष्यते' 'भुज्यते' इत्यादौ *[9]आत्म [आत्मान्य]ज्ञेयत्वादेः †[10]अप्रसिद्धत्वेन व्यवच्छेदासंभवात् ।

---

उक्तस्थले-'इह भवने चैत्रेणैव पक्ष्यते तेमनमि'त्यादौ। तादृशकृतिमात्रे-तद्भवनीयतेमनपाकानुकूलभविष्यत्कृतिमात्रे। तादृशबोधे-तद्भवनीयतेमनपाकानुकूलभविष्यत्कृतिव्यवच्छेदबोधे । तादृशकृत्युपस्थापक इति । कर्त्राख्यात इत्यर्थः । उदाहृतेऽपि -'इह भवने चैत्रेणैव पक्ष्यते तेमनमि'त्यादावपि । प्रयोगापत्तेरिति । 'चैत्रः पक्ष्यते तण्डुलम्' इत्यादौ तण्डुलकर्मक-

---

| | | | |
|---|---|---|---|
| 1 यदुक्त° | आ. | 2 'अपि' इत्यधिकः | इ. |
| 3 'कारजन्य' इत्यधिकः | आ. | 4 मैत्र | आ. |
| 5 पक्ष्यति | आ. इ. | 6 'अन्य' इत्यधिकः | ई. |
| 7 मैत्र | ई. | 8 'दृश्यते' इत्यधिकः | इ. |
| 9 आत्मान्यस्य ज्ञे° | ई. | 10 अप्रसिद्धत्वे व्य° | ई. |

---

* आत्मन्यसमवेतज्ञानविषयत्वादेरित्यर्थः ।

† ज्ञानस्यात्मान्यसमवेतत्वासम्भवादित्यर्थः ।

आत्मनि अस्मिन् [आत्मान्यस्मिन्] †तेमनज्ञानाभावो लक्षणया प्रतीयते ॥

यत्तु- ज्ञानादावात्मान्यवृत्तित्वव्यवच्छेद इति। तन्न[1]– [2]'चैत्रेणैव तेमनं ज्ञायत ‡ [3]इत्यादेरापातात् ॥

रूपेण पृथिव्यामेव वृत्त्यत इत्यादावेवकारार्थः

ननु 'रूपेण पृथिव्यां वृत्त्यत' इत्यत्र पृथिवीनिरूपितवृत्तित्वं रूपवृत्तीति वाक्यार्थः। इत्थञ्चैवकार *संवलने पृथिवीनिरूपितवृत्तित्वाद्यन्यत्वव्यवच्छेदो रूपवृत्तिः [4]इत्यर्थस्य बाधितत्वात् तादृशवृत्तित्वायोग-[5]व्यवच्छेद एवार्थ इति चेत् .न। [6]धातोः [7]वृत्तिमाति लक्षणया पृथिवीवृत्त्यन्यत्व-

---

पाकानुकूलभविष्यत्कृतिमांश्चैत्रः ,चैत्रवृत्तिभविष्यत्कृतिविषयपाककर्म तण्डुल इति द्विविधबोधस्याख्यातेन शक्तिलक्षणाभ्यां संभवात् । 'पक्ष्यते' इत्यस्य कर्तृकर्मणोस्तुल्यत्वादिति भावः ।

---

[1] 'चैत्रमैत्रोभयज्ञानविषये' इत्यधिकः उ.

[2] 'चैत्रेणैव ..................ति चेन्न' इत्यन्तस्त्रुटितः इ. मैत्रे° ई.

[3] इत्यादेरप्यापत्तेः आ. [4] इत्यर्थः स्यात्, ता° ई.

[5] °व्यवच्छेदे इत्यर्थ° ऋ. [6] धातौ अ. ई. ऋ.

[7] वृत्तित्वमिति आ.

---

† तेमनविषयकज्ञानाभाव इत्यर्थः ।

‡ तेमनविषयकज्ञाने आत्मान्यवृत्तित्वस्याबाधितत्वादिति भावः ।

* वृत्त्यतेत्यस्यानन्तरमिति शेषः । तथा च 'रूपेण पृथिव्यां वृत्त्यत एव' इति वाक्यं सम्पद्यते ॥

[पृथिवीवृत्तिमदन्यत्व] व्यवच्छेदस्यार्थत्वात् ।

यदि चेदृशलक्षणायां [1]भावान्वये रूपेणेति तृतीयायाः तादात्म्यमेवार्थः । अन्यथा [2]'स्नेहेन पृथिव्यां वृत्यत एव' इत्यपि स्यात् । पृथिवी-[3]वृत्तिसत्त्वादेः स्नेहवृत्तित्वात् । तथा च तादात्म्योपस्थापक-[4]समभिव्याहारसत्त्वात्, पृथिवी-[5]निरूपितवृत्त्यन्यत्वव्यवच्छेदबोधो न [6]युक्तः । तादृशबोधे तादात्म्येन तद्बोधकसमभिव्याहा[7]रस्यान्यत्र[8]कारणत्वेन क्लृप्तस्याभावाच्चेति विभाव्यते । तदास्तु पृथिवी।वृत्त्यन्यतादात्म्यव्यवच्छेदः अर्थः ॥

---

अर्थत्वादिति । तथा च [9]रूपं पृथिवीवृत्तिमदन्यत्वव्यवच्छेदवदिति बोधः ।

ईदृशलक्षणायाम् - वृत् धातोः वृत्तिमति लक्षणायाम् । भाव इति । तृतीयार्थस्य धात्वर्थान्वय इत्यर्थः । तादात्म्यमेव इति । तथा च 'रूपेण पृथिव्यां वृत्यत' इत्यत्र रूपतादात्म्यवत्पृथिवीनिरूपितवृत्तिमदिति बोधः । अन्यथा-ईदृशलक्षणायां भावान्वयेऽपि-[10]तृतीयार्थस्य धात्वर्थान्वयेऽपि [11]तृतीयया [12]वृत्तित्वार्थकत्वे । तादृशबोधे - अन्यत्वव्यवच्छेदबोधे । तद्बोधक इति । व्यवच्छेदार्थबोधकेत्यर्थः । अन्यत्र - 'शङ्खः पाण्डर एवे'त्यादौ । तदास्त्विति । तथा च 'रूपेण पृथिव्यां वृत्यत एवे'त्यत्र रूपतादात्म्यवत्पृथिवीवृत्तिमत् । पृथिवीवृत्तिमदन्यतादात्म्यव्यवच्छेदवच्च रूपमिति द्विविधबोधोऽध्यवसेयः ।

---

1 अभावा° ई.

2 रूपवृत्तिपृथिवीवृत्तीतिप्रकृतवाक्यार्थे स्ने° इत्यधिकः अ. आ.

3 °वृत्तिमत्सत्तादेः उ.

4 समभि . . . . . . तद्बोधक'इत्यन्तस्त्रुटितः ई.

5 'निरूपित' नास्ति अ. इ.

6 युक्तम् ऋ.

7 °स्यात्र उ.

8 करणत्वेन ऋ.

9 'रूपं' नास्ति क. ग.

10 तृतीयायाधा° क. ग.

11 तृतीयया ग.

12 वृत्तित्वार्थकबोधकत्वे ख.

## क्वचिदयोगव्यवच्छेदोऽप्येवकारार्थ इति मतानुवादः

परे तु प्रकृते 'ऋतौ स्वदारान् गच्छेदेव' इत्यादौ चायोगव्यवच्छेद एवार्थः । ऋतुकालावच्छिन्नाधिकरणताकः स्वदारकर्मक [1]गमनायोगव्यवच्छेद इष्टसाधनं [2]इत्यर्थः । इष्टं [3]च प्रत्यवायाभावः, व्युत्पत्तिवैचित्र्यात् । तत्साधनत्वं एवार्थे '[नातिरात्रे] षोडशिनं गृह्णाति' इत्यादौ नञर्थ इवान्वेति । न [4]चैवं [5]यत्किञ्चित् [6]ऋतुगमने [7]ऋत्वन्तरागमनेऽपि एतादृशविध्यर्थनिष्पत्तेः कथं ऋत्वन्तरगमने प्रवृत्तिरिति वाच्यम् ।

अयोगव्यवच्छेदार्थकत्वोपपादकं मतमाह - परेत्विति । प्रकृते - 'रूपेण पृथिव्यां वृत्यत एवे'त्यत्र । अयोगव्यवच्छेद एवेति । पृथिवीनिरूपितवृत्तित्वायोग - [8]व्यवच्छेदो रूपवृत्तिरिति प्रकृतवाक्यार्थः । द्वितीयोदाहरणवाक्यार्थमाह - ऋतुकाल इति । षोडशदिनात्मको ऋतुकालः । 'षोडशर्तुनिशाः स्त्रीणाम्' इति स्मरणात् । इत्यर्थः - इति वाक्यार्थः । ननु विध्यर्थेष्टसाधनत्वादेः समभिव्याहृतक्रियान्वयनियमात् । गमनायोगव्यवच्छेदे कथमिष्टसाधनत्वान्वय इत्यत आह - व्युत्पत्तीति । एवकारसंवलितविधिवाक्ये विध्यर्थेष्टसाधनत्वादि [9]रेवार्थमाकाङ्क्षति इति व्युत्पत्तिवैचित्र्यात् इष्टसाधनत्वमेवकारार्थेऽन्वेति, न तु गमनक्रियायाम् । यथा 'नातिरात्रे षोडशिनं गृह्णाती'त्यादौ षोडशिग्रहणाभावे नञर्थे एवेष्टसाधनत्वमन्वेति, न तु ग्रहणे । एतद्वाक्यबलात् षोडशिग्रहणाभावस्यापि[10] यागाङ्ग

1 'स्वर्तृक' इत्यधिकः ई.
2 इत्यर्थात आ. ई., इत्यर्थता इ., इवार्थ ऋ.
3 'च' नास्ति ऋ. 4 'एवं' नास्ति ऋ.
5 'यत्किञ्चित्' नास्ति उ. 6 ऋतावगमने आ. उ
7 ऋत्वन्तरग° आ. उ. 8 व्यवच्छेदौ ग.
9 °रेव पार्थमा° ग. 10 'वैकल्पिक' इत्यधिकः क. ख.

ऋतुकालीनस्यागमनस्य प्रत्यवायहेतुतया प्रत्यवायान्तरपरिहाराय तत्र [1]प्रवृत्तेः ।

[2]वस्तुतः ऋतुकालीनगमनं इष्टसाधनत्वायोगव्यवच्छेदवत् [3]इत्यर्थः। इष्टसाधनत्वं च प्रत्यवायसाधनीभूताभावप्रतियोगित्वम् । 'सन्ध्यामुपासीत' इत्यादौ विधेस्तदर्थत्वात् प्रत्यवाया[4]भावसाधनत्वस्यार्थत्वेपि साधनत्वस्य [5]प्रयोजकत्वरूपतया कारणाभावस्य कार्याभावप्रयोजकत्वमुक्त एवाऽर्थे पर्यवस्यति । तथा च ऋतुपदस्य तत्तदृतुपरतया तत्तदृतु-

---

त्वात् । [6]न च षोडशिग्रहणे विध्यर्थनिषेध एव कुतो नेति वाच्यम् । 'अतिरात्रे षोडशिनं गृह्णाती'ति वाक्यविरोधापत्तेः । षोडशी [7]सोमधारपात्रविशेष इति ।

ननु ऋतुकालीनगमनायोगव्यवच्छेद इष्टसाधनमिति नात्र वाक्यार्थः संभवति । एवकारेण समभिव्याहृतपदार्थायोगव्यवच्छेदबोधकेन तादृशगमने इष्टसाधनत्वायोगव्यवच्छेदस्यैव बोधयितुं योग्यत्वात् । 'ऋतौ भार्यामुपेयात्' [गौ. ध. सू. ] इत्यादिविध्यन्तरेण गमनस्येष्टसाधनत्वबोधनात् । प्रकृते गमनायोगव्यवच्छेदे इष्टसाधनत्वबाधासंभवात् चेत्यस्वरसादाह - वस्तुत इति । अर्थः -वाक्यार्थः । ऋत्वन्तरगमने प्रवृत्तिमुपपादयितुमाह- तथा चेत्यादि । ननु गमनाभावस्य प्रत्यवायहेतुत्वे कारणाभावप्रतियोगितया गमनस्य प्रत्यवाये प्रतिबन्धकत्वापत्तिः । इत्थञ्च 'भार्यामुपेयादि'तिविधेः गमने प्रत्यवायाभाव-

---

1 प्रवृत्तिः ऋ. 2 वस्तुतस्तु ई.
3 इत्येवार्थः इ. ई 4 भावप्रयोजकत्वस्यार्थ° अ.
5 प्रयोजकरूप° ऋ.
6 'नच . . . . . . वाक्यविरोधापत्ते': इत्यन्तस्त्रुटितः ग.
7 सोमग्रहपात्र° ग.

कालावच्छिन्नस्वदार-कर्मक[1]स्वकर्तृकगमनाभावस्य गमनसामान्ये तत्तदृतु-कालावच्छिन्नस्वदारकर्मकत्वस्वकर्तृकत्वोभयाभावस्य वा प्रत्यवायहेतुतया नियततत्तदृतुगमने प्रवृत्तिः सुघटेत्याहुः ॥

तत्खण्डनम्

तच्चिन्त्यम् । यतः तत्तदृतुकालीनगमनवद् - [2]न्यत्वव्यवच्छेदः इष्टसाधनं, तत्तदृतुकालीनगमनं इष्टसाधनान्यत्वव्यवच्छेदवदिति वा [3]तदर्थः । 'न विधौ परः शब्दार्थ' इत्यस्यासिद्धेः विधौ इष्ट-[4]साधनत्व-[5]लक्षणायाः सम्भवात् । यद्वा 'न विधौ परः शब्दार्थ' इत्यस्यावश्यबो-

---

रूपेष्टसाधनत्वबोधकत्वानुपपत्तिरत आह - गमनसामान्य इति ।

तच्चिन्त्यमिति । चिन्तावीजं स्वयमेव स्फुटयति - यत इत्यादिना । तदर्थः- ऋतौ स्वदारान् गच्छेदेवे'ति वाक्यार्थः । अत्राद्यबोधो गमेः गमनवति लक्षणया । द्विती-यस्तु विधेरिष्टसाधनत्ववति लक्षणया उपपाद्यः । न विधाविति । विधिप्रत्यये लक्षणा नास्तीति नियमस्यानुकूलतर्कविरहत् असिद्धेरित्यर्थः । न विधाविति नियममभ्युपेत्याह-यद्वा इति । तथा च 'स्वदारान् गच्छेदेवे' त्यत्रावश्यबोधनीयार्थकमेवकारपदम् । तत्र

---

1 'स्वकर्तृक' नास्ति ऋ.   2 °न्यत्व्य° ई.   3 वाक्यार्थः इ.

4 °साधने अ.

5 'लक्षणायाः......विधाविष्टसाधने' इत्यन्तस्त्रुटितः अ. आ. इ.

धनीयार्थपदे न लक्षणेत्यर्थः । यथा 'गङ्गायां घोष' इत्यादौ गङ्गापदे लक्षणा, न घोषपदे । इत्थञ्च प्रकृते विधाविष्टसाधने लक्षणासम्भवादिति दिक् ॥

सर्वत्रान्ययोगव्यवच्छेदस्यैवकारार्थत्वे गौरवमिति शङ्का तत्परिहारश्च

ननूदाहृतद्वये 'ज्ञानमर्थं गृह्णात्यवे' इत्यादौ च धर्मिणि लक्षणया अन्ययोगव्यवच्छेदशक्तिर्वाच्या । तथा च 'शङ्खः पाण्डर एव' 'गुणवत् द्रव्यमेव' इत्यादावपि पाण्डरादिपदस्य तत्तादात्म्ये निरूढलक्षणयाऽयोगव्यवच्छेद एवाऽर्थोऽस्तु । प्रकृतार्थस्यैव [1]अभेदेन भाव्यान्वयात् न शङ्खः पाण्डरत्वमेव,

[2]च न लक्षणा, किन्तु विधिप्रत्यय एवेति न तन्नियमभङ्ग इति भावः । दिगर्थस्तु विधेः सामान्यतः इष्टसाधनत्वकृतिसाध्यत्वादौ शक्तत्वेऽपि न तद्ज्ञानात्प्रवृत्तिः [तज्ज्ञानात्प्रवृत्तिः], किन्तु इष्टसाधनत्व - मत्कृतिसाध्यत्वज्ञानादेव । तच्च न लक्षणां विनेति सर्वत्र विधौ सा । अन्यथा विधेः प्रवर्तकत्वानुपपत्तेरिति ।

पुनरयोगव्यवच्छेदार्थकतामाशङ्कते -नन्विति । उदाहृतद्वये-'रूपेण पृथिव्यां वृत्यत एव' 'ऋतौ स्वदारान् गच्छेदेवे'ति द्वये । धर्मिणीति । आद्ये वृत्तिमति, द्वितीये गमनवति । तत्र ये [तृतीये]चार्थग्राहके[3]तत्तद्धातोर्लक्षणयेत्यर्थः । तथा च-अन्ययोगव्यवच्छेदमात्रे शक्तिव्यवस्थापनाय तत्र तत्र धर्मि[4]-लक्षणाया आवश्यकत्वे च । ननु 'शङ्खः-पाण्डर एवे'त्यादौ पाण्डरादिपदस्य तत्तादात्म्यपरत्वमाश्रित्य तदयोगव्यवच्छेदवर्णने 'शङ्खः पाण्डरतादात्म्यमेवे'त्यादिप्रयोगः स्यादत आह-प्रकृतार्थस्यैव इति । यत्र व्यवच्छेदो बोधनीयः सः प्रकृतार्थः । भाव्यान्वयात्- विधेयान्वयात् । तथा चैवकारसंवलने यत्र प्रकृतार्थः तस्य [प्रकृतार्थस्य]शंखादेरभेदेन भाव्ये पाण्डरादावन्वयः । तत्रैवकारसंवलने

[1] भेदेन भावान्वयात् आ. इ., अभेदेनान्वयात् इ., अभेदेन भाव्यन्वयात् ऋ.
[2] 'च' नास्ति ग. [3] तत्तद्देवताधातोः ख. [4] °लक्षणया ग.

पाण्डरतादात्म्यमेवेत्यादेः प्रसङ्गः । अस्तु वा अभेदबोधक-[1]पदसमभि-[2]व्याहृतैवकारस्य [3]योगः तादात्म्यकोऽर्थः इति चेत् न । [4]योगे व्यवच्छेदे [5]अभावे च शक्तित्रयकल्पनातोऽन्ययोगे व्यवच्छेदे च शक्तिद्वय[6]कल्पने लाघवात् ।

किञ्च व्यवच्छेदाभावयोः [7]एकरूपत्वात् कथं द्वेधा शक्तिः । न चान्ययोगमपेक्ष्य लाघवात् अत्यन्ताभावयोगे व्यवच्छेदे वा अस्तु शक्तिः । 'ज्ञानमर्थं गृह्णात्येव' इत्यादौ [8]मुख्यः प्रयोगः, 'शङ्खः पाण्डर एवे'त्यादौ पाण्डरत्वादिविशेषणघटितात्यन्ताभावयोगे 'पृथिव्यामेव गन्ध' इत्यादौ

---

शंखादौ पाण्डरादितादात्म्ययोगव्यवच्छेदान्वयः । 'शंखः पाण्डरतादात्म्यमेवे'त्यादौ तु न तथेति तादृशयोगव्यवच्छेदासम्भवात् [न]तादृशप्रयोग इति भावः । एवकारशक्त्यैवोपपत्तौ पाण्डरादिपदे पाण्डरादितादात्म्ये निरूढलक्षणाऽप्यन्याय्या इत्यभिप्रायेणाह-अस्तुवेति।

ननु शक्तित्रयकल्पनमपेक्ष्य शक्तिद्वयकल्पनमेव गुरु । अन्ययोग इत्यत्रैवान्यत्वे तदाश्रयधर्मिणि योगे चेति त्रिषु शक्तिविषयत्वस्य कल्पनीयत्वात् । व्यवच्छेदे शक्तिविषयत्वकल्पनस्याधिकत्वाच्चेत्यरुचेराह -किं चेति । लाघवादिति । अत्यन्ताभावयोगे धर्मप्रवेशात् लाघवम् । अन्ययोगे चान्यत्वाश्रयधर्मिप्रवेशात् गौरवमित्यर्थः । मुख्यः प्रयोग इति । ज्ञानमर्थग्राहकत्वात्यन्ताभावयोगव्यवच्छेदवदिति मुख्यार्थबोधादिति भावः ।

---

1 '°पद°' नास्ति ऋ.
2 °व्याहारै° उ.
3 अयोगतः ता° उ., अयोगे ता° ऋ.
4 'अयोगे' आ.
5 'अभावे च' नास्ति ऋ.
6 कल्पनायां ई.
7 एकरूपरूपत्वात् अ. आ. इ. ई.
8 'मुख्यः' नास्ति आ.

[1] च पृथिव्यन्यसमवेतत्वादौ [2]लक्षणेति वाच्यम् । लाघवात् [3]अन्यत्वे व्यवच्छेदे च शक्तेः स्वीकारात् 'शङ्खः पाण्डर [4]एवे'त्यादौ [5]मुख्यः प्रयोगः । पृथिव्यामेवेत्यादौ [6]तु अन्यसमवेतत्वादिरूपयोगे निरूढ-लक्षणा । न चैवं क्वचिद्[7]योगव्यवच्छेदबोधोऽपि लक्षणया अस्तु इति [8]धर्मिणि लक्षणा व्यर्था । 'ज्ञानमर्थग्राहकमेवे'त्यादिसाधारण्याय[9]तदुक्ते-रानुपूर्वीभेदात् । कार्यकारणभावभेदे तु [10]धर्मिलक्षणां [11]विनाऽप्यस्तु क्वचित्तथा [12]बोधः ।

---

लाघवात्-अत्यन्ताभावयोगत्वापेक्षयाऽन्यत्वत्वस्य शक्यतावच्छेदकत्वे लाघवात् । न चेति । एवम्- अन्यत्वे व्यवच्छेदे च शक्तिस्वीकारेऽपि पृथिव्यन्यसमवेतत्वादिरूपयोगव्यवच्छेद-बोधार्थं लक्षणा - [13]श्रयणे । क्वचित् - 'ज्ञानमर्थं गृह्णात्येवे'त्यादौ । तदुक्तेः- अर्थ-ग्राहकरूपधर्मिलक्षणोक्तेः । क्वचित्तथाबोधः - 'ज्ञानमर्थं गृह्णात्येवे'त्यादावयोगव्य - वच्छेदबोधः ।

---

[1] 'च' नास्ति ऋ. [2] 'च' इत्यधिकः ई.
[3] अन्यव्य° ऋ. [4] 'एव' नास्ति ऋ.
[5] 'च' इत्यधिकः आ. [6] 'तु' नास्ति ऋ.
[7] °योगेव्य° आ. [8] धर्मिल° उ. धर्मल° ऋ.
[9] त्वदुक्ते° आ. [10] धर्मिणि ल° अ , धर्मपद ल° ऋ.
[11] विनाऽस्तु आ.,विनैवास्तु उ. [12] °भेदः ई.
[13] °श्रवणेन ग.

केचित्तु- अत्यन्ताभावे पाण्डरत्वादेरन्वयः संबन्धविशेषावच्छिन्न-[1]पाण्डरत्वत्वाद्यवच्छिन्नप्रतियोगितया । [2]अन्यत्वे तु पाण्डरत्वाद्यवच्छिन्नप्रतियोगितामात्रेणेत्यन्ययोगव्यव[3]च्छेदे शक्तौ लाघवमिति वदन्ति।

मतान्तरेणान्ययोगव्यवच्छेदशब्दार्थः

परे तु [4]अस्याभावस्य योगः, तत्प्रतियोगित्वम्, तद्व्यवच्छेदः 'शङ्खः पाण्डर एव' 'ज्ञानमर्थं गृह्णात्येव' इत्यादौ चार्थः । पाण्डरत्वादौ शङ्खादिनिष्ठात्यन्ताभावप्रति-[5]योगित्वव्यवच्छेदस्य बोधात् । 'प्रमेयं

---

प्रकारान्तरेणायोगव्यवच्छेदशब्दार्थं दर्शयितुं मतान्तरमाह-परे त्विति। अयोगव्यतु वच्छेद इत्यत्र अकारोऽभावपर इत्यभिप्रायेणाह - अस्येति । एतदेव विवृणोति-अभाव - स्येति । इत्थं चैवकारसमभिव्याहृतेतरपदार्थनिष्ठाभावप्रतियोगित्वव्यवच्छेद-[6]रूपोऽयोगव्यवच्छेद एवकारशक्यः । परन्तु विशेषण- क्रिया- संगतैवकारेण समभिव्याहृतपदार्थतावच्छेदकादौ इतरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वव्यवच्छेदो विशेष्यसंगतैवकारेण च समभिव्याहृतपदार्थे इतरपदार्थनिष्ठान्योन्याभावप्रतियोगित्वव्यवच्छेदो प्रत्याय्यते । तत्तत्समभिव्याहारबलादिति भावः । अर्थः - एवकारार्थः । एवकारस्य निरुक्तायोगव्यवच्छेदार्थकत्वे "लीलावत्यु" पष्टम्भकमाह-प्रमेयमित्यादि । वाच्यत्वं प्रमेयनिष्ठात्यन्ताभावप्रतियोगित्वव्यवच्छेदवदित्येवात्र बोधः । प्रमेये वाच्यत्वायोगव्यवच्छेदबोधासंभवात् वाच्यत्वायोगा-

---

1 °पाण्डरत्वाद्यवच्छिन्ने प्र° ई. 2 अन्ये तु ऋ.
3 °च्छेदशक्तौ ऋ.
4 अभावस्यायोगात्यन्ताभावयोगः अ. इ., अभावस्यात्यन्ताभावस्य ई. अस्यात्यन्ताभावस्य आ., अभावस्य ऋ.
5 °योगित्वं व्यवच्छेदवो°
6 °रूपो प्रतियोगित्वव्यवच्छेदोऽयोगव्यवच्छेदशब्दार्थ इति भावः । एवकारस्य निरुक्ता° ग.

वाच्यमेव' इत्यादिवत् । [1]भावजातीयं [2]षल्लक्षणवदेवे [षट्लक्षणवदेवे] त्ययोगव्यवच्छेदार्थ इति मूलस्वारस्यमप्यत्र । इत्थं च [3]'प्रमेयं वाच्यमेव' इत्यनुरोधात् 'पार्थ एव धनुर्धर' इत्यादावपि धनुर्धरादिनिष्ठान्योन्याभाव-प्रतियोगित्वव्यवच्छेदो पार्थादौ प्रतीयते । 'नील [4]सरोजं भवत्येवे'त्यादौ यावत्सरोजनिष्ठात्यन्ताभावप्रतियोगित्वव्यवच्छेदो नीलभवन[5]कर्तृत्वादावि-त्याहुः ॥

मतान्तरेणान्ययोगव्यवच्छेदशब्दार्थः

अन्ये तु 'प्रमेयं वाच्यमेव' इत्यादौ 'शङ्खः पाण्डर एव' इत्यादौ च यावद्वाच्यव्यक्त्यन्योन्याभावकूटाभावः प्रतीयते । इत्थमेव 'घटः कम्बुग्री-

---

प्रसिद्धेरिति । षल्लक्षण [षट्लक्षण] वदेवेति । षड्भावपदार्थविभाजकोपाध्यन्यतम-वदेवेत्यर्थः । 'प्रमेयं वाच्यमेवे'त्यादिवदत्रापि षट्लक्षणं भावजातीयनिष्ठात्यन्ताभाव-प्रतियोगित्वव्यवच्छेदवदित्येव बोधो बाधकाभावात् वाच्य इत्यर्थः । 'परेत्वाहुरि'त्यस्व-रसबीजं तु निरुक्तायोगव्यवच्छेदशब्दार्थस्य क्लिष्टत्वमिति ॥

प्रकारान्तरेणान्ययोगव्यवच्छेदशब्दार्थं दर्शयितुमाह -अन्ये त्विति । यावद्वाच्य इति । यावद्वाच्यव्यक्तीनां तत्र व्यक्तित्वा[तत्तद्व्यक्तित्वा] वच्छिन्नान्योन्याभावकूटाभावः प्रमेये प्रतीयते । क्वापि प्रमेये तादृशान्योन्याभावकूटस्यासत्त्वात् । एवं शङ्खेऽपि यावत् पाण्डरव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नान्योन्याभावकूटाभावः प्रतीयत इत्यर्थः । इत्थमेव

---

[1] अभाव° ई. [2] षल्लक्षणावच्छेदे वेति आ. बहुलक्ष° ई.
[3] प्रमेयमेव वाच्यमित्यादौ ऋ. [4] सरोजमेवेत्यादौ अ. उ.
[5] कर्तृत्व इत्याहुरिति समासः ई.

वादिमानेव '[1]वृक्षः कपिसंयोगवानेव' इत्यादौ। [2] एवं '[3]गुणवदेव द्रव्यम्' 'द्वयोरेव संयोग' इत्यादौ नानुपपत्तिः । [4]'गुणवत्वावच्छिन्नभेदवति जन्यद्रव्ये [5]भेदासत्त्वेऽपि तत्तद्गुणवद्व्यक्तिभेदकूटवति [6]सर्वत्र द्रव्यभेद-सत्त्वात् [7]घटपटाद्युभयत्वावाच्छिन्नप्रतियोगिताकभेदस्य केवलान्वयितया तादृशभेदवत्समवेतत्वाभावस्य संयोगादौ तादृशभेदवति संयोगसमवायित्वा-भावस्य [8]चासत्त्वेऽपि तादृशोभयरूपा यावती व्यक्तिः [9]तत्त्वतत्त्वावाच्छिन्न-

---

'प्रमेयं वाच्यमेवे'त्यादिरीत्यैव । विशेषणसङ्ग[10]तैवकारस्थले अन्यसमवेतत्वादिरूपयोगस्थले च तं व्युत्पादयितुमाह- एवं गुणवदेवेत्यादि । 'गुणवदेवे'त्यत्र गुणवत्त्वावच्छिन्नप्रतियोगि-ताकभेदवत् न द्रव्यमिति बोधं निरस्यन् यावद्गुणवद्व्यक्तिभेदकूटवत् न द्रव्यमिति बोधं समर्थ-यति-गुणवत्व इति । जन्यद्रव्ये उत्पत्तिकालावच्छेदेन गुणवत्त्वावच्छिन्नभेदसत्त्वेऽपि द्रव्य-भेदासत्त्वात् तादृशबोधः । यावद्गुणवद्व्यक्तिभेदकूटस्तु न कुत्रापि द्रव्ये, किन्तु गुणादावेव तत्र द्रव्यभेदसत्त्वात् तादृशबोधोपपत्तिरित्यर्थः । [11]'पार्थ एव धनुर्धर' इत्यादावपीयमेव-

---

[1] 'वृक्षः कपिसंयोगवानेवेत्यादौ'नास्ति अ.

[2] 'एवं . . . . . . . . इत्यादौ' इत्यन्तस्त्रुटितः आ.

[3] गुणवत् द्रव्यं अ.

[4] 'गुण . . . . . . . . . द्रव्यभेदसत्त्वात्' इत्यन्तस्त्रुटितः आ.

[5] कूटासत्त्वेऽपि गुण° अ. [6] 'सर्वत्र' नास्ति अ.

[7] 'घट . . . . . . . . . . . . . . . . . . च सत्त्वात्' इत्यन्तस्त्रुटितः अ.

[8] 'च' नास्ति ऋ. [9] 'तत्त्व' नास्ति अ. आ. इ.

[10] °तैककार° ख.

[11] 'यादृशरीतिः पूर्वमुक्तयावद्गुणवत् व्यक्तिभेदविषये तद्वदेव रीतिः पार्थ एव धनुर्धर इत्यादावपि । तथा च यावत्पार्थव्यक्त्यन्योन्याभावकूटाभावत्वात् चैत्रादिस्तत्र धनुर्धरभेदः ,इत्यधिकः ख.

प्रतियोगिताकभेदकूटवत्समवेतत्वाभावस्य संयोगे तादृशभेदकूटवति च संयोगसमवायित्वाभावस्य च सत्त्वात् तादृशकूटत्वाद्यवच्छिन्नप्रतियोगितायाः व्युत्पत्तिलभ्यत्वात् न गौरवमित्याहुः ॥

---

रीतिर्द्रष्टव्या । 'द्वयोरेव संयोग' इत्यादौ घटपटादिद्वयत्वावच्छिन्नभेदवत् समवेतत्वाभाववत्- संयोग[1] इति संयोगसमवायित्वाभाववत् घटपटादिद्वयत्वावच्छिन्नप्रतियोगिताकभेदवदिति च बोधं निरस्यन् यावद्घटपटादिद्वयव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्समवेतत्वाभाववान् संयोग इति संयोगसमवायित्वाभाववत्तादृशभेदकूटवदिति च बोधं समर्थयति -घटपट इति । घटपटाद्युभयत्वावच्छिन्नभेदस्य केवलान्वयितया (एकत्वादिव्यक्तौ) सर्वत्र सत्त्वात् तादृशभेदवत्समवेतमेव संयोगे, संयोगसमवायित्वमेव च तादृशभेदवत्यस्तीति न तदभावबोधः । [2]यावद्व्यक्तिभेदकूटस्तु [3]गुणादिव्यक्तावेवेति तद्वत्समवेतत्वाभावस्य संयोगे, संयोगसमवायित्वाभावस्य च तादृशभेदकूटवति बोधोपपत्तिरित्यर्थः । एवं 'पृथिव्यामेव गन्ध इत्यादावपि गन्धे यावत्पृथिवीव्यक्तिभेदकूटवत्समवेतत्वाभावस्य तादृशभेदकूटवति गन्धसमवायित्वाभावस्य वा बोधो द्रष्टव्यः । तादृशकूटत्व इति । तथा च तत्तद्व्यक्त्यन्योन्याभावकूटाभावत्वमेवा शक्यतावच्छेदकम्, न तु कूटत्वावच्छिन्नप्रतियोगिताकाभावत्वमिति [4]न गौरवमित्यर्थः । इत्थञ्च 'पृथिव्यामेव गन्ध' इत्यादौ तत्तद्व्यक्तिभेदकूटवत्समवेतत्वाभावादिबोधोलक्षणयैवेति हृदयम् ।

[5] 'अन्ये तु आहुरि'त्यस्वरसस्तु कूटस्यैकविशिष्टापरत्वरूपतया विशेषणविशेष्यभावे विनिगमकाभावादनन्त[6]विधत्वात् तद्घटितान्योन्याभावकूटाभावत्वस्य शक्यतावच्छेदकस्यानन्त्यमिति शक्त्यानन्त्यम् ।

---

[1] इति योग° ग.

[2] 'यावत् .. ... ........... संयोगे' इत्यन्तस्त्रुटितः क.

[3] त्र्यादिव्यक्तौ° ग. [4] 'न' नास्ति ग.

[5] 'इत्थं च पृथिव्यामेव' इत्यधिकः क. [6] विधानत्वात् ख.

उत्तानास्तु- एवकारादिस्थले एकपदार्थयोरिव क्वचिदेकशक्तिविषयस्या[1]पि द्वेधाऽ[2]न्वयादत्यन्ताभावमात्रे शक्त्या 'ज्ञानमर्थं गृह्णात्येवे'त्यादौ मुख्यः प्रयोगः। अन्यत्र लक्षणेत्याहुरिति समासः ॥

इति [श्रीमज्जयरामन्यायपञ्चाननविरचितायां
पदार्थमालायां]
एवकारविवेकः [समाप्तः]

---

उत्तानास्त्विति। एकपदार्थयोरिव - एकस्मात् पदात् भिन्नभिन्नशक्तिभ्यां शक्तिलक्षणाभ्यां वोपस्थितान्ययोगव्यवच्छेदयोरिव। एकशक्ति इति। एकशक्त्युपस्थापितस्यापि तात्पर्यबलेनावृत्त्याऽऽन्वयस्वीकारात् 'ज्ञानमर्थं गृह्णात्येवे'त्यादौ ज्ञानमर्थग्राहकत्वा-(त्यन्ताभावा)त्यन्ताभाववदिति बोधसम्भवात् मुख्यः प्रयोग इत्यर्थः। अन्यत्रेति। 'शङ्खः पाण्डर एवे' त्यादौ इतरविशेषणपाण्डरत्वादिघटितात्यन्ताभावबोधार्थलक्षणयेत्यर्थः।

उत्तानास्तु इत्यस्वरसस्तु एकशक्तिविषयस्य स्वस्मिन्नेवान्वयस्याव्युत्पन्नत्वम्। ग्रन्थविस्तरभयादाह - समास इति। शब्दसङ्क्षेप इत्यर्थः। अर्थबहुत्वस्य तत्र तत्र व्याख्यातत्वादिति भावः ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत-
श्रीमद्रुद्रकवीन्द्रतनूजमुद्गलविदुषसूनुना
भास्करेण विरचिते पदार्थमालाप्रकाशे
एवकारविवेकः समाप्तः

---

1 'अपि नास्ति अ. आ. इ ऋ. 2 °न्वयादित्यत्य° ई.

## अथ शक्तिवादः

ननु द्रव्यगुणकर्मसामान्यानि पदार्था इति [1]तौतातिताः। द्रव्यगुणकर्मसामान्यसङ्ख्यासमवायसादृश्यशक्तयः अष्टौ पदार्था इति प्राभाकराः। एवमन्येऽपि[2]अन्यथावादिनः [3]तत्कथमेतदिति चेत् उच्यते। विशेषसमवायाभावानामग्रे साधनीयत्वात्। संख्यायाः गुणेऽन्तर्भावात्। शक्तिसादृश्ययोश्च[4]अनतिरेकात्।

अथ वह्निः दाहानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी दाहजनकत्वात्

---

'सप्तैव पदार्था' इति व्यवस्थापयितुं विचाराङ्गसंशय बीजभूतां विप्रतिपत्तिं प्रदर्शयति-नन्वित्यादि। एवमन्येऽपीति। खण्डनकारादयः कारणत्वादीनां पदार्थान्तरत्वं वदन्ति, विशेषादींश्च खण्डयन्तीत्यर्थः। तथा च पदार्थाश्चत्वारः, अष्टौ, सप्त वेत्यादि विप्रतिपत्तिः। तत्प्रकृते संशयमाह-तत्कथमिति। 'सप्तैव पदार्थाः' इत्येतत्कथमित्यर्थः। अयं च संशयः मध्यस्थस्यैव, न तु वादिनोः; तयोर्निश्चयादिति भावः। उच्यत इति। सप्तोक्ति[सप्तत्व] कोटिं व्यवस्थापयितुं वैशेषिकेणोच्यत इत्यर्थः। अनतिरेकादिति। सप्तानतिरेकादित्यर्थः। तत् शक्तिः वह्न्यादिस्वरूपमेव। तस्यैव दाहाद्यनुकूलत्वात्। सादृश्यं चोपाधिरूपसामान्यम्। अतो यथायथं द्रव्यगुणादौ अन्तर्भवतीति वक्ष्यत इति भावः।

शक्तेरनतिरेकादित्युक्ते प्राभाकरः प्रत्यवतिष्ठते - अथ वह्निरित्यादि। साध्ये स्थितस्थापकमादाय सिद्धसाधनवारणाय दाहानुकूले इति। [5]अदृष्टवदात्मसंयोगमादाय

---

[1] तौतातिताः ... . . . . . . . . . . . . . . . . .उच्यत इत्यन्तस्त्रुटितः उ.

[2] अभाववादिनः अ., अन्यायवादिनः ई. [3] तत्कथमिति अ.

[4] नातिरेकात् ई. [5] अदृष्टवदनलसं° ग·

आत्मवदित्यनुमानात् शक्तिसिद्धिः। न चात्मत्वमुपाधिः, तादृशोष्णस्पर्शवति तेजःपरमाण्वादौ अदृष्टे च [1]साध्याव्यापकत्वादिति चेत्- न, अप्रयोजकत्वेनानुमानस्यासिद्धेः। न च मण्यादिसमवहितेन [2]वह्निना

---

तद्वारणायाद्विष्ठेति। उष्णस्पर्शमादाय तद्वारणायातीन्द्रियेति। कालिकादिना वह्निनिष्ठदाहकादृष्टमादाय तद्वारणाय समवायीति। समवायेन तादृशधर्मस्य साध्यत्वलाभाय। अत्र दृष्टान्तेऽदृष्टात्मकं तादृशधर्ममादाय साध्यत्वम् [साध्यसत्त्वम्]। पक्षे तु पक्षधर्मताबलात् तादृशधर्मः शक्तिरूपः सिध्यतीति भावः। न चात्मत्वमिति। एतस्य निश्चिततादृशसाध्यवदात्मनि साध्यव्यापकत्वं पक्षे च साधनाव्यापकत्वं बोध्यम्। नन्वत्र साध्ये दाहानुकूलत्वं कारणता(त्वा)वच्छेदकसाधारणं प्रयोजकत्वम्, परमते शक्तेः वह्न्यादिनिष्ठकारणतावच्छेदकत्वात् तस्य शक्तिमत्वेनैव दाहादिकारणत्वात्। तथा च तेजःपरमाण्वादिनिष्ठोष्णस्पर्शस्य दाह[3]प्रत्यकारणत्वात् कारणतानवच्छेदकत्वाच्च न दाहानुकूलत्वमिति तमादाय तेजः परमाण्वादौ [4] न साध्यव्यापकत्वमुपाधेरित्यस्वरसादाह- अदृष्टे चेति। अत्र धर्मत्वमधर्मत्वं दाहकारणतावच्छेदकमादाय साध्यसत्त्वात् आत्मत्वोपाधेश्चासत्त्वात् साध्य[साध्या]व्यापकत्वं बोध्यम्। अप्रयोजकत्वेनेति। अनुकूलतर्कविरहेणेत्यर्थः। अनुकूलतर्कमाशंक्य निषेधति - न च मण्यादीति। तथा च वह्नेर्दाहजनकत्वेऽपि यदि तादृशधर्मसमवायित्वं न स्यात् तदा मण्यादिसमवहितेनापि वह्निना दाहः स्यादित्यनुकूल-

---

[1] साध्यव्या° ई. [2] वह्न्यादिदाह° अ. आ. इ. उ. ऊ
[3] प्रत्ययकरा° ख. [4] 'न' नास्ति ग

दाहवारणाय मण्यादिसमवधानेन [1]कुण्ठनीया नाश्या[2]वा, दाहानुकूला वह्नि-निष्ठा शक्तिः स्वीकार्येति वाच्यम् । [3]दाहजनकविलक्षणवह्नेरेव मण्यादि-समवधानेन कुण्ठनीयत्वस्य नाश्यत्वस्य वा युक्तत्वात्, मण्याद्यभावस्य दाहहेतुत्वेनैव तत्र दाहवारणाच्च । न चैवमुत्तेजके सत्यपि तत्र दाहो न स्यादिति वाच्यम् । [4]उत्तेजकाभावसहितस्य मण्यादेरभावस्य हेतुत्वात् । न चैवं गौरवम्, तत्रापि तदभावस्य शक्त्यादि[5]हेतुत्वस्वीकारात् ।

---

तर्कोऽवसेय इति । कुण्ठनीया इति । स्वप्रयोज्यक्षमेत्यर्थः । विद्यमानशक्तेः स्वप्रयोज्याक्षमत्वं[6]न युक्तिसहमत आह- नाश्या वेति । ननु मण्यादिसमवधानकालीनवह्नेरपि जनितपूर्वदाहत्वात् विलक्षणवह्नित्वमस्त्येवेति मण्यादिसमवधानेन तस्य कुण्ठनीयत्वं नाश्यत्वं वाऽयुक्तं अतः साधनान्तरमाह-मण्यादीति ॥ तत्र-मण्यादिसमवधानस्थले । न चैवमिति । मण्यभावस्य दाहहेतुत्वमित्यर्थः । उत्तेजक इति । प्रतिबन्धकसमानकालीनकार्यार्जक [कार्यजनक] मुत्तेजकं, तदभावसहितस्येत्यर्थः । प्रतिबन्धकत्वं च[7]कारणभूताभावप्रतियोगित्वम्, कार्यानुकूल[8]यत्किञ्चिद्विघटकत्वं वेति । शक्त्यादिहेतुत्व इति । तथा चेदं गौरवमुभयोस्तुल्यम्, शक्तिकल्पनं [9]तु तत्राधिकमिति भावः । लाघवादाह-

---

1 'कुण्ठ ......समवधानेन' इत्यन्तस्त्रुटितः अ. नावकुण्ठ° इ.
2 'वा' नास्ति ई. 3 दाहे जनकवह्नेः किल मण्यादि° उ., दाहजनकस्य वह्ने° इ.
4 मण्यभाव° उ. 5 हेतुत्वात् अ. इ. ई.
6 'न' नास्ति ग. 7 कारणीभूता° क., कारणता° ग.
8 यत्किञ्चिद्घट° ख. 9 च ख.

वस्तुतः रूपादिध्वंसात्मकदाहे[1] तद्धेतुत्वे गौरवात्। मण्यादियुक्ते[2] तृणादौ वह्न्याद्युत्पत्तेः वारणीयत्वाच्च। विजातीयवह्न्यावेवोत्तेजकाभावविशिष्ट-मण्याद्यभावो हेतुः। स्वजन्यवह्नेरेव स्वस्मिन् दाहजनकत्वात्। [3]मण्यादियुक्ते न दाहः तृणादिजन्योऽनुद्भूतरूपो[4]वा वह्निः।

---

वस्तुत[5] इति। गौरवादिति। मण्याद्यभावस्य दाहं प्रति हेतुत्वे रूपादिध्वंसात्मकदाहत्वस्य गुरुणः कार्यतावच्छेदकत्वात् गौरवम्। विजातीयवह्निं प्रत्येव हेतुत्वे तु वैजात्यस्य लघुनः कार्यतावच्छेदकत्वात् लाघवम्। न च वैजात्यकल्पनायां गौरवम्। मण्याद्यभावस्य दाहहेतुत्वपक्षेऽपि[6]वह्निनिष्ठवैजात्यस्यावश्यकत्वादिति भावः। ननु मण्यादिसमवहितसिद्धवह्नेरपि क्वचिदुत्पादितदाहत्वेन विजातीयत्वात् तेन मण्यादियुक्ते दाहः स्यादत आह-स्वजन्य इति। ननु स्वजन्यवह्नित्वेन न दाहहेतुत्वं गौरवात्, किन्तु वैजात्येनैव। तथा च विजातीयवह्निसत्त्वात् मण्यादियुक्ते दाहः स्यादेवेत्यत आह-तृणादीति। तथा च दाहजनकतावच्छेदकवैजात्यवाननुद्भूतरूप एव [7] वह्निः स च मण्यादियुक्ते नास्तीति न दाह इति भावः।

ननु मण्यादियुक्ते समवहितासमवहिततृणादिद्वयस्थले तदसमवहिततृणादौ [8]उत्पन्नानुद्भूतरूपवह्नेः संयोगेन तत्समवहितेऽपि सत्त्वात् दाहः स्यादत आह

---

[1] तद्धेतुत्वगौ° ई.

[2] तार्णववह्न्यादेरुत्पत्तेः इ. [3] 'मण्या....... वह्नि': इत्यन्तस्त्रुटितः इ.

[4] 'वा' नास्ति ई. [5] 'इति रूपादिध्वंसस्य गुरुणः कायतावच्छेदकत्वात्-गौरवं विजातीयवह्निं प्रति मण्यद्यभावहेतुत्वे तु दाहजनकतावच्छेदकतयो-भयवादिसिद्धस्य वह्निनिष्ठवैजात्यस्य लघुनः कार्यतावच्छेदकत्वाल्लाघवमिति भावः। ननु'ग. इति। मण्याद्य° क.

[6] 'दाहहेतुतावच्छेदकतया' इत्यधिकः क.

[7] शक्तिःस न मण्यादि° ख. [8] नास्तीति' इत्यधिकः क.

अस्तु वा [1]धारणाकर्षणहेतुविलक्षणसंयोगेन वह्न्युत्पत्तौ तादृशं मण्याद्यभावो हेतुः । मण्यादियुक्ते तृणादौ तादृशसंयोगेन नानुद्भूत-रूपोऽ[2]पि वह्निः । [3]न च मणिसमवधानात् प्राक् तादृशसंयोगेनोत्पन्नात् वह्नेः सति मणिसमवधाने दाहः स्यादिति वाच्यम् । इष्टत्वात् तादृशसंयोगेन[4]वह्नेरेव दाह[5]हेतुत्वात् । अग्रे च न दाहको वह्निरुत्पद्यत इत्यदोषात् । न हि मणिसमवधानप्राक्कालोत्पत्तिकतादृशवह्निना न दाह[6]इत्यन्यत्र विस्तरः ।

यत्तु-[7] मण्यादि समवधानाद्दाहविरोध्यदृष्टं जायत इति-तन्न । अदृष्टस्या[8]त्मनि समवायेन[9] तद्विरोधित्वे[10]वैफल्यात् । स्वाश्रयसंयोगेन तत्त्वे मण्याद्यसमवहिते [11]अपि इन्धनादौ दाहानापत्तेः ।

---

अस्तु वेति । धारण इति । तृणादौ धृते आकृष्टे वा वह्निरपि[12] यत्संयोगेन धृताकृष्टो भवति तादृशसंयोगेनेत्यर्थः ।

ननु मण्यादिसमवधानजन्यादृष्टस्य प्रतिबन्धः अयमिति

---

1 धारणकर्षण° इ. 2 'अपि' नास्ति ई.
3 'न च ........................ इष्टत्वात्' इत्यन्तस्त्रुटितः अ. आ. इ.
'न च................................ विस्तरः' इत्यन्तस्त्रुटितः उ.
4 वह्निरेव अ. आ. 5 'हेतु ......... न दाह' इत्यन्तस्त्रुटितः अ. आ.
6 'हेतु': इत्यधिकः अ. आ.
7 'मण्यादियुक्ते दाहवारणाय' इत्यधिकः इ. 8 'आत्मनि' नास्ति अ., 'आत्मनि समवायेन' नास्ति आ. 9 आत्मवि° आ. 10 वैकल्प्यात् ई. वैकल्यात् उ.
11 अर्थे अ. 12 यत्संयोगे धृ° ,,

किं च विहितनिषिद्धेतरत्वात् मण्यादिसमवधानं नादृष्टे हेतुः, न वा शुचिपुरुषे [1] तदुत्पत्तिसंभवः। न च मण्यादिसमवधानजनकादृष्टं विरोधि प्रत्यक्षसिद्धमण्यादेरेव तत्त्वौचित्यादिति दिक्।

अथ तृणारणिमणिषु वह्निजनकतावच्छेदकतया शक्तिसिद्धिर्दुर्वारा। तृणत्वादिना वह्नित्वावच्छिन्ने हेतुत्वायोगात्। तृणं विना [2]अरण्यादितो वह्नेरुत्पादादिति चेत् -[3]न। तृणादि[4]जन्ये वह्नौ वैजात्यस्यानु -[5]भविकत्वात्। विजातीयवह्नौ तृणफूत्कारयोर्विजातीये चारणिनिर्मथनयोः विजातीये च मणितरणि-[6]किरणसंयोगयोर्विशिष्यहेतुत्वात्। अन्यथा

---

प्रतीतिनियामकस्वरूपसम्बन्ध-विशेषणादाह-[विशेषेण दाह]विरोधित्वं वाच्यमिति न कोऽप्यतिप्रसङ्ग इत्यत आह-किं चेति। "आत्मानं सर्वतो गोपायेत्" इत्यादिनैव मण्यादिसमवधानं विहितमत आह-न वा शुचि इति। अशुचिनापि मण्यादिसमवधानस्य क्रियमाणत्वात् तत्र नादृष्टोत्पत्तिसंभवः। "शुचिना कर्म कर्तव्यम्" इत्यनेन तदुत्पत्तौ शौचस्य प्रयोजकत्वप्रतिपादनादितिभावः।

निरस्तोऽपि प्राभाकरः पुनः प्रत्यवतिष्ठते-अथ तृण इति। तृणं विनेति। तस्मात् तृणादीनामेकशक्तिमत्वेनैव वह्नित्वावच्छिन्नं प्रति हेतुत्वमित्यर्थः। विशिष्य- तृणफूत्कारोभयत्वादिना। अन्यथा-तादृशोभयत्वादिना हेतुत्वे। [7]ननु [8]विजातीय-विजातीय-

---

[1] तदत्ययसंभवः उ.
[2] मणिबाधितो ई.
[3] 'न' नास्ति अ.
[4] जन्यवह्नौ अ.
[5] भाविकत्वात् ई.
[6] किरणयोः आ.
[7] 'ननु' नास्ति ख.
[8] 'विजातीय' नास्ति ग.

[1]तृणनिर्मन्थनाभ्यामपि वह्न्युत्पादापत्तेः । तृणत्वादिना अन्वयव्यतिरेक-[2]ग्रहात् तथैव हेतुत्वाच्च । अन्यथा तृणादीनामन्यतमत्वेनाखण्डेन स्वरूपतो हेतुत्वसंभवे गतं विवादेन ।

अस्तु वा सामायिकशक्तिविशेषः [3]अभावविशेष एव[4]वह्न्यादिहेतुः । [5]यदि च तृणादिजन्ये वैजात्यं [6]नानुभविकम् । तथा [7]च जन्यतावच्छे-

---

वह्निं प्रति तृणत्वादिनान्वयव्यतिरेकग्रहात्[8]तेनैव हेतुत्वं[9]अत आह - तृणत्वादिनेति । इत्थमपि प्रागुक्तानुपपत्तिवशात् तृणत्वादिनान्वयग्रहादपि तादृशोभयत्वेनैव हेतुत्वग्रहादिति भावः । अन्यथा- प्रागुक्तव्यभिचारवारणार्थमेवैकशक्तिमत्त्वेनैव हेतुत्वे तृणत्वादिनान्वयव्यतिरेकग्रहाभावे वा ।

ननु तृणफूत्काराद्योः न उभयत्वेन हेतुत्वम्, तस्याननुगतत्वात्; किन्तु वैजात्येन । तथाचतृणफूत्कारादिद्वित्वत्रयनिष्ठवैजात्यत्रयकल्पनमपेक्ष्यतद्वह्निजनक-[10]तावच्छेदक एकशक्तिकल्पनमेव लघीय इत्यत आह- अस्तु वेति । शक्तिविशेषः- सामर्थ्यविशेषः, स्वभावविशेष इति यावत् । तेन [11]न मीमांसक[12]मतप्रवेशः । अभावविशेषः- अन्यतमत्वादिरूपः .

---

[1] तृणमन्थनादिभ्या° आ. तृणादिमन्थनादिभ्या° ई.
[2] ग्राह्यात् ई.
[3] भावvि° ई.
[4] 'वा' इत्यधिकः आ. इ.
[5] यत्र च ई.
[6] नानुभाविकम् ई.
[7] 'च' नास्ति उ।
[8] तथैव क.
[9] 'नत्वेकशक्तिमत्वेन' इत्यधिकः क. ख.
[10] '°तावच्छेदक°' नास्ति क. ग.
[11] इति ग.
[12] मनःप्र° ग.

दक-[1]वैजात्यत्वयादिकल्पनातो तृणादौ जनकतावच्छेदकैकशक्त्यादिकल्प-नैव लघीयसी[2]। तृणनिर्मथनादितो वह्न्यनुत्पादस्तु तृणफूत्कारादि-समवधानस्यापि एकशक्तिमत्त्वेन हेतुत्वात्। तृणादेर्हेतुताया [3]आनु-भाविकत्वेन च [4]शक्ति -[5]विशिष्टत्वेन हेतुतेति विभाव्यते। तदा [6]तृणफू-त्कारादिसमवधानस्य वैजात्येन हेतुत्वं तृणादेः पृथिवीत्वेन [7]द्रव्यत्वेन मूर्तत्वेन वा। न च व्रीहियवयो[8]रेव [रिव]यवाभावव्रीह्यभावयोः अप्य-परा [9]यागहेतुतावच्छेदकतयाशक्तिः दुर्वारेति वाच्यम्। व्रीहियवोभया—

---

सामयिकत्वं समयविशेषावच्छिन्नत्वमुभयत्राप्यन्वेति। तेन प्रतिवन्धकसमवधानकाले कार्य-वारणम्। [10]एवं च तृणफूत्कारादिनिष्ठः समयविशेषावच्छिन्नः स्वभावविशेषःतथाविधान्य-तमत्वादि[11]रेव वा वह्न्यादिहेतुः, न तु तृणफूत्कारादिः प्रागुक्तयुक्तेरित्यर्थः। वैजात्यस्या-नुभाविकत्वात् इत्युक्तं, तत्रानुभवे[12]विवादमाह-यदि चेति। 'अस्तु वेति कल्पं निरस्यति-तृणादेरिति। न च व्रीहि इति। "व्रीहिभिः यजेत" "यवै यजेत" इति वाक्ये तृतीयाभ्यां व्रीहियवयोर्यागसाधनत्वबोधनात् तयोर्यागहेतुत्वम्। तच्च न व्रीहित्वयवत्वाभ्यां परस्परव्य-भिचारात्, किन्त्वेकशक्तिमत्त्वेनैव। [13]एवं मिलितव्रिहियवाभ्यां यागासिद्धेः, यवाभावव्रीह्य-भावयोरपि तद्धेतुत्वं वाच्यम्। तच्च न तत्त्वतत्त्वाभ्यां[14]परस्परव्यभिचारात्; किन्त्वेकशक्ति-

---

1 °वैजात्यत्वादि° आ.
2 'इति' इत्यधिकः अ.
3 आनुभाविकत्वात् आ.
4 'न' इत्यधिकः ई.
5 °विशेषादेः हेतु° ई.
6 'अस्तु' इत्यधिकः अ.
7 'द्रव्यत्वेन' नास्ति अ. इ.
8 °रेका यवाभावव्रीह्यभावस्य तत्वेन अ. °रेका यवाभवती स्वभावयोः आ. °रेका यवाभावव्रीह्यभावस्याप्य° इ. °रेका यवा° ई.
9 यागायाग° इ.
10 एकैव तृण° ग.
11 'रेव ..............स्यानुभाविकत्वात्, इत्यन्तस्त्रुटितः क.
12 विवादादाह ख.
13 एवमपि मिलित° ग.
14 परम्पर° ग.

भावस्य तत्त्वेन व्रीहियवयोर्वैजात्येन [1]अन्यतरत्वेना[2]पि वा तद्धेतुत्व-संभवात् । एवमन्यत्रापीति दिक् ॥

### आधेयशक्तिनिराकरणम्

नन्वेवमपि माभूत् सहजाशक्तिः आधेयशक्तिस्तु दुर्वारा । तथा हि- 'व्रीहीन् प्रोक्षति' 'व्रीहिनवहन्ति' इत्यत्र प्रोक्षणजन्यः कालान्तरभाव्य-वघातानुकूलव्यापारो व्रीहिनिष्ठ एव । [3]अत एव प्रोक्षिता एव व्रीहयः अवहन्यन्त इति सिद्धान्तः। अन्यथा पुरुषगतादृष्टस्य स्वाश्रयात्मसंयोगे

---

मत्त्वेनैवेति[4]हेतुतावच्छेदकतया शक्तिसिद्धिरित्यर्थः । तत्त्वेन- व्रीहियवोभयाभावत्वेन । उभयनिष्ठवैजात्यकल्पनायां गौरवादाह -[5]अन्यतरत्वेनापीति । एवमन्यत्रापीति । स्वर्गा-दावपि यागगङ्गास्नानादीनामपि वैजात्येनान्यतरत्वेन वा हेतुत्वम्, नत्वेकशक्तिमत्त्वेनेति न शक्तिसिद्धिरित्यर्थः ॥

आधेयशक्तिं पुरस्कृत्य प्रत्यवतिष्ठते- नन्विति । एवम्-उत्तेजकाभावविशिष्टमण्याद्य-भावादिहेतुत्वेनैव[6]दाहाद्युपपत्तौ । अत एव- प्रोक्षणजन्यकालान्तरभाव्यवघातानुकूलव्या-पारस्य व्रीहिनिष्ठत्वादेव । अन्यथा इत्यस्य विवरणं पुरुषगत इत्यादि । वैशेषिकादिमते प्रोक्षणादिना पुरुष एवादृष्टमुत्पद्यते, तदेव च स्वाश्रयात्मसंयोगेन व्रीह्यादाववघातनियामकम् । तदुक्तम्- "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादित [भि]:" (न्या, कु. प्र. स्त का-99)

---

[1] 'अन्ततो' इत्यधिकः इ.  [2] 'अपि' नास्ति ई.
[3] 'अतएव' नास्ति इ. ई. उ.
[4] यागहेतु° क.  [5] अन्यतमत्वमपीति ख.
[6] दाहाद्युपपत्तेः ख.

नावघातनियामकत्वे व्रीह्यन्तरेऽपि तत्सत्त्वात् [1]अवघातापत्तिः । यो यद्गत- फलार्थितया [फलार्थतया] क्रियते सः तन्निष्ठ[2]तद्गतफलहेतुव्यापारजनको यागवदिति नियमाच्च

किं च व्रीह्यादिजनननियामकोऽपि व्यापारविशेषः कल्प्यः । अन्यथा व्रीह्यादिवापे व्रीह्यादीना[3]मापरमाण्वन्तं भङ्गे व्रीह्यारम्भक- परमाणुभिर्व्रीहय एव जन्यन्त इति नियमो न स्यात् । तैरपि कदाचित् [4]यवारम्भसंभवात् । एवं भूम्याकर्षणात् भूमिनिष्ठा सम्यक्कृष्यनुकूला

---

इति । ननु प्रोक्षणजन्यपुरुषगतादृष्टस्य प्रोक्षितो व्रीहिरिति प्रतीतिनियामकस्वरूपसंबन्ध- विशेषेणावघातनियामकत्वं वाच्यमिति न कोऽप्यतिप्रसङ्ग इत्यरुचेराह - यो यद्गत इति । एतत्सामान्यव्याप्तिमूलकमनुमानम् । इत्थं यागाङ्गव्रीहिप्रोक्षणं व्रीहिनिष्ठतद्गतावघात- हेतुव्यापारजनकं व्रीहिगतावघातार्थितया क्रियमाणत्वात् यो यद्गतेत्यादि नियमादिति । ईदृशानुमानात् व्रीहेः प्रोक्षणजन्यकालान्तरभाव्यवघातानुकूलशक्तिसिद्धिरित्यर्थः ।

लौकिकमप्याधेयशक्तिं साधयितुमाह- किं चेति । [5]व्रीह्यादीति । व्रीह्यादि- वाक्यजन्यो व्रीह्याद्यङ्कुरजनननियामको भूमिष्ठो व्यापारविशेषः कल्प्य इत्यर्थः । ननु व्रीह्यारंभकपरमाणूनां व्रीहिजनकत्वस्वभावादेव तन्नियम इत्यत आह - तैरपीति । कदा- चित्- पाकजविलक्षणरूपरसादिसाचिव्ये[6]तृणाद्यारम्भकपरमाणुभिः यवारंभात् व्रीह्यारं-

---

[1] व्यवघातापत्तिः आ., अवगतापत्तेः, ई.

[2] °तद्गतहेतु° उ. [3] °मत्यन्तं भङ्गे इ. ई.

[4] यवा रंभात् । एवमाद्यकर्षणात् भूमिनिष्ठानामनुकूला ई.

[5] 'व्रीह्या .................... इत्यर्थः' इत्यन्तस्त्रुटितः ग.

[6] 'तृणाद्या .................. दित्यर्थः' इत्यन्तस्त्रुटितः ग.

P 24

शक्तिर्वाच्येति चेत् - न । निरुक्तव्यापारस्य पुरुषगततया अदृष्टरूपत्वात् व्रीहिनिष्ठत्वे नानापत्तेः । न च [1]सः नानाव्रीहिनिष्ठ एक एवास्तु । एकनाशात् तदनाशश्च सकल[2]व्रीहिनाशकालीनस्य तस्य स[illegible]व्रीहिनाशनाश्यत्वादिति वाच्यम् । तथाप्यनन्तव्रीहिनिष्ठत्वादेकात्मनिष्ठत्वे लाघवात् 'रक्तः [3]स्फटिक' इति प्रतीत्या रक्तत्वस्य स्वाश्रयसंयोगेन स्फटिकमात्रनिष्ठत्ववत् 'संस्कृतो व्रीहिरि'ति प्रतीत्या[4]तेन तस्य व्रीहिमात्रनिष्ठत्वात् अवघातनियमः । एतेनाभिमन्त्रितपयः पल्लवादौ [5]विषचालनादि[6]शक्ति[7]रप्यपास्ता । तत्रापि मन्त्रपाठादितः पुरुष [8]एवादृष्टस्वीकारात् अशुचिपुरुषे[9]तत्कृत इति [10]चेदाशौचाभावस्य क्वचिदप्रयोजकत्वात् । अशुचेर [11]क्वचिदधिकारात् । न चैवं मण्यादिसमवधानजन्य-

---

भक्तपरमाणुभिरपि कदाचित् यवारंभादित्यर्थः । निरुक्त इति । प्रोक्षणजन्यकालान्तरभाव्यवघातानुकूलव्यापारस्येत्यर्थः । तेन -स्वाश्रयसंयोगेन, सम्बन्धविशेषेण वा,'संस्कृतो [12]व्रीहिरि'ति प्रतीतिनियामकस्वरूपसम्बन्धविशेषेण वा । अशुचेरपीति । आशौचवतोऽपि क्वचित् पुत्रजातकर्मादावधिकारात् शुचित्वसदृष्टोत्पत्तौ क्वचित् प्रयोजकं न भवतीत्यर्थः । वस्तुतस्तु यत्र वाचनिकोऽधिकारः तत्र शुचिनेति वचनाप्रवृत्तेरशुचित्वेऽप्यदृष्टोत्पत्तौ बाधकाभाव इति । न चैवमिति । प्रोक्षणादि-

---

1 'सः' नास्ति ई.  2 'व्रीहि' नास्ति ई.

3 पट ई.  4 सम्बन्धविशेषेण इ. ई.

5 विषसंचाल° अ.  विषसंचालनादौ आ.

6 'अनुकूला' इत्यधिकः ई.  7 °रित्यपास्तम् ई.

8 एवस्वी° ई.  9 'तत्' नास्ति ई.  10 चेच्छौचा° ई.

11 तदधि° इ.

12 'व्रीहिरिति ............. अदृष्टोत्पत्तौ' इत्यन्तस्त्रुटितः क.

संबन्धविशेषेणेन्धनादिगतमदृष्टमेव कल्प्यताम्[1] इति वाच्यम् । तत्र मण्यादेः प्रतिबन्धकत्वेनैव निर्वाहात् । यो [2]यद्गत-फलार्थितया [फलार्थतया] इत्यादि[3]नियमस्तु शत्रुनिष्ठ- [4]वधाद्यर्थं क्रियमाणे श्येनादौ कर्तृनिष्ठादृष्ट-जनके व्यभिचारे श्येनो हि विहितत्वात् वधद्वारा सुखहेतुं धर्मं हिंसात्वेन निषिद्धत्वात् ।

"अभिचारमहीनं च त्रिभिः कृच्छैः विशुध्यति"

इत्युपदिष्टप्रायश्चित्तत्वात् [5]च [6]नरकहेतुमधर्मं च जनयति । न चायमेव [7]वधद्वारा आनुषङ्गिकसुखहेतुः, सुखस्य धर्मैकहेतुत्वात् ।

---

जन्यादृष्टस्य स्वाश्रयसंयोगेन स्वरूपसंबन्धविशेषेण वाऽवघातनियामकत्वे [8]मण्यादिसमवधान-जन्यं पुन्निष्ठमदृष्टमेव[9]स्वाश्रयसंयोगादिनेन्धनादिगतं दाहाभावनियामकमस्त्विति प्रतिबन्दिरित्यर्थः । संबन्धविशेषेण - स्वाश्रयसंयोगेन, स्वरूपसंबन्धविशेषेण वा । ननु श्येनस्य कर्तृनिष्ठादृष्टजनकत्वे मानाभाव इत्यत आह - श्येनो हीति । विहितत्वात् -'श्येनेन अभिचरन् यजेत' इत्यनेन विहितत्वात् । हिंसात्वेनेति । 'न हिंस्यात् सर्वाभूतानी'ति अनेन हिंसात्वेन श्येनस्यापि निषिद्धत्वादित्यर्थः । ननु 'न हिंस्यादि' तीदं विहितहिंसां न गोचरयति । अत एवाग्नीषोमीयपशुहिंसायां नैतत्प्रवृत्तिः । तथा चास्य कथमधर्म-जनकत्वमत आह - अभिचारमिति । श्येनस्याभिचारत्वात् तत्रायं प्रायश्चित्तोपदेशः संभवतीति तस्य कर्तृनिष्ठाधर्मजनकत्वम् । अन्यथा अधर्मनाशकप्रायश्चित्तोपदेशानुपपत्ति-रित्यर्थः । [10]श्येनेन शत्रुनिष्ठमेवादृष्टं जन्यते, तदेव च वधद्वारा कर्तरि सुखादिकं जनयतीत्याशंक्य निषेधति - न चायमिति । धर्मैकहेतुत्वात् - समानाधिकरणधर्मैक-

---

1 'इति वाच्यम्' नास्ति अ. आ. ई. उ. 2 बहुकालार्थि० अ. 3 ०नामस्तु ई.
4 ०वधार्थतया इ. ०वधार्थ ई. 5 'च' नास्ति अ. आ. ई. उ.
6 नरकमधर्मं० अ. इ. ई. उ. 7 अवयवद्वारा ई.
8 मण्यादि ............... अदृष्टमेव' इत्यन्तस्त्रुटितः ग.
9 'स्वाश्रय............. इत्यर्थः' इत्यन्तस्त्रुटितः क.
10 'श्येनेन ............... हेतुत्वात्' इत्यन्तस्त्रुटितः ग.

प्रत्यभिचारादिना वधहेत्वदृष्टनाशे नरकानुत्पादप्रसङ्गाच्च । तथा च सुखनरकयोः कर्तृनिष्ठत्वात् धर्माधर्मावपि तन्निष्ठावेव । [1]काम्यो वैरिवधस्तु [2]खड्गाघातादिरूपो नात्मनिष्ठः । तन्निष्ठत्वेऽपि नान्यत्र सामानाधिकरण्यप्रत्यासत्त्या अदृष्टजन्यत्वेन कॢप्त इति न तदर्थं श्येनजन्यादृष्टस्य [3]शत्रुनिष्ठता । न च वधजन्यस्य शत्रुनिष्ठस्य मरणदुःखस्य हेतुः, श्येनजन्योऽधर्मः शत्रुनिष्ठः [4]दुःखस्य [दुःखस्या] धर्मैकहेतुत्वादिति वाच्यम् । मरणदुःखस्य श्येनजन्यादृष्टत्वात् तुल्येऽपि श्येने मरणदुःखातिशयानतिशयबाहुल्यात् अल्पवैचित्र्यस्य विना पापवैचित्र्यमनुपपत्तेः । श्येनजन्यः कर्तृगतो धर्म एव हि शत्रुमरणदुःखहेतुः पापस्य सहायः । तत्त्वं च तत्पापजन्यमरणदुःखविरोधिजीवनादृष्ट- [5]विनाशकत्वेन । इत्थञ्च श्येनस्य तत्त्वज्ञानिवधकारितापि संभवति । यदि च तत्त्वज्ञानिकृत-

हेतुत्वात् । ननु श्येनस्य वैरिवधार्थतया क्रियमाणत्वात् तन्निष्ठादृष्ट- [6]जनकत्व मस्त्येवेति कथं व्यभिचार इत्यत आह- काम्य इति । खड्गाघातादिरूपवधस्य समवायेन शरीरनिष्ठत्ववदात्मनिष्ठत्वमपि संभवत्येवेत्याशयेनाह- तन्निष्ठत्वेऽपीति । आत्मनिष्ठत्वेऽपीत्यर्थः । अन्यत्र - काष्ठादौ । ननु [7]श्येनस्थले वधजन्यं मरणदुःखमेवकाम्यम्, तच्च द्वेष्यात्मनिष्ठमिति तदर्थं श्येनजन्यादृष्टमपि तत्रैव कल्पनीयमित्याशङ्क्य निषेधति - न चेति ननु श्येनजन्यादृष्टस्य वैरिनिष्ठत्वाभावे कथं तदनुष्ठानानन्तरमेव तद्वध इत्यत्राह - श्येनजन्य इति । तत्त्वं च - [8]सहायत्वं च । इत्थं च - श्येनजन्यादृष्टस्य वैरिनिष्ठत्वाभावे च । तत्त्वज्ञानिकृत इति । आवश्यकभोगविशेषजनकादृष्टक्षयार्थं तत्त्वज्ञानिनोऽपि श्येनादौ

1 काम्ये ई. 2 खड्गघा° ई. 3 शक्तिनि° ई.
4 दुःखस्य . . . . . . . . . . . . . . वाच्यं' इत्यन्तस्त्रुटितः आ. उ.
5 ° नाश°, अ. विनाशिक° आ.
6 जनकजन्यत्वं° ख. 7 श्येनजन्यादृष्टस्य वध° ग.
8 असहा° ग.

श्येनो वधकारी तदा तत्र श्येनजन्यादृष्टस्य शत्रुनिष्ठत्वेऽपि तादृशानियमो वधस्य शरीरगतत्वात्, अनुकूल[1]तर्काभावाच्चा[2]सिद्धः ।

किं च प्रोक्षणादेः व्रीहिगतफलार्थितया क्रियमाणत्वमासिद्धम् । प्रोक्षणादेः प्रधानाङ्गत्वेनादृष्टद्वारा. प्रधानापूर्वफलकत्वात् । अत एव

---

प्रवृत्तिसंभवादिति भावः ।

[3]ननु 'यो यद्गते'त्यादिनियमोऽस्तु, तथापि तन्मूलकं प्रागुक्तानुमानं व्रीहिनिष्ठातिशयसाधकं न संभवति । प्रोक्षणस्य व्रीहि[4]गतावघातार्थितया क्रियमाणत्वाभावेन हेतोः स्वरूपा[5]सिद्धत्वादित्यत आह- किं चेति । प्रधानाङ्गत्वेन- यागाङ्गत्वेन । "फलवत्सन्निधावफलं तदङ्गम्" इति लक्षणसद्भावादिति भावः । अत एवेति । यतः प्रोक्षणादेः प्रधानाङ्गत्वेनावघातार्थितया क्रियमाणत्वमसिद्धम् । अत एवकृष्णले प्राप्तस्याप्यवघातस्यवैतुष्यरूपप्रयोजनबाधेन बाधेऽपि प्रोक्षणमनुष्ठीयत इत्यर्थः । कृष्णलः-सुवर्णमापः । "शतकृष्णल[6]मायुः कामो जुहुयात्" "कृष्णलं श्रपयेत्" इत्यादिना तस्यापि नियोगसाधनद्रव्यत्वावगमे तत प्रोक्षणस्योचितत्वात्, न तु कृष्णलेऽवघातस्याप्राप्ततया वैतुष्यरूपप्रयोजनबाधेन तद्बाधस्य कथं प्राप्तबाधत्वम् । न च "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ती"त्यत्र यवादिसाधरण्यार्थं व्रीहिपदे नियोगसाधनीभूतद्रव्यलक्षणाश्रयणेन यवादाविव कृष्णलेऽपि प्रोक्षणावघतायोः [7]प्राप्तेस्तत्रावघातः प्रयोजनबाधेन बाध्यत इति वाच्यम् । सतुपद्रव्यलक्षणयापि यवादिसाधारण्योपपत्तेरितिचेत्-न ।"प्रकृतिवत् विकृति" न्यायेनातिदेशात्व्रीहियागधर्माणां कृष्णलयागे प्राप्तौ कृष्णलेऽपि व्रीह्यादिधर्मयोः प्रोक्षणावघातयोः प्राप्तिस्तत्र प्रोक्षणस्यबाधाभावेन नित्यवदनुष्ठानम् ।

---

[1] तद्भावा° ई. [2] सिद्धः अ. [3] ननु प्रोक्षणादेर्यदि व्रीहिनिष्ठव्यापारजनकत्वं तदा तद्गतावघातरूपफलार्थितया क्रियमाणत्वं कथमत आह ग. [4] °गतावपातार्थि° क. [5] °सिद्धत्वादत क.
[6] मन्युः ख. [7] प्राप्तिह्यत्राव° ग.

कृष्णले द्वारबाधेनावघातबाधेऽपि प्रोक्षणम्, एकस्य प्रोक्षणादन्यस्यावघातात् [1]फलासिद्धिस्तु "व्यक्तिवचनानाम्" इति न्यायेन प्रोक्षणकर्मणामेवावघात-[2]कर्मत्वबलात् प्रोक्षितव्रीह्यवघातस्य नियमादृष्टहेतुत्वाच्च । न चैवं प्रोक्षण-स्यादृष्टहेतुत्वे[3]मानाभावः । अवहन्तव्यव्रीहि-[4]प्रोक्षणत्वेनापि[5]तद्धेतुत्वात् [6]तत्सिद्धेः । न चावघातस्य नियमादृष्ट [7]हेतुत्ववैजात्येन [8]वैजात्यवच्छिन्ने [9]एव[10]च प्रोक्षणं हेतुः, तर्हि कृष्णले प्रोक्षणबाधापत्तेः, कृष्णले

---

अवघातस्य तु प्रयोजनत्वबाधेन बाधात् नानुष्ठानमिति प्राप्तबाधत्वे विशेषाभावादिति । ननु प्रोक्षणादेः प्रधानाङ्गत्वेनावघातार्थत्वाभावैकस्य प्रोक्षणादन्यस्यावघाताच्च यागसिद्धिः कथमत आह-एकस्येति । 'व्रीहीन् प्रोक्षति' 'व्रीहीनवहन्ती'त्यत्र "व्यक्तिवचनानां शब्दानां सन्निहितविशेषपरत्वम्" इति न्यायेन प्रोक्षणकर्मभूतव्रीह्यादीनामेवावघातकर्मत्व-लाभात् प्रोक्षितव्रीह्यवघातो नियमादृष्टहेतुः । अतः एकस्य प्रोक्षणादन्यस्यावघातात् [न] फलसिद्धिरित्यर्थः । न चैवमिति । प्रोक्षितव्रीह्यवघातस्य तत्त्वेन नियमादृष्ट-[11]हेतुत्वे चेत्यर्थः । मानाभाव इति । [12]कारणतावच्छेदके कारणतावच्छेदकत्वेनान्यथासिद्धत्वादिति [13]भावः। अवहन्तव्यइति । [14]विनिगमकाभावादित्यादिः । प्रोक्षणस्य व्रीहिप्रोक्षणस्य व्रीहि-

---

1 फला......न्यायेन' इत्यन्तस्त्रुटितः अ. फलसि° आ. 2 °कर्मत्वालाभात् इ. कर्मत्वलाभात् ई. 3 मानाभावात् इ. 4 प्रोक्षणत्वादिनापि इ. 5 'तत्' नास्ति अ. इ. ई. 6 तत्सिद्धिः अ. 7 °हेतुत्वं वैजा° अ. आ. इ.
8 'एव तत्' इत्यधिकः उ. 9 'एव' नास्ति ई. 10 'च' नास्ति ई. उ.
11 °हेतुत्वे प्रोक्षणस्य कारणता° क. 12 'कारण.....सिद्धत्वादिति' इत्यन्तस्त्रुटितः ख. कारणतावच्छेदकेन कारण° ग. 13 'अदृष्टहेतुत्वे मानभावादिति' इत्यधिकः क. 14 'प्रोक्षितव्रीह्यवघातत्वेनैवादृष्टहेतुत्वसंभवात्, प्रोक्षणस्या-दृष्टहेतुत्वमिति भावः । न चेति । व्रीहीनवहन्तीति विधिना नखविदलना-दिनिरासेन नियमतावघातजन्यमदृष्टनियमादृष्टं तद्धेतुत्वमवघातस्य वैजात्येनैव विजातीयावघातः । एवंच प्रोक्षणहेतुत्वमदृष्टहेतुत्वं तस्य । तथा च व्रीहि-गतावघातार्थितया क्रियमाणत्वं प्रोक्षणेऽस्त्येवेति न स्वरूपासिद्धिरिति भावः। दृष्टार्थस्यैव नियमितावघातजन्यवैतुष्यस्यैव प्रोक्षणस्य' इत्यस्ति क.

नियमादृष्टमात्रार्थमवघातोऽस्त्विति चेत्- न । दृष्टार्थस्यैव नियमा-[1]दृष्टार्थत्वस्य सिद्धान्तितत्वात् । [2]व्रीह्यादेः कर्मत्वं तु प्रोक्षणादिजन्य-जलसंयोगरूपफलशालित्वात् 'सक्तून् प्रोक्षति' इत्यादौ लौकिके तथैव वाच्यत्वात् तत्राधेयशक्तेः [3]त्वयाप्यनभ्युपगमात् व्रीह्यादि[4]वापे यवाद्यापत्तिरिति न युक्ता, [5]अपाकजाविलक्षणरूपरसादिविशिष्टपरमाणूनां यवाद्यारम्भकत्वात् । एवं चिकित्सास्थलेऽपि धातुसाम्यमेव द्वारमिति दिक् ।

ननु यत्र पाकजाः न विशेषाः तत्र जलादौ क्वचिदुद्भूत-रूपादिकं क्वचित् नेत्यत्र नियामकाभावात् तदनुकूलाशक्तिः[6] स्वीकार्येति चेत्- न । [7]शक्तिविशेषप्रयोजकादृष्टविशेषादेवोद्भूतरूपादिसंभवात् । अदृष्टे [8]पापपुण्यादि रूपे साङ्कर्यादनुगताविशेषा संभवात्

---

निष्ठातिशयजनकत्वे 'व्रीहीन् प्रोक्षति'इत्यत्र तेषां कर्मत्वं न स्यात् अत आह- व्रीह्यादेरिति । ननु "ज्वरहरणकामो पञ्चमूलीयकषायं पिबेत्" इत्यत्र क्षणिकस्य कषायपानस्य कालान्तरभाविज्वरनिवृत्तिं प्रति हेतुत्वासंभवादाधेयशक्तिरावश्यकीत्यत आह - एवं चिकित्सा इति । रोगप्रतीकारस्थलेऽपीत्यर्थः ।

उक्तसमाधानं दूषयन् मतान्तरमाह- अदृष्ट इति । [9]साङ्कर्यात् - धर्मत्वादिना साङ्कर्यात् । अनुगतेति । जातिरूपानुगत - विशेषासंभवात् । अदृष्टविशेषस्य नोद्भूतरूपादौ तन्त्रत्वमित्यर्थः । नन्वनयवोद्भूतरूपादेरवयव्युद्भूतरूपादौ

---

[1] दृष्टार्थस्य ई. [2] 'व्रीह्यादेः......शालित्वात्' इत्यन्तस्त्रुटितः इ. ई.
[3] त्वयाप्यनुप° इ. त्वयानभ्युप° ई. [4] °वापेयवाधापत्तिरपि इ. ई. °वापाकाद्या° आ. [5] पाकज° आ. [6] स्वीकारेऽर्थेति ई.
[7] 'तव' इत्यधिकः अ. 'तत्' इत्यधिकः आ. ई. [8] पापत्वदिना सां° अ.
[9] 'सांकर्यात् .....अदृष्ट'° इत्यन्तस्त्रुटितः क. अदृष्टं हि धर्माधर्मभेदेन द्विविधम्, तत्रोद्भूतरूपादिनियामकतावच्छेदकजातिविशेषस्वीकारे उद्भूत-रूपाद्यजनकधर्माधर्मयोरवर्तमानस्य गङ्गादावुद्भूतरूपादिजनकधर्मविशेषेचा-धर्मत्वेन सांकर्यापातात्, अदृष्टेऽनुगतजातिविशेषासंभवात् तस्य नोद्भूत' इत्यस्ति ख.

अवयवोद्भूतरूपादिकमेवोद्भूतरूपादौ तन्त्वम् । रसनाद्यारम्भकाः परमाणवो योग्यजलारम्भकात् भिन्न एवेति नातिप्रसङ्ग इत्यन्ये ॥

अनुद्भूतत्वादीनामेव जातित्वात् जन्यानुद्भूतरूपेऽनुद्भूतेतर-[1]रूपाभावावयविशुक्लादौ चावयवशुक्लादिकं हेतुः । इत्थं च [2]न जल-परमाणुभेद-[3]स्वीकारः । न वा भर्जनकपालस्थवह्नावनुद्भूत[4]तेजःप्रवेशः । न वा वाय्वाद्याकृष्ट[5]सुरभिभागारब्धचम्पकादौ चानुद्भूत[6]रूपापत्तिरित्यन्ये ।

---

तन्त्वत्वे योग्यजलारम्भकपरमाणुभिः रसनाद्यारम्भो न स्यादत आह- रसनेति । नातिप्रसङ्ग इति । [8]जलादौ[9]रूपादिकं क्वचिदुद्भूतम्, क्वचिदनुद्भूतमेवेति नियमानुपपत्तिरूपोऽतिप्रसङ्गो नेत्यर्थः ।

अन्यमतं दूषयन् मतान्तरमाह- अनुद्भूतत्वादीनामेवेति । प्रत्यक्षप्रतिबन्धकतावच्छेदकत्वेन रूपादावनुद्भूतत्वमेव जातिः । आदिना प्रत्यक्षसिद्धशुक्लत्वादिजातिसङ्ग्रहः । एवकारेणोद्भूतत्वस्य जातित्वव्यवच्छेदः । अथ बहिर्द्रव्यप्रत्यक्षजनकतावच्छेदकतया रूपादावुद्भूतत्वजातिसिद्धिः । न च शुक्लत्वादिना सङ्कर इति वाच्यम् । शुक्लत्वादिव्याप्यनानोद्भूतत्वस्वीकारात् । न चैवमननुगमात् तत्प्रत्यक्षजनकतावच्छेदकत्वानुपपत्तिरिति वाच्यम् । उद्भूतपदशक्यतावच्छेदकत्वेनानुगतीकृतस्य तस्य तत्प्रत्यक्षजनकतावच्छे-

---

[1] °रूपाद्यभावा° आ. [2] न पर° आ. [3] °स्वीकारा ग.
[4] तेजः प्रदेशे वाय्वा°अ. [5] °सुरभिचम्प° ई. [6] °रूपोत्पत्तिरित्यन्ये ई.
[7] तलत्वादौ ग. [8] 'रूपादिकं' नास्ति क.

[1]पृथिवीत्वादेः रूपमात्रनिश्चये [2]अपि नीलत्वादिना निश्चयाभावात्, नीलादिविजातीयमेव [3]अनुद्भूतत्वम्। इत्थं चैकमेवानुद्भूतत्वं नीलत्वादिव्यापकम्[4]।

---

दकत्वोपपत्तिरिति चेत् - न। नानुद्भूतत्वकल्पनापेक्ष्यानुद्भूतत्वजात्य- [5]भावविशिष्टत्वेन शुक्लादीनामेवबहिर्द्रव्यप्रत्यक्षजनकत्वौचित्यात्। न चाभावो न कारणतावच्छेदकः, बाधकाभावात् इति निगर्वः। अनुद्भूतेतरेति। [6]अवयवनिष्ठमनुद्भूतेतररूपं [7]स्वाश्रयसमवेतत्वसम्बन्धेन [8]अवयवानुद्भूते प्रतिबन्धकम्, तत्सम्बन्धावच्छिन्न - [9]तदभावः [10]तत्र कारणमित्यर्थः। नन्ववयव्यनुद्भूतरूपादावनुद्भूतरूपेतररूपाभावोऽस्तु नियामकः, तथापि घटपटादौ क्वचित् शुक्लं क्वचित् नीलमित्यत्र नियामकाभावात् [11]तदनुकूलशक्तिर्वाच्येत्यत आह-[12]अवयविशुक्लादाविति। इत्थं च - जन्यानुद्भूतरूपादौ अनुद्भूतेतररूपाभावादेर्नियामकत्वे च। न जलपरमाण्विति। रसनाद्यारम्भार्थजलपरमाणुभेदस्वीकारः। पूर्वमत इव अत्र[13]मते [14]रसनाद्यवयवेष्वनुद्भूतेतररूपाद्यभाव -[15]सत्त्वेनानुद्भूतरूपाद्युपपत्तेरिति भावः। न वा भर्जन इति। पूर्वमते भर्जनकपालस्थवह्नौ उद्भूत -[16]रूपतेजःप्रवेशः आवश्यकः। अन्यथा [17]तदारब्धवह्नावनुद्भूतरूपासम्भवात्। अत्र मते तु फलबलेन [18]तत्र स्थले

---

1 पृथिवीत्वादि ग. पृथिव्यादेः घ. 2 'अपि' नास्ति क.
3 अनुद्भूतम् घ.
4 'अनुद्भूतत्वं चैकम्' इत्यधिकः ग. 'अनुद्भूतत्वमेवैकम्' इत्यधिकः ख. घ. ङ.
5 भावं न विशिष्ट° ङ. 6 अवयविन्यनु° अ., 'अवयवनिष्ठमनुद्भूतेतररूपं' नास्ति ङ.
7 स्यात् सम° अ.
8 'अवयवा .... .... तत्सम्बन्धावच्छिन्न' इत्यन्तस्त्रुटितः ङ.
9 अनुद्भूतेतररूपस्याभावः ङ. 10 तन्त्रमित्यर्थः अ.
11 'तदनुकूल' नास्ति ङ. 12 अवयव° ङ.
13 मते न अ. 14 रसनादावनुद्भूतेतररूपाभाव° ङ.
15 °सत्त्वेनैव रसादावनुद्भूत° आ.
16 'रूप .... .... अनुद्भूते' इत्यन्तग्रन्थस्त्रुटितः ङ.
17 'इतररूपाभावसत्त्वात्' इत्यधिकः अ. 18 तच्च अ.

[1]उद्भूतत्वन्तु तदभावः, [2]उद्भूतान्यसमवेतत्वादेव हि घटादिना [3]चक्षुराकाशसंयोगादिकं न चाक्षुषम्। अवयव्यनुद्भूतासमवायिहेतुतावच्छेदका जातिर्वाऽस्तु। [4]रसनाद्यारम्भकास्तु योग्यजलानारम्भकाः, शुक्लेतररूपवता शुक्लरूपवदनारम्भात् इत्यन्ये।

---

अनुद्भूते [5][अनुद्भूतेतर] – रूपाभावसत्त्वात् उद्भूतरूपोत्पत्तिरित्यर्थः। न वा वाय्वाद्याकृष्टेति। चम्पकादौ वाय्वादिना केषांचिदवयवानां निर्गमनमवश्यं वाच्यम्। अन्यथा दूरस्थपुंसः तद्गन्धप्रत्यक्षानापत्तेः। अतः [6]तथैव तत्र [7]न्यूनतापरिहाराय पुनः वाय्वाद्याकृष्टानुद्भूतरूपसुरभिभागैः पूरणं वाच्यम्। तथा तादृशचम्पकादावनुद्भूतरूप – [8]पूर्वापरभागद्वयारब्धत्वसत्त्वादनुद्भूतरूपापत्तिः। पूर्वमत इव अत्र मतेन [9]फलबलेन [10]तत्रानुद्भूतेतररूपाभावासत्त्वात् [11]एवानुद्भूतरूपानुत्पत्तेरित्यर्थः।

मतान्तरमाह — पृथिवीत्वादेरिति। एतस्य घ्राणादावित्यादिः। एकमेवानुद्भूतत्वमिति। तथा च [12]एतदभाव [13]एवोद्भूतत्वमिति भावः। अनुद्भूतरूपे नीलादिवैजात्यकल्पनायां कार्यकारणभावादेर्नियामकस्याभावादाह — नीलत्वादीति। बहिर्द्रव्यादिप्रत्यक्षजनकतावच्छेदकतयोद्भूतत्वमेव जातिः। अनुद्भूतत्वन्तु तदभावः, तदा घटाकाशसंयोगादेरपि प्रत्यक्षं स्यात्। प्रत्यक्षप्रयोजकस्योद्भूतरूपवत्समवेतस्य तत्र सत्त्वात् अत आह – उद्भूतान्येति। तथा च गुणादीनां चाक्षुषादिप्रत्यक्षे उद्भूतान्यसमवेतत्वं प्रतिबन्धकम्, तदभावश्च कारणमिति घटाकाशसंयोगादौ तादृशप्रतिबन्धकसत्त्वादेव न प्रत्यक्षमिति प्रत्यक्षप्रतिबन्धकतावच्छेदका-

---

1 अनुद्भूतत्वन्तु ख. ग. घ. ङ. 2 उद्भूतत्वान्य° ङ.
3 चक्षुराकाशादिकं घ. चक्षुराकाशयोगादिकं ङ. 4 रसनारम्भकास्तु घ.
5 'तु' इत्यधिकः 6 'तथैव' नास्ति इ. 7 इन्धनता° इ.
8 'पूर्वापरभागद्वय' नास्ति इ. 9 'फलबलेन' नास्ति इ.
10 तन्न। चम्पकादौ तूद्भूतेतर° अ. 11 'एव' नास्ति इ.
12 एतदभावादेः अ. 13 'एव .... .... कारणभावादेः' इत्यन्तग्रन्थस्त्रुटितः अ.

पृथिवीत्वादिना क्लृप्तकार्यकारण-[1]भावकनीलाद्यन्य[2]तममेव सिध्यति । जलत्वतेजस्त्वाभ्यां [3]च स्वच्छभास्वरशुक्लरूपे । न च घ्राणे नीलं पीतं [4]वेत्यत्र [5]विनिगमनाभावात् सर्वराहित्यं [6]वा इत्युक्तम् । नीलपीताद्यन्यतमत्वेन निर्णये उक्तविनिगमकचिन्तानौचित्यात् । नीलाद्येक-[7]तमनिश्चयस्य चानुद्देश्यत्वात् [8]नानानुद्भूतत्वतद्व्याप्य-[9]व्यापकादिजन्यतावच्छेदककल्पना[10]गौरवं तु फल-मुखत्वाददोष इति नानैवानुद्भूतत्वं इत्यपरे ।

---

नुद्भूतत्वजात्यसत्त्वेऽपि न क्षतिरिति भावः । कार्यकारणभावबलादनुद्भूतत्वमपि जातिरेवेत्याह — अवयव्यनुद्भूतेति । अवयव्यनुद्भूतरूपादिकं प्रत्यवयवगतानुद्भूतरूपत्वादिना-ऽसमवायित्वात् तदवच्छेदकतया अनुद्भूतत्वसिद्धिरित्यर्थः ।

मतान्तरमाह — पृथिवीत्वादिनेति । आदिना जलत्वतेजस्त्वयोः [11]संग्रहः । तथा च पृथिवीत्वेन नीलत्वशुक्लत्वादिना जलत्वेन स्वच्छशुक्लत्वेन [12]तेजस्त्वेन भास्वरशुक्लत्वेन च कार्यकारणभावबलात् घ्राणादौ पृथिवीत्वेन नीलाद्यन्यतममेव रसनादौ जलत्वेन स्वच्छशुक्लमेव चक्षुरादौ तेजस्त्वेन भास्वरशुक्लमेवानुद्भूतं सिध्यतीत्यर्थः । ननु नीलपीतादावेकस्यैवानुद्भूतत्वस्योपगमे नीलत्वादिना सङ्करः स्यात्, अतो नीलत्वादिव्याप्यं नानैवानुद्भूतत्वं कल्पनीयम् । एवं क्वचित् तत्र नीलादौ पाकजन्यतावच्छेदकमपि नानुद्भूतत्वम् अतिप्रसक्तत्वात्, किन्तु तद्व्याप्यजात्यन्तरमेव कल्पनीयम् । तथा

---

1 °भावात् घ., °भावकं ङ.
2 °तमे तत्सि° ख., °तमादेव घ.
3 'च' नास्ति घ.
4 चेत्यत्र ख.
5 विनिगमकाभावात् ङ.
6 'वा' नास्ति घ.
7 °तरनिश्चयस्य ङ.
8 नानुद्भूतत्व° ग., नानार्थभूतत्व° घ.
9 °व्यापकजन्य° घ.
10 °गौरवात् ङ.
11 ग्रहः इ.
12 'तेजस्त्वेन भास्वरशुक्लत्वे' नास्ति अ.

शुक्लत्वव्याप्यं [1]एकमेवानुद्भूतत्वं चक्षुरादिरूपे भास्वरत्वादिजातौ मानाभावात् । वाय्वाद्याकृष्टचम्पक-[2]भागास्तु चम्पकाद्यनारम्भकाः । [3]शुक्लरूपवैषम्येऽपि गन्धसाम्यसम्भवात् इत्यन्ये ।

एकत्वनिष्ठमेवोद्भूतत्वं [4]अवयवगतं चोद्भूतैकत्वम् । [5]अवयविगतस्योद्भूतैकत्वस्य जनकमनुद्भूतैकत्वविरोधि नातः [6]उद्भूतानुद्भूतैकत्वाभ्यां [7]परमाणुभ्यां

---

चातिगौरवमित्यत आह — नानेति । फलमुखत्वादिति । नीलत्वाद्यवच्छिन्नं प्रति पृथिवीत्वादिना गृहीतकारणताबलात् घ्राणादावुद्भूतनीलादिबाधात् अनुद्भूतनीलादिः सिध्यति । ततो नीलत्वादिना सङ्करभिया नीलत्वादिव्याप्य—ना[ना]नुद्भूतत्वस्य तद्व्याप्यव्यापकजन्यतावच्छेदकजात्यन्तरस्य च कल्पनमिति अतिगौरवं फलमुखत्वात् [8]अदोष इत्यर्थः ।

मतान्तरमाह — शुक्लत्वव्याप्यमिति । तथा च घ्राणरसनादौ शुक्लमेवानुद्भूतमित्येकतरनिर्णयोपपत्तेरिति भावः । नन्वनुद्भूतत्वस्य शुक्लत्वैकव्याप्यस्य [9]उपगमात् नीलत्वादिना संकराभावेऽपि भास्वरत्वादिना संकरः स्यादित्यत आह — चक्षुरादीति । शुक्लमेव यद्यनुद्भूतं तदा वाय्वाकृष्टचम्पकभागानामनुद्भूतरूपवतां चम्पकारम्भकत्वमनुपपन्नं शुक्लेन पीतानारम्भादित्यत आह — वाय्वाद्याकृष्टेति ।

उद्भूतत्वादेः रूपादि —[10]निष्ठत्वे नीलत्वादिना संकरात् नीलत्वादिव्याप्यतत्तन्नानात्वकल्पनायां गौरवादुद्भूतत्वानुद्भूतत्वे एकत्वनिष्ठे इति मतान्तरमाह — एकत्वनिष्ठमेवेति ।

---

1 'एकं' नास्ति घ. 2 °भागस्तु ङ.
3 युक्ताःरूप° क. 4 अवयवं च ङ.
5 'अवयविगतस्य' नास्ति ग., अवयवगतस्य ङ.
6 'उद्भूता .... .... विशेषत्वमेव वा' इत्यन्तस्त्रुटित घ.
7 'परमाणुभ्यां' नास्ति ङ. 8 दोषः आ.
9 अनुपगमात् आ. 10 नीलत्वे आ.

आरब्धे अनुद्भूतैक[1]त्वोत्पत्तिः। विषयविशेषत्वमेव वा प्रत्यक्षप्रयोजकम्, विशेषः [2]च पिशाचादिभेदो लौकिकत्वं [तत्त्वं] वा। इत्थं [3]च विजातीयरूपवदारब्धस्य [4]अवयविनो न नीरूपत्वेऽपि क्षतिरित्यप्याहुः।

---

घटाद्येकत्वनिष्ठमेवेत्यर्थः। न चैकपृथक्त्वनिष्ठमेव किं नोपेयत इति वाच्यम्। तस्यावधिज्ञानव्यंग्यत्वेन विलम्बितोपस्थितिकतया तन्निष्ठोद्भूतस्यापि तथात्वापत्तेरिति भावः। [5]द्रव्यनिष्ठस्य उद्भूतैकत्वस्य द्रव्यगुणादिप्रत्यक्षेणैकविधसम्बन्धेन हेतुत्वं सम्भवति, अत एकत्वनिष्ठोद्भूतत्वजात्यनभ्युपगमेऽप्युपपत्तिमाह — विषयविशेषत्वमेवेति। पिशाचादीत्यादिना गगनपरिमाण्वादिपरिग्रहः। लौकिकत्वम् — स्वरूपसम्बन्धात्मकविषयताविशेषः। इत्थं च — उद्भूतैकत्वस्य विषयविशेषत्वस्य वा प्रत्यक्षप्रयोजकत्वे च। विजातीयेति। नीलपीतारब्धस्यावयविनः परस्परविरोधात् नीलरूपत्वेऽपि न प्रत्यक्षत्वक्षतिरित्यर्थः। 'इत्यप्याहुः' इत्यस्वरसोद्भावनम्। तद्बीजं चात्र रूपरसाद्युद्भूतमिति [6]प्रतीत्यपलापः। अत्रैकत्वमुद्भूतमिति प्रतीतिकल्पनं चेति।

पुनरप्याधेयशक्तिं पुरस्कृत्य प्रत्यवतिष्ठते — स्यादेतदिति। प्रतिष्ठायाः — देवतासन्निधानसम्पादककर्मविशेषस्य। तदाहितम्—प्रतिष्ठाहितम्। तथा—पूजाफलप्रयोजकम्। तन्नाशेति। तददृष्टनाशायोगादित्यर्थः। [7]तथा च चाण्डालादिस्पर्शेऽपि पूज्यत्वं स्यादिति भावः। ननु *कर्मनाशापारगमनेनेव व्यधिकरणेनापि चाण्डालादिस्पर्शेन तन्नाशः

---

1 °त्वापत्तिः ङ.
2 'च' नास्ति घ.
3 'च' नास्ति ङ.
4 अवयविनां क.
5 'द्रव्य .... .... एकत्वनिष्ठ' इत्यन्तस्त्रुटितः आ. इ.
6 'प्रतीति' नास्ति अ.
7 'तथा च .... .... सप्रकाशादित्यर्थः' इत्यन्तस्त्रुटितः अ.

---

* कर्मनाशाजलस्पर्शात् करतोयातिलङ्घनात्।
गण्डकी बाहुतरणात् धर्मः क्षरति कीर्तनात्॥ --इति स्मृतिवचनमत्रानुसन्धेयम्।

 

स्यादेतत्। अकृत-[1]प्रतिष्ठे प्रतिमादौ [2]पूजाफलाभावात् प्रतिष्ठायाः [3]च क्षणिकत्वात्। [4]तदाहिता शक्तिः चाण्डालादिस्पर्शनाश्या पूजाफलप्रयोजिका वाच्या। न च यजमानगतादृष्टं तदाहितं तथा, चाण्डालादि-[5]स्पर्शेन व्यधिकरणेन तन्नाशायोगात्, [6]यजमानस्यादृष्टक्षये पूज्यत्वानापत्तेश्चेति चेत्-न। [7]प्रतिष्ठाविधेः देवतासन्निधानस्य *[तत्सन्निधानस्य] स्वाभेदस्वीयत्वादिज्ञाने

---

संभवत्येवेत्यत आह—यजमानस्येति। प्रतिष्ठाविधेरिति। ततः [8]सप्रकाशादित्यर्थः। [9]स्वाभेद इति। 'अहं इयं प्रतिमा' 'ममेयं प्रतिमे'ति ज्ञानतदाहितसंस्काररूपस्येत्यर्थः। तादृशज्ञान-नाशेऽपि पूज्यत्वमुपपादयितुं तदाहितसंस्काररूपत्व[10]मप्युक्तम्। तत्सन्निधानस्य। न च देवताया विशेषदर्शित्वात् कथं प्रतिमादौ [11]स्वाभेदादिज्ञानमिति वाच्यम्। विशेषदर्शित्वेऽप्याहार्यज्ञानस्य संभवादिति भावः। यन्मते शब्दमयी देवता तन्मते [12]तस्याश्चेतनत्वाभावेन तादृशज्ञानासंभवात् कथं पूज्यत्वमत आह – देवताया इति। प्रतिष्ठाहितमिति। प्रतिष्ठा[13]जनितं, प्रतिमेयं प्रतिष्ठितेति यथार्थसविषयकं ज्ञानसंस्कारोभयात्मकं पूजकनिष्ठमित्यर्थः।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | °प्रतिष्ठप्रति° | ङ. | 8 | अप्रकशा° | ग. |
| 2 | प्रजाफला | घ. | 9 | स्वभेद | ख. |
| 3 | 'च' नास्ति | घ. | 10 | °मप्ययुक्तम् | ग. |
| 4 | तथाहिता | घ. | 11 | स्वभेदा° | ख. |
| 5 | °स्पर्शे व्यधि° | ङ. | 12 | तस्माश्चेतन° | ख. |
| 6 | तददृष्टक्षयत्वे | उ. | 13 | जनितं यथार्थ° | क. |
| 7 | प्रतिष्ठादिना देवता | उ. | | | |

---

* व्याख्यायां 'स्वाभेद' इति पदानन्तरं 'तत्सन्निधानस्य' इति पददर्शनात् मूलेऽपि तादृशपाठः समीचीनः इति भाति।

तदाहितसंस्कारस्योत्पादात् चाण्डालादि – [1]स्पर्शे तदभावात् फलाभावः । देवतायाः [2]अचैतन्येऽपि [3]प्रतिष्ठाहितं 'इयं प्रतिष्ठिता' इति यथार्थ – [4]सविषयकं चाण्डालादि – [5]स्पर्शाभाव – [6]विशिष्टं [7]पूजाफलप्रदम् ।

वस्तुत[8]स्तु 'प्रतिष्ठितं पूजयेत्' इति विधेस्तत्प्रतिष्ठाकालीन यावदस्पृश्यस्पर्शनाभावविशिष्टःस्वोत्तरकालीनतत्तदस्पृश्यस्पर्शतद्ध्वंसान्यतरविरह – [9]विशिष्टो

---

प्रतिष्ठितमित्यत्र क्तप्रत्ययार्थमनुसृत्याह – वस्तुतस्त्विति । चाण्डालादिस्पर्शकालेऽपि प्रतिष्ठाध्वंससत्त्वात् पूज्यत्वापत्तिवारणाय विशिष्टान्तं ध्वंस[10]विशेषणम् । [11]तत्रापि प्रथमे चाण्डालादिस्पर्शोत्पत्तिकालेऽपि पूज्यत्वं स्यात् । प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शाभाववैशिष्ट्यसत्त्वादत आह – स्वोत्तरकालीनेति । तत्तत्प्रतिष्ठोत्तरकालीनेत्यर्थः । सर्वत्र प्रतिमादावेकप्रतिष्ठायाऽसत्त्वादुक्तं तत्तत्प्रतिष्ठेति । प्रतिष्ठाध्वंसमात्रस्य पूजाफलप्रयोजकत्वे तां

---

1 °स्पर्शे च तद° उ.
2 अचैतन्यत्वेऽपि ई.
3 प्रतिष्ठितं हि तत् इयं उ.
4 °सविषयक चा° उ.
5 'रूप' इत्यधिकः उ.
6 °विशिष्टे उ.
7 पूज्यफल° अ., पूजाफलप्रयोजिकम् इ. प्रजाफल° ई.
8 'तु' नास्ति उ.
9 °विशिष्टं वा उ.

10 विशेषणम् । अतीतवर्तमानयावदस्पृश्यस्पर्शाभावविशिष्टत्वस्य क्वापि प्रतिष्ठाध्वंसे प्रतिष्ठाकालीनेत्यभावविशेषणं सर्वत्र प्रतिष्ठायामेकविधप्रतिष्ठायाऽसत्त्वादुक्तं तदिति । अत्र यावदभावे प्रागभाव एव तस्य विनाशित्वे नास्पृश्यस्पर्शकाले यावदभावविशिष्टत्वासंभवात् । अपूज्यत्वोपपत्तेः । अन्यथा तदनुपपत्तेः । प्रागभावतदुपगमे एतत्कल्पासंभवायाह – स्वोत्तरकालीनेति । स्वं तत्तत्प्रतिष्ठाध्वंसः, तदुत्तरकालीनं यत् तत्तदस्पर्श्यस्पर्शनध्वंसान्यतरत्तद्विशिष्ट इत्यर्थः । अत्र तादृशस्पर्शविरहविशिष्टमात्रोक्तौ स्पर्शनानन्तरमपि पूज्यत्वापत्तिः । तादृशस्पर्शध्वंसविरहविशिष्टमात्रोक्तौ च स्पर्शकालेऽपि पूज्यत्वापत्तिरित्यन्यतरविरहविशिष्टमुक्तम् । तादृशप्रतिष्ठाध्वंसमात्रस्य' इत्यधिकः विलक्षणश्च पाठोदृश्यते क.

11 'तत्रापि .... .... तत्तत्प्रतिष्ठेति' इत्यन्तस्त्रुटितः ख.

वा (तत्तत्प्रतिष्ठा) तत्प्रतिष्ठा – [1]ध्वंसः तद्विशिष्टप्रतिमापूजनं वा तथा। [2]क्तप्रत्ययादतीतत्वलाभादिति दिक् ॥

अथ तथापि तुलापरीक्षाविधिना [3]तुलादौ शक्तिः तया नमनोन्नमनादिकं वाच्यमिति चेत् – न । [4]परीक्षाविधिना [5]तुलामारूढोऽहं पापवान् [6]निष्पापो वेति ज्ञानस्य [7]जनना – [8]देतज्ज्ञानसहकृते च प्राक्तनपापपुण्ये नमनोन्नमनाभ्यां जयाजयौ जनयतः। [9]न च विस्मृतपापस्य 'निष्पापोऽहं'मिति ज्ञाने जयः स्यात्, न [10]तु पराजयः, तद्धेतुपापवत्वज्ञानाभावादिति वाच्यम्। निष्पापत्वे पापवत्वप्रमायाः तथात्वात् विस्मृतपापस्य तादृशोऽहं पापवान् निष्पापो वेति संशयात्मिका तदितरस्य निश्चयात्मिकाऽऽस्तीत्यदोषः।

---

विनापि तत्फलं स्यादित्यस्वरसादाह – तद्विशिष्ट इति। तादृशतत्तत्प्रतिष्ठाध्वंसविशिष्ट इत्यर्थः। तथा च पूजाफल प्रयोजकम्।

'एतेने'त्यादिवक्ष्यमाणस्वरसादाह — यद्वेति । 'अन्ये' इत्यस्वरसस्तु देवताया अचेतनत्वे तदाकर्पण[णा]संभवात् प्रागुक्तमेव शरणीकर्तव्यमिति।

प्राभाकरस्य शक्तिसाधनं वैशेपिकरीत्या निरस्यन् न्यायरीत्यापि निरस्यति – अस्माकं त्विति। नैयायिकानामित्यर्थः । कारणतैवेति। वह्निः दाहे शक्त इत्यस्य दाहकारणमिति

---

1 ध्वंसतद्वि॰ अ. इ. ई. उ.
2 तथोक्त ई., क्तप्रत्ययादिति ला॰ उ.
3 तुलादि आ.
4 परीक्षादिना ई.
5 तुलामारुह्योऽहं उ.
6 निष्पापवान् वे॰ उ.
7 'एव' इत्यधिकः उ.
8 देतदीयज्ञान॰ उ.
9 'न च ... ... ... त्यदोषः' इत्यन्तस्त्रुटितः अ. उ.
10 च ई.

यद्वा [1]प्राक्तनस्तेयादिजन्यं पापमपेक्ष्याधर्मः तदभावमपेक्ष्य धर्मः परीक्षया जन्यते, ताभ्यां जयाजयौ परीक्षाविधौ तथा [2]धर्मादिफलश्रुतावपि फलबलात् कल्प्यते। एतेनास्तेयादिना तादृशपुण्यजननात् कस्य सहकारि तादृशं ज्ञानम्। [3]किं च यत्र सभाक्षोभादिना न पापतदभावज्ञानं तत्र का गतिरित्यपास्तम्। देवताचैतन्ये परीक्षाकृष्टदेवैः नमन्नोन्नमने इत्यन्ये॥ [4]अस्माकं तु शक्तिपदार्थः कारणतैवेति [5]समासः॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां
पदार्थमालायां शक्तिवादः समाप्तः॥

---

विवरणादितिभावः। समास इति। प्रोक्षणादेः क्षणिकत्वात् भाविफल – जनकत्वा[6]संभवात् *प्रागुक्तं स्मर्तव्यमिति भावः॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूतश्रीमद्दुर्ग-
कवीन्द्रतनूजमुद्गलविदुषसूनुना भास्करेण रचित-
पदार्थमालाप्रकाशे शक्तिवादः समाप्तः॥

---

1 प्राक्तन्यस्ते° ई.
2 धर्मादिफलश्रुतेरपि उ.
3 'किं च .... .... गतिः' इत्यन्तस्त्रुटितः अ. उ.
4 'अस्माकं तु' नास्ति अ.
5 न पृथक् शक्तिरस्माकमिति दिक् अ. आ.
6 संभवः क. ख,

---

* न्यायमतेऽपि पुरुषगतादृष्टमेव तदर्थमभ्युपेयमित्यादि प्रागुक्तम्।

## अथ सादृश्यवादः

सादृश्यमपि [1]नाधिकम्; तद्भिन्नत्वे सति तद्वृत्तिधर्मवत्त्वेनैव सादृश्य-बुद्धेरुपपत्तेः। अतिरिक्तसादृश्यस्य निरुक्तधर्मे तद्व्यञ्जकत्वस्य च कल्पने गौरवात्। भवति [2]च मुखादिकं चन्द्रादिभिन्नत्वे सति [3]चन्द्रादिवृत्तिधर्मवत् स्वस्मिन् सादृश्यवारणाय सत्यन्तम्। [4]न चैवं "गगनं गगनाकारं सागरस्साग-रोपमः" [5]इत्यादिकं कुतः गगनादिवृत्ति - [6]धर्ममात्रस्यात्रविवक्षितत्वात्। इत्थं चात्र स्वेतरवृत्ति - [7]धर्मवत्त्वनिषेधलाभात् निरुपमत्वं लभ्यत इत्यनन्वयो-[8]ऽत्रालङ्कारः। तदुक्तम् —

"भेदग्रहण[9]मनन्वयव्यवच्छेदाय" इति।

न चैवमपि "कमलेव मतिः मतिरिव कमला"

इत्युपमेयोप[10]मायामतिव्याप्तिः, तस्याः लक्ष्यत्वे किमपराद्धमनन्वयेनेति वाच्यम्।

---

अथ सादृश्यं विवेचयति – सादृश्यमपीति। उपपत्तेरिति। तथा च तद्वृत्तिधर्मः द्रव्यगुणाद्यात्मक एवेति। तत्रैव सादृश्यान्तर्भाव इति भावः। कुत इति। भेदघटित-गगनादिसादृश्यस्य गगनादावसत्त्वादिति भावः। "गगनं गगनाकारमि"ति वाक्ये निरुक्त-सादृश्यविवक्षैव नास्तीत्यव्याप्तिः न दोषायेत्याशयेन शङ्कां परिहरतिगगनादीति। गगनं गगनवृत्तिधर्मवदिति वाक्यार्थस्यैवात्र विवक्षितत्वादित्यर्थः। नन्वत्र वाक्ये निरुक्तसादृश्य-विवक्षांशत्वे [विवक्षायां] उपमालङ्कारः कथं वाच्य इत्यत आह – इत्थं चेति। तादृश-वाक्यार्थविवक्षणे चेत्यर्थः। तथा च सादृश्य – निरुक्तः [निरुक्तौ] सत्यन्तोपादानमनन्वय-

---

1 नातिरिक्तम् इ.
2 हि उ.
3 चन्द्रवृत्ति° उ.
4 नन्वेवं अ.
5 इति कुतः ई. इत्यधिकं कुतः उ.
6 °धर्मत्वमा° अ. उ.
7 °धर्मवृत्तिनिषेध° उ.
8 'अत्र' नास्ति उ.
9 °मन्वय° ई.
10 °मातिव्याप्तिः उ.

अस्या - [1]मुपमिति क्रियानिष्पत्तेः [2]लक्ष्यत्वादितरोपमान - [3]व्यवच्छेदार्थं मिथस्तयोरेवोपमेयोपमानत्वविवक्षयात्वलङ्कारान्तरव्यपदेशः भेदो वैधर्म्यम् । तथा च देशयुगभेदाद्युपादानेन गगनादौ वैधर्म्यविवक्षायामुपमा । अन्यथा-ऽनन्वय [4]इत्यन्ये । अधिकमस्मत्कृत - "काव्यप्रकाशविवृतौ" [5]॥

इति श्रीमज्जयरामन्यायपञ्चाननरचितायां
पदार्थमालायां सादृश्यवादस्समाप्तः ॥

---

वारणायैवेति भावः । स्वोक्ते उपष्टम्भकमाह – तदुक्तमिति । "काव्यप्रकाशकृता" इति शेषः । भेदइति । सादृश्यं उपमा भेदे इति लक्षणे भेदग्रहणमित्यर्थः । कमलेवेति ।

कमलेव मतिर्मतिरिव कमला तनुरिव विभाविभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी [सततं विभाति] बत यस्य ॥

इति पद्ये उपमानोपमेययोः परिवृत्तिरूपायामुपमेयोपमायामतिव्याप्तिः इत्यर्थः । अस्यामिति । उपमेयोपमायां कमलासदृशीयमिति वाक्यार्थबोधानन्तरमियं मतिपदवाच्येति उपमिति-क्रियोत्पत्तेः तस्याः लक्ष्यत्वमित्यर्थः । ननु यद्युपमेयोपमायाः लक्ष्यत्वं तदा संज्ञाभेदः कथमित्यत आह–इतरोपमानेति । उपमालक्षणेऽनन्वयसंग्राहकं मतान्तरमाह–भेदो वैधर्म्यमिति । सादृश्यमुपमाभेद इत्यत्र भेदशब्दो वैधर्म्यपर इत्यर्थः । तथा च–भेदशब्दस्य वैधर्म्यपरत्वे च । देशयुगेति । विद्यमानतत्तद्देशयुगसंबन्धविशिष्टैकस्मिन्नपि गगनादावतीततत्तद्देशयुगसंबन्ध-विशिष्टगगनादिवैधर्म्यविवक्षायां लक्षणसत्त्वादुपमैव गगनाकारमित्यादावित्यर्थः । अन्यथा-लक्षणे भेदशब्दस्यान्योन्याभावपरत्वे ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूतश्रीमद्दुर्ग-
कवीन्द्रतनूजमुद्गलविदुषसूनुना भास्करेण रचित-
पदार्थमालाप्रकाशे सादृश्यवादस्समाप्तः ॥

---

1 मुपमितिनिष्पत्तेः उ.
2 लक्ष्यतेतरो° ई.
3 °व्यवच्छेदार्थी अ. °व्यवच्छेदे ई.
4 इत्यधिकं काव्य° अ. इत्यन्ये । इत्यधिकं काव्य° इ.
5 'अनुसन्धेयम्' इत्यधिकः उ.

## अथ वैशिष्ट्यवादः

नापि वैशिष्ट्यम् मानाभावात्। न च जलादौ वह्न्याद्यभावप्रमायाः संबन्ध – [1]नियतत्वात्, अभावस्य च संयोगादि - [2]बाधादतिरिक्तः संबन्धः सिध्यति, स हि न द्रव्यादिकं गुणादिवृत्तित्वादिति वाच्यम्। स्वरूप-संबन्धेनैव तत्प्रमासंभवात्। अतिरिक्तवैशिष्ट्यप्रमायामपि तथैव वाच्यत्वात्। अन्यथा [3]वैशिष्ट्यस्यापि [4]वैशिष्ट्यान्तरस्वीकारेऽनवस्थापत्तेः॥

इति श्रीमज्जयरामन्यायपंचाननरचितायां पदार्थमालायां
वैशिष्ट्यवादस्समाप्तः॥

---

इदानीं वैशिष्ट्यस्यापि पदार्थान्तरत्वं निरस्यति – नापीति। मानमाशङ्क्य निषेधति– न च जलादाविति। जलभेदो वह्न्यभाववानिति प्रमा विशेषणविशेष्यसंबन्धविषया विशिष्ट-बुद्धित्वात् दण्डीति बुद्धिवदित्यनुमानात् संयोगादिबाधसहकृतादतिरिक्तवैशिष्ट्यात्मकः संबन्धः सिध्यति। तस्य द्रव्याद्यन्तर्भावमाशङ्क्याह – स हि नेतीति। निखिलशङ्काऽर्थः। तथैवेति। स्वरूपसंबन्धमादायैवोपपत्तेर्वाच्यत्वादित्यर्थः॥

इति श्रीमन्महामहोपाध्याय-लौगाक्षिगोत्रसंभूतश्रीमद्दुर्ग-
कवीन्द्रतनूज-मुद्गलविदुषसूनुना भास्करेण विरचिते
पदार्थमालाप्रकाशे वैशिष्ट्यवादस्समाप्तः॥

---

1 °नियमात् ई. | 3 वैशिष्ट्यापि आ.
2 बाधाति° ई. | 4 पदार्थान्तरस्वी° ई.

## अथ समवायवादः

[1]न चैवं समवायोऽपि न [2]सिध्येत्। गुणगुण्यादिस्वरूपद्वये संबन्धत्वमतिरिक्तसमवाये वेत्यत्र विनिगमना - [3]भावेनापि तत्सिद्धेः। न चैवं[4]प्रकृते, अभावस्यानुगतत्वेन तस्यैव तत्वात्। किं च समवायेन जन्यभावत्वसंयोगत्वाद्यवच्छिन्ने द्रव्यत्वादिना हेतुत्वात् समवायसिद्धिः ॥

---

न चैवं प्रकृतेति। अभावाधिकरणस्वरूपद्वये संबन्धत्वमतिरिक्तवैशिष्ट्ये वेति विनिगमकाभावः। [5]समवाय इव वैशिष्ट्येऽपि साधको न संभवती[6]त्यर्थः। अत्र हेतुमाह— तस्यैवेति। एकस्यानुगताभावस्वरूपस्यैव संबन्धत्वस्वीकारादित्यर्थः। ननु परमते समवायासत्त्वात् तमादायोक्तविनिगमकाभावेन न [7]समवायसिद्धिरित्यस्वरसादाह – किं चेति। जन्यभावत्वेति। जन्यत्वं प्रागभावप्रतियोगित्वम्, तावन्मात्रस्य ध्वंससाधारण्यात् तद्वारणाय भावत्वेति। भावत्वस्य च गगनादि साधारण्यात् तद्वारणाय जन्येति। घटत्वावच्छिन्नं प्रति कपालत्वेन रूपत्वावच्छिन्नं प्रति च घटत्वेन हेतुत्वमित्यादि विशेषकार्यकारणभावावश्यकत्वे जन्यभावत्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुतायां मानाभावादाह – संयोगत्वादीति। आदिना विभागत्वादिपरिग्रहः। एवं च समवायेन जन्यभावत्वावच्छिन्नं संयोगत्वाद्यवच्छिन्नं वा प्रति द्रव्यत्वेन हेतुत्वात् कार्यतावच्छेदकसंबन्धतया समवायसिद्धिरित्यर्थः ॥

---

1 न च सम° इ.
2 सिध्यते उ.
3 °भावेऽपि ई.
4 प्रकृतो भा° ई.
5 प्रकृतवैशिष्ट्यसिद्धौ साधको ख. ग.
6 °त्यर्थः। तस्यैवेति। अनुगता° ख. ग.
7 समवायसाधनमित्यस्व° ग.

न च स्वरूपेण तत्संभवः, [1]स्वरूपाणा - [2]मानन्त्येन कार्यतावच्छेदक-सम्बन्धत्वे गौरवात्। कालिकादिस्वरूपेण [3]स्पन्दादेरपि जन्यभावत्वात् [4]च। न च [5]कालिकादि विशेषणताभिन्नः पदार्थमात्रस्याधारतानियामकः कश्चित् संबन्धोऽस्तु, [6]तदेव वैशिष्ट्यम्, तेन जन्यभावादेः कार्यत्वात् न [7]दोषः। अन्यथा [8]तवापि मण्यभावादेः [9]दाहादिकारणत्वेऽतिप्रसङ्गस्य दुर्वारत्वादिति वाच्यम्। तथापि प्रतियोगितया* [10]घटादिसमवेतनाशे †स्वप्रतियोगिसमवेतत्वेन घटादिनाशस्य

---

तत्संभवः – उक्तकार्यकारणभावसंभवः। कालिकादीति। कालिकादिस्वरूपसंबन्धेन स्पन्दादौ जन्यभावादिसत्त्वात् तादात्म्येन द्रव्यस्य च [11]हेतोरसत्त्वात् व्यभिचार इत्यर्थः। न दोष इति। पदार्थमात्राधारतानियामकवैशिष्ट्येन जन्यभावादेस्स्पन्दादावसत्त्वात् न व्यभिचार इत्यर्थः। अन्यथा – तादृशवैशिष्ट्येन जन्यभावादेरकार्यत्वे। तवापि – समवायवादिनोऽपि। मणि इति। स्वरूपसंबन्धेन दाहादिकं प्रति तत्संबन्धेन मण्यभावादेः कारणत्वे तत्संबन्धेन तस्य मण्यादिसत्त्वाद्दाहादिः स्यादित्यनतिप्रसक्ततादृशवैशिष्ट्यमेव कार्यकारणतावच्छेदकसंबन्धो वाच्य इति भावः। तथापि –'किं चे'त्यादिनोक्तकार्यकारणभावबलात् समवायसिद्ध्यस्सत्त्वेऽपि। नाश्यनिष्ठमेव कार्यकारणभावमाह – प्रतियोगितयेत्यादि।

---

1 स्वरूपा .... .... गौरवात्' इत्यन्तस्त्रुटितः अ. इ.
2 °मानन्त्येन गौरवात् ई.
3 अस्पन्दनादे° अ. इ.
4 'अनन्तस्वरूपाणां कार्यतावच्छेदकसंबन्धत्वे गौरवात्' इत्यधिकः अ. इ.
5 कालिकविशेषणतादिभिन्नः अ.
6 तथैव ई.
7 बाधः उ.
8 तथापि पुण्याद्यभा° उ.
9 'दाहादि' नास्ति आ.
10 घटाद्यसमवेत° अ. आ. ई.
11 हेतोरसिद्धत्वादित्यर्थः। अन्यथा क.

---

* घटादिषु समवेतं यत् रूपादि तन्नाशे इत्यर्थः।
† स्वं घटादिनाशः, स्वप्रतियोगि घटादि, तत्समवेतत्वं रूपादेः।

हेतुत्वात् [1]तत्सिद्धेः। [2]स्वप्रतियोगिवृत्तित्वेन हेतुत्वे घटादिवृत्तिध्वंसध्वंसापत्तेः न च तवापि जात्यादौ [3]तदापत्तेः, महाप्रलयावृत्तित्वेन सत्त्वेन वा [4]प्रतियोगिनो हेतुत्वस्वीकारे ध्वंसेऽपि तदापत्तिः नेति वाच्यम्। स्वप्रतियोगिसमवायि-[5]कारणकत्वेन कालावच्छिन्नस्वप्रतियोगिसमवेतत्वेन वा नाशकत्वस्वीकारात्।

अथ [6]घटादिसमवेतनाशमात्रे न घटादि-[7]नाशमात्रं हेतुः। घटादिकालीनतद्वृत्तिक्रियासंयोगविभाग[8]वेगद्वित्वादिनाशे व्यभिचारात्। नापि

---

तत्सिद्धेरिति। कार्यतावच्छेदकघटकतया कारणतावच्छेदकघटकतया च समवायसिद्धेरित्यर्थः। समवाय [9]घटनां परित्यज्य कार्यकारणभावोक्तौ दूषणमाह — स्वप्रतियोगीति। घटादिनाशस्य स्वप्रतियोगिवृत्तित्वसंबन्धेन घटादिवृत्तिरूपादाविव तद्वृत्तिसंयोगादिध्वंसेऽपि सत्त्वात् तस्यापि ध्वंसापत्तेरित्यर्थः। तवापि - समवायघटितकार्यकारणभाववादिनोऽपि। महाप्रलय इति। न च महाप्रलयावृत्तित्वेन सत्ताजातिमत्त्वेन वा प्रतियोगिनः नाशहेतुत्वस्वीकारेण जात्यादौ ध्वंसे च प्रतियोगितया नाशवारणेऽपि गगनादौ प्रतियोगितया नाशः स्यादिति वाच्यम्। आश्रयनाशादिरूपविशेषहेत्वभावेन तत्र तदसंभवादिति भावः। तदापत्तिः न - ध्वंसापत्तिः न। तथा च स्वप्रतियोगिवृत्तित्वेनैव घटादिनाशस्य घटादिवृत्तिनाशं प्रति हेतुत्वं समवायाघटितमेव वाच्यमिति भावः। स्वप्रतियोगीति। महाप्रलयावृत्तित्वादिना स्वतन्त्रप्रतियोगिहेतुत्वकल्पना-मपेक्ष्य स्वप्रतियोगिसमवायिकारणकत्वेन कालावच्छिन्नस्वप्रतियोगितया वृत्तित्वेन वा रूपेण जात्यादि-[10]व्यावृत्तेन घटादिनाशस्यैव घटादिसमवेतनाशं प्रति समवायघटितहेतुत्वस्वीकार-स्योचितत्वमिति भावः।

---

1 तत्सिद्धिः आ. इ. उ.
2 समवेतत्वस्थाने वैशिष्ट्येन वृत्तित्वनिवेशे घटादिवृत्ति° अ. इ.
3 तदापत्तौ उ.
4 प्रतियोगि इष्टहेतुत्व° उ.
5 °कारणत्वेन ई.
6 घटाद्यसमवेतमात्रं हेतुः ई. घटासमवेत° उ.
7 नाशे मात्रं आ., नाशो हेतुः उ.
8 'वेग' नास्ति ई.
9 घटकतां परि° ख.
10 व्यावृत्तित्वेन ग.

घटादिनाशक्षणवृत्ति – तत्समवेतनाशे क्षणानामानन्त्येन [1]तत्त्वेनैव नाश्यनाशकभावस्यौ – [2]चित्यात् । [3]किन्तु घटादि नाशवृत्तेः घटादिनाशवत एव वा [4]तत्समवेतस्य नाशे । तथा च घटादिनाशवृत्तेः तन्नाशवत एव [5]वा नाशे तथाऽस्तु । इत्थं च कार्य – [6]कारणभावयोः कालिक एव संबन्धः । न चैवं [7]घटादिविनाशस्याग्रिमाग्रिम – [8]क्षणे वृत्तित्वात् [9]तादृशनाशापत्तिः ; इष्टत्वात् । प्रतिक्षणं तादृशस्य कस्यचित् नाशात् । न च पटादिनाशं विनापि [10]पटादिरूपादेः

---

घटादि – [11]नाशस्य सामान्यतो घटादिसमवेतनाशं प्रति हेतुत्वमेव न संभवतीति कथं समवायसिद्धिरित्या[12]शङ्क्याह – अथेति । किन्त्विति । अत्र घटादिसमवेतरूपादेर्घटादिनाशवृत्तिता [13]तन्नाशवत्ता वा कालिकेन । तेन घटादिनाशकालीनस्यापि तत्समवेतजात्यादेर्वारणं, नित्यानां कालिकेन वृत्तिः नास्तीति भावः । तथा चेत्यादि । अत्रापि नाशवृत्तिता नाशवत्ता वा कालिकेनैव, तेन जात्यादिव्यावृत्तिः । कल्पद्वयं चेदं विनिगमनाविरहादिति भावः । न चैवमिति । घटादिनाशस्य घटादिनाशवृत्ति –[14]नाशत्वाद्यवच्छिन्न-

---

1 तत्त्वतत्त्वेनैव ई.
2 चित्यत्वात् उ.
3 किं च ई.
4 तत्समवेतनाशे उ.
5 वा नाशस्तथाऽस्तु । ई., हि नाशस्तदाऽस्तु । कार्यकारणयोः उ.
6 कारणयोः आ. इ.
7 घटादिनाशस्य इ., घटविनाशस्य ई.
8 °क्षणे तादृश° ई.
9 'तादृश' इत्यधिकः अ.
10 'पटादि .... .... पटादिनाश' इत्यन्तस्त्रुटितः अ., पटादिरूपादेर्नाशा° ई.
11 °नाशस्य घटादि° ग.
12 °शङ्कते - अथेति ग.
13 °तन्नाशवन्नाशकालिकेन बोध्यम् । तेन नास्तीति मते न नाशवृत्तित्वस्य जन्यमात्रस्यैव कालोपाधित्वाच्च नाशस्त्वस्यापि तत्लाभावादिति भावः । क.
14 '°नाशत्वाद्यवच्छिन्नं घटादिनाशवन्नाशत्वावच्छिन्नं वा प्रति हेतुत्वे घटादिनाशजन्यतया हि नाशानन्तरमपि, तत्संबन्धान्यग्रिमाग्रिमक्षणघटादिनाशवृत्तेर्घटादिनाशवतो नाशापत्तिरित्यर्थः' इत्यधिकग्रन्थः क.

घटादि[1]नाशे नाशापत्तिः । [2]पटादिनाशवृत्तेः [3]पटादिरूपादेः नाशे पटादिनाशस्यापि हेतुत्वात् ।

[4]इत्थं च चरमद्रव्यनाशादेव चरमद्रव्यनाशवृत्तेः तन्नाशवतो वा ध्वंसमात्रस्य महाप्रलये नाश इति चेत् - न। [5]प्रतियोगितया स्वप्रतियोगिसमवेतत्व - स्वाधिकरणत्वोभयसंबन्धेन नाशवन्नाशत्वावच्छिन्न एव स्वप्रतियोगिसमवेतत्वादिना नाशत्वावच्छिन्नस्य हेतुत्वात् । न चैव - [6]मपि परमाणुरूपादि - [7]शब्दकर्म-वेगद्वित्वादि नाशधारावारणाय स्वप्रतियोगिनो विशिष्य हेतुत्वात् न ध्वंसे ध्वंसापत्तिरित्यलं समवायेन ॥

---

हेतुत्वे इत्यर्थः । तादृशनाश इति । घटादिनाशवृत्तिनाशापत्तिरित्यर्थः । तादृशस्येति । घटादिनाश-वृत्तिः [वृत्तेः] घटादिनाशवतो वा कस्यचित् नाशादित्यर्थः । "प्रतिक्षणं किंचित् नश्यती"ति नियमादिति भावः । नाशापत्तिः – घटनाशान्नाशापत्तिः ।

इत्थं चेति । तन्नाशवृत्तेस्तत्तन्नाशवतो वा नाशत्वावच्छिन्नं प्रति तत्तन्नाशस्य हेतुत्वे चेत्यर्थः । ध्वंसमात्रस्येति । तथा च नाशस्यैक्याल्लाघवमपीति भावः । प्रतियोगितयेति । कार्यतावच्छेदकसंबन्धकीर्तनम् । उभयसंबन्धेन इति । नाशवत्तानियामकसंबन्धकीर्तनम् । स्वप्रतियोगिसमवेतत्वे त्यादिना स्वाधिकरणत्वसङ्ग्रहः । तेन कारणतावच्छेदकसंबन्धोऽप्येतदुभयमिति बोध्यम् । अत्र सर्वत्रापि च स्वपदमाश्रयनाशपरम् । संबन्धविशिष्टस्वप्रतियोगि-समवेतत्वमात्रं जात्यादिसाधारणं स्वत्वाधिकरणत्वमात्रं वा ध्वंससाधारणमित्युभयमुपात्तम् । स्वाधिकरणत्वं च कालिकेन, अन्यसंबन्धेन घटरूपादेर्घटादिनाशानधिकरणत्वात् । एवं

---

1 °नाशात् ना° इ.
2 पटादि° आ. उ.
3 तद्वृत्तिरूपादेः इ.
4 अस्तु वा आ.
5 स्व प्रति° उ.
6 'अपि' नास्ति ई.
7 °शब्दवेग° ई.

 

तावतापि आश्रयजन्य [आश्रयनाशजन्य] नाशे प्रतियोगिनो विशिष्या-हेतुत्वात् ध्वंसे तदापत्तेर्दुर्वारत्वात्। प्रतियोगितया परमाणु - [1]रूपादि - नाशे तेजस्संयोगस्य सामानाधिकरण्येन कारणशब्दनाशे कार्यशब्दस्य जनकतया कार्यशब्दनाशे कारणशब्दनाशस्य स्वप्रतियोगिजन्यतया कर्मादिनाशे चोत्तर-संयोगादेः जनकतया नाश्यनिष्ठतयैव हेतुत्वात् नाशधारापत्तिविरहात् च। न च तथापि परमाणुकर्मादौ रूपादिनाशवारणार्थं [2]विशिष्यप्रतियोगिहेतुतासिद्धिः। स्वसामानाधिकरण्यविशिष्टस्य रूपाद्यन्यतमत्वस्य तच्चतुष्कवृत्तिवैजात्यस्यैव वा [3]संबन्धत्वात् ॥

---

नाशवत्तानियामक – निरुक्तोभयसंबन्धेऽपि व्यावृत्तिर्बोध्या। [4]निरुक्तोभयसंबन्धेन [5]घटादिनाशस्य तन्नाशकालीन - तत्समवेतरूपादावेव सत्त्वात् तस्यैव च निरुक्तोभयसंबन्धेन तन्नाशवत्वाच्च। तत्रैव प्रतियोगितया नाशः; न तु ध्वंसे वेत्यनतिप्रसक्तकार्यकारण-भावबलात् समवायसिद्धिरित्यर्थः। [6]न चेति। एवमपि – आश्रयनाशजन्यरूपादिनाशस्थले निरुक्तकार्यकारणभावोपगमेऽपि ॥

[7]तदापत्तेरिति। आश्रयनाशजन्यनाशापत्तेर्दुर्वारत्वादित्यर्थः। तथा च समवाय-घटितनाश्यनाशकभावः आवश्यक इति भावः। [8]विशिष्यप्रतियोगिहेतुत्वं विनापि परमाणु-

---

1 °रूपनाशे ई.

2 'विशिष्य' नास्ति ई.

3 संबन्धात् क.

4 'एवं च' इत्यधिकः क.

5 'घटादि .... .... निरुक्तोभय-संबन्धेन' इत्यन्तस्त्रुटितः क.

6 न चैवमपि ग.

7 'प्रतियोगितयेति। रूपादेः स्वनाशं प्रति रूपत्वादिविशेषरूपेण हेतुत्वादित्यर्थः। ताव-तापीति। परमाणुरूपादिनाशस्थले नाशधारावारणाय यद्यपि प्रति हेतुत्वमुक्तं तावतापि घटादिनाशजन्यं रूपादिनाशस्थले निरुक्तकार्यकारणभावोक्तौ प्रतियोगिहेतुत्वानावश्यकत्वात्। घटादिनिष्ठसंयोगादिध्वंसे आश्रयनाशजन्य' इत्यधिकः क.

8 विशिष्ट क.

अथ तथापि घटादिनाशात् तद्रूपादिनाशः तद्रूपादौ, तत्संयोगद्वित्वादिनाशस्तु [1]तत्संयोगद्वित्वादावििति नियमाय प्रतियोगिनो विशिष्य [2]हेतुतेति चेत् - न; [3]व्यक्तिस्थानीयापत्तिविरहात्। तत्सत्त्वेऽपि तत्तद्घटपटादिरूपरसगन्धस्पर्शैकत्वैक-पृथक्त्वपरिमाणवेगादिनाशे तत्तद्घटा[4]घन्यासमवेतत्वे सति [5]समवेतत्वेनैव विशिष्य प्रतियोगिनो हेतुत्वसंभवात् समवायसिद्धेश्च। अन्यथा तत्तद्[6]घटादि-मात्रवृत्तिवेग[7]क्रियादिध्वंसध्वंसापत्तिः। न च तत्तद्[8]घटान्यावृत्तित्वे सति

---

रूपादिनाशधारावारणं दर्शयति – प्रतियोगितयेत्यादि। न च तथापि – तेजस्संयोगादिहेतुत्वेन परमाणुरूपादिनाशधारावारणेऽपि। परमाणुकर्मादाविति। तेजस्संयोगस्य सामानाधिकरण्य-प्रत्यासत्त्या तत्कर्मादावपि सत्त्वात् तत्र प्रतियोगितया तद्रूपादिनाशधारावारणार्थं प्रतियोगि-हेतुत्वं वाच्यमित्यर्थः। संबन्धत्वात् – तेजस्संयोगसंबन्धत्वात्॥

व्यक्तिस्थानीय इति। सामग्र्याः सामान्यतः कार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्यत्व-स्योपगमादिति भावः। तत्सत्त्वेऽपि – व्यक्तिस्थानीयापत्तिसत्त्वेपि। अत्र अपिशब्दो नाशसूचनाय। वस्तुतो पूर्वकल्पस्यैव सम्यक्त्वादिति [9]बोध्यम्। तद्घटादिति। तद्घटा-न्यासमवेतत्वे सति रूपरसादिसंग्राहकेणैव प्रतियोगिनो घटीयरूपादिनाशं प्रति हेतुत्वं वाच्यम्, न तु प्रत्येकरूपत्वादिना गौरवादितिसमवायसिद्धिरित्यर्थः। अन्यथा–समवाय घटनां परित्यज्य [10]तत्तद्घटान्यावृत्तित्वे सति वृत्तित्वेनैव प्रति[11]योगिनो नाशहेतुत्वे।

---

1 ‘तत्संयोग’ नास्ति उ. 4 घन्यसम° इ. 7 क्रियाध्वंसा° उ.

2 हेतुनेति आ. 5 तत्सम° उ. 8 घटान्यावृत्तित्वेनैवास्तु इ.

3 व्यक्तिस्थाननियमापत्ति° उ. 6 °घटमात्र° ई. घटान्यवृत्तित्वे सति ई. उ.

9 ‘बोध्यं .... .... .... इत्यर्थः’ इत्यन्तस्त्रुटितः, तत्स्थाने – ‘समवेतत्वेनैवेत्याकारेण घटत्वत्वादिव्यवच्छेदः, तस्यापि गुरुत्वादिति। इत्यस्ति ग.

10 तद्घटा° ख. 11 °योगिहेतुत्वे ग.

वृत्तित्वेनैवास्तु प्रतियोगिनो हेतुत्वं सत्त्वेन नाशहेतुत्वाच्च, न [1]ध्वंसे ध्वंसापत्तिः। [2]अतिरिक्तसत्त्वेन कारणत्वान्तरकल्पनातो क्लृप्तप्रति[3]योगि - कारणतावच्छेदके नाशहेतुतावच्छेदकसंबन्धे [4]वाऽतिरिक्तसमवायनिवेशस्यैव [5]युक्तत्वात् ।

यत्तु – द्वित्रि – [6]क्षणावस्थायि घटादिनाशस्य [7]तत्समवेतनाशत्वावच्छिन्न एव हेतुत्वात्। जात्यादि नाशवारणाय प्रतियोगितया [8]ध्वंसे समवायित्वेन [9]हेतुत्वात् तत्सिद्धिरिति ।

---

तद्धेतुत्वेति। प्रतियोगिहेतुत्वौचित्यादित्यर्थः। समवायित्वापेक्षया सत्त्वस्य लाघवादिति [10]भावः। विषयतया द्रव्यजात्यन्यचाक्षुषे तादात्म्येन महत्त्वोद्भूतरूपवत्समवेतस्य तत्त्वेन हेतुत्ववर्णने घटाकाशसंयोगादेरपि चाक्षुषापत्तिः; अतः समवायसाधनाय तादृशचाक्षुषे महत्त्वोद्भूतरूपवदन्यसमवेतस्य तत्त्वेन प्रतिबन्धकत्वमेव वर्णनीयमिति मतं दर्शयति–द्रव्यजात्यन्य इति। महत्त्वोद्भूतरूपवदन्यसमवेतस्यापि त्र्यणुकद्रव्यत्वादेः चाक्षुषोदयात् द्रव्यजात्यन्य इति।

नित्यान्यत्व इति। एतावतापि द्रव्यत्वजातेर्बहिर्भावसंभवेन गुरुतरजातित्वावच्छिन्नान्यत्वप्रवेशे प्रयोजनविरहादिति भावः।

अयोग्यानाम् – योग्यसन्निकर्षशून्यानाम् । हेतुः – चाक्षुषादिहेतुः । योग्यसन्निकर्ष इति। यावतां मध्ये योग्यसन्निकर्षशून्यमेकैकमादाय तद्भिन्नभिन्नत्वरूपस्यान्यतमत्वस्य नानात्वेन नानाविधस्य तदवच्छिन्नभेदस्य हेतुतापत्तेः गौरवमित्यर्थः।

---

1 ध्वंस ई.
2 अतिप्रसक्तत्वेन कारणं तदकल्प° उ.
3 °योगितावच्छेदके आ.
4 चा ई.
5 उचितत्वात् इ.
6 °क्षणावपि घटादि° आ., °क्षणस्थायी उ.
7 तत्तत्सम° आ, उ.
8 ध्वंस सम° उ.
9 'हेतुत्वात्' नास्ति ई.
10 भावः। समवायसाधकं मतान्तरमाह - द्रव्यजात्यन्येति ।

[1]तन्न। सत्त्वेनैव तावता तद्धेतुत्वौचित्यात्। द्रव्यजात्यन्यचाक्षुषे महदुद्भूतरूपवदन्यसमवेतत्वेन प्रतिबन्धकत्वात् तत्सिद्धिरित्यन्ये।

जात्यन्यत्वस्थाने नित्यान्यत्वप्रवेशात् नेदं युक्तमित्यपरे।

यावतामयोग्यानामन्यतमत्वेन [2]भेदो हेतुरिति [3]तु मन्दम्। [4]योग्यसन्निकर्षमेकैकमादाय नान्यतमत्वेन [5]भेदहेतुतापत्तेः ॥

---

कस्यचित् वैशिष्ट्यसाधकं दूषयितुमुपन्यस्यति – यत्त्विति। उद्भूतरूप इत्यादि। [6]उद्भूतरूपमहत्त्ववद्वृत्तिद्रव्यगुणादितत्तदभावश्च चाक्षुषे महत्त्वोद्भूतरूपवद्वैशिष्ट्यहेतुरिति सन्निकर्षघटकतया वैशिष्ट्यसिद्धिरित्यर्थः। एतत्कार्यकारणभावस्य द्रव्यगुणादिचाक्षुषसाधारणत्वात् लाघवं बोध्यम्। न च तदुद्भूतरूपमहत्त्ववद्वृत्तित्वा – [7]भावात् तच्चाक्षुषासङ्ग्रहः। तन्मते त्रुटेः [त्रुटेः] नित्यत्वेन तच्चाक्षुषे चक्षुस्संयोगत्वेनैवात्ममानसे मनस्संयोगत्वेन हेतुत्वादिति भावः। वैशिष्ट्यवादिनेति। [8]तथा चोद्भूतरूपमहत्त्ववत् घटाभावादौ चक्षुस्संयुक्तमहत्त्ववद्वैशिष्ट्यसत्त्वेऽपि [9]चाक्षुषाभावात् व्यभिचार इति भावः। [10]ननु परं प्रति वैशिष्ट्यसिद्धयेपराभिमतभावप्रत्यक्षमादायोद्भूतरूपमहत्त्ववद्वृत्तिचाक्षुषे महत्त्वोद्भूतरूपवैशिष्ट्यहेतुत्वस्योक्तत्वात् न घटाभावादौ व्यभिचार इत्यतो दूषणान्तरमाह – तदुपगमेऽपीति। [11]परं प्रति वैशिष्ट्यसिद्धयेऽभावप्रत्यक्षोपगमेऽपीत्यर्थः। महत्त्वाभाव इति परमाणुवाय्वादौ

---

1 चेन्न, सत्त्वेनेव ई. 3 'तु' नास्ति ई. 5 भेदहेतुतापत्तिः उ.
2 बोधो उ. 4 'योग्य' नास्ति उ.
6 'उद्भूत ...... सिद्धि-रित्यर्थः' इत्यन्तस्त्रुटितः ख, ग.
7 °भाववती चाक्षुषा° ख. ग.
8 तथा च घटाभावादौ ग. तथाचोद्भूतरूपमहत्त्ववद्वर्तिनि घटा° ख.
9 चाक्षुषानुदयात् ख.
10 'न तु त्वन्मते वह्न्यादेः प्रत्यक्षत्वेप्यनुमानगम्यत्ववत् मन्मते घटाभावादेरनुपलब्धिगम्यत्वेऽपि तादृशवैशिष्ट्यात्मक सन्निकर्षमादाय प्रत्यक्षत्वमविरुद्धम्, अतो न व्यभिचार' ग.
11 'परं प्रति वैशिष्ट्यसिद्धये' नास्ति ग.

यत्तु – [1]उद्भूतरूपमहत्त्ववद्वृत्तिचाक्षुषे चक्षुस्संयुक्तमहदुद्भूतरूपवत् वैशिष्ट्यस्य हेतुत्वात् तत्सिद्धिरिति। तन्न – [2]वैशिष्ट्यवादिनाऽभावप्रत्यक्षानभ्युपगमात्। तन्मतेऽभावस्यानुपलब्धिप्रमाणगम्यत्वात्। तदुपगमेऽपि महत्त्वाभावरूपाभावयो [3]चाक्षुषे कार्यकारण – [4]भावद्वयान्तरावश्यकत्वे रूपाभावान्यद्रव्यवृत्त्यभावचाक्षुषे चक्षुस्संयुक्तोद्भूत [5]रूपवद्विशेषणता, महत्त्वाभावान्यद्रव्यवृत्त्यभावचाक्षुषे चक्षुस्संयुक्तमहत्त्ववद्विशेषणता, महत्त्वसमवेतचाक्षुषे चक्षुस्संयुक्तमहदुद्भूतरूपवत्समवायो हेतुरित्यस्यैव युक्तत्वात्। अत एव [6]जात्यादिसाधारणसमवायसिद्धिः।

---

महत्त्वाभावरूपाभावचाक्षुषस्योद्भूतरूपमहत्त्ववद्वृत्तिचाक्षुषत्वेनासङ्ग्रहात्, महत्त्वाभावचाक्षुषे चक्षुस्संयुक्तमहत्त्वोद्भूतरूपवद्वैशिष्ट्यम्, रूपाभावचाक्षुषे चक्षुस्संयुक्तमहत्त्ववद्वैशिष्ट्यं हेतुरिति कार्यकारणभावद्वयावश्यकत्वमिति त्रितयकल्पने ध्रुवे वैशिष्ट्यानभ्युपगमो व्यर्थः। तदनभ्युपगमेऽपि वैशेषिकस्य कार्यकारणभावत्रयकल्पनाया भावाभावचाक्षुषनिर्वाहादित्यावश्यकतार्थः। निर्वाहमेव स्फुटयति – रूपाभावान्य इत्यादिना। अत एव – महत्समवेतचाक्षुषे चक्षुस्संयुक्तमहदुद्भूतरूपवत्समवायहेतुत्वाभ्युपगमादेव ॥

अत्र प्रथम इति। रूपाभावान्यद्रव्यवृत्तिचाक्षुषे चक्षुस्संयुक्तोद्भूतरूपवद्वैशिष्ट्यं महत्त्वाभावान्यद्रव्यभिन्नद्रव्यवृत्तिचाक्षुषे चक्षुस्संयुक्तमहत्त्ववद्वैशिष्ट्यं हेतुरिति कार्यकारणभावद्वयेनैव वैशिष्ट्यवादिनोऽभावाभावचाक्षुषनिर्वाहे सति चक्षुस्संयुक्तमहदुद्भूतरूपवत्समवायस्य महत्समवेतचाक्षुषहेतुताकल्पनमपिनास्तीति लाघवम्। [7]अत्रोभयत्र कार्यतावच्छेदके चरमा-

---

1 'उद्भूत' नास्ति उ.

2 'वैशिष्ट्य .... .... तदुपगमेऽपि' इत्यन्तस्त्रुटितः इ. वैशिष्ट्य .... .... गम्यत्वात्' इत्यन्तस्त्रुटितः उ. 3 चाक्षुषकार्य° उ.

4 °भावरूपान्तरावश्यकत्वेऽपिरूपा° अ., °भावद्वयानन्तरावश्यकत्वेऽपिरूपा° ई. °भावान्तरावश्यकत्वरूपाभावस्य द्रव्याभावचाक्षुषे उ.

5 °रूपतद्विशेष° अ. 6 जातिसाधा° ई. 7 अत्रोभय कार्य ख.

अत्र प्रथमद्वितीयाभ्यामेव कार्यतावच्छेदके चरमाभावत्वाप्रवेशे द्वितीये द्रव्यभेदप्रवेशे च वैशिष्ट्यवादिनो निर्वाहे [1]नान्त्यहेतुता [नान्यस्य हेतुता] इति लाघवम्। न चैवं [2]तत् पार्थिवाणुघ्राणादाविन्द्रियसन्निकर्षे पृथिवीत्वादि-प्रत्यक्षापत्तिः। [3]तवापि तन्मात्रसन्निकर्षात् जलत्वाभावादि – [4]प्रत्यक्षापत्तिः। [5]तस्माद्रूपाभावचाक्षुषे [6]चक्षुस्संयुक्तमहत्त्ववद्विशेषणता, महत्वाभावचाक्षुषे चक्षुस्संयुक्तोद्भूतरूपवद्विशेषणता। [7]अनुद्भूतरूपमहत्वव – [8]द्वृत्तेः रूपा – भावमहत्वाभाव[9]भिन्नस्य द्रव्यवृत्तेः वाऽभावस्य चाक्षुषे च चक्षुस्संयुक्त-महदुद्भूतरूपव – [10]द्विशेषणतेत्यभावप्रत्यक्ष एव [11]अत्र त्रयं वाच्यम्।

---

भावत्वप्रवेशेन भाव –[12]साधारण्यं नेत्यतः कार्यतावच्छेदके चरमाभावत्वाप्रवेश इत्युक्तम्। द्वितीयकार्यतावच्छेदके द्रव्यभेदाप्रवेशे त्र्यणुकचाक्षुषस्यापि संग्रहात् [13]तत्र चक्षुस्संयुक्तमहत्व-वद्वैशिष्ट्यस्यासत्त्वात् व्यभिचारः स्यात्, अतः द्वितीये भेदप्रवेश इत्युक्तम्। न च त्र्यणुकचाक्षुषे पृथग्घेतुकल्पनापत्तिः। आत्ममानसो [आत्ममानसे] मनस्संयोगत्वेनैव तच्चाक्षुषे चक्षुस्संयोगत्वेन हेतुत्वस्योभयवादिसम्मतत्वात्। अन्यथा महत्समवेतचाक्षुषहेतोः चक्षुस्संयुक्त –[14]महत्वोद्भूतरूपवत्समवायस्य [15]तत्रासंभवात् [16]तवाप्यप्रतीकारादिति समुदि-

---

1 नान्त्यस्य न हेतुता आ.
2 तव पार्थिवाणुघ्राणमात्रेन्द्रिय° आ.
तव पार्थिवा° अ. इ.
तत्पार्थिवाणुघ्राणमात्रेन्द्रिय° उ.
3 तथापि उ.
4 °प्रत्यक्षतापत्तिः आ., प्रत्यक्षत्वापत्तिः ई.
5 द्रव्याभाव° उ.
6 चक्षुर्महत्व° ई.
7 उद्भूतरूप° इ.
8 °द्वृत्तेः रूपाभावचाक्षुष महत्वा° ई.
°द्वृत्तिरूपा° उ.
9 °भिन्नस्य द्रव्यव्यक्तेः ई.
°भिन्नस्य चाभावचाक्षुषे चक्षु° उ.
10 °द्विशेषणतात्यन्ताभाव° उ.
11 तत्र वाच्यम् उ.
12 साधारण्ये नेति नेत्यतः ख. साधारण्यमतः ग.
13 तत्र, चक्षु° 14 °महदुद्भूत° ख.
15 तत्रसंभवात् ख.
16 तवाप्यतिप्रती° ख.

भाव[1]प्रत्यक्षे त्वन्यत्। तथा च तृतीये [2]कार्यतावच्छेदके अभावत्वाप्रवेशात् भावप्रत्यक्षेऽपि वैशिष्ट्यवादिनो [3]निर्वाहः। एवं च चक्षुः – संयुक्तसमवायादे-[4]रप्यस्वीकारात् लाघवमिति चेत् – न। व्यासज्यवृत्तिधर्मप्रत्यक्षानुरोधेन [5]तत्तद्द्रव्यचाक्षुषादौ [6]तत्तच्चक्षुस्संयोगादिहेतुत्वे [7]तेनैव तत्तद्वृत्तिगुणकर्मा – [8]भावप्रत्यक्षनिर्वाहे चक्षुस्संयुक्तसमवायादेः [9]एवा [एव] स्वीकारात्। यत्र न [10]व्यासज्यवृत्तिधर्मप्रत्यक्षानुरुद्धा हेतुता तत्र घ्राणादिप्रत्यासत्तौ च लाघवात्

---

तार्थः। न चेति। एवम् – तृतीयकार्यकारणभावस्याकल्पने। तत् – वैशिष्ट्यवादिनः। पार्थिवाणुघ्राणादाविति। पार्थिवाणौ चक्षुस्संयुक्तोद्भूतरूपवद्वैशिष्ट्यस्य घ्राणादौ चक्षुस्संयुक्तमहत्व-वद्वैशिष्ट्यस्य सत्त्वात् पृथिवीत्वादिप्रत्यक्षापत्तिरित्यर्थः। तवापि – समवायवादिनोऽपि। तन्मात्र इति। पार्थिवाणुघ्राणादिसन्निकर्षात् चक्षुस्संयुक्तोद्भूतरूपवद्विशेषणत्वचक्षुस्संयुक्तमहत्वव-द्विशेषणत्वरूपादित्यर्थः। तस्मात् – तवापि 'तन्मात्रे'त्याद्युक्तदूषणात्। रूपाभावमहत्वा-भाव – [11]चाक्षुषे चक्षुस्संयुक्तमहत्वोद्भूतरूपवद्विशेषणत्वस्यासंभवादुद्भूतरूपमहत्ववद्वृत्तेरित्य-भावस्य विशेषणम्। एतत्कल्पे उद्भूतत्वादेः कार्यतावच्छेदकप्रवेशे गौरवात् रूपाभाव-महत्वाभावभिन्नस्येत्युक्तम्। [12]रूपादौ रसत्वाद्यभावचाक्षुषे एतत्सन्निकर्षस्यासंभवात् द्रव्य-वृत्तेरित्युक्तम्। न च [13]रसादौ रूपाद्यभावप्रत्यक्षे पृथक्सन्निकर्षकल्पनागौरवमिति वाच्यम्। तवापि तुल्यत्वात्। रूपादिचाक्षुषस्य तृतीयेनैवोपपत्तेराह – चक्षुस्संयुक्तसमवायादेरपीति।

---

1 °प्रत्यक्षेत्वन्यः इ. °प्रत्यक्षे अन्यत् ई. उ.
2 कार्यहेतुतावच्छेदके आ. कार्यतावच्छेदके भावत्वा° उ.
3 निर्वाहे चक्षुः संयुक्तसमवेतसम° आ.
4 °रस्वी° ई.
5 तत्तद्रव्यविषयकचाक्षुषादौ इ.
6 'तत्तत्' नास्ति आ. उ. तत्तद्व्यचक्षु° इ.
7 हेतुत्वेनैव आ. हेतुत्वेन इ.
8 °भावादौ प्रत्यक्ष° ई. °भावप्रत्यक्ष° उ.
9 अपि ई.
10 व्यासज्यप्रत्यक्षा° ई.
11 'महत्वाभाव' इत्यधिकः क. ग.
12 रसादौ रूपाद्यभाव° क. ख.
13 रूपादावभाव° ग.

वैशिष्ट्यसिद्धिर्दुर्वारा । तत्र गन्धग्राहकं घ्राणसंयुक्तमहत्वोद्भूतगन्धवद्वैशिष्ट्यं, गन्धाभावग्राहकं [1]तु महदुद्भूत – [2]गन्धाद्यभावघटितमिति तयोः नैक्यसंभवः ।

---

व्यासज्यवृत्तिधर्म इति । [3]चक्षुस्संयोगेन तत्र द्रव्यचाक्षुषे सत्येव व्यासज्य वृत्तिधर्मसंयोगादि-चाक्षुषं जायते । तदनुरोधेन [4]द्रव्यग्रहार्थं चक्षुस्संयोगस्य संयोगादिग्रहार्थं चक्षुस्संयुक्त-समवायस्य संयोगत्वग्रहार्थं च चक्षुस्संयुक्त[5]समवेतसमवायादेर्हेतुत्वमवश्यं वाच्यम् । तथा च [6]तेनैव सन्निकर्षेण [7]संयोगतदितरगुणकर्माभावादिप्रत्यक्षनिर्वाहे सति [8]चक्षुस्संयुक्त-समवायादेरेव स्वीकार [9]उचितः, न तु वैशिष्ट्यघटिततत्तत्सन्निकर्षस्येति भावः । मतान्तरमाह-यत्न नेति । व्यासज्यवृत्तिधर्म इति । घ्राणादीनां संयोगादिग्रहे सामर्थ्याभावात् तदनुरोधेन [10]द्रव्यग्रहार्थं घ्राणादिसंयोगस्य संयोगादिग्रहार्थं च घ्राणादि–संयुक्तसमवायादेरस्वीकारोऽनुचित इति समवायसिद्धिः । [11]गन्धतदभावग्राहक [12]घ्राणादि – संयुक्तमहत्त्ववद्वैशिष्ट्यात्मकघ्राणादि प्रत्यासत्तावेकत्वलाघवात् वैशिष्ट्यसिद्धिर्दुर्वारेत्यर्थः। वैशिष्ट्यसिद्धिविरोधिगौरवं निषेधति –

---

1 तूद्भूत° आ.

2 °गन्धाद्यघटित° अ, °गन्धाघटित° आ, उ. °गन्धाभावघटित° ई.

3 संयोगाश्रयतत्तद्द्रव्यचाक्षुषसत्त्व एव व्यासज्य° ख.

4 ‘द्रव्य .... .... ग्रहार्थं च’ इत्यन्तस्त्रुटितः ग.

5 ‘समवेत’ नास्ति ग.

6 तत्सन्निकर्षेणैव ग.

7 ‘संयोग’ नास्ति ग.

8 ‘चक्षुस्संयुक्तसमवायस्य संयोगत्वादिग्रहार्थं च चक्षुस्संयुक्तसमवेतसमवायादिहेतुत्व-मवश्यं वाच्यम् । तथा च तत्सन्निकर्षेणैव संयोगादितरगुणकर्माभावादिप्रत्यक्षनिर्वाहे सति’ इत्यधिकः (प्रमादेन पुनर्लिखित-मितिभाति) ख.

9 ‘उचितः’ नास्ति ग.

10 ‘द्रव्यग्रहार्थं ........ घ्राणादि-संयुक्त’ इत्यन्तस्त्रुटितः ग.

11 गन्धवदभाव° ख.

12 घ्राणादिवैशिष्ट्य घटितघ्राणादि° ग.

अनुद्भूतगन्धभेदस्य गन्धसाक्षात्कारहेतुतयोद्भूतगन्धस्य सन्निकर्षाघटकत्वात् इति [1]तु चिन्त्यम्। [2]नेत्याकारकाभावप्रत्यक्षापत्तेः। [3]अयोग्याभावप्रत्यक्षापत्या च

---

सन्निकर्षाघटकत्वादिति। तथा च घ्राणसंयुक्तमहत्ववद्वैशिष्ट्यस्य गन्धतदभाव– [4]ग्राहकत्वे मण्यादावनुद्भूतगन्धप्रत्यक्षापत्तिः, अतो गन्धग्राहकघ्राणसंयुक्तमहत्वोद्भूतगन्धवद्वैशिष्ट्यं गन्धाभावग्राहकं घ्राणसंयुक्तमहत्ववद्वैशिष्ट्यं वाच्यमिति तयोः नैक्यं संभवतीति क्व लाघवमित्यर्थः। अनुद्भूतगन्धभेदस्येति विषयता [विषयतया] गन्धप्रत्यक्षे स्वरूप-संबन्धेनानुद्भूतगन्धभेदस्य कारणत्वं वाच्यम्। तेन घ्राणसंयुक्तमहत्ववद्वैशिष्ट्यस्यैकस्यैव गन्धतदभावग्राहकत्वेऽपि मण्यादौ नानुद्भूतगन्धप्रत्यक्षोपादानं संभवतीत्युद्भूतगन्धस्य गन्धग्राहकसन्निकर्षघटकत्वाभावात्। गन्धतदभावग्राहक [5]सन्निकर्षैक्यमेवेति भावः। इति तु चिन्त्यमिति। चिन्ताबीजं स्फुटयितुं मतान्तरमाह – नेत्याकारकइत्यादि। [6]घ्राण-संयुक्तमहत्ववद्वैशिष्ट्यस्य गन्धाभावग्राहकत्वे गन्धानुपस्थितौ नेत्याकारक – गन्धाभाव-प्रत्यक्षं स्यादेव; अनुद्भूतगन्धाभावप्रत्यक्षमपि स्यात्; अतः [7]प्रतियोगिविशिष्ट-तत्तदभावप्रत्यक्षत्वं तत्तदभावविशेषणताया एव कार्यतावच्छेदकं [8]वाच्यमित्यर्थः। नाभाव-मात्रस्येति। कस्याप्यभावस्य वैशिष्ट्यसिद्धिर्नेत्यर्थः। 'इत्यप्याहुः' इत्यस्वरसोद्भावनम्।

---

1 'तु' नास्ति आ. उ.

2 नेत्याकारकप्रत्यक्षा° उ.

3 अन्योन्याभाव° आ.
अयोगात्भाव° इ.
योग्याभाव° उ.

4 'ग्राहकत्वे ........ घटकत्वाभावात्।
गन्धतदभाव' इत्यन्तस्त्रुटितः ग.

5 सन्निकर्षमिति ग.

6 'घ्राण .... .... स्यात्, अतः'
इत्यन्तस्त्रुटितः ग

7 प्रतियोगिविशिष्टेति प्रतियोगि° ग.

8 वाच्यम् - न तु वैशिष्ट्याद्यतीतभावस्यापि
वैशिष्ट्यसिद्धिरित्यर्थः ग.

प्रतियोगिविशिष्ट[1]तत्तदभावप्रत्यक्षे तत्तदभावविशेषणताहेतुः । अतः नाभावमांत्रस्य वैशिष्ट्यासिद्धिः [वैशिष्ट्यसिद्धिः] [2]इत्यप्याहुः ॥

इति श्रीमज्जयरामन्यायपञ्चाननरचितायां

पदार्थमालायां समवायवादस्समाप्तः ॥

---

तद्बीजं तु [3]परमते विशेषणतास्थापनस्याभाववैशिष्ट्ये क्लृप्तत्वात् । तस्यैव प्रतियोगि – वैशिष्ट्या-[विशिष्टा] भावप्रत्यक्षत्वं कार्यतावच्छेदकं वाच्यम् । तावतापि नेत्याकारकप्रत्यक्षादि-वारणं संभवतीति विनिगमकाभावादभावस्य वैशिष्ट्यसिद्धिरिति । वस्तुतस्तु क्लृप्तत्वलाघवात् स्वरूपात्मकतत्तदभावविशेषणताया एव तत्कार्यतावच्छेदक [त्व]म्, न तु अक्लृप्तपदार्थान्तरत्वं तत्तदभाववैशिष्ट्यस्येति न तत्सिद्धिरिति ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूतश्रीमद्रुद्रकवीन्द्रतनूजमुद्गल-

विदुषसूनुना भास्करेण कृते पदार्थमालाप्रकाशे

समवायवादस्समाप्तः ॥

---

1 'तत्तदभावप्रत्यक्षे' नास्ति अ.

2 इत्याहुः ई.

3 'नेत्याकारक प्रत्यक्षादिवारणाय प्रतियोगित्वविशिष्टतत्तदभावत्वं तत्तदभाववैशिष्ट्यस्यैव कार्यतावच्छेदकमित्यभावमात्रस्य तत्सिद्धिरिति' इत्यस्ति ग.

## अथ कारणतावादः

नापि कारणत्वम् । अनन्यथासिद्धत्वे सति नियतपूर्व[1]वृत्तित्वस्यैव तत्त्वादतिरिक्तकारणत्वस्य निरुक्तधर्मे [2]तद्व्यञ्जकत्वस्य च कल्पने गौरवात् दण्डरूपादेः घटादि – [3]कारणत्ववारणाय सत्यन्तम् ।

## अन्यथासिद्धिनिरूपणम्

तत्रान्यथा – [4]सिद्धं पञ्चविधम् । [5]तत्र येन सहैव यस्य [6]यं प्रति पूर्ववृत्तित्वं गृह्यते तदाद्यम् । यथा दण्डादिना सहैव दण्ड [7]रूपादेः घटादि-पूर्ववृत्तित्वग्रहात् घटादिकं प्रति [8]दण्डरूपादिकम् । दण्डादिना साहित्यमत्र

---

इदानीं कारणत्वस्यापि पदार्थान्तरत्वं निरस्यति – नापीति ।

नन्वनन्यथासिद्धत्वं अन्यथासिद्धभिन्नत्वम् । तच्च न कारणत्वादन्यरूपेण सिद्धत्वम्। कारणत्वज्ञाने चैतज्ज्ञानं, एतज्ज्ञाने चैतद्घटितकारणत्वज्ञानमित्यन्योन्याश्रयात् । किं च सिद्धत्वमुत्पत्तिः ज्ञप्तिर्वा । नाद्यः; घटं प्रत्याकाशस्य [9]अनन्यथासिद्धत्वापत्तेः। कारणत्वादन्यरूपेणापि तस्योत्पत्तेरभावात् । नान्त्यः; दण्डादेः घटं प्रत्यन्यथासिद्धत्वापत्तेः। तस्य कारणत्वादन्यप्रमेयत्वादिना ज्ञानात् । न चानावश्यकत्वमेवान्यथासिद्धत्वम्;

---

| | | | |
|---|---|---|---|
| 1 °वर्तित्वस्यैव | आ. | 6 'यं प्रति' नास्ति | ई. |
| 2 तद्व्यञ्जकस्य | आ. | 7 °रूपादिः | आ. |
| 3 हेतुत्व | आ. इ. | 8 दण्डरूपादि | ई. |
| 4 °सिद्धि | ई. | 9 अन्यथा° | ख. |
| 5 यत्र अ. 'तत्र' नास्ति | ई. | | |

पूर्ववृत्तित्व — [1]ग्रहविशेष्यतावच्छेदकत्वेन दण्डरूपं घटपूर्व — [2]वृत्तीत्यादिग्रहे दण्डादेस्तत्त्वात् [3]पूर्ववर्त्तित्वग्रहविशेष्यतयैव साहित्यं विशिष्टपूर्ववृत्तित्वग्रहे विशेषणेऽपि तद्ग्रहादित्यन्ये ॥

अत्र येन पृथगन्वयव्यतिरेकवता यस्य [4]तद्रहितरयेति वाच्यम्। तेन दण्डत्वादिना दण्डादेर्नान्यथासिद्धिः, [5]न वा दण्डसंयोगादेर्दण्डादिना। सत्यपि दण्डादौ [6]विनापि तत्संयोगादिकं कार्यव्यतिरेकात्, तस्य पृथगन्वयादिमत्वात् ॥

---

तस्यान्यथासिद्धत्वातिरिक्तस्य दुर्वचत्वात्। अतः [7]योगमपहायान्यथासिद्धशब्दस्यार्थविशेषे रूढिं दर्शयिष्यन् प्रथमं विभागमाह — तत्रेति। कारणत्वलक्षणप्रविष्टमन्यथासिद्धं पञ्चविध-मित्यर्थः। येन सहैवेति। साहित्यं न तुल्यवदेकक्रियान्वयित्वम्। [8]दण्डरूपाद्योः भिन्न-भिन्नसंबन्धेन घटान्वयेन तथात्वाभावादत आह — साहित्यमत्रेति। तत्त्वात् — विशेष्यताव-च्छेदकत्वात्। मतान्तरमाह — पूर्ववर्तित्व इति। साहित्यं — रूपे दण्डसाहित्यम्। विशिष्टे-दण्डविशिष्टरूपे। 'अन्ये' इत्यस्वरसोद्भावनम्। तद्बीजं तु तुल्यन्यायात् दण्डो घटपूर्व-वर्तीत्यत्रापि [9]दण्डदण्डत्वयोः [10]तुल्यवत् पूर्ववर्तित्वग्रहे दण्डत्वस्य घटपूर्ववर्तितावच्छेद-कत्वानुपपत्तिरिति।

---

1 °ग्रहे उ.

2 वृत्तित्वाग्रहे दण्डादेस्तत्त्वादेस्तत्त्वात् उ.

3 'पूर्व .... .... इत्यन्ये' इत्यन्त-स्त्रुटितः आ. इ. उ.

4 तदगृहीतस्य उ.

5 इति येन पृथगन्वयादिमते तत एव दण्ड° इत्यधिकः अ.

6 विनातत्सं° ई.

7 योगमर्थविशेषमाह - तत्रेत्यादिनिर्वचन-पञ्चकेन। तत्र - पञ्चसुमध्ये। ननु येन सहैवेति' इत्यस्ति ग.

8 दण्डरूपाद्योस्तथात्वा° ग.

9 'दण्ड' नास्ति ग.

10 तुल्यपूर्व° ख.

[1]अथैवं दण्डादे[2]रपि पृथगन्वयादिमत्वादेव दण्डत्वादिना नान्यथासिद्धिरिति। येन पृथगन्वयादिमतेति व्यर्थ[3]मिति, न। [4]स्वाश्रयसंयोगेन सति दण्डत्वादौ दण्डादिव्यतिरेकात् [5]कार्यव्यतिरेकासिद्धेः दण्डादेरतथात्वात्। [6]न चैवं सति दण्डसंयोगादौ दण्डादिव्यतिरेकासिद्धेः दण्डादेः पृथगन्वयाद्यभावात्; येन पृथगन्वयादि [7]मत इत्यत एव दण्डसंयोगादे – [8]रनन्यथासिद्धौ तद्रहितस्येति

---

अत्रेति। येनेति। यत्पदार्थे पृथगन्वयव्यतिरेकवत्त्वं यस्यान्यथासिद्धिः तदपेक्षया। यस्येति। यत्पदार्थे पृथगन्वयव्यतिरेकरहितत्वं येनान्यथासिद्धिः तदपेक्षयेत्यर्थः। आद्यविवक्षा – [9]फलमाह – तेनेति। द्वितीयविवक्षाफलमाह – न वेति॥

अथैवमिति। दण्डेन दण्डसंयोगान्यथासिद्धिवारणाय यस्येत्यत्र तद्रहितस्येति विवक्षावश्यकत्वे इत्यर्थः। अतथात्वात् – दण्डत्वापेक्षया पृथगन्वयव्यतिरेकरहितत्वात्। [10]चक्षुः कपालादिनेति। घटादिसंयुक्तविनश्यदवस्थचक्षुषाऽपि चाक्षुषं जन्यत एवेति चक्षुस्संयोगसत्त्वे चक्षुः व्यतिरेकवत् कार्यव्यतिरेकासिद्धेश्च चक्षुस्संयोगापेक्षया पृथगन्वयव्यतिरेकवत्त्वं नास्त्येवेति न तेन संयोगाख्य ... ... [संयोगान्यथासिद्धिः] संभवतीति तद्रहितस्येति विवक्षणवैयर्थ्यं दुर्वारमित्यतः कपालपर्यन्तं धावनमत्र। तथा च तद्विवक्षणं सार्थकमेव समवायिनः कार्यसहभावेन हेतुत्वात्। विनश्यदवस्थकपालात् घटोत्पत्तेरसंभवात्। कपालस्य कपाल-

---

1 न चैवं ई.
2 'अपि' नास्ति इ.
3 'इति न' नास्ति ई.
4 स्वाश्रयसंयोगे तेन सति आ.
सहाश्रय° उ.
5 'कार्यव्यतिरेकात्' नास्ति आ.
कार्यव्यतिरेकाप्रसिद्धेः उ.
6 'न .... .... पृथगन्वयाद्यभावात्' इत्यन्तस्त्रुटितः अ.
7 °मतेतत एव अ.
8 °रन्यथा° आ.
9 'फलं' नास्ति ख.
10 'चक्षुः ... ... बोध्यं' इत्यन्तस्त्रुटितः ग.

[1]व्यर्थमिति वाच्यम्। चक्षुःकपालादिना तत्संयोगान्यथासिद्धिवारणाय तदुपादानात्, [2]तत्संयोगे सत्यपि चक्षुः – कपालादि – [3]नाशकाले तद्व्यतिरेकात् [4]कार्य-व्यतिरेकात् चक्षुःकपालादेः पृथगन्वयादिमत्वात्।

[5]नन्वेवमपि दण्डादेः दण्डत्वादित इव दण्डरूपादेरपि पृथगन्वयाद्यभावात् कथं तेन तद्रूपान्यथा – [6]सिद्धिरिति चेत् – सत्यम्, [7]ततः [8]पृथगित्यादेस्त-

---

संयोगापेक्षया पृथगन्वयादिमत्वमस्त्येवेति तेन संयोगान्यथासिद्धिः संभवतीति तद्विक्षणस्य तद्वारणार्थत्वादिति बोध्यम्। चक्षुःकपालादेरिति। चक्षुरादेस्तत्संयोगापेक्षया पृथगन्वयव्यतिरेकवत्वादित्यर्थः।

पृथगित्यादेरिति। पृथगन्वयव्यतिरेकवतेत्यस्य यस्येति यत्पदार्थान्वयव्यतिरेकाघटितान्वयव्यतिरेकवतेत्यर्थादित्यर्थः। इत्थं च – तदन्वयाद्यघटितेत्यादि विवक्षणे च। मिथस्तथात्वम् – परस्परान्वयव्यतिरेकाघटितान्वयव्यतिरेकवत्वम्। तथा च दण्डेन दण्डत्वस्य तेन दण्डस्य वाऽत्र नान्यथासिद्धिरिति भावः। तथात्वम् – दण्डरूपान्वयव्यतिरेकाघटितान्वय-

---

1 'व्यर्थं दण्डसंयोगादेर्दण्डादिना सत्यपिदण्डादौ विनापि तत्संयोगादिकं कार्यव्यतिरेकात् तस्य पृथगन्वयादिसत्त्वात्। अथैवं दण्डादेरपि पृथगन्वयादिसत्त्वादेव दण्डत्वादिनान्यथा-सिध्यर्थेति वाच्यम्' इत्यधिकः अ. (लिखितलेखनमितिभाति)

2 'तत्' नास्ति उ.

3 '°ना तत्संयोगान्यथासिद्धिशङ्काकाले' इत्यधिकः उ.

4 कर्मव्यति° आ.

5 'नन्वेवमपि स्वाश्रयसंयोगेन सति दण्ड-रूपादौ दण्डादिव्यतिरेकात्कार्यव्यतिरेका-सिद्धेः न दण्डादेः पृथगन्वयादि-मत्वमिति कथं दण्डादिना दण्डरूपा-न्यथासिद्धिः' इत्यस्ति अ.

6 °सिद्धिश्चेत् आ. उ. °सिद्धिरितिसत्यं इ.

7 'ततः' नास्ति ई.

8 पृथगित्यादि° आ.

दन्वयाद्यघटितान्वयादिमत्वमित्यर्थात्। [1]इत्थं च दण्डदण्डत्वयोः न मिथस्तथात्वम्। दण्डत्व[2]तत्समवायदण्डसंयोगादीना – [3]मुभयान्वयशरीरघटकत्वात् [4]दण्डादेः तद्रूपादितः तथात्वं दण्डाद्यन्वयस्य दण्डरूपान्वयघटक – [5]तद्रूपाघटितत्वात्। [6]न तु दण्डरूपादेः [7]दण्डादिस्तद्रूपान्वयस्य तदन्वयघटितत्वात्। चक्षुःकपालादेरन्वयः कालिकतादात्म्यादितत्संयोगस्य तु समवाय इति मिथस्तथात्वमेवेत्यदोषः।

ननु दण्ड[8]रूपत्वादिनाऽन्यथासिद्धत्वेऽपि रूपादिना दण्डरूपादिहेतुत्वं स्यात्। विनापि दण्डादिज्ञानं रूपत्वादिना दण्डरूपादौ [9]घटादिपूर्ववृत्तित्व – [10]ग्रहसंभवात्। न च प्रत्यक्षेण ग्रहे नियमः। जन्य – [11]वाय्वादिकं प्रति

---

व्यतिरेकवत्वम्। तथा च दण्डेन तद्रूपान्यथा -[12]सिद्धिरुचितेति भावः। न तु दण्डरूपादेरिति। दण्डान्वयव्यतिरेकाघटितान्वयव्यतिरेकवत्त्वे दण्डरूपादेः नेत्यर्थः। तथा [13]च तद्रूपेण तस्य नान्यथासिद्धिरिति भावः। [14]चक्षुःकपालादेरिति। विषयतया द्रव्यचाक्षुषं प्रति कालिकेन चक्षुषो हेतुत्वात् स एव तस्यान्वयः। न च संयोगेनैव तस्य तत्र हेतुत्वमिति वाच्यम्। विनश्य-

---

1 'भवति च दण्डान्वयो दण्डरूपान्वयाघटितो रूपान्वयघटकरूपाघटितत्वात्। इत्थमेव दण्डान्वयघटकदण्डत्वान्वयादिमता दण्डेन दण्डत्वान्वयासिद्धिसंभवः। दण्डत्वेन पूर्ववृत्तिग्रहे दण्डस्य विशेष्यतावच्छेदकत्वात् चक्षुः कपालादेरन्वयः' इत्यस्ति अ.

2 'तत्' नास्ति उ.

3 °मुभययशरीर° आ. उ.

4 दण्डादेस्तु तद्रूपा° उ.

5 °तत्समवाय घटि° इ.

6 ननु आ. इ. ई.

7 दण्डादिस्तद्रूपाद्यघटि उ.

8 °रूपत्वादिना दण्डरूपादि° आ. °रूपादिना ई.

9 घटपूर्व° उ.

10 °ग्रहासंभवात् उ.

11 °बाधादिकं आ.

12 सिद्धिस्सूचितेति ख.

13 अत्र ख.

14 चक्षुःकपात्लादिरिति ग.

[1]वाय्वादिना [2]तत्स्पर्शादेरन्यथासिद्ध्यनापत्तेः। नियमाविवक्षायां तु [3]भ्रम्यादिमादाय दण्डादेरन्यथा[4]सिद्धिर्वैपरीत्यं (च) अपि स्यादिति चेत् – न। पूर्ववृत्तित्वमित्यस्यान्वयव्यतिरेकित्वमित्यर्थात्। [5]न चातिप्रसक्तरूपत्वादिना तद्ग्रहः संभवति।

---

द्रव्यस्थचक्षुषोऽपि घटादौ सत्त्वसंभवात् चाक्षुषापत्तेः। एवं समवायेन घटं प्रति तादात्म्येनैव कपालस्य हेतुत्वात् तादात्म्यमेव तदन्वयः। चक्षुःकपाल[6]संयोगस्य तु समवायेनैव द्रव्यचाक्षुषघटादौ हेतुत्वात् स एवान्वय इति। चक्षुःकपालादितत्संयोगयोः परस्परान्वयव्यतिरेकाघटितान्वयव्यतिरेकत्वमेवास्तीति न तेन तत्संयोगान्यथासिद्धिरूपः प्रागुक्तदोष इति भावः।

विनापि दण्डादिज्ञानमिति। एतेन "येन सहैवे"त्याद्यन्यथासिद्धिविरहो दर्शितः। न चेति। प्रत्यक्षेण कार्यपूर्ववृत्तित्वग्रहे येन सहैवेति साहित्यनियमो विवक्षितः। दण्डरूपादेस्तु रूपत्वादिनापि प्रत्यक्षेण पूर्ववृत्तित्वग्रहे दण्डे सन्निकर्षसत्त्वात् तत्साहित्यमवश्यं संभवतीति दण्डेन तद्रूपान्यथासिद्धिरित्याशङ्कार्थः। जन्य इति। जन्यवाय्वादिकं प्रति वायुस्पर्शादेः प्रत्यक्षेण पूर्ववृत्तित्वग्रहेऽपि वायोरतीन्द्रियत्वेन ज्ञानासंभवात् तेन तत्स्पर्शान्यथासिद्धिः न स्यादिति भावः। नियमाविवक्षायामिति। येन सहैवेति साहित्यनियमाविवक्षायां तु [7]रूपत्वादिना दण्डरूपादेः घटपूर्ववृत्तित्वग्रहेऽपि कदाचित् दण्डेन सह तद्ग्रहात् तेन तद्रूपान्यथासिद्धिः यद्यपि संभवति, तथापि कदाचिद्रूपादिना सह दण्डादेः पूर्ववृत्तित्वग्रहात् तेन दण्डान्यथासिद्धिः स्यात्। भ्रमिजनको रूपवान् दण्डः घट[8]पूर्ववर्ती इति ग्रहे बाधकाभावात्। एतेन वैपरीत्यमपि

---

1 वाय्वादिना आ.

2 तत्स्पर्शादावन्यथा° ई.

3 भ्रम्यादिना दण्डादे° अ.
भ्रमादिना दण्डादे° उ.

4 सिद्धिःस्यादिति उ.

5 न चातिप्रसक्तरूप° उ.

6 °संयोगस्यासमवायेनैव क.

7 रूपत्वादिनां दण्ड° ख.

8 °पूर्ववर्ति ग्रहे क.

वस्तुतो यस्य [1]यद्धर्मावच्छिन्नस्येत्यर्थात् दण्डरूपत्वा [2]द्यवच्छिन्नस्याद्येन, रूपत्वाद्यवच्छिन्नस्य त्वन्यत्र [3]क्लृप्त इत्यादिनाऽन्यथासिद्धिरिति दिक् ॥

## द्वितीयान्यथासिद्धिनिरूपणम्

अन्यं प्रति पूर्व – [4]वृत्तित्वज्ञाने एव यं प्रत्यस्य पूर्ववृत्तित्वं गृह्यते तद्द्वितीयम्। यथा आकाशस्य शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव घटादिकं प्रति तद्ग्रहादाकाशो [5]घटादौ ॥

अथ शब्दाश्रयत्वेनान्यथा – [6]सिद्धत्वमाद्येनैवेति [7]किमन्येनेति चेत् – न। शब्दस्य घटादिकं प्रति पृथगन्वयव्यतिरेकरहिततया शब्देनान्यथासिद्धत्वस्य

---

व्याख्यातम्। रूपेण दण्डान्यथासिद्धेरेव तदर्थत्वादिति समुदितार्थः। तद्ग्रहः – दण्डरूपादेः घटं प्रति अन्वय-व्यतिरेकित्वे [ व्यतिरेकित्वे ] ग्रहः।

नन्वन्वयव्यतिरेकित्वं न पूर्ववृत्तिशब्दार्थः, तस्य प्रागभावावच्छिन्नसमयवृत्तित्व एव रूढत्वादित्यरुचेराह – वस्तुत इति। अर्थादिति। तथा च येन सहैव यद्धर्मावच्छिन्नस्य यं प्रति पूर्ववृत्तित्वं गृह्यते तद्धर्मावच्छिन्नं तं प्रत्यन्यथासिद्धमित्यादि अर्थः ॥

शब्दाश्रयत्वेनेति। शब्देन सहैव तदाश्रयघटादिकं प्रति पूर्ववृत्तित्वग्रहादाद्येन सङ्ग्रह इत्यर्थः अन्यथासिद्धत्वस्य – आकाशान्यथासिद्धत्वस्य। विनापि शब्दपूर्ववृत्तित्वग्रहमिति।

---

1 यद्धर्मावच्छिन्न इत्यर्थात् ई.
2 °द्यवच्छिन्नाद्येन अ. आ. इ. ई.
3 'क्लृप्त' नास्ति ई.
4 °वृत्तित्वे ज्ञाते एव उ.
5 ज्ञानघटादौ
6 °सिद्धत्वस्याद्येनै° उ.
7 किमनेनैवेति ई.

वक्तुमशक्यत्वात्। ननु शब्दः द्रव्याश्रितः गुणत्वादित्यनुमानात् [1]शब्दस्याष्टद्रव्यातिरिक्तद्रव्यत्वादिनोपस्थितेराकाशे विनापि शब्द पूर्व वृत्तित्वग्रहं घटादिपूर्ववृत्तित्वग्रहसंभव इति चेत् — न। शब्दो द्रव्यहेतुकः जन्यगुणत्वादित्याद्यनुमानादेव कार्यकारण [2]भावलक्षणानुकूलतर्कप्रयुक्तात् तत्सिद्धेः।

न चैवं [3]संयोगविभागद्वित्वादावपि नाकाशो हेतुः स्यादिति वाच्यम्। द्रव्यत्वेन संयोगादिपूर्ववृत्तित्वग्रहस्य विनापि शब्दपूर्ववृत्तित्व — [4]ग्रहं संभवात्। अत एवाधारत्वेन कालदिशोः [5]कार्यसामान्यहेतुत्वमपि निरपवादं विनापि कालिकपरत्वादिपूर्ववृत्तित्वग्रहमाधारत्वेन पूर्ववृत्तित्वग्रहसंभवात्।

---

तथा च शब्दाश्रयत्वादिना नेयमन्यथासिद्धिरिति भावः। तत्सिद्धेरिति। शब्दो द्रव्यहेतुक इत्यनुमितौ समानवृत्तिवेद्यत्व — [ समानवित्तिवेद्यत्व ] मादाय द्रव्ये शब्दहेतुत्वभानासंभवात् तद्धेतुत्वेनाकाशसिद्धेरित्यर्थः॥

न चैवमिति। आकाशत्वेन तस्यान्यथासिद्धत्वे इत्यर्थः। द्रव्यत्वेनेति। तथा चाकाशस्य नाकाशत्वेन [6]संयोगादिहेतुत्वम्, किं तु द्रव्यत्वेनैवेति भावः। अत एवेत्यस्यार्थमाह — विनापीत्यादि।

नन्वतिप्रसक्तेनाधारत्वेन न तयोः कार्यसामान्यहेतुत्वमत आह — वस्तुत इति। इत्यादीत्यादिना 'प्राच्यां घट' इत्यस्य संग्रहः। कालादीत्यादिना दिक्संग्रहः। तत्कारणत्वमिति।

---

1 शब्दाश्रयत्वाद्यतिरिक्त° उ.
2 °भावानुकूल° अ. आ. ई.
°' भावानुकूल प्रयुक्तद्रव्यत्वेन संयोगादिपूर्व वृत्तित्वग्रहं तत्सिद्धिः ' इत्यधिकः उ.
3 संयोगद्वित्वादा° इ.
4 °ग्रहसंभवात् उ.
5 हेतुसामान्य° इ.
कार्यसमानहेतु ई.
6 ' संयोगादि .... .... न तयोः ' इत्यन्तस्त्रुटितः क.

वस्तुतो विनापि [1]परत्वादिपूर्ववृत्तित्वग्रहं 'इदानीं घट' इत्यादि[2]प्रतीत्या कालसिद्धेः तत्कारणत्वं निराबाधम्। न चैवं विभुत्वादिनाऽऽकाशस्य कार्यसामान्य [3]हेतुत्वापत्तिः; आत्मत्वादिव्यापकविभुत्वादिनाऽन्यथासिद्धेः।

अथ [4]कालान्तरभाविस्वर्गादिपूर्ववृत्तित्वेन गृहीत एव यागादावपूर्व [पूर्व] [5]वृत्तित्वग्रहे यागादिक — [6]मपूर्वद्वाराऽन्यथासिद्धं स्यात्। [7]न स्यात्, अन्यं प्रति पूर्ववृत्तित्वानुपपादकं यस्य पूर्ववृत्तित्वं गृह्यतेत्येवं [8]वाच्यत्वात्।

---

'इदानीं घटः' 'प्राच्यां घट' इति प्रतीतिविषयविभुत्वेन कालदिशोः कार्यमात्रे कारणत्वं निराबाधमित्यर्थः। [9]न चैवमिति। कालत्वादिना कालादेरन्यथासिद्धत्वेऽ

अन्यं प्रति पूर्ववृत्तित्वेति। तथा च स्वर्गादिपूर्ववृत्तित्वेन गृहीतयागादावपूर्वपूर्ववृत्तित्वग्रहः स्वर्गादिपूर्ववृत्तित्वस्योपपादक एव, न त्वनुपपादक इति न तस्यापूर्वादावन्यथासिद्धिरिति भावः।

ननु शब्दो द्रव्याश्रितः गुणत्वात् इत्यस्मादपि पृथिव्यादिवृत्तित्वबाधसहकृतलाघवतर्कसहकृतादष्टद्रव्यातिरिक्तद्रव्यत्वेनाकाशसिद्धिः संभवति। न हि शब्दो द्रव्यहेतुकः जन्यगुणत्वादित्यस्मादेव शब्दहेतुत्वेन तत्सिद्धिः, विनिगमकाभावात्। इत्थं च तद्रूपेणान्यं

---

1 परत्वाग्रहं अ. आ. इ. उ.
2 °प्रतीतेः तत्काल° अ.
°प्रतीतेः तत्कारणत्वं ई.
3 °हेतुतापत्तिः इत्यात्म° आ.
4 कालान्तरस्वर्गादि° इ.
5 °वृत्तित्वग्रहात् यागा° अ. आ. इ. उ.
6 °मपूर्वादावन्यथा° आ. °मपूर्वं प्रत्यन्यथा° ई.
°मप्यपूर्वादावन्यथा° उ.
7 'न स्यात्' नास्ति अ. उ.
8 °वाच्यम् उ.
9 'न चैवं .... .... हेतुत्व इत्यर्थः' इत्यन्तस्त्रुटितः क.

वस्तुतोऽन्यं प्रति पूर्ववृत्तित्वे गृहीत एव यं प्रति यद्धर्मावच्छिन्नस्य पूर्ववृत्तित्वग्रह इत्यर्थः । अस्ति च शब्दजनकत्वाद्यवच्छिन्नस्य [1]तथा ग्रहः । [2]शब्दाश्रयत्वाद्यवच्छिन्नस्य तथा ग्रहाभावेऽपि न क्षतिः । [3]अन्यत्र क्लृप्तेत्यादिनैव [4]तद्रूपेणान्यथासिद्धिः । इत्थं च यागादेः स्वर्गहेतुतया विहितत्वेनापूर्वं प्रत्यन्यथासिद्धत्वेऽपि यागत्वादिना हेतुत्वं निष्प्रत्यूहम् । अन्यं प्रति पूर्ववर्तित्वघटितरूपेण न हेतुत्वमित्यत्र द्वितीयस्य पर्यवसाना – [5]दिति दिक् ॥

---

प्रतीत्याद्यन्यथासिद्ध्यभावात् घटहेतुत्वं स्यादेवेत्यरुचेराह – वस्तुत इति । इत्थं चेति । अन्यं प्रतीत्यत्र यस्य यद्धर्मावच्छिन्नस्येति विवक्षणे चेत्यर्थः। यागादेरित्यादिना [6]होमदानादेस्संग्रहः । अत्र सर्वत्र "यजेत स्वर्गकाम" "अग्निहोत्रं जुहुयात् स्वर्गकाम" "हिरण्यदा अमृतत्वं भजन्त" इत्यादिशास्त्रेण सुखविशेषहेतुतया विहितत्वमस्तीति तेन रूपेणापूर्वं प्रति द्वितीयान्यथासिद्धत्वेऽपि यागहोमत्वदानत्वादिना हेतुत्वं संभवत्येव । यागत्वं देवतोद्देश्यकहविस्त्यागत्वम् । त्यागो हि न समेति ज्ञानमिच्छा वा । होमत्वं देवतोद्देश्यकाग्न्यधिकरणकहविः प्रक्षेपवत्त्वम्, न तु त्यागत्वघटितम् । अत एव ऋत्विगादेः त्यागाभावेऽपि होतृत्वं; प्रक्षेपः संयोगविशेषः । दानत्वं च संप्रदानस्वीकारपूर्वकस्वस्वत्वध्वंसपरस्वत्वोत्पत्तिफलकत्यागत्वम् । एतस्य सर्वस्याप्यन्यं प्रति पूर्ववृत्तित्वघटितत्वाभावादित्यर्थः । नन्वेकस्यैवान्यथासिद्धत्वं हेतुत्वं विरुद्धमत आह – अन्यं प्रति पूर्ववर्तित्व इति ।

तृतीयान्यथासिद्धमाह – अन्यत्रेति । गन्धं प्रति – अपाकजगन्धं प्रति ।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | तदा | इ. उ. | 4 | तद्रूपिणान्यथा° | उ. |
| 2 | इच्छाश्रय° | उ. | 5 | 'इति दिक्' नास्ति | ई. |
| 3 | 'अन्यत्र .... .... न्यथासिद्धिः' इत्यन्तस्त्रुटितः | ई. | 6 | होमादानादेः | क. |

 

## तृतीयान्यथासिद्धिनिरूपणम्

[1]अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतं तृतीयम्। यथा गन्धं प्रति क्लृप्तनियतपूर्ववृत्तिताकगन्धप्रागभावादि पाकजगन्धं प्रत्यन्यथासिद्धम्। [2]वायूपनीतसुरभिगन्धादावुद्भूतगन्ध प्रागभावस्योद्भूतगन्धनियामकत्वावश्यकत्वात्। यथा वा घटान्तरं प्रति क्लृप्तपूर्ववृत्तिताकदण्डादिजातीयेन तत्सहभूतं रासभादिकं [3]तद्घटादौ। दण्डादिना चक्रादेर्मिथोऽन्यथासिद्ध्यापत्तेराह कार्यसंभव इति। [4]चक्रसत्त्वे दण्डमात्रात् कार्यसंभवात्।

ननु पञ्चम्यर्थहेतुत्वप्रवेशे आत्माश्रयात् पृथगन्वयव्यतिरेकराहित्ये सत्यन्यत्र क्लृप्तपूर्ववृत्तिताकसहभूतमित्यर्थो वाच्यः। तथा च रूपप्रागभावेनैव

---

पञ्चम्यर्थ इति। अन्यत्र – क्लृप्तनियतपूर्ववर्तिन एवेति पञ्चम्यर्थहेतुत्वप्रवेशेनेत्यर्थः। *(ननु दण्डादिनिष्ठहेतुत्वप्रविष्टान्यथासिद्धिलक्षणेऽन्यनिष्ठहेतुत्वप्रवेशेऽपि नात्माश्रय इत्यत आह – दण्डहेतुक इति। तत्सहभूतं – दण्डसहभूतम्। समनियतत्वादिति। [5]तथा च समनियतत्वाभावात् [समनियतताभावत्वात्] तयोरैक्यमिति भावः। तथा गन्धं प्रत्यपि पृथगन्वयादिमान्] अयं – [6]रूपप्रागभावः। तेन – रूपप्रागभावेन।

---

1 'अन्यत्र' इत्यधिकः उ.
2 'यथा' इत्यधिकः अ. उ.
3 'क्लृप्त' नास्ति उ.
4 'चक्र ... ... संभवात्' इत्यन्तस्त्रुटितः अ. आ. उ.
5 तथा च तयो ग.
6 गन्धप्राग° ग.

---

* कुण्डलितग्रन्थानुसृतमूलपाठो नोपलभ्यते.

गन्धप्रागभावो कथं नान्यथा – [1]सिद्धः; पृथगन्वयादिमत्वादिति चेत् रूपप्राग – [2]भावोऽपि तथेति [3]कथमयं तेनान्यथासिद्ध इति चेत् —

उच्यते। अन्यत्र क्लृप्तेत्यस्यावश्य – [4]क्लृप्तेत्यर्थो वाच्यः। [5]तादृशश्च गन्धप्रागभाव एव गन्धरूपप्रतियोग्युपस्थितौ शीघ्रोपस्थित्या लाघवात्। इत्थं च महत्वस्यान्यत्र क्लृप्तत्वाभावेऽप्यनेकद्रव्यत्वम्, तेन [6]द्रव्यचाक्षुषादावन्यथासिद्धम्। महत्वस्य शरीरलाघवेनावश्यकत्वात्। अत एव [7]च व्यापकधर्मावच्छिन्नस्य व्याप्यधर्मावच्छिन्नेनान्यथा[8]सिद्धिः, [9]कारणाल्पत्वलाघवात्। न चैवं संबन्धादि लाघवात् [10]दण्डादिनाऽऽवश्यकेन दण्डरूपादेरन्यथासिद्धौ किं प्राक्तनेनेति वाच्यम्। [11]तत्तल्लाघवकृतावश्यकत्वस्यात्र प्रवेशेन तद्वैयर्थ्यात्। शब्दानुगमेनेत्यस्याकिञ्चित्करत्वादिति दिक्॥

---

अवश्यक्लृप्तेत्यर्थ इति। तथा चावश्यक्लृप्तनियतपूर्ववर्तिताकसहभूतं तृतीयमित्यर्थः। तादृशश्च – अवश्यक्लृप्तनियतपूर्ववर्तिताकश्च, गन्धं प्रतीति शेषः। इत्थं च – अन्यत्र क्लृप्तेत्यस्यावश्य क्लृप्तार्थकत्वे च। व्यापकधर्म इति। द्रव्यत्वावच्छिन्नस्येत्यर्थः। व्याप्यधर्म इति। दण्डत्वावच्छिन्नेनेत्यर्थः। प्राक्तनेन – प्राथमिकान्यथासिद्धेन। नन्वावश्यकत्वसामान्यप्रवेशे कथं संबन्धलाघवकृतावश्यकत्वाप्रवेश इत्यत आह – शब्द इति। तथा च तत्तल्लाघवकृतावश्यकत्वं भिन्नभिन्नमेवेति भावः॥

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | °सिद्धिः | ई. | 7 | चाव्यापक° | ई. |
| 2 | °भावेऽपि तदेति | ई. | 8 | °सिद्धत्वं | उ. |
| 3 | कथय तेनान्यथासिद्धिरिति | अ. | 9 | कारणत्वं | अ. |
| | कथमनेनाप्यन्यथा° | उ. | 10 | दण्डादीनामावश्यकेन | उ. |
| 4 | °कल्प्य इत्यर्था | उ. | 11 | तत्रलाघवादावश्यकत्वस्य | इ. ई. |
| 5 | अवश्यक्लृप्तश्च | अ. आ. इ. | | तत्तल्लाघवतदावश्यकत्वस्य | उ. |
| 6 | द्रव्यं चाक्षु° | ई. | | | |

## चतुर्थान्यथासिद्धिनिरूपणम्

यमादायैव यस्यान्वयव्यतिरेकौ [1]तेन तदन्यथासिद्धमिति तु चतुर्थम्। यथा [2]दण्डादिना दण्डत्वादि। न चैतदाद्येन संगृह्यते येनावच्छे-[3]दक-भूतेन सह यस्या-[4]वच्छेद्यस्येति तदर्थात् दण्डादिनाऽवच्छेदकेन दण्डरूपादेर-[5]वच्छेद्यस्यैव तेनान्यथासिद्धेः। नापि दण्डरूपादेरप्यनेनैव [6]सङ्ग्रहे [7]आद्य-वैयर्थ्यम्। [8]यमवच्छेदकीकृत्य यस्यान्वयव्यतिरेकौ गृह्येते तेन तस्या-[9]वच्छेदकभूतस्यान्यथासिद्धिरित्येतदर्थादिति दिक्॥

## पञ्चमान्यथासिद्धिनिरूपणम्

स्वजन्यस्य यं प्रति पूर्ववृत्तित्वे ज्ञाते स्वस्य तत्त्वं ज्ञायते तं प्रति स्वमन्यथासिद्धमिति पञ्चमम्। यथा घटं प्रति कुलालेन [10]कुलालपिता घट

---

न चैतदाद्येनेति। दण्डेन सहैव दण्डत्वस्य घटपूर्ववृत्तित्वग्रहादिति भावः। नापि दण्डरूपादेरिति। दण्डमादायैव तद्रूपादेः [11]घटं प्रत्यन्वयव्यतिरेकग्रहात्, न तु रूपत्वमात्रेणे-त्यनेन [12]एव तत्संग्रहे आद्यवैयर्थ्यमित्यर्थः। यमिति। दण्डरूपहेतुतायां दण्डस्यावच्छेद-कत्वात् तद्रूपादेरनेनासंग्रहः। दण्डरूपहेतुतायां च दण्डस्यावच्छेद्यत्वात् तेनावच्छेदकीभूत-दण्डत्वस्यान्यथासिद्धिसंभवात् संग्रह इत्यर्थः॥

---

1 'गृह्येते' इत्यधिकः आ.
2 दण्डत्वादिना इ.
3 °दकीभूतेन उ.
4 °वच्छेदस्येति ई.
5 °वच्छेदस्यैव इ.
6 संग्रहो आ.
7 आद्ये ई.
8 यमवच्छेदी° इ.
9 °वच्छेदकीभूतस्य उ.
10 तत्पिता अ.
11 घटान्वय° ग.
12 एतत्संग्रहे ग.

[1]प्रत्यस्य साक्षादहेतुत्वेन कुलाले घटजनकत्वं ज्ञात्वैव तद्द्वारा तस्य पूर्वभावग्रहात्। तदुक्तं मणिकृता (त. चि. २०४७)

"यत्र जन्यपूर्वभावं ज्ञात्वा जनकस्य तद्ग्रहः तत्र जन्येन [2]जनकमन्यथासिद्धम्। यत्र तु जनकस्य पूर्वभावं ज्ञात्वा जन्यस्य तद्ग्रहः तत्र तद्द्वारा जनकत्वं [3]यागस्येवापूर्वद्वारा"

इति। नचायमाद्येन संगृह्यते मनन — [4]व्यापारकश्रवणत्वभ्रमिजनकत्वादिना जनकत्वरक्षार्थं तत्र यस्येति यत्पदार्थे येनेति यत्पदार्थनियतपूर्ववृत्तिभिन्नस्येति

---

स्वजन्यस्येति। न चेश्वरज्ञानजन्यस्य कपालादेः घटं प्रति पूर्ववृत्तित्वे ज्ञाते तज्ज्ञानस्यापि पूर्ववृत्तित्वज्ञानादन्यथासिद्धिः स्यादिति वाच्यम्। [5]यं यद्धर्मावच्छिन्नं. तं तद्धर्मावच्छिन्नमित्यर्थात्। ईश्वरज्ञानजन्यकपालस्य घटत्वावच्छिन्नं प्रति पूर्ववृत्तित्वज्ञानेऽपि तज्ज्ञानस्य तदवच्छिन्नं प्रति पूर्ववृत्तित्वाज्ञानात् नान्यथासिद्धिः। तज्ज्ञानस्य सामान्यतः कार्यत्वस्यैव जन्यतावच्छेदकत्वादिति। न चायमाद्येनेति। कुलालेन सहैव तत्पितुः घटं प्रति पूर्ववर्तित्वग्रहादाद्येनासंग्रह इत्यर्थः। तत्र -- आद्यान्यथासिद्धे। [6]यस्येति। यत्पदार्थेति। यत्पदार्थं प्रति यन्नियतपूर्ववर्ति तद्भिन्नं तस्य। तद्भिन्नस्य। इति विशेषणावश्यकत्वादित्यर्थः। दण्डरूपं हि दण्डं प्रति नियतपूर्ववर्तिभिन्नमेवेति तेन तस्यान्यथासिद्धिः। तथा च मननादिकं प्रति श्रवणादेरिव कुलालपितुः कुलालं प्रति नियतपूर्ववर्तिभिन्नत्वाभावात् नाद्येन संग्रह इति भावः। नापि द्वितीयेनेति। कुलालपितृत्वस्य कुलालजनकपुंस्त्वरूपतया कुलालं प्रति पूर्ववृत्तित्वे ज्ञात

---

1 प्रति साक्षाद° ई.

2 जनकोऽन्यथासिद्धः उ.

3 यागस्यापूर्व° उ.

4 °व्यापारके श्रवणे जनक° उ.

5 'यद्धर्मावच्छिन्नं प्रति पूर्ववर्तित्वज्ञानान्यथासिद्धिरित्यर्थः। तज्ज्ञानस्य' इत्यस्ति क.

6 'विशेषणादिति। तथा च कुलालपितुः कुलालनियतपूर्ववर्ति°' इत्यस्ति ग.

विशेषणावश्यकत्वात्। नापि द्वितीयेन, तत्रापि फलाननु[1]गुणमन्यं प्रतीत्यर्थावश्यकत्वात्। अन्यथा [2]भ्रम्यादिपूर्ववर्तित्वेन ज्ञात एव [3]दण्डादौ घटादिपूर्वभावग्रहात् दण्डादिरन्यथा – [4]सिद्धःस्यात्। घटं [5]प्रति भ्रमिदण्डयोः युगपदेव तद्ग्रह इति दिक्॥

दीधितिकृतस्तु – द्वितीये फलाननुगुणमन्यं प्रतीत्यादि न वाच्यम्। अत एव परामर्शजनकत्वेन व्याप्तिज्ञानानां न कारणत्वम्। अन्यं प्रति

---

एव तत्पितुः घटपूर्ववृत्तित्वग्रहात् [6]द्वितीयेनास्यान्त्यग्रह [ संग्रह ] इत्यर्थः। फलाननुगुणमिति। कुलालस्तु घटरूपफलानुगुण एवेति तत्पितुः तं प्रति पूर्ववृत्तित्वज्ञानानन्तरं घटपूर्ववृत्तित्वज्ञानेऽपि न द्वितीयान्यथासिद्धिरिति भावः। ननु दण्डजन्यभ्रमेः घटं प्रति पूर्वभावं गृहीत्वा दण्डस्य तत्पूर्वभावग्रहात् तं [7]प्रति कुलालपितृवत् भ्रमिहेतुदण्डोऽन्यथासिद्धः स्यादत आह – घटं प्रतीति। तद्ग्रहः – पूर्वभावग्रहः। इदं च समाधिसौकर्यात्। वस्तुतो दण्डत्वेन गृहीतघटहेतुतायाः संरक्षण यद् भ्रमेः [ संरक्षणाय भ्रमेः ] द्वारत्वं कल्प्यते। न च द्वारेण द्वारिणोऽन्यथासिद्धिः। दण्डत्वं घटजनकतावच्छेदकत्वेन सिद्धः दण्डसाधारणो जातिविशेषः। न च कोमलदण्डात् घटोत्पत्त्यापत्तिः, तत्र तज्जातिविशेषसद्भावे मानाभावात्। न च क्षुद्रचक्रभ्रमिसमर्थान्महाचक्रसमवहितादपि घटोत्पत्त्यापत्तिः। भ्रमिजनकत्वोपलक्षितविजातीयसंयुक्तसंयोगेन तत्र दण्डस्यासत्त्वादिति तत्त्वम्। अत [8]एवाह - दिगिति॥

---

1 °गुणान्यं ई.
2 भ्राम्यादि° ई.
3 दण्डादेः घटपूर्व° ई.
4 °सिद्धिः उ.
5 प्रति तु भ्रमि° उ.
6 द्वितीयेनास्यसंग्रह क.
7 प्रति दण्डोऽन्यथा° ग.
8 एवत्वादिति क.

पूर्ववृत्तित्वं गृहीत्वैव तथात्वग्रहणेऽन्यथासिद्धत्वात् । न चैवं भ्रमि – [1]जनकत्वदृढ-दण्डत्वेन दण्डे घटहेतुत्वं न स्यात्, इष्टत्वात् दण्डत्वेनैव तत्त्वात् । क्वचित् घटानुत्पादो भ्रमिरूपद्वाराभावात् । क्षुद्रचक्रभ्रमिसमर्थान्महाचक्रसहितदण्डात् घटानुत्पत्तौ तथैव वाच्यत्वात् । इत्थं च चैत्रत्वादिनैव कुलालपितुरन्यथासिध्यर्थं पञ्चममिति आहुः ॥

[2]एकत्र विरोधव्यभिचारसमावेशवत् नानन्यथा [नानान्यथा] सिद्धसमावेशो न दोषाय । तत्तदन्यथासिद्धत्वेन ज्ञातस्य कारणत्वबुद्धिव्यपदेशविरोधाय तत्तद्रूपेणान्यथासिध्यभावस्य कारणत्वशरीरघटकत्वादित्यपि कश्चित् ॥

---

न चैवमिति । द्वितीये फलाननुगुणमित्यस्यावाच्यत्वेत्यर्थः । घटहेतुत्वं न स्यादिति । भ्रमिं प्रति पूर्ववृत्तित्वे ज्ञात एव घटं प्रति पूर्ववृत्तित्वग्रहादिति भावः । ननु द्वितीये फलाननुगुणमित्यस्यावाच्यत्वे कुलालपितुरप्यनेनैव संग्रहात् पञ्चमवैयर्थ्यमत आह – इत्थं चेति ॥

नन्वेकत्रैव कुलालपितरि तत्पितृत्वेन द्वितीयान्यथासिद्धत्वं च कथमत आह – एकत्रेति । एकत्र नानान्यथासिद्धत्वं कथमित्यत्रैव समाधानार्थं कस्यचिन्मतमाह – तत्तदन्यथा-सिद्धत्वेनेति । तत्तद्रूपेण – [3]यद्यद्रूपेण कारणत्वबुद्धिव्यपदेशः तत्तद्रूपेण । तथा च

---

1 '°जनकत्वं न व्याप्तिज्ञानं कारणत्वं, अन्यं प्रति पूर्वलक्षणं दृढत्वेन दण्डे' इत्यधिकः अ.

2 'एकत्र .... .... कश्चित्' इत्यन्तमत्रुटितः अ. आ. इ.

3 तत्तदन्यथासिध्यवच्छेदकरूपेण । तथा च तत्तद्रूपावच्छिन्न°' इत्यस्ति ग.

न चैतन्मते दण्डत्वव्याप्तिज्ञानत्वादिनाऽप्यन्यथासिद्धिः स्यात् ; प्राथमिकभ्रम्यादिपूर्ववृत्तित्वेन ज्ञात एव दण्डादौ घटादिपूर्ववृत्तित्वग्रहादिति वाच्यम्। दण्डादौ भ्रम्यादिपूर्ववृत्तित्वमगृहीत्वाऽप्यन्ततः शब्दादिना घटादि – [1]पूर्वसत्त्वग्रहसंभवात्। अन्यं प्रति पूर्ववृत्तित्वघटितरूपेण हेतुत्वमित्यत्रैव द्वितीयस्य पर्यवसानाच्च। यद्यपि त्रिविधैवान्यथासिद्धिः मणिकृता कण्ठत[2]उक्ता, तथाप्यन्यद्वयेऽपि तात्पर्यमित्येके ॥

येनावच्छेद्यावच्छेदकान्यतरभूतेन सहेत्यर्थात् दण्डादेराद्येन तृतीयेन वा संग्रहः। कुलालपितुरपि त्रितयेनैवेत्याशय इत्यन्ये ॥

परे तु – अवश्यक्लृप्तेत्याद्येकविधमेवान्यथासिद्धं नानाविधलाघवकृतावश्यकत्वप्रपञ्चार्थमन्याभिधानमित्याहुः ॥

---

कारणत्वादिनियामकतत्तद्रूपावच्छिन्नान्यथासिद्ध्यभावत्वे नियतपूर्ववृत्तित्वं तत्त्वं च पर्यवस्यतीति भावः। कश्चिदित्यस्वरसस्तु कारणत्वशरीरे गौरवमिति ॥

एतन्मते – चैत्रत्वादिनापि कुलालपितुरन्यथासिद्धत्वमादिमते। अन्यथासिद्धिः द्वितीया प्रत्यक्षेण दण्डादौ घटादिपूर्वभावग्रहदशायां प्रथमं भ्रम्यादिपूर्वभावो गृहीतुं शक्यते। प्रथमं तत्रैव सन्निकर्षसत्त्वादत उक्तं – अन्ततश्शब्दादिनेति। आदिनाऽनुमानपरिग्रहः। यदि च दण्डादौ भ्रम्यादिपूर्ववृत्तित्वग्रहानन्तरमेव घटादि पूर्ववर्तित्वग्रहः तदापि भ्रमिजनकत्वेनैव हेतुताया – [3]मन्यथासिद्धिः न तु दण्डत्वादिनेत्याह-अन्यं प्रतीति ॥

---

1 °पूर्ववृत्तित्वग्रह° इ.

2 उक्ताः ई.

3 'अन्यथा .... .... सिध्यभावात्' इत्यन्तस्त्रुटितः क.

अथ कपालादेर्द्रव्यत्वादिना अन्यथासिद्धत्वात् तद्भेदो नास्तीति कपालत्वादिना हेतुत्वं न स्यादिति चेत् — न। येन येन रूपेणान्यथासिद्धिः तद्भिन्ननियतपूर्ववृत्तित्वाद्यवच्छेदकरूपवत्वं तत्त्वमित्यदोषात् । धूमादौ रासभादेर्वारणाय नियतपूर्ववृत्ति इति । नियमतोऽव्यवहितपूर्ववर्तीत्यर्थः ॥

नन्वेतद्रासभाद्यव्यावर्तकं धूमाव्यवहितपूर्वकालसामान्ये क्वचित् [1]रासभादेरप्यसत्त्वादिति चेत् — [2]सत्यम्। तत्तद्रासभत्वादिना रासभादिव्यावर्तकत्वेना — [3]स्यापि सफलत्वात् । रासभत्वादिना त्वन्यथासिद्धेरेवाहेतुत्वम्। न च

---

धूमादाविति । धूमाधिकं प्रति रासभादेः तत्तदन्यथासिद्ध्यभावादतिव्याप्तिः तद्वारणायेत्यर्थः। ननु रासभादेरपि धूमाद्यपेक्षया यत्किंचिद्देशे पूर्वकालवृत्तित्वमस्त्येवेति सर्गाद्यकालीनधूमस्थलेऽपि पूर्वसर्गीयरासभस्य तद्व्यवहितपूर्वकाले सत्त्वादत आह — नियमत इति ।

एतत् — नियतपूर्ववृत्तित्त्वदलम् । क्वचित् — यत्र क्वापि देशे। अन्यथासिद्धेरेव — अवश्यक्लृप्तेत्याद्यन्यथासिद्धेरेव। तत एव — अवश्यक्लृप्तेत्याद्यन्यथासिद्धेरेव। यथोक्त इति । अवश्यक्लृप्तेत्याद्यन्यथासिद्ध्यभावादित्यर्थः । ननु तत्तद्रासभादेरपि कार्यविरुद्धदेशवृत्तेः कालिकेन तादृशकालवृत्तेश्च दैशिकेनावश्यक्लृप्तनियतपूर्ववृत्तिताकसहभूतत्वात् यथोक्तान्यथासिद्धिः संभवत्येवेत्यरुचेराह — विशेष्य इति। नियतपूर्ववृत्तिता इति । [4]तत्तद्रासभत्वादिकं च धूमादिकं प्रति नियतपूर्ववृत्तितावच्छेदकं, अतो न तद्रूपेणान्यथासिद्धिरिति भावः ।

---

1 रासभादेस्सत्त्वात् आ.
2 न इ.
3 अस्य समूल° आ.
अस्य सफलत्वात् ई.
4 तत्तद्रासभत्वादिकं प्रति क.
तत्तद्रासभादिकं ग.

तद्रासभत्वादिनापि तत एवाहेतुत्वम्; तद्घ्रमादिकं प्रति तद्विरुद्धदिक्काल-तत्तद्रासभादेर्यथोक्तान्यथासिद्ध्यभावात् । विशेष्यभागसाफल्याय नियतपूर्व-वृत्तितावच्छेदकेन [1]येन येन न कारणत्वव्यवहारः तद्रूपेणैवान्यथा – [2]सिद्धत्वाच्च ॥

यद्वा दैशिकव्यापकतावच्छेदकत्वमपि नियतपूर्ववृत्तितावच्छेदकविशेषणम्। इत्थं च दैशिकव्यापकताशालितत्तद्रूपरसादेर्मिथो हेतुत्ववारणाय कालिकव्यापक-त्वनिवेशः। अत एव दैशिककालिकव्यापकताद्वयगर्भमेकैकमेव कारणत्वमिति वदन्ति ।

---

ननु नियतपूर्ववृत्तित्वं नियमतः प्रागभावावच्छिन्नाव्यवहितसमयवृत्तित्वम् । तथा च काशीस्थ घटं प्रति देशान्तरीयदण्डादेरपि फलोपहितजनकत्वापत्तिः। तद्घट [तद्घटक]– तादृशसमयवृत्तित्वस्य तत्रापि सत्त्वादत आह – यद्वेति । विशेषणमिति । तथाचानन्यथासिद्धत्वे सति नियतदेशपूर्ववर्तित्वोभयावच्छेदकत्वं तत्त्वमिति फलितार्थः। इत्थं च – दैशिकव्यापक-तावच्छेद – [3]कत्वोपादाने च ।

व्यापकताद्वयप्रवेशे गौरवादाह – वस्तुत इति । धूमत्वादीति । आदिना दण्डादिकार्य-तावच्छेदकघटत्वादिपरिग्रहः। अत्र वह्निधूमयोः कार्यकारणभावघटकः संयोग एव संबन्धः। किंचिद्धूमाव्यवहित पूर्वकालावच्छेदेन किंचिद्धूमाधिकरणे विशेषणतया वर्तमानस्याभावस्य प्रतियोगितानवच्छेदकरासभत्ववत्यतिव्याप्तिवारणाय धूमत्वाद्याश्रया यावन्त इति। यावद्धूमाधि-करणेऽपि तदुत्पत्तेरनन्तरं वर्तमानवह्न्यभावप्रतियोगितावच्छेदकत्वात् वह्नित्वस्येत्यतिव्याप्तिः, अतः तत्तदव्यवहितपूर्वकालावच्छेदेनेति वर्तमानत्वान्वयि । यावद्धूमाव्यवहित पूर्वकालस्या-

---

1 केन आ.
2 °सिद्धेर्वाच्यत्वाच्च अ,
3 °कत्वोपपादे च क.

वस्तुतः धूमत्वाद्याश्रयाः यावन्तः प्रत्येकं तत्तदव्यवहितपूर्वकालावच्छेदेन कार्यतावच्छेदकसंबन्धेन तत्तदधिकरणे विशेषणतया वर्तमानस्याभावस्य कारणतावच्छेदकतत्तत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकरूपवत्वं ([1]तद्द्रव्ये तत्तद्द्रव्य – तत्तच्चरमसंयोगस्य चाक्षुषादौ चक्षुरादेः) कालिकेन कार्यतास्थले तत्तत्कार्याधिकरणे स्थूलकाले तत्तत्कार्याव्यवहितप्राक्कालावच्छेदेन

---

प्रसिद्ध्या लक्षणाप्रसिद्धिः, अतः तत्तदव्यवहितेत्यत्र तत्पदद्वयम्। तत्तद्धूमाव्यवहितपूर्वकालस्य सर्वस्यापि तत्तद्धूमाधिकरणीयाभाववर्तमानतायामवच्छेदकत्वासंभवात् पुनरप्रसिद्धिः। किंचिद्धूमाव्यवहितपूर्वकालस्य किंचिद् धूमाधिकरणीयाभाववर्तमानतायामेवेत्यतः प्रत्येकमिति तत्तदव्यवहितपूर्वकालान्वयि। धूमत्वाश्रययावतां प्रत्येकनिरूपितस्य तत्तद् धूमाव्यवहितपूर्वकालस्य तत्तद्धूमनिखिलाधिकरणीयाभाववर्तमानतायामवच्छेदकत्वासंभवात् तद्दोषतादवस्थ्यमतः प्रत्येकत्वं तत्तत्कार्याधिकरणेऽप्यनुषञ्जनीयम्। तथा च धूमत्वाश्रययावतां प्रत्येकनिरूपिततत्तद्धूमाव्यवहितपूर्वकालस्य प्रत्येकतत्तद् धूमाधिकरणीयाभाववर्तमानतायामवच्छेदकत्वसंभवात् न दोष इति। तत्तद् धूमाव्यवहितपूर्वसमयावच्छेदेनापि ह्रदादौ वर्तमानवह्न्यभावप्रतियोगितावच्छेदकत्वात् वह्नित्वस्येत्यव्याप्तिरतः तत्तदधिकरणेति। तत्तद् धूमाधिकरणेत्यर्थः। सकलधूमाधिकरणस्यैकस्याप्रसिद्ध्या पुनर्लक्षणाप्रसिद्धिरतः तत्तदधिकरणेत्यत्रापि तत्पदद्वयम्। तत्तद्धूमाव्यवहितपूर्वकालावच्छेदेनापि समवायेन तत्तद्धूमाधिकरणे संयोगसंबन्धावच्छिन्नवह्न्यभावस्य वर्तमानत्वादव्याप्तिरतः कार्यतावच्छेदकसंबन्धेनेति। कार्यतावच्छेदकसंयोगेन तत्तद् धूमाधिकरणेऽपि ह्रदादिनिष्ठसंयोगावच्छिन्नवह्न्यभावस्य कालादिसंबन्धेन वर्तमानत्वात् पुनरव्याप्तिरतः विशेषणतयेति। अभावीयविशेषणतयेत्यर्थः। कार्यतावच्छेदकसंयोगेन तत्तद्धूमाधिकरणेऽपि समवायावच्छिन्नवह्न्यभावस्याभावीयविशेषणतया वर्तमानत्वात् तथैवाव्याप्तिः, अतः कारणतावच्छेदकसंबन्धावच्छिन्नत्वं प्रतियोगिताविशेषणम्। समवायावच्छिन्नवह्निनिष्ठप्रतियोगिता तु न कारणतावच्छेदकसंयोगावच्छिन्नेत्यदोषः। तादृशाभाव-

---

[1] तत्तद्द्रव्ये द्रव्य° ई.

वर्तमानत्वमभावस्य सुलभम्; तेन तत्तत्कार्याधि[1]करणक्षणे [2]कार्यसर्वलक्षण-स्यासंबन्धतया तदवच्छेदेन तत्र वर्तमानत्वस्या[3]प्रसिद्धत्वेऽपि न क्षतिः।

न च [4]तत्तद्धूमाद्यधिकरणावच्छेदेन [5]तत्तदव्यवहितपूर्वकाले विशेषण-तयेत्यादिकमप्यस्त्विति [6]वाच्यम्, इष्टत्वात्। लक्षणनानात्वस्यादोषत्वात् [7]व्यापकताद्वयगर्भ – मात्रा [मत्रा]प्यावश्यकम्। तयोरैक्यात् कार्यतावच्छेदक-संबन्धेन कार्यस्य व्यापकतायाः कारणताघटकतौचित्याच्च। न चास्तु [8]धूमादेः

---

प्रतियोगित्वमात्रोक्तौ संयोगेन तत्तद्धूमाधिकरणनिष्ठसंयोगावच्छिन्नवह्निघटोभयाभावप्रति-योगित्वात् वह्नेरित्यसंभववारणाय तादृशप्रतियोगितानवच्छेदकरूपवत्त्वमुक्तम्। रूपं कारण-तावच्छेदकत्वेनाभिमतवह्नित्वादि; तेन तादृशप्रतियोगितानवच्छेदकद्रव्यत्वमादाय रासभादौ नातिव्याप्तिरिति समासः। [9]कालिकेन कार्य इति। कालिकसंबन्धेन कार्यकारणभावस्थलेत्यर्थः। न क्षतिः – न लक्षणाप्रसिद्धिः।

कार्याव्यवहितप्राक्कालस्यैवावच्छेदकत्वे विनिगमकाभावात् दाशङ्कते–न च तत्तदिति। [10]धूमत्वाश्रयाः यावन्तः प्रत्येकतत्तद्धूमाधिकरणावच्छेदेन तत्तद्धूमाव्यवहितपूर्वकाले विशेषण-तया वर्तमानस्याभावस्य कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकरूपवत्त्वं तत्तद्विनि-गमकाभावात् वाच्यमित्यर्थः। अत्रापि – नियतपूर्ववृत्तित्वनिर्वचने। तयोरैक्यादिति। विशेषणविशेष्यभावव्यत्यासेप्युभयत्रघटकपदार्थानां अन्यूनानतिरिक्तत्वेति [अन्यूनानतिरिक्त-

---

1 °करणेक्षणे अ.
2 'कार्य ... ... वर्तमानत्वस्य' इत्यन्तस्त्रुटितः ई.
3 तदसिद्ध° ई.
4 तत्तद्धूमाधि° ई.
5 तदव्यव° ई.
6 'वाच्यम्' नास्ति ई.
7 व्यापकताद्वयगर्भत्वप्यत्राव° इ. व्यापकताद्वयमप्यत्रा° ई.
8 धूमादि मात्रस्य इ.
9 'कालिकेन .... .... स्थलेत्यर्थः' इत्यन्तस्त्रुटितः ग.
10 'धूमत्वा .... .... वाच्यमित्यर्थः' इत्यन्तस्त्रुटितः ग.

कार्य —[1]मात्रस्य कालिकेनापि कार्यत्वं विनिगमनाभावात्। यदधिकरणावच्छेदेन काले कारणं तदधिकरणे [2]काले कार्यमित्यतोऽपि देशनियमसंभवादिति वाच्यम्। वह्निसमयाद्यवच्छेदेनापि [3]धूमाद्यापत्तेः। न च [4]शिखरावच्छेदेन वह्न्यभावसत्त्वादव्याप्तिः; प्रतियोगिव्यधिकरणत्वनिवेशे धूमध्वंसातिव्याप्तिरिति वाच्यम्। देशानवच्छिन्नविशेषणतया वर्तमानत्वस्य वाच्यत्वात्। न च वह्न्यभावः

---

त्वादिति] भावः। ननूभयत्र विशेषणविशेष्यभावभेदात् तमादायैव तयोर्भेद इत्यत आह — कार्यतावच्छेदकेति। न चेत्याशङ्कितं तु कालिकेनैव कार्यस्य व्यापकतायाः कारणताघटकत्वादनौचित्यमिति भावः। कालिकेनापीति। कालिकेन धूमाद्युत्पत्तिं प्रति तेनैव वह्न्यादिः कारणमित्येवं रूपं वाच्यम्। तथा च कालिकस्यापि कार्यतावच्छेदकसंबन्धत्वात् तेन कार्यव्यापकत्वघटितकारणतायामौचित्यमिति भावः। ननु धूमादेः कालिकेन [5]कार्यत्वे कालिकव्यापकत्वनिर्वचने यदा वह्न्यादिस्तदव्यवहितोत्तरकाले धूमादिरिति कालनियमोपपत्तावपि यत्र वह्न्यादिस्तत्रैव धूमोत्पत्तिरिति देशनियमः कथं स्यात्। [6]न च दैशिककार्यतावच्छेदकसंबन्धेन यद्देशकारणं तद्देशकार्योत्पत्तिरिति नियमात् देशनियम इति वाच्यम्। कारणत्वस्य दैशिकव्यापकत्वनिर्वचने एव तादृशनियमोक्तिसंभवादत आह — यदधिकरण इति। वह्निसमयादीति। देशनियमार्थं स्वीकृतस्य यदधिकरणावच्छेदेन काले कारणं तदधिकरणे कार्यमिति नियमस्य वह्निमद्देशे यदा कदाचित् धूमोत्पत्त्याऽप्युपपत्तेरिति भावः। न चेति। धूमाधिकरणपर्वतादाविति शेषः। धूमध्वंसातिव्याप्तिरिति। धूमाव्यवहितप्राक्कालावच्छेदेन धूमाधिकरणे विशेषणतया वर्तमानः प्रतियोगिव्यधिकरणो न धूमध्वंसात्यन्ताभावो धूमात्यन्ताभावात्मकः तस्य धूमप्रागभावादिरूपप्रतियोगिसमानाधिकरणत्वात्। प्राचीननयेऽत्यन्ताभावस्य त्रितयप्रतियोगिकत्वात्। किन्तु रासभाद्यत्यन्ताभाव तत्प्रतियोगितानवच्छेदकं च

---

1 मात्रकालि° ई.
2 'काले' नास्ति ई.
3 धूमानापत्तेः ई.
4 शिखराद्यवच्छेदेन ई.
5 कार्यत्वे यदा ग.
6 'न च .... .... नियमोक्तिसंभवात्' इत्यन्तस्त्रुटितः ग.

[1]पर्वते अनवच्छिन्नविशेषणतया वर्तते; वृत्त्यनियामक – [2]संबन्धस्याभावप्रति-
योगि – [3]तानवच्छेदकत्वे तु तत्तत्कार्याव्यवहितपूर्वकालावच्छिन्न तत्तत्कारणताव-
च्छेदकसंबन्धेन प्रतियोगिव्यधिकरणत्वमेव निवेश्यम्; न [4]तु कारणतावच्छेदक-
तत्तत्संबन्धा – [5]वच्छिन्नप्रतियोगिता विशेषणम्। अतः यागादेः स्वजन्यापूर्व-
संबन्धेन हेतुत्वं सुघटम्। तत्तदव्यवहितपूर्वकालावच्छेदेनेति [6]तत्रापि [अत्रापि]

---

धूमध्वंसत्वादित्यतिव्याप्तिरित्यर्थः। वृत्त्यनियामक इति। तादात्म्येतरवृत्त्यनियामकसंबन्धस्ये-
त्यर्थः। तादात्म्यस्य भेदप्रतियोगितावच्छेदकत्वात्। प्रतियोगिव्यधिकरणत्वमेवेति। न चैवं
धूमध्वंसातिव्याप्तिः; धूमाव्यवहितप्राक्कालावच्छेदेन धूमाधिकरणे विशेषणतया वर्तमानस्य
धूमध्वंसात्यन्ताभावस्य धूमप्रागभावादिरूपप्रतियोगिसमानाधिकरणत्वेऽपि धूमाव्यवहित-
प्राक्कालावच्छिन्नधूमध्वंसीयकारणतावच्छेदकस्वरूपसंबन्धेन धूमप्रागभावादिरूप प्रतियोगि-
व्यधिकरणत्वादतिव्याप्तिविरहात्। तस्य तादृशस्वरूपसंबन्धेन कुत्राप्यवृत्तेः। अत्र
कारणतावच्छेदकसंबन्धमात्रेण प्रतियोगिव्यधिकरणत्वोक्तौ धूमध्वंसातिव्याप्तिः तादृशस्वरूप-
संबन्धेन धूमध्वंसरूप प्रतियोगिसमानाधिकरणत्वात्। (तादृशस्वरूपसंबन्धेन प्रतियोगि-
व्यधिकरणाभावं तादवस्थ्यम्। धूमाव्यवहितप्राक्कालावच्छेदेन धूमाधिकरणे वर्तमान-
धूमध्वंसात्यन्ताभावस्य तु प्रतियोगितानवच्छेदकमेव धूमध्वंसत्वम्) अतः कार्याव्यवहित-
प्राक्कालावच्छिन्न इति कारणतावच्छेदकसंबन्धविशेषणमुक्तम्। इत्थं च धूमाव्यवहित-
प्राक्कालावच्छिन्नकारणतावच्छेदकधूमध्वंसीयस्वरूपसंबन्धेन, धूमध्वंसस्तु तत्र नास्त्येव।
धूमप्रागभावादिस्तु तत्र विद्यमानोऽपि न तादृशसंबन्धेनेति धूमध्वंसात्यन्ताभावः तादृश-
स्वरूपसंबन्धेन सर्वथा प्रतियोगिव्यधिकरण [7]एवेति नातिव्याप्तिरिति भावः। प्रतियोगितायां

---

1 पर्वतादावुद्देशानवच्छिन्न° अ,
पर्वतादौ देशानव° इ.
2 संबन्धस्य प्रति° ई.
3 °तावच्छेद° ई.
4 च ई.
5 °वच्छिन्न इति। अतः ई.
6 त्वयापि आ.
7 एव तत्प्रतियोगितायां° क.

वाच्यम् । अन्यथा धूमाद्युत्तरभाविनि धूमाद्यधिकरणे कालिकेन कार्यस्याधिकरणक्षणेऽपि च तादृशप्रतियोगिव्यधिकरणाभावसत्त्वेन क्षतिः । *यदि च द्विकपालघटादौ तत्तत्संयोगस्य विनिगमना - [1]भावात् कालिकेन दैशिकेन च कारणत्वं [2]तदा तत्रैकैकव्यापकतागर्भमेकैकमेव कारणत्वं [3]तत्रैव वा व्यापकताद्वयगर्भमेकं कारणत्वम् ।

---

कारणतावच्छेदकसंबन्धावच्छिन्नत्वविशेषणं परित्यज्याभावे तादृशसंबन्धेन प्रतियोगिव्यधिकरणत्वनिवेशस्य फलमाह – अतः यागादेरिति । [4]धूमप्रागभावः स्वस्वरूपसंबन्धेन न यत्र कुत्रचित् वर्तते; परं तु ध्वंसस्वरूपसंबन्धेन कुत्रापि पर्वते [वर्तते] इत्यर्थः । ननु तत्तदव्यवहितपूर्वकालावच्छेदेनेति वाच्यम्; तद्वारणीयधूमोत्पत्त्यधिकरणनिष्ठस्य धूमाद्यन्तरेकालिकस्य वह्न्याद्यभावस्य व्याप्तिसम्पादकस्य कार्याव्यवहितप्राक्कालावच्छिन्नकारणतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणत्वस्य निवेशने एव वारणसंभवादत आह – तत्तदव्यवहित इति । अत्रापि– प्रतियोगिव्यधिकरणत्वदानपक्षेऽपि । कार्यस्य – चक्षुरादिकार्यस्य चाक्षुषादेः । तादृश इति । कार्याव्यवहित – [5]प्राक्कालावच्छिन्न – [6]कारणतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणवह्न्याद्यभावसत्त्वेऽपि या क्षितिरव्याप्तिरूपज्ञानेत्यर्थः [याक्षितिरव्याप्तिरूपा सा नेत्यर्थः] । †धूमाव्यवहितप्राक्कालावच्छेदेनोत्तरभाविनिधूमव्यधिकरणे कारणकालिकेन कार्याधिकरणे च

---

1 विरहात् अ.
2 'तदा .... .... कारणत्वं' इत्यन्तस्त्रुटितः ई.
3 तत्रैवाव्यापक° अ.
4 'धूम .... .... कार्याव्यवहित' इत्यन्तस्त्रुटितः ग.
5 'कारणता .... .... एकं वाच्यमित्यर्थः । एकत्र संयोगादौ' इत्यन्तस्त्रुटितः ग.
6 'पूर्वकालावच्छिन्नकारणतावहितप्राक्कालावच्छेदेन धूमाद्यधिकरणे तादृशप्रतियोगिव्यधिकरणवह्न्याद्यभावस्य सत्त्वादितिभावः । कारणताभेदे गौरवादाह – तत्रैव वेति' इत्यस्ति ग.

---

* वस्तुतः सूर्यस्पन्दादेरेव कालोपाधितया तादृशसंयोगस्यापि दैशिकेनैव कारणत्वम्, अतः यदिचेत्युक्तम् ।

† कुण्डलितग्रन्थस्थप्रतीकानुसारं मूले पाठः नोपलभ्यते । अन्यच्चानन्विततया दृश्यन्ते ।

इदं तु बोध्यम् – यस्य कार्यसहभावेन हेतुत्वं तत्र कार्यकालतदव्यवहितपूर्व – [1]कालान्यतरावच्छेदेनेत्या – दिकं वाच्यम् अत एव तस्यैव कार्यकाले

---

तादृशप्रतियोगिव्यधिकरणवह्न्याद्यभावस्यासत्त्वात् । तदधिकरणस्य धूमाद्यव्यवहितप्राक्कालानधिकरणतया तादृशप्राक्कालस्य तदधिकरणनिष्ठतादृशाभाववर्तमानत्वानवच्छेदकत्वादिति भावः । न च तन्त्विति । घटसमवायिदेशे तन्तुभेदादेः सार्वत्रिकत्वेन कालानवच्छिन्नत्वात् घटाव्यवहितप्राक्कालावच्छेदेन तत्र विशेषणतया वर्तमानो न तन्तुभेदादि, किन्त्वव्याप्यवृत्तिस्त्वभेद एव । तत्रैव कपालादौ श्यामतादशायां रक्तादिभेदस्य, तत्प्रतियोगितावच्छेदकमेव तन्तुत्वमिति । तन्त्वादेः घटादिव्यापकत्वापत्तिरित्यर्थः । न च घटसमवायिनिष्ठघटाव्यवहितप्राक्कालावच्छेदेन तन्त्वाद्यत्यन्ताभावसत्त्वात् तन्त्वादेर्घटादिव्यापकत्वमिति वाच्यम् । तत्सत्त्वेऽपि तत्प्रतियोगितायां कारणतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वाभावात् । कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्यैव प्रकृतव्यापकताघटकत्वात् । कारणतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणत्वस्यैव निवेशपक्षे तु कपालादेरपि व्यापकत्वं दुर्घटः । तन्तुभेदादेः कारणतावच्छेदकतादात्म्यसंबन्धेन प्रतियोगिव्यधिकरणत्वेऽपि कालावच्छिन्नतया घटाद्यव्यवहितपूर्वकालावच्छेदेन घटाद्यधिकरणे वर्तमानत्वेऽपि कारणतावच्छेदकतादात्म्यसंबन्धेन प्रतियोगिसमानाधिकरणत्वादिति बोध्यम् । अतिरिक्तेति । कार्याव्यवहितपूर्वकालातिरिक्तकालावच्छेदेनेत्यर्थस्य वाचकत्वादित्यर्थः । इत्थं च तन्तुभेदादेः घटाद्यव्यवहितपूर्वकालातिरिक्तकालानवच्छिन्नस्यैव घटाद्यधिकरणे विशेषणतया वर्तमानत्वात् न तन्त्वादेर्घटादिव्यापकत्वम् । धूमाद्युत्तरभाविनि च धूमाद्यधिकरणे वह्न्याद्यभावस्य तु धूमाद्यव्यवहितपूर्वकालातिरिक्तकालावच्छिन्नत्वात् न वह्न्यादेर्धूमादिव्यापकत्वक्षतिरिति भावः । एकैक इति । दैशिकव्यापकतागर्भमेकम्, कालिकव्यापकतागर्भमेकं वाच्यमित्यर्थः । एकत्र संयोगादौ कारणताभेदकल्पने गौरवादाह – तत्रैवेति । व्यापकताद्वयगर्भमिति । तत्कार्याधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वे सति तत्कार्याव्यवहितपूर्वकालवृत्त्यभावप्रतियोगितावच्छेदकं यद्रूपं तद्वत्त्वमित्येवंरूपमित्यर्थः ॥

---

1 °कालावच्छेदेनेत्यादि वाच्यम् ई.

सत्त्वमपेक्ष्यते, नान्यस्येति। धूमत्वाद्याश्रयाः यावन्तः प्रत्येकं तत्तदव्यवहितपूर्वकालावच्छेदेन तत्तदधिकरणे तत्तत्संबन्धेन संबन्धिवृत्तिरूपवत्त्वमिति तु ज्यायः। [1]यावत्साधनाश्रयाश्रितत्वस्य व्यापकतारूपत्वात् कालिकेन कारणमपि प्राक्कालावच्छेदेन कार्याधिकरणस्थूलकालसंबन्धि यागादिकं स्वजन्यापूर्वसंबन्धेन [2]तथा तादृशसंबन्धि[3]वृत्ति — स्वस्वव्यापारान्य — तरवत्त्वं [तरत्ववत्त्वं] वाच्यमित्यन्ये॥

---

यस्य — समवायिकारणादेः। तत्र कार्यकाल इति। घटत्वाद्याश्रययावन्तः प्रत्येकं कार्यकालतत्तदव्यवहितपूर्वकालान्यतरावच्छेदेन तत्तदधिकरणे देशानवच्छिन्नविशेषणतया वर्तमानस्याभावस्य कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदककपालादिमत्त्वं वाच्यमित्यर्थः। अन्यथा कार्याव्यवहितपूर्वकालावच्छेदेन कार्याधिकरणनिष्ठाभावप्रतियोगितानवच्छेदककपालादिमत् विनश्यदवस्थकपालादेरपि घटोत्पत्त्यापत्तेः। अतिलाघवादाह — धूमत्वादीति। धूमत्वाद्याश्रयाः यावन्तः प्रत्येकं तत्तद्धूमाव्यवहितपूर्वकालावच्छेदेन तत्तद्धूमाधिकरणे तत्तत्कारणतावच्छेदकसंबन्धिवह्न्यादितद्वृत्तिकारणतावच्छेदकरूपं वह्नित्वादि, तद्वत्त्वं वह्न्यादावस्तीति लक्षणसमन्वयः। [4]पदव्यावृत्तिः पूर्ववत्, अत्राभावत्वादेरप्रवेशाज्ज्यायस्त्वम्। ननु व्यापकत्वघटितमिदं कथं नियतपूर्ववर्तित्वनिर्वचनमत आह — यावत्साधन इति। यावत्साधनाश्रयाश्रितसाध्यसंबन्धो व्याप्तिरिति पक्षे साध्ये यावत्साधनाश्रयाश्रयित्वं व्यापकत्वं तद्घटितत्वं चात्रास्त्येवेति भावः। ननु [5]चाक्षुषादौ कालिकेन कारणं चक्षुरादि- [6]चाक्षुषाव्यवहित — पूर्वकालावच्छेदेन (न) [7]चाक्षुषाधिकरणक्षणे कालिकेन न संबन्धि तदव्यवहितपूर्वकालस्य तत्क्षणसत्त्वाभावेन तत्क्षणसंबन्धितायामनवच्छेदकत्वादित्यव्याप्तिरत

---

1 तावत् अ.

2 तस्याः आ.

3 °वृत्तित्व स्व° आ.

4 ‘अवयवव्यावृत्तिस्स्यात्। अत्राभावत्वादेः प्रवेशात्’ इत्यस्ति क.

5 चाक्षुषादेः ग.

6 °कार्याव्यवहितप्रक्काला° ग.

7 ‘चाक्षुषा .... .... स्वर्गाव्यवहितपूर्वकालावच्छेदेन’ इत्यन्तस्त्रुटितः ग.

यावत्त्वम — [1]शेषत्वरूपं कार्यैक्येनोपादेयं वा नित्यवृत्तिधर्मस्य द्रव्यत्व-पृथिवीत्वादेः विजातीयसंयोगपृथिव्यादिकार्यतावच्छेदकत्वे तत्तत्कार्यतावच्छेदकावच्छिन्नाधिकरणं यावत् तत्तद्वृत्तिकार्याव्यवहितपूर्वकालावच्छेदेन [2]इत्यादि-वाच्यम् ।

---

आह — कालिकेनेति । ननु स्वर्गाव्यवहितपूर्वकालावच्छेदेन स्वर्गाधिकरणे यागादिकं चिरविनष्टत्वात् न संबन्धीत्यव्याप्तिरत आह — यागादिकमिति । तथा — स्वर्गाधिकरण-संबन्धि । यागादावुक्ताव्याप्तिवारणाय मतान्तरमाह — तादृश संबन्धीति । कार्याव्यवहित — [3]पूर्वकालावच्छेदेन कार्याधिकरणे कारणतावच्छेदकसंबन्धेन संबन्धि — वह्न्यादि — तद्वृत्ति-स्वस्वव्यापारान्यतरत्वं तद्वत्त्वस्य वह्न्यादौ सत्त्वाल्लक्षणसमन्वयः । यथा यागादिस्थले च तादृशसंबन्धि अपूर्वमेव, तद्वितीयं [ तद्वृत्ति ] तु यागापूर्वान्यतरत्वं, तद्वत्त्वस्यापूर्व इव यागादावपि सत्त्वात् नाव्याप्तिरित्यर्थः । अन्ये इत्यस्वरसोद्भावनम् । तद्बीजं तु [4] तद्भिन्न-भिन्नत्वरूपान्यतरत्वप्रवेशे गौरवमिति ॥

ननु येनादृष्टविशेषेणैकमेव सुखादि जनितम्, तत्रानेकाशेषत्वरूपयावत्त्वघटितमिदं लक्षणमव्याप्तमत आह — यावत्त्वमिति । यावच्छब्दार्थसंकोचभयादाह — कार्यैक्य इति । ननु विजातीयसंयोगादेः कार्यतावच्छेदकं द्रव्यत्वादि; अतः द्रव्यत्वाद्याश्रयाः यावन्तः प्रत्येकं तत्तदव्यवहितपूर्वकालावच्छेदेनेत्यादि तत्र लक्षणं वाच्यम्; तच्च न संभवति । यावदन्तर्गत-द्रव्यत्वाद्याश्रयपरमाण्वादेरनादितया तत्तदव्यवहितपूर्वकालस्याप्रसिद्धेरत आह — नित्यवृत्ति-धर्मस्येति । कार्यतावच्छेदकत्वेत्वित्यनेन वस्तुतो विजातीयसंयोग पृथिव्यादेर्जन्य द्रव्यत्व जन्यपृथिवीत्वादिकमेव कार्यतावच्छेदकमिति सूचितम् ।

---

1 °शेषता रूपं आ., °शेष रूपं ई.

2 इति वाच्यम् ई.

3 प्राक्कालाव° ग.

4 तद्भिन्नभिन्नान्यत्व° ग.

अथाव्यवहितत्वांशत्यागेन तत्तत्पूर्वसमयावच्छेदेनेत्युच्यताम् । एवं च विनाऽप्यपूर्वं यागादेः कारणत्वं सूपपादमिति चेत् – न । अव्यवहितपूर्वसमयावच्छेदेन कार्यवति यदभावो ज्ञायते तत्र कारणताबुध्यनुदयेन तन्निवेशादतिरिक्तकारणत्वपक्ष एव वाऽयमनुयोगो दुर्वारः । समवायसंबन्धेन यागकृत्यादौ वारणाय तन्निवेशोऽन्यथासिद्धत्वस्य विशेषविश्रमादित्यन्ये ॥

---

अतिरिक्तकारणत्व इति । कारणत्वस्य पदान्तरत्वमते चिरविनष्टेऽपि यागादौ स्वर्गादिकारणत्वस्य नष्टघटे घटत्वस्येवाक्षततया *नापूर्वपक्ष इति । तद्व्यञ्जकनिरुक्तधर्मेऽव्यवहितत्वांशत्यागेन क्षतिरित्यर्थः । अव्यवहितत्वांशोपादानसमर्थनाय मतान्तरमाह – समवायेन [समवाय] इति । तन्निवेशः – अव्यवहितत्वांशनिवेशः । ननु घटे कुलालपितुरिव यागकृत्यादेरपि स्वर्गादावन्यथासिद्धत्वादेव न हेतुत्वमित्यव्यवहितत्वांशो व्यर्थ इत्यत आह – अन्यथासिद्धत्वस्येति । प्रत्यक्षेण कारणत्वग्रहस्थले एवान्यथासिद्धेस्सुवचत्वादिति भावः । अन्ये इत्यस्वरसबीजं त्वन्यथासिद्धत्वविशेषविश्रमस्य निर्युक्तिकत्वमिति ।

व्यतिरेकव्यभिचार इति । वह्निं विनैव धूमोत्पत्तिरिति ज्ञाने [1]वह्नित्वे धूमाधि – [2]करणनिष्ठाभावप्रतियोगि – [3]तानवच्छेदकत्वग्रहासंभवात् तद्घटितनिरुक्त – [4]कारणत्वग्रहे तस्य विरोधित्वमित्यर्थः । अन्वयव्यभिचार इति । वह्नेस्सत्त्वेऽपि धूमानुत्पत्तिरिति ज्ञान – [5]सत्त्वेनापि वह्नित्वे धूमाधिकरणनिष्ठाभाव – [6]प्रतियोगितानवच्छेदकत्वग्रहसाम्राज्यात् तद्घटितनिरुक्तकारणत्वग्रहे तस्याविरोधित्वमित्यर्थः ॥

---

1 वह्नित्वेन क.
2 °कारणमित्यभाव° क.
3 °तावच्छेदक° क.
4 कारणत्वाग्रहे क.
5 °सत्त्वेऽपि ग.
6 प्रतियोगितावच्छेदकत्वग्रहव्यभिचारसाम्राज्यात् क.

---

* अपूर्ववादस्यानवसर इत्यर्थः । अपूर्वाङ्गीकारो व्यर्थ इति यावत् ।

अथेदृशकारणत्व – [1]ग्रहेऽस्तुव्यतिरेकव्यभिचारज्ञानं विरोधि। अन्वय-व्यभिचारज्ञानं तु कुत इति चेत् – अवश्यक्लृप्तेत्याद्यन्यथासिद्धिज्ञानप्रयोजनकत्वात्। तदितरनिखिलतत्कार्यकारणसत्त्वे तत्सत्त्वे कार्यव्यतिरेकः यद्व्यतिरेकात् तेनावश्यक्लृप्तनियतपूर्ववृत्तिनाऽन्यथासिद्धत्वज्ञानात् ॥

केचित्तु – समूहान्वयव्यतिरेकाभ्यां समूहे कारणत्वग्रहे तदितरगृहीततत्कार्य-कारणताकसमूहसत्वे [2]तद्व्यतिरेकेऽवश्यं कार्य-[3]व्यतिरेकः तावत्समूहसत्त्वे तत्सत्त्वे अवश्यं तत्तत्कार्यसत्त्वमित्यन्वयव्यतिरेकयोःग्रहः विशिष्यतत्कारणत्वग्राहकः; तयोर्ग्रहे चान्वयव्यतिरेक-[4]व्यभिचारज्ञानं विरोधीत्याहुः ॥

---

अन्वयव्यतिरेकव्यभिचारज्ञानयोर्निरुक्तकारणत्वग्रहे तुल्यवत् विरोधित्वोपपादकं मतमाह – केचित्तु इति ॥

अथेति। एवम् – निरुक्तकारणत्वस्य [5]वास्तवकार्यकारणतावच्छेदकरूपघटितत्वे। सामान्यतः कार्य इति। "यजेत स्वर्गकाम" इत्यादौ सामान्यतः स्वर्गत्वेन [6]यागत्वेन कार्यकारणभावग्रहोत्तरं स्वर्गे यागजन्यतावच्छेदकवैजात्यस्य गङ्गास्नानादिजन्यस्वर्गव्यावृत्तस्य स्वर्गजनकतावच्छेदकवैजात्यस्य यागगङ्गास्नानादिसाधारणस्य वा कल्पनमिति सिद्धान्त इत्यर्थः। सामान्यतः उक्त इति। स्वर्गत्वाश्रयाधिकरणनिष्ठाभावप्रतियोगि – [7]तानवच्छेदक-रूपवान् याग इति सामान्यतो निरुक्तकारणत्वग्रहः प्रथमं संभवतीत्यर्थः। निरुक्तनियम इति। कार्यत्वाभिमतनिरुक्तधूमाद्यधिकरणत्वेनैवाधि – [8]करणत्वस्य निरुक्तनियमे प्रवेशात् तन्नियमघटकमधिकरणं यस्य तत्कत्वलक्षणकार्यत्वमपि प्रथमं सुग्रहमित्यर्थः। एतदेवोपपादयति–

---

1 °ग्रहेऽस्त्वन्वयव्यति° ई.
2 तद्व्यतिरेकादवश्यं इ.
3 वृत्तिरेकः ई.
4 °व्यभिचारेज्ञानं आ.
5 वस्तुतः कार्य° ग.
6 'यागत्वेन' नास्ति क.
7 °तावच्छेदक° क.
8 °करणस्य ग.

[1]अथैवं सामान्यतः कार्यकारणभावग्रहोत्तरं तदवच्छेदककल्पनमिति सिद्धान्तो व्याहन्यत इति चेत् — सामान्यतः उक्तनियतपूर्ववृत्तितावच्छेदक-रूपवत्वस्य सुग्रहत्वात् निरुक्तनियमघटकाधिकरणत्वादिलक्षणकार्यत्वमपि तया। "यजेत" इत्यादौ खण्डशः विधिशक्त्योपस्थापितस्वर्गाद्यधिकरणस्य विजातीय-स्वर्गाव्यवहितपूर्वसमयावच्छिन्नविजातीयस्वर्गाधिकरणीयविशेषणतया नियमघटका-भावेऽन्वयेन सामान्यतोऽधिकरणकत्वादिसंबन्धेऽवगते पश्चात्तदनतिप्रसक्त जात्यादिकल्पनात् — यागाभाववदवृत्तित्वादिलक्षणकार्यत्वग्रहः [2]स्वर्गत्वसामानाधि-करण्येनेत्यपि वदन्ति ।

न च कार्यतावच्छेदक[3]त्वाग्रहे तदवच्छिन्नं [4]प्रत्यनन्यथासिद्धत्वं दुर्ग्रहम्। अनन्यथा — [5]सिद्धत्वविनिर्मुक्तस्योक्तांशस्यैव ग्रहेणैव जातिसिद्धेः। अनन्यथासिद्धत्वं भेदकूटरूपं शक्यग्रहमित्यन्ये इति दिक् ॥

---

यजेत इत्यादाविति । कार्यतावच्छेदकीभूतवैजात्यस्य प्रथममनुपस्थितेः तद्घटितस्वर्गादि-साधनत्वस्य विशिष्टविधिशक्त्या बोधासंभवादित्याह – खण्डश इति । इष्टसाधनत्वघटक-तत्तत्पदार्थेष्वभ्युपेयतया विधिप्रत्ययशक्त्योपस्थापिततत्तत्पदार्थेषु मध्ये आकाङ्क्षावशात् स्वर्गाद्यधिकरणस्य विजातीयस्वर्गाव्यवहितपूर्वकालावच्छिन्नविजातीयस्वर्गाद्यधिकरणीयविशेषण-तया निरुक्तनियमघटकाभावे प्रथमं जायमानेनान्वयबोधेन स्वर्गादावपि सामान्यतः [6]तन्नियमघटकाधिकरणत्वरूपकार्यसंबन्धेऽवगते तदुत्तरं तादृशकार्यत्वानतिप्रसक्तवैजात्यं कल्प्यते ; अतः न कोऽपि सिद्धान्तभङ्ग इत्यर्थः। न चैवं विधेरिष्टसाधनत्वार्थकत्वमनुप-

---

1 'अथैवं .... .... व्याहन्यत' इत्यन्तस्त्रुटितः इ.

2 स्वर्गादिसीमा° अ.

3 °त्वग्रहे अ.

4 प्रत्यन्यथा° ई.

5 °सिद्धविनियुक्तस्यो° अ. °सिद्ध विनिर्मुक्तस्यो° इ.

6 सन्नियम° क.

## अनन्यथासिद्धत्वघटितकारणत्वलक्षणे नवीनानामाक्षेपः

अत्र नवीनाः — येन सहेत्यादिकमयुक्तम्; येन पृथगन्वयादिमता यस्य [1]तदगृहीतस्येत्युक्तौ नियमादि – प्रवेशवैफल्यात् । [2]तत्प्रवेशोऽपि [3]भ्रमिजनकत्वेन [4]हेतुत्वात् यस्येति [5]यत्पदार्थे येनेति यत्पदार्थनियतपूर्व – [6]वर्तिभिन्नस्येति विशेषण – [7]द्रव्ये [ध्रौव्ये] तत एव दण्डादेर्भ्रम्यादिनानन्यथासिद्धेः । अन्यं प्रतीत्यादिकमप्ययुक्तम्; ईश्वरज्ञानादेः [8]क्षित्यादिपूर्ववृत्तित्वेन गृहीतस्यैव घटादिपूर्ववृत्तित्वग्रहात् घटादावन्यथासिध्यापत्तेः । कार्यमात्रजनकत्वेनैव तद[9]ज्ञानात् [तज्ज्ञानात्] असिद्धिरिति चेत् – न। तथापि शब्दसाक्षात्कारे [10]गगनस्याप्यन्यथासिध्यापत्तेः। न च शब्दपूर्ववृत्तित्वग्रहं विनापि

---

पन्नमिति वाच्यम्। तद् घटकतत्तत्पदार्थशक्त्यापि तदुपपत्तेः, विशिष्टस्य तत्तत्पदार्थानतिरिक्तत्वादिति। मतान्तरमाह – याग इति। स्वर्गादौ यागाद्यभाववद्वृत्तित्वलक्षणकार्यत्वस्य यागादिनिष्ठसाधनत्वमिति वेद्यस्य स्वर्गत्वसामानाधि –[11]करण्येन ग्रहो विधिनैव प्रथमं जन्यते ; तदुत्तरं यागजन्यतावच्छेदकवैजात्यकल्पनमिति न सिद्धान्तविरोध [12]इत्यर्थः। वदन्तीत्यस्वरसस्तु एतत्कार्यत्वस्य निरुक्तसाधनत्वानन्तर्गतग्रहोपवर्णनेऽपि प्रकृतनिरुक्तसाधनत्वग्रहानुपवर्णनमिति।

---

1 तद्वृत्तितस्य अ.
2 यत्प्रवेशेऽपि ई.
3 भ्रमजन° ई.
4 हेतुत्वाय ई.
5 तत्पदार्थे अ.
6 °वृतिभि° अ.
7 °ध्रौव्येन तत अ.
8 सिध्यादिपूर्व° अ.
9 °ज्ञानादिसिद्धि° अ.
10 गगनस्यान्यथा° ई.
11 °करण्यत्वेन क.
12 'इत्यर्थः' नास्ति क.

इन्द्रियत्वेन तत्र हेतुत्वग्रहः इन्द्रियत्वेनाहेतुत्वात् तत्त्वेऽपि श्रावणत्वावच्छिन्ने श्रोत्रत्वेन हेतुत्वं न स्यात्। श्रोत्रत्वस्याकाशत्वगर्भस्य शब्दपूर्ववृत्तित्वग्रहं [1]विना दुर्ग्रहत्वात्।

किंच शब्दनित्यत्ववादिनो मीमांसकस्य कथं तदन्यथासिद्धिः; आकाशादेः शब्दपूर्ववृत्तित्वग्रहं विनापि निरुपाधि सहचारप्रवृत्तानुमानादिनापि घटादिपूर्ववृत्तित्वग्रहसंभवाच्च। अन्यं प्रति पूर्ववृत्तित्वघटितरूपेण न हेतुत्वमित्येवद्वितीयार्थ इत्यपि न युक्तम्। भ्रम्यादि – [2]जनकत्वेन दण्डचक्रादिहेतुत्वस्य[3]न्याय्यत्वात्। [4]भूयोऽवयवेन्द्रियसन्निकर्षादिगुणनिष्ठप्रत्यक्षादि प्रमाविशेषजनकताया प्रमाजनकत्व-

---

न चेति। प्रथममिति शेषः। सिद्धेः – [5]प्रवृत्त्यादिसिद्धेः। मतान्तरमाह – अनन्यथेति। अन्यथासिद्धास्ते दण्डत्वादयो प्रसिद्धाः तद्भेदकूटरूपमनन्यथासिद्धत्वं प्रथममपि सुग्रहमित्यर्थः॥

अत्र नवीना इति। अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वमित्यत्र नवीनाः दूषणं वदन्तीत्यर्थः। [6]नियमादीति। नियमः – साहित्यनियमः। आदिना पूर्ववृत्तित्वमन्वयव्यतिरेकित्वमित्यादि विवक्षासङ्ग्रहः। साहित्यनियमादिप्रवेशफलस्य भ्रम्यादिना दण्डाद्यन्यथासिद्धिवारणस्य येन यस्येत्यत्र विवक्षयैव संभवात् प्रवेशवैफल्यमित्यर्थः। अन्यथासिद्धेरिति। दण्डादिर्हि भ्रम्यादिनियत – [7]पूर्ववर्त्येव, न तु तद्भिन्न इति भ्रम्यादिना दण्डाद्यन्यथासिद्धिविरहात् नियमादिप्रवेशो [8]व्यर्थ एवेति भावः। शङ्कते – कार्यमात्र इति। तथा चेश्वर-

---

1 'विना .... .... शब्दपूर्ववृत्तित्वग्रहं' इत्यन्तस्त्रुटितः अ.

2 °हेतुत्वेन आ.

3 नान्यत्वात् ई.

4 'भूयो .... .... प्रत्यक्षादिप्रमा' इत्यन्तस्त्रुटितः अ.

5 प्रकृत्यादि° क.

6 'नियमादीति। नियमः साहित्यनियमः। आदिना पूर्ववृत्तित्वं कारणत्वं .... .... नवीनाः दूषणं वदन्तीत्यर्थः। नियमादीति' इत्यधिकः (पुनरुक्तिरिव दृश्यते) ग.

7 °पूर्ववृत्त्येव, ननु तद्भिन्न क.

8 व्यर्थ इति ग.

रूपगुणत्वेन प्रमादि सामान्यहेतुतावच्छेदकत्वात् विशेषजनकतायाः सामान्य – [1]हेतुतावच्छेदकत्वस्य "मिश्रादि" – सम्मतत्वात् [2]च । [3]अवश्यक्लृप्तेत्यादिकमप्यावश्यकत्वस्य दुर्वचत्वात् न युक्तम् । निरुक्तनियतपूर्ववृत्तितावच्छेदकत्वमपि गुरुतरमिति लाघवात् इष्टसाधनत्वादिज्ञानविषयत्वेनातिरिक्तकारणत्वसिद्धिः; प्रागुक्तं तु तव्द्यञ्जकमित्याहुः ॥

---

ज्ञानादेर्क्षित्यादिपूर्ववृत्तित्वं गृहीत्वैव घटादिपूर्ववृत्तित्वं गृह्यत इत्यस्या – [4]भावात् नान्यथासिद्धिरिति भावः । तथापि शब्द इति । श्रोत्रात्मकगगनस्य शब्दं प्रति पूर्वभावं गृहीत्वैव शब्दसाक्षात्कारं प्रति [5]पूर्वभावग्रहादन्यथासिद्धिरित्यर्थः । तत्र – शब्दसाक्षात्कारे । इन्द्रियत्वेनेति । [6]इन्द्रियत्वस्यातिप्रसक्तापातेन [प्रसक्त्या तेन] रूपेण शब्दसाक्षात्कारं प्रत्यहेतुत्वादित्यर्थः । ननु जन्यसाक्षात्कारत्वं कार्यतावच्छेदकीकृत्य शब्दसाक्षात्कारेऽपीन्द्रियत्वेन हेतुत्वमस्त्येवेत्यत आह – तत्त्वेपीति । जन्यसाक्षात्कारत्वावच्छिन्नं प्रतीन्द्रियत्वेन हेतुत्वेपीत्यर्थः ।

ननु श्रोत्रत्वं कर्णशष्कुल्यवच्छिन्ननभस्त्वम् । तच्चाष्टद्रव्यातिरिक्तद्रव्यत्वमिति न तेन रूपेणान्यथासिद्धिरित्यरुचेराह – किं चेति । ननु शब्दनित्यत्वस्याग्रे दूष्यत्वात् आकाशत्वेनान्यथासिद्धिः संभवत्येवेत्यत आह – [7]आकाशादेरिति । निरुपाधि इति । आकाशो (घटः) [घटपूर्ववर्ती] नित्यविभुत्वात् ईश्वरवदित्यनुमानेनेत्यर्थः । इष्टसाधनत्वादीति । आदिना द्विष्टसाधनत्वसंग्रहः । यागमिष्टसाधनम्, वह्निरिष्टसाधनम्, कलञ्जभक्षणं [8]द्विष्टसाधनम्,

---

1 °जनकताव° इ. °हेतुतावच्छेदकस्य ई.
2 'च' नास्ति इ.
3 अवश्यकल्पेत्यादि° अ.
4 °भावानन्यथा° क.
5 तद्ग्रहादन्यथा° ग.
6 इन्द्रियस्य ग.
7 'आकाशा .... .... दित्यनुमानेनेत्यर्थः' इत्यन्तस्त्रुटितः क.
8 'द्विष्टसाधनं .... .... अनुगतज्ञानस्य' इत्यन्तस्त्रुटितः ग.

तत्समाधानम्

तन्न । संबन्धशरीरोप[1]स्थित्यादिगौरवज्ञानविषयतावच्छेदकं यद्यत् तद्भेदस्य नियतपूर्ववर्तितावच्छेदकेन येन येन रूपेण हेतुत्वं न व्यवह्रियते तत्तद्भेदपर्यवसितस्य निवेशात् ।

अस्तु वा नियतपूर्ववर्तितावच्छेदकदण्डत्वादिकमेव कारणत्वम्; अन्यथासिद्धनिरूपकतानवच्छेदकत्वं [2]तु दण्डत्वादिपरिचायकमेव, निरुक्तान्यथासिद्धिनिरूपकतावच्छेदकत्वज्ञाने करणत्वाव्यवहारात् । [3]नियतपूर्ववृत्तितावच्छेदकत्ववत् [4]न तदपि निवेश्यमित्यप्याहुः ॥

---

कण्टकादि द्विष्टसाधनमित्याद्यनुगतज्ञानस्यानुगतविषयमन्तरानुपपत्तेः तद्विषयत्वेनानुगतातिरिक्तकारणत्वसिद्धिरित्यर्थः । प्रागुक्तम् – अनन्यथासिद्धनियतपूर्ववर्तितावच्छेदकरूपवत्वम् [5]॥

(अतिरिक्तकारणत्वकल्पनमपीत्यर्थः । फल इति । फलमतिरिक्ततत्सिद्धिः तदेव मुखमुपस्थितिबीजं यस्य तादृशत्वेनेत्यर्थः ।)

सकलान्यथासिद्धत्वस्य प्राग्दूषितत्वात् दण्डादिभेदकूटरूपमेवान्यथासिद्धत्वमाह – संबन्ध इत्यादि । दण्डत्वादेः घटकारणत्वे संबन्धगौरवम् । अनेकद्रव्यत्वस्य चाक्षुषादिकारणत्वे शरीरगौरवम् । रूपप्रागभावस्य गन्धं प्रति हेतुत्वे उपस्थितिगौरवमित्यादिज्ञानविषयतावच्छेदकं यद्यद्दण्डत्वत्वादि तद्भेदस्येत्यर्थः । एतस्यैव लघ्वर्थमाह – नियतपूर्ववर्तितेति । घटादिनियत-

---

1 °स्थितादि ई.

2 तु परि° आ.

3 अनियत° अ.

4 'न' नास्ति ई.

5 'इष्टसाधनकण्टकादिः द्विष्टसाधनमित्याद्यनुगतविषयमन्तरानुपपत्तेस्तद्विषयत्वे कल्पनमपीति' इत्यधिकः ग. कुण्डलग्रन्थानुसृतपाठो नोपलभ्यते ।

लाघवादतिरिक्तकारणत्वमिति तु मन्दम्; व्याप्त्यादेरप्यतिरिक्तत्वापत्तेः। *[1]व्यभिचारज्ञानप्रतिबध्यग्राहकत्वेन नैवमिति चेत् — तुल्यम्। [2]वस्तुतोऽनन्यथा-सिद्ध्यादेर्व्यञ्जकतया ज्ञानावश्यकत्वात्। इष्टसाधनत्वादिज्ञानकारणतायाः विषयिताविशेषाव — [3]च्छेद्यत्वादतिरिक्त — [4]कारणत्वकल्पने एव गौरवम्।

---

पूर्ववर्तिता — [5]वच्छेदकेन येन येन [6]दण्डत्वत्वादिना घटादिकारणत्वं न व्यवह्रियते तत्तद्धेदपर्यवसितस्य लक्षणे निवेशः, न तु तत्तदन्यथासिद्धभेदस्य। अतः न प्रागुक्ततत्त-द्दोषावकाश इति भावः।

लाघवादाह — अस्तुवेति। परिचायकमेवेति। तादृशदण्डत्वादावुक्तलक्षणमेव, न तु विशेषणमित्यर्थः। लक्षणेऽनन्यथासिद्धत्व — [7]दलनिवेशार्थं मतान्तरमाह — निरुक्त इति। कारणतावच्छेदकवह्नित्वादौ निरुक्तान्यथासिद्धिनिरूपकतावच्छेदकज्ञानेत्यर्थः। आहुरित्यस्वरस-बीजं तु परिचायकत्वेनोपपत्तौ विशेषणत्वमन्याय्यमिति।

व्यभिचार इति। हेतुसमानाधिकरणेत्यादि — [8]निरुक्त धर्मस्यैव व्यभिचारज्ञान प्रतिबध्यग्राहकत्व[9]सत्त्वात् व्याप्तिः, न तु तस्याः पदार्थान्तरत्वमित्यर्थः। तुल्यमिति। अनन्यथासिद्धेरित्यादिनिरुक्तधर्मस्यैवान्वयव्यतिरेकव्यभिचारज्ञानप्रतिबध्यग्राहक [10]सत्त्वात

---

1 'व्यभि .... .... तुल्यम्' इत्यन्त-स्त्रुटितः आ. इ.
2 वस्तुतोऽन्यथा° इ. ई.
3 °च्छेद्यादति° ई.
4 °कारणकल्पने ई.
5 °वच्छेदकत्वेन क.
6 दण्डत्वादिना ग.
7 'दल' नास्ति ग.
8 व्याप्तेरेव व्यभि° ग.
9 सत्त्वात् न पदा° ग.
10 °सत्त्वात् न पदार्था° ग.

---

* व्यभिचारज्ञानप्रतिबध्यं ग्राहकं यस्य तत्त्वेनेत्यर्थः। व्यभिचारज्ञानप्रतिबध्यव्याप्तिज्ञान-विषयत्वेनेति यावत्।

अस्तु वा दण्डत्वादिकमेव कारणत्वम्, तस्यैव घटादिकार्यसंबन्धितया [1]ग्रहेणानन्यथा – [2]सिद्धेरित्यादिव्यञ्जकमिति मिश्रमत[3]मेव सम्यगित्याभाति ॥

अस्तु योगक्षेमसाधारणी साधनता । तथाहि – यादृशसमूहसत्त्वे सव्यापारयत्सत्त्वेऽग्रिमक्षणेऽवश्यं कार्यं, तादृशसमूहसत्त्वे सव्यापारयद्व्यतिरेके चावश्यं कार्यव्यतिरेकः तत्तस्य साधनम् । भवति हि चक्रादिसमूहसत्त्वे सव्यापारदण्डसत्त्वेऽग्रिमक्षणे [4]घटसत्त्वं सव्यापारदण्डव्यतिरेके घटव्यतिरेकः तथा मङ्गलाभावेतरविघ्नहेतुसमूहसत्त्वे मङ्गलसत्त्वे विघ्नप्रागभावः तदभावे तदभावः [5]तद्वत्पापवृत्तिलाभयोग्यसमवायादिसमूहसत्त्वे सव्यापारप्रायश्चित्तसत्त्वेऽग्रिमक्षणे दुःखप्रागभावाभाव इति मङ्गलादौ विघ्नप्रागभावादि साधनता सुघटेति दिक् ॥

---

कारणत्वम्, न तु तस्य पदार्थान्तरत्वमित्यर्थः । [6]वस्तुतोऽनन्यथेति । अनन्यथासिद्ध इत्यादि निरुक्तधर्मस्यातिरिक्तकारणत्वव्यञ्जकत्वं अवस्थावाचमिति [अवश्यं वाच्यमिति] निरुक्त-धर्मज्ञानस्यैव तस्य व्यञ्जकत्वसंभवात् । तृपा [तथा] चातिरिक्तकारणप्रतीतिरूपमिष्टसाधन-त्वादि ज्ञानप्रकारतया निरुक्तधर्मनिष्ठाया निरुक्तधर्मज्ञाननिष्ठविषयताविशेष एवावच्छेदक-मित्यपि कल्पनीयम्; निरवच्छेद्यकारणतयाऽसंभवादित्यतिरिक्तकारणत्वकल्पन एव गौरवमिति निखिलार्थः

नव्यमतापेक्षया मिश्रमतमेवातिलाघवादुचितमित्याह – अस्तु वेति । [7]न च दण्डादौ दण्डत्वादेरेव कारणतात्मकत्वे तदवच्छेदककल्पनायां गौरवम्; अवच्छेद्याननुगतत्व

---

1 ग्रहेऽन्यथा° इ. ग्रहणानन्यथा° ई.
2 °सिद्धेत्यादि° ई.
3 °मेव वाऽऽभाति आ.
°मेवाऽऽभाति इ.
4 घटसत्व व्यापार° अ.
5 'तद्वत्' नास्ति आ. तत्पाप° इ.
6 'वस्तुत .... .... मिश्रमतमेव' इत्यन्तस्त्रुटितः ग.
7 'न च .... .... तत्रेत्यर्थः' इत्यन्तस्त्रुटितः ग.

## मतान्तरेण कारणत्वपरीष्कारः

केचित्तु – स्वस्वव्याप्यभिन्नासु यावतीषु[1]व्यक्तिषु सतीषु स्वव्यापार – [2]यदधिकरणक्षणोत्तरक्षणे यदधिकरणत्वं तावतीषु [3]सतीष्वेव सव्यापारयदनधिकरणक्षणोत्तरक्षणे यदनधिकरणत्वं, तस्य तं प्रति तदेव जनकत्वं, रासभादेः घटादौ सव्यापारेत्यादिदलद्वयसत्त्वात् सतीषु सतीष्वित्यन्तम् । इत्थं च यावतां सत्त्वे रासभाधिकरणक्षणोत्तरक्षणे घटसत्त्वं, तावतां सत्त्वे तं विना [4]घटासत्त्वं नास्तीति नातिप्रसङ्गः । तत्र [5]घटसत्त्वकालीन – यावद्व्यक्तिनिविष्टदण्डतद्व्यापारसत्त्वकाले सव्यापारदण्डासत्त्वस्यासंभवात् भिन्नासु इत्यन्तम् ।

यत्तु – मङ्गलाभावरूपविघ्ने हेतुमति [6]मङ्गल – तद्व्याप्येतर – यावद्विघ्नहेतुसमवधानकाले मङ्गलसत्वस्यासंभवात् [7]भावभिन्नासु इत्यपि विशेषणमिति – तन्न । स्वस्वव्याप्येतरयावद्व्यक्तिसत्त्वे मङ्गलसत्त्वे विघ्नप्रागभावः तावत्सत्वे मङ्गलासत्वे विघ्न – [8]प्रागभावाभावस्य सत्त्वेन तद्विशेषणानौचित्यात् । [9]न तत्र स्वव्याप्येतरयावद्विघ्न – [10]हेतुसत्त्वेन निवेशः; प्रवृत्त्यौपयिकजनकतायाः लक्षणमिदम् । तेन कालिकसंबन्धेन गगनादेरवृत्तित्वेऽपि न क्षतिरित्याहुः ॥

---

एवावच्छेदकस्यावश्यकत्वमाकृतेस्तदनपेक्षणात् । तस्यैवेति । दण्डत्वादिरूपकारणत्वस्यैव घटादिकार्यप्रतियोगिकत्वेन ग्रहे आवश्यके निरुक्तधर्मस्यैव व्यञ्जकत्वं तत्रेत्यर्थः ।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | वृत्तिषु | ई. | 6 | मङ्गलत्वव्याप्येतरे | अ. |
| 2 | °तदवच्छिन्नाधिकरणक्षणे | अ. | 7 | स्वभाव° | अ. |
| 3 | ‘व्यक्तिषु’ इत्यधिकः | अ. | 8 | °प्रागभावस्यासत्त्वेन | इ. |
| 4 | घटसत्त्वं | आ. | 9 | न ह्यन्यत्र अ., न त्वत्र | आ. |
| 5 | घटकालीन° | ई. | 10 | हेतुत्वेन | ई. |

तन्न । यावतां सत्त्वे दण्डसत्त्वे घटसत्त्वं तावतां सत्त्वे दण्डासत्त्वे घटासत्त्वस्यासंभवात् घटप्राक्कालोत्पत्तिकानां घटोत्पत्तिक्षणे नष्टानां [1]चोदासीनानां तत्संयोगविभागतत्तदङ्कुरादीनां मिलितानामन्यत्राभावात् ।

अथ यावत्पदमिच्छोपगृहीतयावद्व्यक्तिपरम्, [2]तर्हि रासभाद्यतिप्रसङ्गात् । चक्रादियावत्सत्त्वे [3]दण्डसमवधाने घटसत्त्वात् तावत्सत्त्वे रासभसत्त्वे दण्डासमवधाने [4]घटासत्त्वाच्च ॥

---

निरुक्तसाधनत्वस्य योगस्थलीयतया [5]क्षेमस्थले विघ्नप्रागभावसाधनमङ्गलादावसत्त्वात् तत्साधारणं तदाह – अस्तु वा योग इति । असिद्धलाभो योगः । दण्डादिभिरसिद्धघटादेः अपलाभावात् [अलाभाभावात्] । [6]सिद्धपरिपालनं [7]क्षेमम् [क्षेमः] । मङ्गलादिभिः सिद्धविघ्नप्रागभावादेवोत्तरकालसंबन्धरूपपरिपालनादित्यर्थः । स्वस्वव्याप्योत्तरसकलसंपत्तिकालीनकार्याभावप्रयोजकाभावप्रतियोगित्वं कारणत्वमित्यस्यैव निष्कृष्टार्थमाह – यादृश समूह इति । चक्रादिसमूहसत्त्वे दण्डादेरसत्त्वे च तद्व्यतिरेकात् कार्यव्यतिरेकासिद्धे– [8]रव्याप्तिः, अत उक्तं सव्यापार इति यत्पदार्थविशेषणम् ॥

केचित्त्विति । स्वस्वव्याप्य इति । यत्र लक्षणं नेयं तत्परं स्वपदद्वयमपि । अत्र स्वभिन्नास्वित्येवोक्तौ स्वव्याप्यस्यापि यावद्व्यक्तिनिवेशात् तावतीषु सतीषु स्वानधिकरणक्षण [9]असंभवात् असंभवः, तद्वारणाय स्वव्याप्यभिन्नास्विति । एवं स्वव्याप्यभिन्नासु इत्येवोक्ते स्वस्यापि यावद्व्यक्तिनिवेशात् तावतीषु सतीष्वानधिकरणक्षणासंभवात् पुनरसंभवः तदर्थं स्वस्वव्याप्यभिन्नास्विति समुदितमिति ॥

---

1 चोदासीनसंयोगविभाग° इ.
2 न हि ई.
3 'रासभासत्त्वे' इत्यधिकः अ.
4 'घटसत्त्वात् तदसमवाधने' इत्यधिकः आ.
5 'क्षेमस्थले' नास्ति ग.
6 'सिद्धेरेव लाभात्' इत्यधिकः ग.
7 क्षमम् ग.
8 °रसंभव इति क.
9 संभवात् क.

## मतान्तरेण कारणत्वपरिष्कारः

अन्ये तु – साध्यत्वेनाभिमतस्य प्रतियोग्यनुयोगिभावसंबन्धाश्रयो यः तन्नाशकस्वस्वव्याप्य – [1]स्वाभावान्यसकल समवधाने सति यत्सत्त्वे यत्सत्त्वं यदसत्त्वे यदसत्त्वं तस्य तदेव जनकत्वम्। तादृशसंबन्धाश्रयो दण्डादिस्थले घटादेः प्रागभावो, मङ्गलादिप्रायश्चित्तस्थले तु विघ्नदुःखादिप्रागभावः। न च तादृशसंबन्धाश्रयः घटादिविघ्नदुःखादिरपीति घटादिनाशकसकलसमवधाने घटादिसत्त्वमसम्भवीति वाच्यम्। तादृशसंबन्धाश्रययत्किंचित्पदार्थे यावन्नाशकसमवधानेनेति वाच्यत्वात्। न च तथापि तादृशसंबन्धाश्रयघटप्रागभावनाशकसकलसमवधाने रासभसत्त्वे घटसत्त्वं तादृशसंबन्धाश्रयघटनाशक – [2]समवधाने [3]च

---

नन्वेतल्लक्षणस्य शब्दकारणे गगनादावव्याप्तिः। तस्य कालिकादिनाप्य[4]वृत्तितया तदधिकरणक्षणाप्रसिद्धेरत आह – प्रवृत्त्यौपयिक इति। न शब्दार्थः कश्चित् गगनादौ प्रवर्तते येन [5]तस्यापि लक्ष्यत्वं स्यादिति तत्र नाव्याप्तिरित्यर्थः :

अन्ये त्विति। [6]स्वव्याप्यस्वाभावान्यसकलतत्समवधाने सतीत्यर्थः। तेन नात्माश्रय इति भावः। अत्र स्वव्याप्यान्यत्वोपादानप्रयोजनं चोक्तप्रायम्। स्वाभावान्यत्वानुपादाने च तस्यापि सकलान्तर्गततया तादृशसकलसमवधाने सति यत्सत्त्वेत्यनुपपन्नम्। अतस्तदन्य-

---

1 °स्वभाव° ई.

2 'सकल' इत्यधिकः अ.

3 'च' नास्ति अ.

4 °वृत्तित्वतया क.

5 'तस्य लक्ष्यतायामव्याप्तिः स्यादिति भावः। अन्ये त्विति। साध्यत्वस्य साधनत्वप्रतियोगिकत्वस्य प्रवेशे अत्माश्रयादाह – साध्यत्वेनाभिमतस्येति। तथा च तत्तद्व्यक्तित्वेन साध्यस्य प्रवेश इति भावः। तन्नाशक इति। तन्नाशकारणत्वेनाभिमतं यत् स्वस्वव्याप्यस्वभावान्यसकलभानमप्युपपद्यत इत्यर्थः' इत्यस्ति ग.

6 'स्वव्याप्य .... .... प्रतियोगितावच्छेदकत्व' इत्यन्तस्त्रुटितः ग.

रासभसत्त्वे [1]च [2]घटा – सत्त्वमिति रासभादावतिव्याप्तिः। तादृशसंबन्धाश्रययन्नाशकयावत्समवधाने [3]यत्सत्त्वे यत्सत्त्वं [4]तत्तन्नाशकयावत्समवधान [5]एव तद्व्यतिरेके तद्व्यतिरेक इत्यस्य वाच्यत्वात्। घटप्रागभावनाशकयावत्समवधाने च रासभव्यतिरेके घटव्यतिरेकाभावान्नातिव्याप्तिः। तादृशसंबन्धाश्रययत्किंचित्पदार्थस्य स्वस्वव्याप्य – स्वाभावेतरयावत्कारणसमवधानेनेति वाच्यं लाघवात्, न तु गौरवादित्याहुः ॥

[6]तदपि चिन्त्यम्। गौरवादेतद्घटककारणत्वस्यान्यस्य [7]वक्तव्यता – पाताच्चेति दिक् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां
पदार्थमालायां कारणतावादस्समाप्तः ॥

---

त्वमप्युपात्तमिति। वाच्यमिति। तथा च प्रतियोग्यनुपयोगिभावसंबन्धाश्रययत्किंचित्पदार्थः साध्यत्वेनाभिमत एव सर्वत्र ग्राह्य इति भावः।

तदपि चिन्त्यमिति। चिन्तावीजं स्वयमेव स्फुटयति गौरवादिति। प्रतियोगित्वनाशत्वव्याप्यत्वादेः प्रवेशाद्गौरवमिति भावः। निरुक्तेतत्साधनस्य [निरुक्ततत्समवधानस्य] नानाव्यक्तिकार्यस्थले एव संभवादाह – एतदघटकेति ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत श्रीमद्दुग-
कवीन्द्रतनूजमुद्गलविदुषसूनुना भास्करेण कृते
पदार्थमालाप्रकाशे कारणतावादः समाप्तः ॥

---

1 'च' नास्ति अ. 3 'यत्सत्त्वे' नास्ति अ. 'यत्स ... .... एव' इत्यन्तस्त्रुटितः ई.
2 घटसत्त्वमस्तीति अ. 4 तन्नाशक° अ. 6 तच्चिन्त्यम् अ.
घटासत्त्वमस्तीति उ. 5 च ई. 7 वक्तव्यतायावच्च ई.

## अथाधारतावादः



नाप्याधारत्वम्; मानाभावात्। न च 'कुण्डे बदरमि'त्यादौ सप्तम्यर्थं आधारत्वं संयोगमात्रस्य तदर्थत्वे हि 'बदरे कुण्डमि'त्याद्यापद्येतेति वाच्यम्। तत्तदाधारादिस्वरूपाया एवाधारतायास्तत्त्वात्। कुण्डादिस्वरूपमेव बदराद्याधारः; न तु बदरादि – [1]स्वरूपं कुण्डादेरित्यत्र प्रतीतेरेव मानत्वात्। [2]अत एव सत्तासमवायवत्यपि [3]न विशिष्टसत्ताप्रमा गुणादौ विशिष्टसत्ता – [4]धारत्वाभावात्। न च कुण्डे बदराधारत्वप्रतीतिः न स्यात्, कुण्डस्वरूपस्याधारत्वस्य कुण्डेऽभावात्; अन्यथा 'कुण्डे कुण्डमि'त्यपि स्यादिति वाच्यम्। आधारतात्वेन कुण्डस्यापि कुण्डवृत्तित्वात् कुण्डत्वेन तथैव प्रतीतेः।

---

नाप्याधारत्वमिति। पदार्थान्तरमिति शेषः। मानमाशङ्क्य निषेधति – न च कुण्ड इति। अत एव – आधारत्वस्य तत्तदाधारस्वरूपात्मकत्वादेव। बदरादिसंयोगादिमत्त्ववत् तदाधारप्रतीतेस्संयोगादेरेवाधारत्वमुचितमित्यभिप्रायेणाह – सत्ता इति।

बदरादौ कुण्डाद्याधारत्ववारणायोक्तं – बदरादिप्रतियोगिकत्वविशिष्ट इति। नन्वेवं संयोगसमवायादेरेवाधारतात्वे 'विशिष्टसत्तावान् गुण' इति प्रतीतेः प्रमाणत्वापत्तेरत आह – गुणाद्यन्यत्व इति। ननु विशिष्टसत्तायाः शुद्धसत्तानतिरिक्ततया विशिष्टसत्तानिरूपितत्वविशिष्ट-समवायस्यापि शुद्धनिरूपितत्वविशिष्टसत्तासमवायानतिरिक्तत्वात् तस्य च गुणादौ सत्त्वात् तत्र विशिष्टसत्ताप्रमापत्तिरित्यत आह – अस्तु वा द्रव्यत्वादीति। ननु द्रव्यसमवायस्यापि विशिष्ट-

---

1 'स्वरूपं' नास्ति अ.
2 'अत एव' नास्ति अ. इ.
अत एव सम° ई.
3 'गुणादौ'' इत्यधिकः अ. इ.
4 °धारतात्वा° इ.

अस्तु वा बदरादिप्रतियोगिकत्व – [1]विशिष्टसंयोगादिरेव बदराद्याधारता । गुणाद्यन्यत्वविशिष्टसत्तादिनिरूपितत्वविशिष्टसमवायेन गुणादौ । अस्तु वा द्रव्यत्वादिसमवाय एव तदाधारता तन्नानात्वकल्पनाया एवातिरिक्ताधारताकल्पनातो लघुत्वात् । अत एव चक्षुस्संयुक्तघटादिसमवायात् न पटत्वादेः [2]प्रत्यक्षतेति दिक् ॥

नव्यास्तु – आधारस्य स्वरूपत्वे गौरवात्; विशिष्टसंयोगादेश्चानतिरेकात् । अतिरिक्तमेवाधारत्वम्; तच्च संबन्धादिभेदभिन्नम् । अत एव कुण्डादि –

---

समवायानतिरिक्तत्वात् तद्दोषतादवस्थ्यमत आह – तन्नानात्व इति । समवायनानात्वे इत्यर्थः । अत एव – समवायनानात्वादेव ।

नन्वतिरिक्ताधारत्वस्य संयोगेन घटवति सत्त्वात् समवायेनापि घटप्रमा स्यादत आह – तच्चेति । अतिरिक्तमप्याधारत्वं संयोगसमवायादिभेदेन भिन्नमित्यर्थः । तथा च संयोगेन घटेति [घटवति] समवायावच्छिन्नतदाधारत्वाभावात् न तत्र तत्संबन्धेन प्रमेति भावः । अत एव तद्दोष [तद्देश] निष्ठाधारत्वस्यातिरिक्तत्वादेव बदरादौ नेति; तथा च बदरादौ न 'कुण्डमि'ति धीराधारत्वसंसर्गेण कुण्डाभावविषयिणी, न तु संयोगेनेति भावः ।

---

1 'कुण्डाद्यनुयोगिकत्व' इत्यधिकः अ. ई.

2 अप्रत्यक्ष° अ.

[1]प्रतियोगिक संयोगमात्रेण बदरादौ कुण्डादिप्रकारकबुद्धावपि बदरादौ कुण्डादिकं नेति धीराधारसंसर्गकबुद्धेरेव विरोधित्वादित्याहुः ॥

इति श्रीमज्जयरामन्यायपञ्चानन-

विरचितायां पदार्थमालाया-

माधारतावादस्समाप्तः ॥

---

'नव्यास्तु' 'इत्याहुः' इत्यस्वरसबीजं तु "धर्मिकल्पनातो धर्मकल्पना बलीयस्त्वात्" इति न्यायेन तदाधारस्वरूपाणां प्रमाणान्तरसिद्ध – नासाधारणतात्व – [नानाधारतात्व] रूपधर्म-कल्पनमेव साधु, नत्वाधारतात्वविशिष्टाधारकल्पनं धर्मकल्पनायां गौरवादिति। 'घटो घटाभाव प्रतियोगी'ति प्रतीतेः प्रतियोगिस्वरूपं प्रति प्रतियोगितावच्छेदकरूपं प्रतियोगित्व-मादायोपपत्तेः, न तस्याः तदतिरिक्तत्वे मानत्वमित्यर्थः ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत –

श्रीमदुद्गकवीन्द्रतनूजमुद्गलविदुषसूनुना

भास्करेण कृते पदार्थमालाप्रकाशे

आधारतावादः

समाप्तः

---

1 'प्रति .... .... प्रतियोगित्वमपि' इत्यन्तस्त्रुटितः इ.

## अथ प्रतियोगित्ववादः

प्रतियोगित्वमपि प्रतियोग्यभावयोस्संबन्धभूतं प्रतियोगि – रूपं प्रतियोगितावच्छेदकरूपं वा नाधिकम्; मानाभावात् ॥

यत्तु – स्वाभावाभावत्वं स्वस्य प्रतियोगित्वम्; भवति हि घटाभावस्याभावत्वं, घट इति घटस्य घटाभावप्रतियोगित्वं, [1]तदभावत्वं तज्ज्ञानविरोधिज्ञानविषयत्वं तेन भेद – [2]प्रतियोगिनि नाव्याप्तिः। स्वा – [3]भावेत्युक्त्या भेद – [4]प्रतियोगितावच्छेदके नातिव्याप्तिः। भेदस्य स्वाभावत्वादिति —

तन्न। गगनादेः गगनाभावाभावत्वे मानाभावात् गगनादेः प्रतियोगित्वानापत्तेः। [5]किं च गौरवं स्वभावज्ञानविषयत्वस्य लघोः संभवात्।

---

यत्तु स्वाभाव इति। स्वं प्रतियोगित्वेनाभिमतं घटादि, तदभावत्वमित्यत्र तज्ज्ञानेत्यत्र च तत्पदं स्वभावपरम्; तथा च स्वभावज्ञानविरोधिज्ञानविषयत्वे स्वस्य प्रतियोगित्वमित्यर्थः। संयोगादितावतादि [संयोगादिना घटादि] ज्ञाने सति घटात्यन्ताभावविज्ञानानुदयात्, घटात्यन्ताभावादिज्ञानविरोधिज्ञानविषयत्वं स्वस्य प्रतियोगित्वमित्यर्थः। संयोगादिना घटादिज्ञाने सति (घटात्यन्ताभावादिज्ञाने सति) घटात्यन्ताभावादिज्ञानानुदयात् घटात्यन्ताभावादिज्ञानविरोधिज्ञानविषयत्वस्य घटादौ सत्त्वात् तत्प्रतियोगित्वमिति। तेनेति। स्वाभावेत्यत्र स्वपदोपादानेनेत्यर्थः। भेदस्येति। घटादिभेदस्य प्रतियोगितावच्छेदक [घट] त्वाद्यभावत्वा-

---

1 'तदभा .... .... भेदस्य स्वाभावत्वात्' इत्यन्तस्त्रुटितः इ.

2 °प्रतियोगि नाव्याप्तिः ई.

3 °भावेत्युक्ताभेद° ई.

4 'प्रति .... .... मानाभावात् गगनादेः' इत्यन्तस्त्रुटितः अ.

5 'किं च .... .... स्वत्वलाभात्' इत्यन्तस्त्रुटितः आ. इ.

स्वपदमहिम्नाऽग्रेऽपि स्वत्व – [1]लाभात् स्वस्याभाव इत्यत्र षष्ट्यर्थप्रति – [2]योगित्वानिरूपणाच्च ।

नव्यास्तु – दण्ड्यभावादेः प्रतियोगित्वस्य दण्ड्यादिरूपत्वे गौरवात् । संयोगसंबन्धावच्छिन्न घटाभावादिप्रतियोगित्वस्य घटादिरूपत्वे समवायसंबन्धाव-

---

भाव [द्यभावाभावरूप] – घटत्वादौ घटादिभेदज्ञान [भेदज्ञानविरोधिज्ञान] विषयत्वसंभवेऽपि न तत्प्रतियोगित्वमित्यर्थः ।

गगनादेरिति । यथा 'घटवति घटाभावो नास्ती'ति प्रतीत्या तस्य तदभावत्वाङ्गीकारात्, तत्प्रतियोगित्वं तथा 'गगनवति गगनाभावो नास्ती'ति प्रतीत्या गगनस्य गगनाभावत्व [गगनाभावाभावत्व] लक्षणं प्रतियोगित्वं वाच्यम् । तच्च न संभवति । गगनस्यावृत्तित्वेन तद्वतोऽप्रसिद्धेरिति भावः । ननु मिश्रमते संयोगेन गगनस्य वृत्तिमत्वात् तस्य तदभावाभावत्वं संभवत्येवेत्यतः दूषणान्तरमाह – किं चेति । गौरवम् – स्वभावज्ञानविरोधिज्ञानविषयत्वमित्यत्र विरोधित्वप्रवेशात् गौरवम् । स्वपदमहिम्नेति । तथा च स्वभावज्ञानविषयत्वं स्वस्य प्रतियोगित्व-मित्यर्थः । तेनाभाव एव नातिव्याप्तिः । ननु स्वाभावज्ञानविषयत्वमेवास्तु इत्यतः दूषणान्तरमाह – स्वस्याभावेत्यत्रेति । षष्ठ्यर्थप्रतियोगित्वं यदिदमेव तादात्म्याश्रयः यद्यन्यत् तदाऽनवस्थेति तस्यानिरूपणमिति भावः ॥

---

1 °लाभादनवस्थापत्त्या षष्ठ्यर्थप्रतियोगित्वस्य स्वरूपसंबन्धविशेषरूपस्यैव वाच्यत्वाया तत्त्वौचित्याच्च' इत्यस्ति अ., °लाघवात् ई.

2 °योगित्वनिरू° ई.

च्छिन्नघटाभावादावपि [1]संयोगसंबन्धावच्छिन्नप्रतियोगिताकत्वापत्तेश्च । प्रतियोगित्वमतिरिक्तमेव; तच्च संबन्धादिभेदभिन्नमित्याहुः ॥

इति श्रीमज्जयरामन्यायपञ्चानन
विरचितायां पदार्थमालायां
प्रतियोगित्ववादस्समाप्तः ॥

---

समवाय इति । समवायावच्छिन्नघटाभावादिप्रतियोगित्वस्य घटादिस्वरूपस्य समवायेन घटवत्यपि सत्त्वात् संयोगावच्छिन्नघटाभावप्रतीतिः स्यादिति भावः । तच्च संबन्धादीति । आदिना प्रतियोगितावच्छेदकसङ्ग्रहः । तथा च संबन्धभेदेन प्रतियोगितावच्छेदकधर्मभेदेन च प्रतियोगित्वं भिन्नमित्यर्थः । अत एव समवायावच्छिन्नघटाभावे न संयोगावच्छिन्न-प्रतियोगिताकत्वम्; न वा द्रव्यत्वावच्छिन्नघटाभावे घटत्वावच्छिन्नप्रतियोगिताकत्वमिति ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत - श्रीमद्रुद्रकवीन्द्रतनूजमुद्गल
विदुषसूनुना भास्करेण कृते पदार्थमालाप्रकाशे
प्रतियोगित्ववादस्समाप्तः ॥

---

1 तत्कत्वप्रसङ्गाच्च । प्रतियोगित्व° इ.

 

## अथ विषयतावादः

विषयत्व – [1]मपि विषयाकारप्रतीति – [2]साक्षिकं ज्ञानविषययोः स्वरूप-संबन्धविशेष – [3]रूपम् । विशेष्यत्वं, विशेषणत्वं सांसर्गिकं, विषयत्वं च विषयता – [4]विशेष एव । 'पुरुषो दण्डवान्' इत्यादौ [5]पुरुषे विशेष्यता, दण्डे विशेषणता, संयोगे सांसर्गिकविषयतेति ॥

यत्तु – भासमानवैशिष्ट्य प्रतियोगित्वं प्रकारत्वम् । तदेव विशेषणत्वं 'पुरुषो दण्डवान्' इत्यादिज्ञाने दण्डवैशिष्ट्यं संयोगो भासते; तत्प्रतियोगित्वं दण्डादाविति —

---

दण्डपुरुषसंयोगा इत्यत्र दण्डादेः प्रकारत्वेऽपि (तु) भासमानत्वस्य प्रतियोगित्वेन अन्वय [प्रतियोगित्वेऽन्वय] – मभ्युपेत्याह – तथापि प्रकारत्वं [अथ भासमानत्वमिति] भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वमिति लक्षणं प्रतियोगित्वमतिरिक्तमभ्युपेत्यान-तिरिक्तं वा तत्राद्येत्याह – [तत्र नाद्य इत्याह] – प्रतियोगित्वादेरिति । प्रकारित्वादेरिति । आदिना ज्ञानविशेषणनिष्टप्रकारत्वसङ्ग्रहः । द्वितीये त्वाह – अनतिरेके त्विति । विशेषणी-भूतार्थानतिरेकेत्यर्थः ।

एतेन – वक्ष्यमाणदूषणेन । स्वरूपत इत्यादि । यथा च दण्डपुरुषसंयोग इत्यत्र संयोगात्मकदण्डवैशिष्टयस्य संयोगत्वेनैव भानेन स्वरूपतोऽभानात् न दण्डप्रकारत्वमिति भावः । संयुक्तसमवायादेरिति । दण्डवान् दण्डसंयोगवान् पुरुष इति समूहालम्बने

---

1 'अपि' नास्ति ई.
2 साक्षिको ज्ञान° इ.
3 °'रूपम्' नास्ति इ.
4 °विशेषण एव इ.
5 'हि' इत्यधिकः इ.

तन्न – दण्डपुरुषसंयोगा इत्यादावपि दण्डादेः प्रकारतापत्तेः ॥

अथ भासमानं यद्वैशिष्ट्यप्रतियोगित्वं [1]तथा। न च दण्डपुरुषसंयोग-प्रतियोगित्वानुयोगित्वानीत्यादिबुद्धौ दण्डादेः प्रकारतापत्तेः; *स्वरूपतो भासमानमिति वाच्यत्वात्।

मैवम् – प्रतियोगित्वादेरतिरिक्तत्वे प्रकारित्वादेर्ज्ञाननिष्ठस्य कल्पनाया [2]एव युक्तत्वात्। अनतिरेके तु दण्डत्वादिज्ञाननिष्ठस्य कल्पनाया एव युक्तत्वात्। [3]अनतिरेके तु दण्डत्वादिनिर्विकल्पक [4]एव दण्डादेः प्रकारतापत्तेः।

---

दण्डवानित्यंशे संयोगस्य, दण्डसंयोगवानित्यंशे च समवायस्य संसर्गत्वात् समवायस्येव संयोगस्यापि स्वरूपतो भानं वाच्यम्; तच्च न संभवति। संयोगवानित्यंशे संयोगभावनादिति [संयोगत्वेन संयोगभानादिति] दण्डवानित्यंशेऽपि दण्डस्य प्रकारत्वं न स्यादित्यर्थः। ननु यदंशे यः संसर्गः तदंशे तस्य स्वरूपतो भासमानत्वं वाच्यम्; पूर्वोक्तसमूहालम्बने च दण्डवानित्यंशे संयोगस्य संसर्गस्य स्वरूपतो भासमानत्वात्। तत्प्रतियोगि-दण्डेन प्रकारत्वानुपपत्तिरत आह – सांसर्गिकज्ञानस्येति। सांसर्गिकविषयताशालि-ज्ञानस्येत्यर्थः। 'घटोऽयमि'तिज्ञानानन्तरं घटत्वप्रकारकज्ञानवानहमित्यनुव्यवसायः तेन व्यवसाय – रूपोऽवयव [रूपोपनय] सहकारेण घटत्वमिव तन्निराकारत्वमपि [तन्निष्ठ-प्रकारत्वमपि] गृह्यते। तदेतन्मते नोपपद्यते; व्यवसायस्य घटत्वसंसर्गांशे सांसर्गिक-विषयताशालितया संसर्गोपनायकत्वाभावेन तद्घटित – मित्युक्त [मितेरुक्त] प्रकारत्वोप-नायकत्वासंभवात्। न चास्तु सांसर्गिकज्ञानस्याप्युपनायकत्वम्। घटोऽयमिति व्यवस्थाना

---

1 तत्तथा अ. आ. इ.
2 'एव' नास्ति इ.
3 अनतिरिक्ते तु ई.
4 अपि अ.

---

* स्वरूपतो भासमानं यद्वैशिष्ट्यं तत्प्रतियोगित्वमिति वाच्यत्वादित्यर्थः।

एतेन स्वरूपतो भासमानं यद्वैशिष्ट्यं तत्प्रतियोगित्वमित्यपास्तम्। दण्डवान् दण्डसंयोगवान् पुरुष इत्यादिसमूहालंबने संयुक्तसमवायादेः संबन्धत्वे च स्वरूपत इत्यस्य च दुर्वचत्वात्। सांसर्गिकज्ञानस्यानुपनायकत्वात्। निरुक्त-प्रकारत्वस्यानुव्यवसायग्राह्यत्वासंभवात्। [1]संयोगि तादात्म्यसंयोगादि – बुद्धेः [बुद्ध्योः] अवैलक्षण्यापत्त्या संबन्धतावच्छेदकभानस्वीकाराच्च। अत एव 'घटो[2]नास्ती'त्यादौ घटादेः संसर्गतयाऽवच्छेदकत्वभानमिति दिक्॥

---

[व्यवसाया] नन्तरजायमानघटविशेष्यकघटत्वप्रकारकज्ञानवानहमित्यनुव्यवसाये घट-घटत्वयोरिव तत्संसर्गस्यापि भानापत्तेरिति भावः। ननु लाघवात् निर्विकल्पकेतरज्ञानत्वे-नैवोपनायकत्वं घटोऽयमिति व्यवसायानन्तरमनुव्यवसायेऽपि घटघटत्वोभयसंसर्गस्य स्वरूपतो भानमिष्यत एव। इत्थं च निरुक्तप्रकारत्वस्यानुव्यवसायग्राह्यतोपपत्तिरित्यरुचे-र्दूषणान्तरमाह – संयोगीति। 'वृक्षः कपिसंयोगी' इति *संयोगितादात्म्यविशेषसंयोगसंसर्ग-त्वादवैलक्षण्यापत्तिः; अतस्तत्परिहायाद्या संबन्धकतावच्छेदकतादात्म्यविशिष्टसंयोगसंसर्गिका; द्वितीयातु संयोगत्वविशिष्टसांसर्गिकेति स्वीक्रियते। यथा च स्वरूपतो भासमानं यद्विशेष्यत्व [यद्वैशिष्ट्य] प्रतियोगित्वं प्रकारत्वमिति लक्षणं क्वाप्यवस्थां न लभत इति। किंचिद्रूपेण भानाभ्युपगमादेव 'घटो नास्ती'त्यादिबुद्धौ घटप्रतियोगिकघटत्वावच्छिन्नप्रतियोगिताकाभावो भासते; तत्राभावे घटे संसर्गतया प्रतियोगित्वभानवत् घटत्वादेरपि संसर्गतया प्रतियोगि-तानवच्छेदकत्वभानमप्युपपद्यत इत्यर्थः।

---

1 संयोग्यादि तादात्म्य° इ.

2 'नास्तीति वाच्यं' इत्यधिकः अ. आ., 'नास्ति वाच्यं' इत्याधिकः इ.

---

* संयोगितादात्म्यविशेषरूपो यः संयोगः तत्संसर्गकत्वादित्यर्थः। संयोगभेदाभावरूपस्य संयोगितादात्म्यस्य प्रतियोगितावच्छेदकसंयोगस्वरूपत्वात् संयोगस्य संयोगि तादात्म्यरूपम्।

भाट्टास्तु – 'घटोज्ञात' इत्यादिप्रतीतिसिद्धा ज्ञान – [1]जन्याविषयनिष्ठा ज्ञातता प्राकट्यापरनामिका सैव विषयता। ज्ञानविषययोः संबन्धरूपा; युक्तं चैतत्। कथमन्यथा 'घटं जानाती'त्यादौ घटादेः कर्मत्वं क्रियाजन्यफलशालित्वस्यैव तत्त्वादित्याहुः ॥

तन्न – [2]'अतीतो घटो [3]ज्ञात' इत्यादौ [4]तदसत्त्वात्। न ह्यतीते घटे ज्ञाततोत्पत्तिसंभवः। [5]समवायिकारणं विना भावकार्यानुत्पत्तेः। तत्र स्वरूपसंबन्धविशेष एव [6]ज्ञाततेति चेत् विद्यमानेऽपि स एवाऽस्तु। त्वयाऽपि ज्ञानेन ज्ञातताधाननियमार्थं स्वरूपसंबन्धविशेषस्याभ्युपेयत्वाच्च। अन्यथा

---

दिगर्थस्तु यत्र [7]संबन्धस्य प्रागुपस्थितिः तत्र किंचिद्रूपेण तस्य भानं यत्रानुपस्थितिः तत्र स्वरूपेण, परं तु स्वरूपेणैवेति न नियम इति ॥

[8]कर्मत्वं चेति। 'घटं [9]जानाती'त्यादौ घटादेः कर्मत्वं चेत्यर्थः। गौणम् – विषयत्वरूपम्। कर्मविभक्तेरपीति। 'घटं जानाती'त्यादौ द्वितीयादेरतीतस्थलीयकर्मविभक्तिवत् विषयत्वे लाक्षणिकत्वमित्यर्थः। घटविषयकज्ञानवानित्येव ततो बोधादिति भावः ॥

---

1 °जन्यविषय° ई.
2 प्रतीतो ई.
3 'ज्ञात' नास्ति इ.
4 तदसंभवात् इ.
5 समवायिनमन्तरेण भाव° आ.
समवायिनं विना इ.
6 ज्ञातताचेत् ई.
7 'तु' इत्यधिकः क.
8 'कर्मत्वं चेति' नास्ति क.
9 जानामी° क.

ज्ञाततोत्पत्तेः पूर्वं विषया – संबन्धो [संबन्धात्] तदनियमापत्तेः। कर्मत्वं [1]चानियतम्। [2]घटं जानाती'त्यादाविव गौणम्। कर्म[3]विभक्तेरपि तद्वदेवेति दिक्॥

नव्यास्तु – [4]विषयता न विषयस्वरूपा; 'ज्ञानेनातीतो घटो इदानीं गृह्यते' 'अतीतो घटो इदानीं स्फुरती'त्यादि – [5]प्रत्ययाप्रमाण्यापत्तेः। विषयस्वरूपायाः विषयतायाः एतत्कालावृत्तित्वात्। अत एव न विषयज्ञानोभय-रूपा। [6]नापि ज्ञानमात्ररूपा; 'घटपटावि'त्यादिज्ञानस्य भ्रमत्वापत्तेः। तज्ज्ञान [तद्ज्ञान] रूपायाः [7]विशेष्यतायाः घटत्वाद्यभाववत् [8]पटादिनिष्ठत्वात्,

---

भ्रमत्वापत्तेरिति। प्रकाराभाववन्निष्ठविशेष्यताकत्वरूपभ्रमत्वापत्तेरित्यर्थः। एतदेवोप-पादयति – तद्ज्ञानरूपाया इति। दूषणान्तरमाह – कपालमिति। तत्प्रकारकत्वे सति तत्संयोगा-वच्छिन्नविशेष्यताकत्वं संयोगेन तन्निर्णयत्वम्। एवं समवायादिनापि तन्निर्णयत्वं निर्वाच्यम्। तथा च 'कपालं घटवत्' 'भूतलं घटवत्' इति समूहालंबनस्य कपालांशे संयोगेन घटनिर्णयत्वापत्तिः। संयोगावच्छिन्नविशेष्यतायाः तद्ज्ञानरूपायाः कपालांशेऽपि सत्त्वात्। एवमेतस्य भूतलांशे समवायेन घटनिर्णयत्वापत्तिरपि बोध्येति समुदितार्थः। ननु समूहा-लंबनस्थले सामग्रीभेदात् ज्ञानभेद एव, न त्वेकं ज्ञानम्। तथा च विषयतायाः ज्ञानस्वरूप-त्वेऽपि 'घटपटावि'त्यत्र न भ्रमत्वापादनम्। 'कपालं घटवत्' 'भूतलं घटवत्' इत्यत्रापि कपालांशेन संयोगेन घटनिर्णयत्वापादनं चेत्यस्वरसात् दूषणान्तरमाह – किं चेति। स्वरूपेण–स्वरूपात्मकविषयतया।

---

1 चातीतम् आ. इ.
2 घटं जनामी° इ.
घटज्ञानादित्यादा° ई.
3 विभक्तिरपि ई.
4 विषयज्ञान विषय° अ.
5 'प्रत्यया' नास्ति ई.
6 'नापि जानमात्ररूपा' नास्ति आ.
7 विषयतायाः ई.
8 पटत्वादि° ई.

'कपालं समवायेन घटवत्' 'भूतलं संयोगेन घटवत्' इति ज्ञानस्य कपालादौ संयोगादिना घटादिनिर्णयत्वापत्तेः । किं च यदि ज्ञानं स्वरूपेण घटादिना संबद्धमिति घटादिव्यवहारमाधत्ते [1]तदा स्वाधिकरणकालादिव्यवहारमप्यादध्यात्; कालादिनापि तस्य स्वरूपेण [2]संबद्धत्वात् ॥

[3]अपि च विषयतात्वं वा नाधिकम् ; [4]तद्विषयकेच्छादि – [5]सामान्ये तद्विषयकज्ञानत्वादिना न हेतुत्वसंभवोऽननुगमात् । तस्मादतिरिक्तैव विषयता ॥

---

ननु कपालादिव्यावृत्तस्वरूपात्मकविषयतयैव घटादिना तज्ज्ञानं संबद्धमिति घटादिव्यवहारमेव जनयेत्, न कालादिव्यवहारमित्यस्वरसाद् दूषणान्तरमाह – अपि चेति । विषयताया अतिरिक्तत्वेऽपि तन्नानात्वमावश्यकम् । अन्यथा घटज्ञाने [6]पटोऽपि विषयः स्यात् । तथा च तदनुगमार्थं तन्निष्ठविषयतात्वमावश्यकमिति तदेवास्त्वतिरिक्तमित्याशयेनाह – तत्त्वं चेति [तस्मादिति] ॥

ननु विषयनिष्ठविषयताया अतिरिक्तत्वे ज्ञाननिष्ठविषयिताप्यतिरिक्ता स्यादत आह – विषयितापीति । विषयतैव निरूपकत्वसंबन्धेन ज्ञाननिष्ठा सती विषयितेत्युच्यत इत्यर्थः । विनिगमकाभावादाह – विषयितैव [विषयतयैव] इति । विशिष्टवैशिष्ट्य – [7]विषयत्वादिकमित्यत्रादिना 'घटोऽयमि'त्यादौ वैशिष्ट्यविषयत्वसंग्रहः । सुवचमिति । अतिरिक्ततया सुवचमित्यर्थः । एतेन विशिष्टवैशिष्ट्यविषयत्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारक निश्चयत्वेन, विशिष्टविषयित्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन हेतुत्वं निर्वहति ।

---

1 'तदा' नास्ति ई.
2 संबन्धत्वात् ई.
3 यदि च अ.
4 'तर्हि' इत्यधिकः इ.
5 सामान्येन तद्विशेष्यक ज्ञानत्वादिना हेतुत्वासंभवो° इ.
6 घटोऽपि क.
7 विषयित्वा° ग.

विषयिताप्येषैव । निरूपकत्वेन [1]ज्ञाननिष्ठविषयतयैव वा साक्षात् ज्ञानगता, [2]न त्वधिका निरूपकत्वेन विषयत्वरूपा । इत्थं च 'रक्तदण्डवान्' इत्यादौ विशिष्टवैशिष्ट्यविषयत्वादिकं सुवचमिति दिक् ॥

इति श्रीमज्जयरामन्यायपञ्चाननकृतायां पदार्थमालायां

विषयतावादस्समाप्तः ॥

---

नव्यास्तु इत्यस्वरसस्त्वतिरिक्तापि विषयिता भिन्ना, अभिन्ना वा । आद्ये घटज्ञाने पटो विषयः स्यात् । द्वितीये तद्भेदो विषयभेदेन ज्ञानभेदेन वा । तत्र प्रथमे, अतिरिक्त-विषयता - [3]सत्त्वेऽपि घटविषय - [4]केच्छासामान्यं प्रति घटविषयकज्ञानत्वेन हेतुत्वेऽननुगमो तदवस्थः । अन्त्ये एकत्रैव घटे ज्ञानभेदेन विषयतानन्त्यमिति न किञ्चिदेतदिति ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूतश्रीमद्रुद्रग-

कवीन्द्रतनूजमुद्गलविदुषसूनुना भास्करेण

कृतपदार्थमालाप्रकाशे विषयता-

वादस्समाप्तः ॥

---

1 'ज्ञाननिष्ठ' नास्ति जा. इ.

2 'न तु' नास्ति इ.

3 साधके घट° क.

4 °केष्टसा° ग.

## अथ द्रव्यनिरूपणम्

तत्र द्रव्याणि — पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । नवसु किं नाम द्रव्यत्वम् ? जातिविशेषः [1]द्रव्यम्; द्रव्यमित्यनुगतप्रतीतेः बाधकं विना जातिविषयत्वात् । [2]न च क्लृप्तेन गुणवत्त्वोपाधिनाऽनुगत — मपि [मति] उपपत्तौ जात्यन्तरसिद्धौ गौरव[3]मेव बाधकम् । अन्यथा 'घटो नीलः' 'पटो नील' [4]इत्यनुगतमतेः नीलत्वादेः द्रव्यवृत्तिजातित्वापत्तेरिति वाच्यम् । यतः गुणवत्त्वस्य गुणात्मकस्याननुगततया विशेषणतावच्छेदक- गुणत्वैक्ये — [5]नानुगतमतिर्वाच्या, न चैतद्युक्तम् । विशेषणैक्यस्यैवासतिबाधके ततस्सिद्धेः । [6]अन्यथा सास्नादिमत्वे[7]नैव गौरित्याद्यनुगतमतेरुपपत्तौ गोत्वादिक- मपि न सिध्येत् । [8]नीलत्वादेः [9]द्रव्यवृत्तित्वे [10]घटत्वादिना साङ्कर्यं बाधकम् ।

---

शक्त्यादीनामतिरिक्तत्वनिरासेन पदार्थाः सप्तैव इति व्यवस्थाप्य प्रथमोद्दिष्टं द्रव्यं विभजते — तत्र द्रव्याणीति । तत्र सप्तसु मध्ये नव इति संख्याशब्दो विभागबललब्धो नवत्वसंख्यां स्पष्टयति । एवकारश्च विधेयस्य पृथिव्यादेरुद्देश्यद्रव्यव्यापकत्वलाभात् लब्धन्यूनाधिकसंख्याव्यवच्छेदं स्पष्टयति । अत्रापि द्रव्यमुद्दिश्य पृथिव्यादीनां विधानात् पृथिव्याद्यन्यतमत्वेन [11]द्रव्यव्यापक [त्व] लाभात् । एतत्तत्त्वं प्रागेवोक्तमिति । कार्यकारण-

---

1 'तत्र' इत्यधिकः आ.
2 'न च .... .... बाधकम्' इत्यन्तस्त्रुटितः अ.
3 'एव' नास्ति इ.
4 इत्यादिमतः अ. इत्यादिमते ई.
5 °नाननुगत° इ.
6 'अन्यथा .... .... न सिध्येत्' इत्यन्यस्त्रुटितः अ. इ.
7 नैवानुगत° आ.
8 नीलत्वात् अ.
9 द्रव्यव्यक्तित्वे ई.
10 घटत्वादीनां अ.
11 'द्रव्य .... .... किं चेति' इत्यन्तस्त्रुटितः क.

किं च जन्यभावसंयोगविभागादिकं प्रति द्रव्यत्वेन समवायिकारणत्वात् । जन्यद्रव्यत्वावच्छिन्नं प्रति विजातीयसंयोगद्रव्याभावयोः कारणत्वात् तत्सिद्धिः; अन्यथा रूपादावपि रूपाद्यापत्तेः ।

यत्तु – कालाकाशदिशां संयोगजनकभावत्वेन सत्ताव्याप्यजातिसिद्धौ क्षित्यादिकं कालवृत्तिसत्ताव्याप्य – [1]जातिमत्संयोगजनकभावत्वात् [2]आकाशवदित्यनुमानात्तत्सिद्धिरिति —

[3]तन्न – अप्रयोजकत्वात् । अन्यथा कर्मसंयोगादिकमपि पक्ष[4]कुक्षौ विनिक्षिप्य तत एव तज्जातिसाधन(त्व)ापत्तिरिति दिक् ॥

किमस्य लक्षणम् ? द्रव्यत्वगुणवत्वादि । ननु द्रव्यं लक्ष्यम्, लक्षणं द्रव्यत्वमित्य[5]नुपपन्नम् । [6]लक्ष्यं हि पक्षः, लक्षणमितरभेदानुमापकम् ।

---

भावबलादपि द्रव्यत्वं सिध्यतीत्याह – किं चेति । [7]समवायेन जन्यभावत्वावच्छिन्नं प्रति वा तादात्म्यसंबन्धेन द्रव्यत्वेन समवायिकारणत्वात् जन्यभावसंयोगादिसमवायिकारणतावच्छेदकत्वेन द्रव्यत्वजातिसिद्धिः । न च गुणवत्वमेव तत्समवायिकारणतावच्छेदकं गौरवादिति [8]भावः । ननु जन्यभावत्वेन द्रव्यत्वेन कार्यकारणभावे प्रमाणाभावः । घटत्वेन कपालत्वेन घटत्वेन रूपत्वादिनेत्याद्यावश्यकविशेषकार्यकारणभावैरेवोपपत्ते[9]रत आह – संयोगविभागादिकं प्रतीति । कारणतावच्छेदकतया द्रव्यत्वं साधयित्वा कार्यतावच्छेदकघटकतयापि[10]तत्साधयति- जन्यद्रव्यत्व इति । विजातीयकपालादिसंयोगं विना घटादिजन्यद्रव्यानुत्पत्तेः तस्य तत्र

---

1 जातिमत्वं योग° ई.
2 प्रकाश° इ.
3 तत्र आ.
4 'कुक्षौ' नास्ति ई.
5 °नुपपत्तेः ई.
6 तथाहि लक्षणं इ.
7 समवायिकारणत्वाज्जन्य° क.
8 'भावः' नास्ति ग.
9 रेवाह – क.
10 तत्साधनादिति क.

तथा च 'द्रव्यमितरेभ्यो भिद्यते द्रव्यत्वात्' इति लब्धम्। न चेदं संभवति, महानसादिवदत्र सपक्षाभावेन साध्याप्रसिध्या व्याप्तिग्रहस्य साध्यविशिष्टायाश्चानुमितेश्च संभवात्। मैवम्; घटादेरेव सपक्षत्वात् घटो द्रव्येतरभिन्न इति प्रत्यक्षेण निश्चयात्। [1]न चैवं घटादेः पक्षत्वहानिः घटत्वेन सपक्षस्यापि द्रव्यत्वेन सन्दिग्धसाध्यवत्त्वसंभवात् ॥

अथ तथापि प्रकृते हेतौ साध्यसामानाधि – [2]करण्यस्याग्रहे तद्घटित – [3]व्याप्तिग्रहासंभवः। ग्रहे तु सिद्धसाधनम्; पक्षतावच्छेदकसामानाधिकरण्यस्यानुमानविषयत्वा[4]दिति चेत् – न। [5]द्रव्यत्वमितरभेदसमानाधिकरणमिति ग्रहेऽपि द्रव्यमितरभिन्नमित्युद्देश्यप्रतीत्यभावेन सिद्धसाधनायोगात्।

एतेन यत्र साध्यनिश्चयः तत्र हेतोर्निश्चये सिद्धसाधनम्; अभावनिश्चयेऽसाधारण्यमित्यपास्तम्। द्रव्यत्वसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितेस्साम्राज्यात्।

---

कारणत्वम्। एवं समवायेन द्रव्यवति कपालादौ समवायेन जन्यद्रव्यानुत्पत्तेः समवायावच्छिन्नद्रव्याभावस्यापि तत्र कारणत्वम्। तथा च [6]जन्यद्रव्यत्वरूपकार्यतावच्छेदकघटकतया द्रव्याभावत्वरूपकारणतावच्छेदकघटकतया च द्रव्यत्वजातिसिद्धिः। तत्र गुणवत्त्वस्य घटवत्त्वे [घटकत्वे] गौरवादिति भावः।

अन्यथा – जन्यभावत्वावच्छिन्नं प्रति द्रव्यत्वेन समवायिकारणत्वानभ्युपगमे।

---

1 'न चैवं .... .... संभवात्' इत्यन्तस्त्रुटितः इ.

2 °करण्याग्रहे इ.

3 'व्याप्ति' नास्ति इ.

4 'इति चेत्' नास्ति इ.

5 'ननु' इत्यधिकः इ.

6 'जन्य .... .... द्रव्यत्वजाति' इत्यन्तस्त्रुटितः क.

वस्तुतोऽनुमानं त्रिविधम् – केवलान्वयि, अन्वयव्यतिरेकि, केवलव्यतिरेकि – भेदात् । तत्राद्ययोः स्वस्वव्यापकसाध्यसामानाधिकरण्यादिरूपान्वयव्याप्ति-विशिष्टज्ञानेऽन्वयसहचारग्रहापेक्षायामपि अन्त्ये व्यतिरेकव्याप्तिग्रहे न तदपेक्षा। न च साध्याप्रसिद्धौ यत्र साध्याभावः [1]तत्र हेत्वभाव [2]इत्येवं व्यतिरेक – [3]व्याप्ति – [4]ग्रहासंभवः। घटादौ [5]साध्यप्रसिद्धेरुक्तत्वात् ।

अथैवमन्वय्यनुमानमपि संभवतीति चेत् किं तेन । उपायस्योपायान्तरा-दूषकत्वादन्वयव्याप्तिघटकविशेषणाद्यनुपस्थितौ व्यतिरेकव्याप्तिग्रहस्यैव संभवाच्च।

एतेन – व्यतिरेकिणि व्यतिरेकसहचारेणान्वय – व्याप्ते [व्याप्ति] रेव गृह्यते, केवलान्वयि [6]साधारण्यात् तस्या एवानुमिति प्रयोजकत्वात् इत्याचार्यमतमपास्तम् ॥

---

अथ तथापीति। घटादावितरभेदरूपसाध्यप्रसिद्धावपीत्यर्थः।

एतेन – [7]द्रव्यत्वसामानाधिकरण्येनेत्यादि वक्ष्यमाण – [8]समाधानेन। [9]सिद्धसाधन-मिति। तत्र [यत्र] साध्यनिश्चयः तत्र पक्षतावच्छेदकीभूतहेतोः निश्चये पक्षतावच्छेदक-साध्यसामानाधिकरण्यस्य निश्चयादिति भावः। असाधारण्यमिति। निश्चितसाध्यवत् व्यावृत्तत्वादिति भावः।

केवलव्यतिरेकिणि हेतुसाध्यसहचारग्रहं विनैवोपपत्तिमाह – वस्तुत इति।

---

1 'तत्र हेत्वभावः' नास्ति इ.
2 इत्येव अ. आ. ई.
3 '°व्याप्ति' नास्ति इ.
4 °ग्रहसंभवः ई.
5 साध्याप्रसिद्धेः ई.
6 साधारण्यः ई.
7 'द्रव्यत्वसामानाधिकरण्येनेत्यादि' नास्ति ग.
8 दूषणेन ग.
9 'सिद्ध .... ... निश्चयादिति भावः' इत्यन्तस्त्रुटितः ग.

किं च व्यतिरेकेणैव द्रव्ये इतरभेद इत्याकाराप्रसिद्ध – [1]साध्यकानुमितिरसंभवति । [2]येन संबन्धेन [3]यद्धर्मावच्छिन्नस्य व्यापको यः तदभावेन व्यापकताघटकसंबन्धावच्छिन्नप्रति[4]योगिताकेन पक्षे तेन संबन्धेन तद्धर्मावच्छिन्ना – [5]भावस्य सिद्धेः । प्रकृते तादात्म्येन द्रव्येतरत्वावच्छिन्नस्य व्यापको यो

---

एतेन – अन्वयव्याप्तिघटकेत्याद्युक्तेन ।

केवलव्यतिरेकिणि साध्यप्रसिद्धिं विनाऽप्युपपत्तिमाह – किं चेति । [6]साध्याप्रसिद्धौ [7]तद्विशिष्टपक्षानुमितेरसंभवात् [8]तद्विशेष्यिकां तामाह – द्रव्ये इति । ननु साध्याप्रसिद्धौ [9]तदभावानिरूपणे व्यतिरेक – [10]व्याप्त्यग्रहात् साध्यविशेष्यिकाऽप्यनुमितिः कथमत आह – [11]येन संबन्धेनेत्यादि । व्यतिरेकव्याप्तिस्थले यद्व्याप्यत्वेनाभिमतं तदत्र तद्धर्मावच्छिन्नस्येत्यनेन कीर्त्यते । तेन संबन्धेनेति व्याप्यतावच्छेदकसंबन्धकीर्तनम् । यथा 'वह्निमान् धूमात्' इत्यादौ व्यतिरेकित्वे स्वरूपसंबन्धेन वह्न्यभावत्वावच्छिन्नं व्याप्यम् । [12]स्वरूपसंबन्धेन च धूमाभावत्वावच्छिन्नं व्यापकम् । तथा च स्वरूपसंबन्धावच्छिन्न प्रतियोगिताकेन धूमाभावत्वावच्छिन्नाभावेन धूमेन स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावत्वावच्छिन्नाभावस्य वह्नेः पर्वतपक्षे सिद्धिः । व्यापकतावच्छेदकसंबन्धेन व्यापकतावच्छेदकरूपेण व्यापकनिवृत्तौ, व्याप्यतावच्छेदकसंबन्धेन व्याप्यतावच्छेदकरूपेण व्याप्यनिवृत्तेरावश्यकत्वात् । ह्रदादौ संयोगेन पूर्वक्षणविशिष्टधूमाभावत्वेन वा धूमा –[13]भावनिवृत्तिसत्त्वात् [14]वह्न्यभावनिवृत्ति-

---

1 साध्यानुमिति ई.
2 तेन इ.
3 तद्धर्मा° इ.
4 °योगिताकेतर अ.
5 °भावासिद्धेः ई.
6 साध्यप्रसिद्धौ क.
7 'तदभावनिरूप' इत्याधिकः क.
8 तद्विशेष्यिकांशेऽपि साध्यतत्प्रसिद्धौ क.
9 तदभावनिरूपणे क.
10 °व्याप्यग्रहात् क.
11 तेन क.
12 'स्वरूप .... .... भावेन धूमेन' इत्यन्तस्त्रुटितः क.
13 °भाववृत्ति° ग.
14 वह्न्यभाववृत्ति° ग.

द्रव्यत्वाभावः तदभावेन द्रव्यत्वेनेतर [द्रव्येतर] त्वावच्छिन्नभेदासिद्धेर - प्रत्यूहत्वात्। इत्थमेवाकाशादिभिन्नभेदसिद्धिः सुघटेति दिक् ॥

इति श्रीमज्जयरामन्यायपञ्चाननकृतायां पदार्थमालायां

द्रव्यनिरूपणं समाप्तम् ॥

---

वारणाय व्यापकतावच्छेदकसंबन्धेन व्यापकतावच्छेदकरूपेण च [1]व्यापकनिवृत्त्यभिधानम्। एवं च पर्वते तादृशधूमाभावनिवृत्तिसत्त्वात् कालिकादिना महानसीयवह्न्यभावत्वेन वा वह्न्यभावनिवृत्तिवारणाय व्याप्यतावच्छेदकसंबन्धेन व्याप्यतावच्छेदकरूपेण च व्याप्यनिवृत्त्यभिधानमिति। प्रकृते – 'द्रव्यमितरेभ्यो भिद्यते द्रव्यत्वादि'त्यत्र। द्रव्येतरत्वावच्छिन्न भेद इति। द्रव्येतरस्य तादात्म्येन द्रव्यत्वाभावव्याप्यग्रहात् तदभावेन द्रव्यत्वेन हेतुना तादात्म्येन द्रव्येतरत्वावच्छिन्नाभावस्य भेदरूपस्याप्रसिद्धस्यैव सिद्धेरप्रत्यूहत्वमित्यर्थः। इत्थमेव – द्रव्यत्वहेतुकेतरभेदसिद्धिरीत्यैव। आकाशादीति। 'आकाशः इतरेभ्योभिद्यते, आकाशत्वात्' इत्यत्र [2]आकाशेतरभेदसिद्धिः आकाशेतरभेदेत्याकारैव [आकाशे इतरभेद इत्याकारैव] सुघटा। आकाशेतरभेदस्य साध्यस्याकाशमात्रनिष्ठतया तस्य चैकव्यक्तितया क्वापि प्रसिद्धि [प्रसिद्ध्य] संभवादिति ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत श्रीमद्दुर्गकवीन्द्रतनूज-

मुद्गलविदुषसूनुना भास्करेण कृते पदार्थमालाप्रकाशे

द्रव्यनिरूपणं समाप्तम् ॥

---

1 'व्यापक .... .... व्याप्यतावच्छेदकरूपेण च' इत्यन्तस्त्रुटितः क.

2 'अव्यापकवृत्त्यभिधानम्। एवं च पर्वते तादृशधूमाभावनिवृत्तिसत्त्वात् कालिकादिना महानसीयवह्न्यभावत्वेन च' इत्यधिकः क.

## अथ सुवर्णतमोवादौ

अथ नवैवेत्यसिद्धम्; सुवर्णान्धकारादेरतिरिक्तत्वात्। तथा हि – सुवर्णं न पार्थिवं, असति विरोधिद्रव्यसंयोगेऽत्यन्तानलसंयोगे सति तदनुच्छिद्यमान-द्रवत्वाधिकरणत्वात्; यन्नैवं, तन्नैवं, यथा घटः, यथा वा जलमित्यन्वयेन दृष्टान्तः। जलमध्यस्थक्रथ्यमानघृतादौ व्यभिचारवारणायासति विरोधि [1]इत्यादि। अग्नि-संयोगनाश्यत्ववति घृतादौ व्यभिचारवारणाय सत्यन्तम्। तद्द्रवत्वस्य सामानाधिकरण्या [समानाधिकरणा] त्यन्ताग्निसंयोगाकालीनत्वाददोषः। असिद्धिवारणाय तदिति। न चैवमपि घृतादौ व्यभिचारः, वैशेषिकनये पाकात् तत्र द्रवत्वानुच्छेदादिति वाच्यम्। तन्नये स्वर्णारम्भकपरमाणोः पक्षत्वात्। परमाणुत्वविशेषितस्योक्त [2]हेतुत्वाददोषत्वात्। न वा तेजः महत्वोद्भूतरूपवत्वे

---

सुवर्णमित्यादि। तदनुच्छिद्यमान इति। अत्यन्तानलसंयोगानुच्छिद्यमाने इत्यर्थः। सत्यन्तं - अत्यन्तानलसंयोगे सतीति सत्यन्तम्। ननु सत्यन्तेन सतिसप्तमीसमभिव्याहारा-दत्यन्तानलसंयोगसमानकालीनत्वं तदनुच्छिद्यमानद्रवत्वे प्रतिपाद्यते। तथा चानलसंयोगा-नाश्यघृतद्रवत्वस्यापि व्यधिकरणात्यन्तानलसंयोगसमानकालीनसत्त्वात् व्यभिचारतादवस्थ्य-मत आह – तद्द्रवत्वस्येति। अग्निसंयोगानाश्यघृतद्रवत्वस्येत्यर्थः। समानाधिकरण इति। तथा च समानाधिकरणात्यन्तानलसंयोगे सतीत्येव सत्यन्तं विवक्षितमिति भावः। असिद्धि इति। सुवर्णस्यापि वस्तुगत्योच्छिद्यमानद्रवत्वाधिकरणत्वात् हेत्वसिद्धिः; तद्वारणाय तदित्य-त्यन्तानलसंयोगार्थकमुपात्तमित्यर्थः। तथा चात्यन्तानलसंयोगानुच्छिद्यमानद्रवत्वाधिकरण-त्वस्य सुवर्णे सत्त्वात् नासिद्धिरिति भावः। ननु वैशेषिकनये स्वर्णारंभकपरमाणोः पक्षत्वेऽपि

---

1 इत्यन्तम् आ.

2 °हेतुत्वेनादोष° आ.

सति पराप्रकाशत्वात् [1]गुरुत्वात् पीतरूपत्वाच्च । अत एव न जलादिकमपीति स्वर्णमधिकम् ॥

तथा तमो द्रव्यं, क्रियावत्त्वात् रूपवत्वाच्च, परत्वापरत्वाश्रयत्वाच्च । न चासिद्धिः; 'चलति छाया' 'नीलं तमः' 'इदं तमः परं' 'इदं तमः अपरं' इति प्रतीतेः । तच्च न पृथिवी, जलं, तेजः वायुः वा निस्पर्शत्वात्; नापि मनः, रूपवत्वात्; [2]नापि आकाशादि, क्रियावत्त्वादिति तमोऽधिकम् । तदुक्तम् :—

"तमः खलु [3]चलन्नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यात् नवभ्यो भेत्तु मर्हति" ॥ इति ॥

मैवम् — सुवर्णं हि द्विविधम्; पार्थिवं तैजसं च । [4]तत्रात्यन्ताग्निसंयोगानुच्छिद्यमानद्रवत्वाधिकरणस्य तैजसस्यापार्थिवत्वमिष्टम् । पार्थिवस्य पक्षत्वे त्वसिद्धिः । पीतरूपवतो पार्थिवस्या – [5]द्रुतत्वात् । तद्द्रवत्वस्य

---

पार्थिवत्वाभावसाधकप्रागुक्तहेतोः घृतादौ सत्त्वात् व्यभिचारतादवस्थ्यमत आह – परमाणुत्व इति । [6]अत एव – पीतरूपत्वादेव ।

पार्थिवस्येति । पार्थिवसुवर्णस्य पक्षत्वे तत्र प्रागुक्तहेत्वसिद्धिरित्यर्थः । असिद्धिमेव विवृणोति – पीतरूपवत इति । अद्रुतत्वात् – [7]द्रवत्वानधिकरणत्वात् । तथा च सुतरां तत्र तदनुच्छिद्यमानद्रवत्वाधिकरणत्वाभाव इति भावः । नन्वत्यन्तानलसंयोगे तत्रोपलक्ष्यमाण-

---

1 गुरुत्ववत्वात् आ.
2 न वा ई.
3 'चलत्' नास्ति ई.
4 तंत्राग्नि ई.
5 द्रुतत्वात् ई.
6 'अत .... .... विवृणोति' इत्यन्तस्त्रुटितः ग.
7 द्रव्यत्व° ई.

पार्थिवत्वे तेजः संयोगानाश्यत्वानुपपत्तेः। [1]द्रवत्वप्रतीतिस्तु जलमध्यस्थमषीक्षोद इव परम्परया। तैजसस्य पराप्रकाशकत्वं च पार्थिवपीतरूपाभिभूतरूपवत्वादविरुद्धं महत्वोद्भूतानभिभूतरूपवत्तेजस एव परप्रकाशकत्वात्। न च स्वर्णरूप – [2]परमनुद्भूतमेवास्तु; तर्हि सुवर्णस्याप्रत्यक्षतापत्तेः। अभिभूत – [3]रूपवत्तेजसस्तु महा – [4]रजतरक्तपटस्येवाप्रत्यक्षत्वम्। मध्यन्दिन – [5]उष्णादि [उल्कादि] प्रकाशस्यापि तादृशस्य [6]प्रत्यक्षत्वमेव माषराशिस्थमषीघुटकवत् विविच्यानुपलंभमात्रम्। तस्य रूपमेव [7]तद्वन्नोपलभ्यते ॥

परे तु – पार्थिवस्य [8]द्रुतत्वेऽपि हेतुविशेषणासिद्धिः। पार्थिवसुवर्णविरोधिद्रवद्रव्यसंबन्धवत्। अत्यन्ताग्निसंयोगे सति तदनुच्छिद्यमानपार्थिव-

---

द्रवत्वं पार्थिवसुवर्णनिष्ठमेवेति तत्सिद्धिरत आह – तद्द्रवत्वस्येति। द्रवत्व इति। पार्थिवसुवर्णे द्रवत्वप्रतीतिस्त्वित्यर्थः। ननु तैजसं सुवर्णं यदि पीतरूपवतोऽतिरिक्तं तदीयस्य पराप्रकाशकत्वं स्यादत आह – तैजसस्येति। तादृशस्य – सौरालोकाभिभूतरूपवतः। माषराशिस्थ इति। यथा माषराशिस्थमषीघुटकस्य माषराशितो विविच्यानुपलम्भः तथा मध्यन्दिनोल्कादिप्रकाशस्यापि सौरालोकतो [9]विविच्यानुपलम्भमात्रं (उपलंभस्य) भवत्येव। परं तु तदीयरूपमभिभूतत्वात् [10]तद्वन्नोपलभ्यत इत्यर्थः ॥

परेत्विति। पार्थिवस्येति। पार्थिवसुवर्णस्य तदानीं द्रुतत्वेऽपि पार्थिवत्वाभावसाधकहेतोः प्रागुक्तस्य विशेषणमसति विरोधिद्रवद्रव्यसंयोगे इत्येवंरूपं तस्य तत्रासिद्धिरित्यर्थः। तथा च

---

1 द्रव्यत्व° क.
2 'परं' नास्ति अ.
3 °रूपवत्तु ई.
4 °रञ्जनरक्त° ई.
5 °उदिततारकादि° ई.
6 प्रत्यक्षमेव ई.
7 तन्नोप° ई.
8 हुतत्वेऽपि इ. द्रवत्वेऽपि ई.
9 विविच्योपलंभमात्रस्तुभवत्येव क.
10 तद्वदन्नोप° ग.

द्रवत्वाधिकरणत्वात्, जलमध्यस्थक्वथ्यमानघृतवदित्यनुमानात् तैजससुवर्णसिद्धिरित्याहुः ॥

वस्तुतः [1]पीतं सुवर्णं द्रुतमिति साक्षात्संबन्धेन द्रवत्वप्रतीतेः बाधकं विना भ्रमत्वायोगात् द्रुतं पार्थिवमेव सुवर्णं, न तु तैजसं, मानाभावात्। पार्थिवत्वाभावसाधकहेत्वसिद्धेः। 'इदं द्रुतं' 'द्रुततरमि'ति प्रतीतेरत्यन्ताग्निसंयोगेन [2]सुवर्णेऽपकृष्टद्रवत्वनाशे उत्कृष्टद्रवत्वस्वीकारात् ।

अथैवं सुवर्णादौ पाकात् द्रवत्वनाशे द्रवत्वान्तरोत्पत्तिनियमः, न तु घृतादाविति वैषम्यं कुतः; सुवर्णादावुत्तरोत्तरं द्रवत्वपाकजनकविजातीयतेजस्संयोगानुवृत्तेः। न तु घृतादौ तथैव फलबलेन कल्पनात् पार्थिव एव तृणादौ तदारंभदशापन्नपरमाणौ च तेजस्संयोगात् द्रवत्वं, किन्तु घृतादौ तदारंभक[3]दशापन्नपरमाणौ चेत्यत्र त्वयाऽपि तथैव वाच्यत्वात् ।

---

विशिष्टहेत्वभावात् न तत्र व्यभिचार इति भावः। हेतुविशेषणसिद्धिमुपपादयितुं तैजसं सुवर्णं साधयति – पार्थिव इति। आहुरित्यस्वरसोद्भावनम्। तद्बीजं तु पार्थिवसुवर्णस्य निरर्थकद्रवत्वाभ्युपगमे गौरवम्। [4]योग्यकटकादेस्तु तैजसद्रवत्वेनाऽप्युपपत्तेरिति ॥

सुवर्णद्वय[5]कल्पनायां गौरवादाह – वस्तुत इति।

अथेति। एवं–सुवर्णस्य पार्थिवत्वे। कुत इति प्रश्ने उत्तरमाह – सुवर्णादाविति। [6]न तु घृतादाविति। घृतादौ तूत्तरोत्तरं द्रवत्वजनकविजातीयतेजस्संयोगाननुवृत्तेः वैषम्यमित्यर्थः।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | 'तु तत्' इत्यधिकः | आ. | 4 | भोग्य° | क. |
| 2 | 'सुवर्णे' नास्ति | ई. | 5 | °कल्पनागौर° | क. |
| 3 | 'दशापन्न' नास्ति | ई. | 6 | 'न तु घृतादौ' नास्ति | क. |

[1]अथ तथापि जलमध्यस्थक्वथ्यमानघृतादाविव सुवर्णादौ पाकजपीतेतर-रूपविरोधिद्रवद्रव्यमावश्यकमिति चेत् — न । द्रवद्रव्यत्वेन विरोधित्वे [2]द्रुतसुवर्णमध्यवर्ति — [3]पीतपटादावपि पीतेतररूपानापत्तेः । उपष्टम्भकाख्य-संयोगवत्वेन विरोधित्वेन जलादिसाधारण्यं घृतादौ जलस्यानुपष्टम्भकत्वात् रजतादौ पीतेतररूपानापत्तिश्च तैजससुवर्णत्वेन विरोधित्वान्तरकल्पने पार्थिव-सुवर्णत्वेनैव तत्कल्पनैव युक्ता ।

वस्तुतः विजातीयतेजस्संयोगाभावादेव न पीतेतररूपोत्पत्तिरिति सुवर्णं नाधिकम् ॥

---

पुनः सुवर्णं साधयितुं शङ्कते—अथेति । तथापि--घृतसुवर्णयोः द्रवत्ववैषम्योपपादनेऽपि । विरोधिद्रवद्रव्यमिति । तथा च तदेव [4]सुवर्णं तैजसमिति भावः । सुवर्णादौ पाकजपीते-तररूपविरोधित्वेनाशङ्कितद्रवद्रव्यस्य [5]तद्विरोधित्वं द्रव — [6]द्रव्यत्वेनोपष्टम्भकाख्य-संयोगत्वेन तैजससुवर्णत्वेन वा । तत्राद्यं निराकरोति — द्रवद्रव्यत्वेनेति । द्वितीयं निराकरोति—उपष्टम्भक इति । पार्थिवसुवर्णेन सह तैजसस्य तस्य धारणाकर्षणहेतूपष्टम्भकाख्यसंयोगस्यैव वाच्यत्वादिति भावः । तृतीयं निराकरोति — तैजससुवर्णत्वेनेति । युक्तेति । न च पृथिव्याः पाकजपीतेतररूपविरोधित्वं कुत्राप्यदृष्टमिति वाच्यम् । मणिविशेषे दृष्टत्वादिति ।

पार्थिवसुवर्णत्वेन विरोधित्वान्तरकल्पनं विनैव [7]लाघवादुपपत्तिमाह — वस्तुत इति । तैजससुवर्णत्वेन विरोधित्वकल्पनेऽपि विजातीयतेजस्संयोगस्य तद्धेतुत्वमावश्यकमिति तदभावादेव न तत्र पाकजपीतेतररूपापत्तिरित्यर्थः । परमार्थतस्तु तैजसमेव सुवर्णम् ।

---

1 'अथ' नास्ति ई.
2 पदादौ घृत° ई.
3 'पीतपटादावपि' नास्ति ई.
4 तैजसं सुवर्णमिति ग.
5 'तत्' नास्ति क.
6 द्रव्येन क.
7 लाघवादपर्याप्तिमाह क.

नापि तमो द्रव्यम्; आलोक – निरपेक्ष्येतर [निरपेक्ष]चक्षुर्ग्राह्यत्वात्। किं च तमसो नीलरूपवत्वे पृथिवीत्वं, नीलत्वावच्छिन्ने पृथिवीत्वेन समवायिकारणत्वात्। न च तदपि युक्तम्; स्पर्शराहित्यात्, पृथिवीत्वस्य स्पर्शनियतत्वात्। [1]घ्राणादिवदनुद्भूतस्पर्शोऽसाविति चेत् – अनुद्भूतरूपमपि स्यात्। [2]पार्थिवोद्भूतरूपस्योद्भूतस्पर्शव्याप्यत्वात् तयोरेकजातीयतेजस्संयोगप्रभवत्वे लाघवात् तथा व्याप्तिसिद्धेः ।

न चेन्द्रनीलमणेरसन्निकर्षेऽपि तदीयप्रभायां नीलरूपारोपात् [3]तत्सहचरित नीलभागो स्वीकार्यः। तत्र च नोद्भूतस्पर्श इति नियमासिद्धिः। शङ्के

---

"अग्नेरपत्यं प्रथमं हिरण्यम्" इति श्रुत्या तस्य तेजोविकृतित्वाभिधानात्। न हि विजातीययोः प्रकृतिविकृतिभावः संभवति; [4]गोरप्यश्वोत्पत्यापत्तेः। न च [5]तैजसत्वे शुक्लरूपापत्तिः, इष्टत्वात् अनुपलंभस्तूपष्टम्भकपार्थिवपीतरूपेणा – [6]भिभवादिति दिक्॥

तमसः द्रव्यान्तरत्वं निरसितुमादौ द्रव्यत्वमेव निरस्यति – नापि तम इति। ननु प्रदीपादेरिव तमसोऽप्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वेऽपि न द्रव्यत्वविरोधः। न हि प्रदीपादिचाक्षुषे तस्यालोकत्वेन हेतुत्वं, किं तु विषयत्वेनैवेत्यत आह – किं चेति।

[7]न चेन्द्रनील इति। इन्द्रनीलमणिसन्निकर्षे तद्गतनीलेनानुभूयमानं तत्प्रभायामारोप्यते इति वक्तुं शक्यम्। तथा च तत्प्रभासहचरितानुद्भूत(स्य) नीलाभावकल्पनात् पार्थिवोद्भूतरूपस्पर्शयोः व्याप्तिः निराबाधैव स्यात् अतः इन्द्रनील – मणिसन्निकर्षः [मणेरसन्निकर्षः]

---

1 घ्राणादाविवानुद्भूतोऽसाविति ई.
2 पार्थिवोद्भूतस्पर्श° अ.
3 प्रभासह° ई.
4 गोरश्वोत्पत्यापत्तेः ग.
5 तैजसे शुक्ल° ग.
6 °भिधानाभावादिति क.
7 'न च .... ... उक्त इति भावः' इत्यन्तस्त्रुटितः ग.

पीतादेरिव स्मर्यमाणस्यैव [1]नीलस्य तत्रारोपात्। न चात्र सर्वैरेव नीलानुभवात् अनुभूयमानारोपत्वं युक्तम्; तादृशनीलद्रव्यादिकल्पनागौरवात्। न च कुङ्कुमादिपूरितस्फटिकभाण्डे बहिरारोप्यमाणपीतरूपस्याश्रयेऽव्यभिचारः; तत्रापि स्मर्यमाणस्यैवा-[2]रोपात्। बहि-[3]र्गन्धोपलब्धिस्तु अनुद्भूतरूपभागस्यैव दूरतो वाय्वाकृष्टस्येव। किं चानावश्यकेनालोकाभावेनैव तमोव्यवहारोपपत्तौ किमतिरिक्तानन्तद्रव्यतन्नाशकल्पनया। न चालोकस्य तमो-[4]विरहात्मत्वसंभवः। अन्यथाऽनुपपद्यमानोष्णस्पर्शभास्वररूपत्वात्। न [5]ह्युष्णस्पर्शादिक-[6]मन्यत्रास्ति, येनारोप्येत पाचकत्वाच्च। न चा भावत्वे तमसः उत्कर्षापकर्षासंभवात्, अन्धतमसा - [7]दिरूपवत्वं न स्यादिति वाच्यम्। महत्वोद्भूतानभि-

---

उक्त इति भावः। दूरतो वाय्वाकृष्टस्येवेति। [8]न तु सन्निहित - [9]पीतरूपाश्रयस्यबहिर्गन्धोपलब्धिः येन पीतारोपस्यानुभूयमानारोपत्वं स्यात्। वाय्वाकृष्टभागे च कुङ्कुमरूपवैषम्येऽपि गन्धसाम्यसंभवादिति भावः। आवश्यकेन - तमः प्रदेशे आवश्यकेन। [10]आलोकाभावेनेति। प्रौढप्रकाशतया च तेजस्संसर्गाभावेनेत्यर्थः। यथाश्रुते तत्र प्रौढालोक-[11]सामान्याभावानुपपत्तेः प्रौढिः सौरालोकादिगतोष्मादिव्यावृत्तो जातिविशेष इति। वैपरीत्यमाशंक्य निषेधति न चालोकस्येति। [12]पाचकत्वाच्चेति। रूपादिपरावृत्तिजनकसंयोगनिरूपकत्वाच्चेत्यर्थः।

---

| | | |
|---|---|---|
| 1 | 'नीलस्य' नास्ति | ई. |
| 2 | °शेषत्वात् | ई. |
| 3 | र्गण्डोप° | ई. |
| | °र्जात्युप° | इ. |
| 4 | विरहात्मना | इ. |
| 5 | ह्यात्मस्पर्शा° | अ. |
| 6 | °मत्रास्ति | अ. ई. |
| 7 | 'अवतमसा' इत्यधिकः | आ. |
| 8 | ननु | क. |
| 9 | 'पीत' नास्ति | क. |
| 10 | 'आलोका ... ... तत्र प्रौढ' इत्यन्तस्त्रुटितः | ग. |
| 11 | 'सामान्य' नास्ति | ग. |
| 12 | वाचकत्वाच्च | क. |
| | पावकत्वाच्च | ग. |

भूतरूपवद्यावत्तेजसामभावेऽन्ध – [1]तमसत्वस्य तादृशकतिपयतेजसामभावेऽव-तमसत्वस्य स्वीकारात् ।

अथाभावत्वे तमसो प्रतियोगिज्ञानं विना[2]ज्ञानं न स्यात्; अभावग्रहे [3]तज्ज्ञानस्यान्वयव्यतिरेकाभ्यां हेतुत्वावधारणादिति चेत् – न । आलोकं जानतामेव तमसः प्रत्यक्षत्वस्वीकारात् । तदाहुराचार्याः — "गिरिदरविवरवर्तिनस्तु [4]यदि योगिनो न ते तिमिरावलोकिनः; तिमिरदर्शिनश्चेत् नूनं स्मृतालोका" (किरणावलिः पु. ९) इति । न चैवं तमसोऽऽलोकाभावत्वेन ग्रहे इदन्त्वेनोप-स्थिते तस्मिन् भावत्वाभावत्वसंशयो न स्यादिति वाच्यम् । तमस्यभावत्वेन ग्रहेऽपीदन्त्वावच्छेदेना – [5]भावत्वाग्रहेण संशयसंभवात्, इदन्त्वावच्छेदेन संशये इदन्त्वावच्छेदेन विरोधिनिर्णयस्यैव प्रतिबन्धकत्वात् ॥

---

न ह्यभावे तादृशसंयोगनिरूपकत्वं संभवतीति नालोकस्य तमोविरहात्मत्वमिति भावः । अन्धतमसेत्यादि । उत्कृष्टं तमोऽन्धतमसम् । अपकृष्टं तमोऽवतमसम् । अत्यन्तापकृष्टं तमः छायेत्यादिरूपत्वं तमसो न स्यादित्यर्थः । न ह्यभावे उत्कर्षापकर्षौ जातिरूपौ संभवतः । 'उत्कृष्टो वह्न्यभावः' 'अपकृष्टो' घटाभाव' इति प्रतीत्यभावादिति । महत्वोद्भूत इति । तथा च महत्वोद्भूतानभिभूतरूपवद्यावत्तेजःप्रतियोगित्वमेव तत्रापकृष्टत्वम्, न तु जातिरूपमिति तमसोऽभावत्वे न कापिक्षतिरिति भावः । अवतमसत्वस्येत्यनन्तरं रूपत्वावान्तर-जातिग्राहकतेजस्संवलिते महत्वोद्भूतानभिभूतरूपवद्यत्किंचित्तेजोभावेछायात्वस्येति शेषः ॥

नव्यमतमाह – वस्तुतोऽभावस्येति ।

---

1 °तमत्वस्य ई.
2 न ज्ञाने स्यात्° आ.
3 तद्धानस्य अ.
प्रतियोगिज्ञानस्य इ.
4 ये अ. इ. ई.
5 भाववत्वा° ई.

वस्तुतोऽभाव[स्य]ज्ञानमात्रे प्रत्यक्षमात्रे वा न प्रतियोगिज्ञानं हेतुः ; प्रमेयत्वादिनाऽ[1]भावग्रहेऽभावत्वसामान्य[2]लक्षणाधीनप्रत्यक्षे च व्यभिचारात् । नापि तदभावलौकिक प्रत्यक्षे तज्ज्ञानं हेतुः । प्राचां मते घटात्यन्ता – [3]भावादेः [4]घटादितत्प्रागभावध्वंसप्रतियोगिकस्य द्वयाग्रहेऽपि एकग्रहे प्रत्यक्षात् । नव्यमते समनियतैकत्व – परिमाणाद्यभवस्यैकमात्रग्रहे प्रत्यक्षाच्च ॥

अथ तदभावलौकिकप्रत्यक्षे [5]तदभावयत्किंचित्प्रतियोगिज्ञानत्वेन हेतुत्वात् न व्यभिचार इति चेत् – न; तादृशहेतुत्वे मानाभावात् । वह्न्यादिज्ञानशून्यस्यापि सन्निकृष्टे ह्रदादौ [6]तत इदन्त्वादिनापि वह्न्याद्यविशेषिततदभावलौकिकप्रत्यक्षस्येष्टत्वात् । इदन्त्वेन तमः प्रत्यक्षवत् [7]वह्न्यादि – विशेषिततत्प्रत्यक्षं तु विशेषणतावच्छेदकवह्नित्वादिप्रकारकज्ञानसाध्यम् ॥

---

सन्निकृष्टे – इन्द्रियसन्निकृष्टे । ततः – इन्द्रियसन्निकर्षात् । वह्न्यादिविशेषित इति । अत्र वह्न्यभावेत्यादिप्रत्यक्षं तु विशिष्टवैशिष्ट्यावगाहिबोध – [8]रूपत्वात् विशेषणतावच्छेदकवह्नित्वप्रकारकवह्निज्ञानसाध्यं भवत्येव ; परन्तु तज्ज्ञानस्य प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानत्वेन तत्र हेतुत्वम् ; किं तु विशेषणतावच्छेदकप्रकारकविशेषणज्ञानत्वेनैवेति भावः ॥

प्रतियोगिज्ञानहेतुत्ववादी शङ्कते - अथेति । एवं – प्रतियोगिज्ञानस्य हेतुत्वे । नेत्याकारक इति । प्रतियोगिज्ञानविरहदशायां सन्निकर्षमात्रात् नेत्याकारकप्रत्यक्षापत्तिरित्यर्थः । प्रतियोगिज्ञान – [9]सत्त्वे तद्भानस्यापि तत्र संभवेन तादृशप्रत्यक्षापादनायोगादिति भावः ।

---

1 °भावा हि ग्रहे भावत्व° अ.
2 लक्षणाधीनाप्रत्यक्षे ई.
3 °भावयोः इ.
4 'घटादि ... .... परिमाणादि' इत्यन्तस्त्रुटितः आ.
5 तदवयवयत्किंचित् आ.
6 अन्ततः अ. आ. इ.
7 वह्न्यादिप्रत्यक्षं इ.
8 °रूपत्वविशेषण° ग.
9 °सत्त्वेन भानस्यापि क.

अथैवं नेत्याकारक[1]प्रत्यक्षापत्तिः । न [2]चाभावस्यापीदन्त्वेन ग्रहादापादकाभावः । प्रथमम[3]भावाभावत्वयोः निर्विकल्पकेऽभाव इत्याकारकप्रत्यक्षस्य दुर्वारत्वादिति चेत् – न । अभावत्वमात्रेण प्रत्यक्षस्येष्टत्वात्; 'शून्यमिदं दृश्यत' इत्यादिप्रत्यात् । [4]इत्थमेवाभावत्वस्य भावभेदस्य पिशाचादि – [5]भेदवत् योग्यस्य 'घटो नास्ती'त्यादौ स्वरूपतो [6]भानं नास्तीति प्राचां संभवदुक्तिकम् । [7]नञुल्लेखस्तु प्रतियोगिवाचकपदनियतो न सार्वत्रिकः । अस्तु वाऽभावप्रत्यक्षे योग्यधर्मावच्छिन्न – [8]ज्ञानत्वेन हेतुत्वम् । [9]एतेन नेत्याकारकप्रत्यक्षवारणायेन्द्रियसंब[द्ध]न्धविशेषणताया प्रतियोगिविशेषिताभावप्रत्यक्षहेतुत्वे-

---

न चेति । नेत्याकारके अभाव इत्याकारके वा प्रत्यक्षे अभावत्वमपि भासते । तथा चाभावरूपविशेषणज्ञानस्य पूर्वमसत्त्वात् तादृशप्रत्यक्षापादकाभाव इत्यर्थः । इत्थमेव – प्रतियोगिज्ञानाहेतुत्वेनैव । अभावत्वस्येति । यदि प्रतियोगिज्ञानं हेतुस्स्यात् तदा भावज्ञाने सत्येव तद्भेदरूपमभावत्वं 'घटो नास्ती'त्यादावपि भायात्, न त्वन्यथेति भावः । अभावत्वस्य पूर्वमनुपस्थितत्वात् स्वरूपतो भानमुक्तम् । ननु 'शून्यमिदं दृश्यत' इतिवत् नेत्याकारकप्रत्यक्षसन्निकर्षमात्रात् स्यादत आह – नञुल्लेखस्त्विति । न च [10]भावत्वविशिष्टाभावप्रत्यक्षं किंचित्प्रतियोगिविषयकमेवानुभूयते । तत्कथं प्रतियोगिज्ञानविरहेऽभावत्वमात्रेण प्रत्यक्षे इष्टापत्तिरित्यस्वरसादाह – अस्तु वेति । अभावत्वप्रकारकाभावप्रत्यक्षे प्रतियोगितावच्छेदक-

---

1 °प्रत्ययापत्तिः ई.
2 चाभावत्वस्यापि आ.
चापादकाभावः ई.
3 °भावाभावयोः आ.
4 इत्थमेव भावस्य इ. ई.
5 भेदयोग्यस्य आ.
6 भानमपि प्राचां आ. इ.
'भानं' नास्ति ई.
7 नञनुल्लेख° आ.
8 'प्रतियोगि' इत्यधिकः इ.
9 'एतेन .... .... हेतुत्वे' इत्यन्तस्त्रुटितः अ.
10 भाववत्व° क.

[1]इन्द्रियत्वस्य चक्षुः त्वगादिभेद[2]भिन्नत्वेनातिगौरवात्। प्रतियोगिधीहेतुतैव युक्ता। न च तद्धेतुत्वेऽपि नेत्याकारकप्रत्यक्षापत्तिः। उपस्थितस्य प्रतियोगिनोऽभाववैशिष्ट्यभाने बाधकाभावात्।

अथ 'अभावो न घटीय' इत्यादिबाधधीदशायां तदापत्तिः। न चे – दृशबाधबुद्धेरसंभवः; अस्याः अभावप्रतियोगितायाः घटवैशिष्ट्यावगाहित्वेन प्रतिबध्यतावच्छेदकाक्रान्तत्वादिति वाच्यम्। [3]प्रतियोगितावच्छेदकसंबधावच्छिन्ना-

---

विशिष्टप्रतियोगिज्ञानस्य योग्यधर्मावच्छिन्नज्ञानत्वेनैव हेतुत्वम्; न तु तादृशप्रतियोगित्वेने-[4]त्यर्थः। एतेनेति। 'अस्तुवे'ति कल्पाश्रयणेनेत्यर्थः। अस्य चापास्तमित्यग्रिमेणान्वयः॥

उपस्थितस्यापि प्रतियोगिनोऽभाववैशिष्ट्यभाने बाधक – माशङ्कते – अथेति। तदापत्तिः – नेत्याकारक [5]प्रत्यक्षापत्तिः। न चेदृशेति। सामान्यतो [6]घटाभानादिति। बाधबुद्धेः – घटवैशिष्ट्यावगाहिज्ञानत्वं प्रतिबध्यतावच्छेदकम्; तच्च 'अभावो न घटीय' इति बाधबुद्धावपि। अस्याः – अभावे प्रतियोगितासंबन्धेन घटवैशिष्ट्यावगाहित्वात्। तथा च प्रथमं घटाभावज्ञानसत्त्वे ईदृशबाधबुद्धेरसंभव एवेत्यर्थः। प्रतियोगितेति। 'संयोगेन घटाभाववदि'त्यादिबाधबुद्धेः प्रतियोगितावच्छेदकसंयोगावच्छिन्नाधारतासंसर्गकस्य 'संयोगेन घटवदि'त्यादिज्ञानस्यैव प्रतिबध्यत्वादित्यर्थः। इदं च 'साम्राज्यादि'त्यनेनान्वयि। तादृश-ज्ञानस्यैव प्रतिबध्यत्वे उपष्टम्भकमाह – गगनादीति। वृत्तिनियामकसंयोगेन गगनाद्य-

---

1 इन्द्रियस्य अ.
2 °भिन्नाति° ई.
3 प्रतियोगिताक° ई.
4 'एतावतापि नेत्याकारकप्रत्यक्षादेर्वारणात्' इत्यधिकः क.
5 प्रत्यक्षापत्तेः क.
6 'घटाभानात्' नास्ति ग.

धारतासंसर्गकबुद्धेरेव प्रतिबध्यत्वात् गगनाद्यभाववत्तानिर्णयेऽपि संयोगमात्रेण गगनादिमत्ताबुद्ध्युदयात् प्रतियोगितया घटवद्भेदबुद्धेः साम्राज्यात्। [1]एतेन प्रागुक्तबाधधीदशायामपि घटाभावबुद्धौ प्रतियोगितामात्रेण घटवैशिष्ट्यभाने बाधकाभावात् [2]नेत्याकारकप्रत्यक्षापत्तिरित्युक्तावपि न क्षतिरिति चेत् – न। तद्दशायामपि सामान्यतोऽ[3]भावत्वनिर्विकल्पके [4]भानसंभवात् घटत्वाद्यवच्छिन्न-

---

भाववत्तानिर्णयेऽपि प्रतियोगितानवच्छेदकवृत्त्यनियामकसंयोगेन गगनादिमत्ताज्ञानोदयादित्यर्थः। प्रतियोगितयेति। 'अभावो न घटीय' इति बाधबुद्धेरित्यर्थः। एतेन – प्रतियोगितावच्छेदकसंबन्धावच्छिन्नाधारतासंसर्गकबुद्धेरेव बाधबुद्धिप्रतिबध्यत्वोपवर्णनेन। प्रागुक्तेति। 'अभावो न घटीय' इति बाधधीदशायामपीत्यर्थः। इत्युक्तावपि – इति समाधानोक्तावपि। न क्षतिरिति। नेत्याकारकप्रत्यक्षापादेन न किंचित् दूषणमित्यर्थः। अभावे प्रतियोगितया घटवद्भेदबुद्धौ सत्यामभावे प्रतियोगितया घटवैशिष्ट्यावगाहिघटाभावबुद्ध्यसंभवात्। प्रतियोगिताया एवात्र प्रतियोगितावच्छेदकसंबन्धत्वादिति भावः। अभावत्व इति। भावभेदरूपस्याभावत्वस्य निर्विकल्पके भावरूपप्रतियोगिवैशिष्ट्यभानवदित्यर्थः। [5]नन्वभावत्वमखण्डोपाधिः; न तु भावभेदरूपम्। तथा च तन्निर्विकल्पकदृष्टान्तेनोक्तबाधधीदशायामप्यभावज्ञाने सामान्यतः प्रतियोगिवैशिष्ट्यभानमुक्तम्; तन्नोचितम्; अतः नेत्याकारकप्रत्यक्षवारणाय प्रतियोगि[6]ज्ञानहेतुत्वमुपगम्यैवाह – घटत्व इति। घटत्वावच्छिन्नप्रकारत्वं घटादिज्ञाननिष्ठं तदन्यप्रकारत्वं [7]घटत्वाद्यवच्छिन्नं [8]तदनिरूपिताभावविषयिता यत्र

---

1 'एतेन ... .... न क्षतिः' इत्यन्तस्त्रुटितः अ. इ.

2 'न' इत्यधिकः ई.

3 'अभावत्वनिर्विकल्पके' नास्ति अ. 'अभावत्व' नास्ति आ. इ.

4 'इव प्रतियोगिवैशिष्ट्य' इत्यधिकः अ. आ. 'प्रतियोगिवैशिष्ट्य' इत्यधिकः इ.

5 न च भावत्व° ग.

6 °ज्ञानस्यैव हेतुत्वं क.

7 घटत्वाद्य° क.

8 तदनिरुक्ताभाव° क.

प्रकारत्वान्य – [1]प्रकारत्वनिरूपिताभावविषयताकप्रत्यक्षे घटादिधियो हेतुत्वाच्च । अन्यथा [2]घटाद्यभावस्य पटाद्य – [3]भावत्वेन ग्रहे व्यभिचारापत्तेः । इत्थं चाभावांशे निर्विकल्पकमभाव इत्याकारकं प्रत्यक्षं च न जायते, निखिलप्रतियोगिज्ञानकार्यतावच्छेदकाक्रान्तस्य ईदृशप्रत्यक्षस्य यत्किंचित्प्रतियोगिज्ञानेऽसंभवात्; यावत्प्रतियोगिज्ञानस्य चासंभवात् । [4]एतेन प्रतियोगितया 'घटोऽसंबन्धी-ति बाधबुद्धेः सामान्यतः तद्वैशिष्ट्यग्रहविरोधित्वेऽपि न क्षतिः । अभावत्वांशे निर्विकल्पकत्वमभावांशे यत्किंचित्प्रतियोगिवैशिष्ट्यविषयकत्वात्, यत्किञ्चित्प्रतियोगि – [5]धीसाध्यमेवेति नानुपपत्तिः । इदन्त्वेन तमः प्रत्यक्षत्वमनुपपन्नम्; अभावांशे निर्विकल्पकयावत्प्रतियोगिधीकार्यतावच्छेदकाक्रान्तत्वादित्यपास्तम् ।

---

तादृशप्रत्यक्षे 'घटो नास्ती'त्याद्याकारके घटधियो हेतुत्वमेव पटाद्यभावप्रत्यक्षेऽपि पटादिधियो हेतुत्वं वर्णनीयमित्यर्थः । अन्यथा – घटाभावप्रत्यक्षत्वमात्रस्य घटधियो कार्यतावच्छेदकत्वे । नेत्याकारकप्रत्यक्षवारणं दर्शयति – इत्थं चेति । पटत्वाद्यवच्छिन्नेत्याद्युक्तरीत्या प्रतियोगि – [6]ज्ञानहेतुत्ववर्णनेन चेत्यर्थः । एतेन – उक्तरीत्याप्रतियोगिज्ञानहेतुत्वाभ्युपगमेन । न क्षतिरिति । नेत्याकारकप्रत्यक्षापत्तिर्नेत्यर्थः । अभावांशे – भावभेदांशे अभावत्वस्य भावभेदरूपत्वादिति भावः । अपास्तमिति । अत्र [7]दूषणमप्याह – केवल इति । लाघवादिति ।

---

1 'प्रकार .... .... हेतुत्वाच्च' इत्यन्तस्त्रुटितः अः

2 'घटाद्यभावस्य' नास्ति अ. घटाभावत्वे इ.

3 भावत्वेन घटाद्यभावग्रहे अ. °भावग्रहे इ.

4 'एतेन .... .... न क्षतिः' इत्यन्तस्त्रुटितः अ. इ.

5 'धी' नास्ति ई.

6 ज्ञान' नास्ति क.

7 'मतेऽपीत्याद्याकारकप्रत्यक्षादिवारणार्थमेवाभावप्रत्यक्षप्रतियोगिधीहेतुत्वं प्रत्यक्षापादनायोगादिति भावः । न चेति । नेत्याकारकभूतास्तुवेति कल्पाश्रयणेनापि जायत इति किं तद्धेतुत्वेन । किं च तद्धेतुत्वेऽपि तेनाविनाभावनिर्विकल्पकं ममास्तु; केवलाभावत्वनिर्विकल्पकं तु स्यात्, तस्य कार्यतावच्छेदकानाक्रान्तत्वादित्यभिप्रायेणाह – केवलाभाव इति' इत्यस्ति क.

केवला[1]भावात् निर्विकल्पकापत्तेः। लाघवात् घटादिधियो घटत्वाद्यवच्छिन्नप्रकारतानिरूपिताभावविषयताकप्रत्यक्षत्वस्य तादृशप्रकारत्वनिरूपितविषयताक – [2]प्रत्यक्षत्वस्यैव वा कार्यतावच्छेद[3]कत्वाच्च।

वस्तुतोऽभावलौकिकप्रत्यक्षस्य घटत्वाद्यन्यतमविशिष्ट[4]वैशिष्ट्यविषयकत्वनियमात्। विशेषसामग्रीं विना सामान्यसामग्रीमात्रात् कार्यानुत्पत्तेः नाभावनिर्विकल्पकं नेत्याकारकप्रत्यक्षं वा विशेषणादिज्ञानरूपविशेषसामग्र्यभावात्। न चाभाव लौकिकप्रत्यक्षत्वघटत्वादिविशिष्टविषयकप्रत्यक्षत्वयोः व्याप्यव्यापकभावाभावात् कथं विशेषसामाग्रीत्वमिति वाच्यम्। कार्यतावच्छेदकीभूत – [5]यद्यद्धर्माश्रय-

---

[6]घटत्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितेत्यादि प्रागुक्तापेक्षया लाघवादित्यर्थः। भावाभावप्रत्यक्षसाधारणं कार्यतावच्छेदकमाह – तादृश इति। घटत्वावच्छिन्न इत्यर्थः।

घटाद्यभाव – [7]प्रत्यक्षत्वं कार्यतावच्छेदकीकृत्य घटादिधियो हेतुत्वे गौरवात्, लाघवेनान्यथैव कार्यकारणभावमाह वस्तुत इति। विशेषणादिज्ञान इति। तथा च घटाद्यभावग्रहं प्रति घटादिधियो विशेषणज्ञानत्वेन विशेषणतावच्छेदक – विशिष्टज्ञानत्वेन वा हेतुत्वम्, [8]न तु प्रतियोगिज्ञानत्वेन घटादिज्ञानत्वेन वा हेतुत्वं गौरवादिति भावः। न चाभाव इति। यत्राभाव लौकिकप्रत्यक्षत्वं तत्र घटत्वाद्यन्य – [9]तमत्वविशिष्टवैशिष्ट्यविषयकप्रत्यक्षत्वमिति व्याप्यव्यापकभाव एव नास्ति। अभाव – [10]निर्विकल्पकादौ

---

1 °भावत्वनिर्वि° इ.
2 °प्रत्यक्षत्वादि वा आ.
3 °काच्च ई.
4 °वैशिष्टविषय° इ.
5 तद्धर्माश्रय इ.
6 'नेत्याकारकप्रत्यक्षादिवारणार्थं' इत्यधिकः क.
7 °प्रत्यक्षं क.
8 तत्तु क.
9 तमविशिष्ट° क.
10 निर्विकल्पकादेः क.

यत्किंचिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यावत् प्रत्येकं तत्तदवच्छिन्नसत्त्वेऽवश्यं तद्धर्मावच्छिन्नोत्पत्तिरित्येव नियमात्। सर्वत्र तत्परत्वेन हेतुहेतुमद्भावे नीलघटत्वादिवारकं कार्यतावच्छेदकीभूतेति न देयम्।

[1]तद्धर्मतद्धर्मव्याप्यधर्मावच्छिन्नयत्किंचिद्व्यक्तिनिष्ठकार्यतानिरूपितेत्याद्युक्तौ व्याप्तिज्ञानपरामर्शयोः सत्त्वे बाधधीसत्त्वेऽप्यनुमित्यापत्तिः। अनुमितित्वतद्व्याप्यावच्छिन्नयावत्कारणसत्त्वात् तद्धर्मव्याप्यस्य व्यापकधर्मावच्छिन्नयत्किं-

---

व्यभिचारस्य [2]शङ्कितुमशक्यत्वात्। तत्कथं [3]घटादिज्ञानस्य विशेषणज्ञानत्वेन विशेषणसामग्रीत्वमिति न च वाच्यमित्यर्थः। कार्यतावच्छेदकीभूत इति। यथा दण्डादिकार्यतावच्छेदकघटत्वाद्याश्रययत्किंचिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यावद्दण्डचक्रत्वादि प्रत्येकं तत्तदवच्छिन्नसत्त्वेऽवश्यं घटत्वावच्छिन्नोत्पत्तिः, तथा प्रकृतेऽप्यभावलौकिकप्रत्यक्षत्वाश्रययत्किंचिद्व्यक्तिः 'इदं घटाभाववत्' इत्येवंरूपात् तन्निष्ठकार्यतानिरूपितकारणतावच्छेदकं, यावत्सन्निकर्षत्वघटज्ञानत्वादि प्रत्येकं तत्तदवच्छिन्नसत्त्व एवाभावलौकिकप्रत्यक्षत्वावच्छिन्नोत्पत्तिः [4]नान्यथेति नियमस्वीकारात्। घटादिज्ञानं विना कथमभावनिर्विकल्पकं नेत्याकारकप्रत्यक्षं वा स्यादिति भावः।

तद्धर्म इत्यादि। तद्धर्मतद्धर्मव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकं यावत् प्रत्येकतत्तदवच्छिन्नसत्त्वेऽवश्यं तत्तद्धर्मावच्छिन्नोत्पत्तिरिति नियमोक्तावित्यर्थः। एवं चाभावलौकिक प्रत्यक्षत्वतद्व्याप्याभावनिर्विकल्पकत्वोभयावच्छिन्नयत्किंचिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं सन्निकर्षत्वाद्यं तदवच्छिन्नसत्त्वे घटादिज्ञानं विनाप्यभाव-

---

1 तद्धर्मावच्छिन्नव्याप्ययत्किंचिद्धर्मावच्छिन्न° इ.
तद्धर्मतद्धर्मावच्छिन्नव्याप्यधर्मावच्छिन्न ई.

2 शङ्कितुं शक्यत्वात् क.

3 घटज्ञानस्य क.

4 नोत्पद्यत इति ग.

च्चिद्व्यक्तिनिष्ठकार्यतानिरूपिते — [1]त्याद्युक्तौ तु घटत्वादिविशिष्टवैशिष्ट्यविषयक-प्रत्यक्षत्वस्याभावलौकिकत्वव्याप्यतदभावलौकिकत्वव्यापकत्वात् प्रकृतसिद्धिः।

अथ च तद्धर्माश्रययत्किंचिद्व्यक्तिनिष्ठेत्युपेक्ष्य तद्धर्मव्याप्यधर्मव्यापक-धर्मावच्छिन्नपर्यन्तानुसरणस्य च वैयर्थ्यमित्यलं पल्लवितेन ॥

एवं चालोकाभावत्वेन तमसो ग्रहे आलोकापेक्षा, न त्विदन्त्वेनेति नानुपपत्तिः। नात्रालोकः, किन्त्वन्धकार इति व्यवहारस्तु नात्र घटः,

---

निर्विकल्पकोत्पत्तेः तस्याभावप्रत्यक्षे विशेषसामग्रीत्वमिति [2]नेत्याकारकप्रत्यक्षादिवारणं चेति भावः। बाधधीसत्त्वेपीति। बाधज्ञानस्य [3]जन्यतद्वत्ताज्ञानत्वावच्छिन्नप्रतिबन्धकत्वात् तदभावत्वस्यानुमितित्वतद्व्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकयावदनन्तर्गततया बाधधीसत्त्वेऽप्यनुमित्यापादनमिति भावः। तद्धर्मव्याप्यस्येति। तद्धर्मव्याप्यस्य व्यापकधर्मावच्छिन्न यत्किंचिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकं यावत् प्रत्येकं तदवच्छिन्नसत्त्वेऽवश्यं तद्धर्मावच्छिन्नोत्पत्तिरिति नियमोक्तावित्यर्थः। एवं च व्याप्तिधीपरामर्शयोः सत्त्वे बाधधीसत्त्वे च नानुमितिः। अनुमितित्वतद्व्याप्यतत्तदनुमितित्वस्य व्यापकजन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकयावदन्तर्गतबाधाभावत्वावच्छिन्नस्या-सत्त्वात्। अभावलौकिकप्रत्यक्षे घटादिज्ञानस्य [4]विशेषसामग्रीत्वं तु न संभवत्येव। अभावलौकिकत्वव्याप्यतत्तदभावलौकिकत्वस्य व्यापकमभावलौकिकत्वमेव। तदवच्छिन्न-यत्किंचिद्व्यक्तिः अभावनिर्विकल्पकरूपा तन्निष्ठकार्यतानिरूपितकारणतावच्छेदकं यावत्, इन्द्रियत्वतत्सन्निकर्षत्वादि, तदवच्छिन्नसत्त्वे घटादिज्ञानं विनापि तदवच्छिन्नाभावनिर्विकल्पकोत्पत्तेरिति पूर्वपक्ष्यभिप्रायः। अत्र सिद्धान्ताभिप्रायं प्रकाशयति — घटत्वादिविशिष्ट इति।

---

1 °त्याद्युक्तौ तु ई.

2 'नेत्याकारकप्रत्यक्षादिवारणं चेति' नास्ति ग.

3 जन्यत्वावच्छिन्नं प्रति प्रति° ग.

4 'विशेष .... .... तत्तदभाव-लौकिकत्वस्य' इत्यन्तं नास्ति क.

किन्तु तदभाव इति व्यवहारवत् कथंचित् [1]विवरणतया भ्रान्तपरतया वोपपाद्यः। तमसि नीलरूपवत्वादिधीस्तु भ्रान्ता; भास्वररूपानाश्रयत्वसाधर्म्यात्। न चैवं पीतरूपाद्यारोपोऽपि स्यात्; [2]आरोपे हि सति निमित्तानुसरणम्; न तु निमित्तमस्तीत्यारोपः। गतेः का गतिरिति चेत् भ्रान्तिः; स्वाभाविक्यां [3]गता-वुपाध्यननुविधानात्। आवरकद्रव्ये हि गच्छति यत्र यत्र तेजसोऽसन्निधानं तत्र तत्र छायाप्रतीतेरन्यदेशता — [4]निबन्धनो गतिभ्रमः। न चैवं दीपादिप्रभायामपि गतिर्न स्यात्; तत्र मूर्तत्वात्, चाक्षुषहेतु — [5]संयोगसत्त्वाच्च, तत्सिद्धेः।

---

न चाभावलौकिकत्वव्याप्यं तन्निर्विकल्पकत्वमपि तद्वति च घटत्वादिविशिष्टवैशिष्ट्याव-गाहित्वस्यासत्त्वात् नास्य तद्व्याप्यव्यापकत्वमिति वाच्यम्; सिद्धान्तिनाऽभावनिर्विकल्पका-नभ्युपगमात्। तथा च घटादिज्ञानं विना घटत्वादिविशिष्टवैशिष्ट्यविषयकप्रत्यक्षत्वाव-च्छिन्नाभावलौकिकानुत्पत्तेः प्रकृतसिद्धिः। अभावलौकिकप्रत्यक्षत्वावच्छिन्ने घटत्वाद्यन्य-तमत्वविशिष्टज्ञानस्य विशेषसामग्रीत्वप्रतिपादनेन नेत्याकारकप्रत्यक्षवारणस्यैव प्रकृतत्वादिति [6]भावः॥

वैयर्थ्यमिति। तद्धर्मावच्छिन्नयत्किंचिद्व्यक्तिनिष्ठेत्यादेरेव लघुतया सम्यक्त्वेन तद्धर्मव्याप्यव्यापकत्वप्रवेशवैयर्थ्यमित्यर्थः।

एवं चेति। घटत्वाद्यवच्छिन्नप्रकारत्वनिरूपिताभावविषयताकप्रत्यक्षत्वावच्छिन्नं प्रति घटादिधियो हेतुत्वाभ्युपगमेनेत्यर्थः। यद्यन्धकारे गतिप्रतीतौ छत्राद्युपाध्यनुविधानात्

---

1 'यत्' इत्यधिकः आ.
2 'आरोपे ... ... दीपादिप्रभायामपि गतिः' इत्यन्तस्त्रुटितः आ.
3 गतानुपाध्य° अ.
4 °निर्बन्धनो ई.
5 संयोगवर्तित्वाच्च अ. संयोगवत्त्वाच्च ई.
6 'भावः' नास्ति ग.

प्रकृते [तु न] साधकम्; [1]किन्तु बाधकमेव। [2]प्रभागृहे तु तमोधीस्तु भ्रान्ता। न चालोकप्रत्यक्षाभाव एव तमः; एकत्रालोकप्रत्यक्षेप्यन्यत्र तमःप्रत्यक्षात्। तमसः चाक्षुषत्वानापत्तेश्च। आरोपितं नीलरूपं तमः इत्यपि न युक्तम्; 'इहान्धकार' इति प्रतीतेरपि भ्रमत्वापत्तेः। तमः नीलम्, न तु नीलिमेति प्रत्ययाच्चेत्यलं पल्लवेन ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचि-
तायां पदार्थमालायां सुवर्ण-
तमोवादौ समाप्तौ ॥

---

भ्रमत्वं तदा दीपादि[3]प्रभायामपि तत्प्रतीतौ भ्रमत्वं स्यात्, [4]तद्दीपाद्यनुविधानस्य तुल्यत्वात्। न तु तत्र वास्तवगतिः स्यादित्याशङ्क्य निषेधति – न चैवमिति। प्रकृते इति। अन्धकारे गति – [5]साधकमूर्तत्वाद्येव नास्ति; किन्तु तदभावसाधकमभावत्वमेवास्तीति न तत्र तत्सिद्धिरित्यर्थः। ननु यद्यालोकाभाव एव तमः तदा बहिस्थदेशादागतानां गेहे तमःप्रतीतिर्न स्यादत आह – प्रभेति। भ्रान्तेति। बाह्यालोकजन्यचक्षुः – प्रतिघातदोष-जन्यत्वादिति भावः ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत श्रीमद्दुद्गकवीन्द्रमुद्गल – विदुषसूनुना भास्करेण विरचिते पदार्थमाला प्रकाशे सुवर्णतमोवादौ समाप्तौ ॥

---

1 किं च बा° ई.
2 गर्भगृहे इ.
3 °प्रमाया° क.
4 तदीयाद्यनु° ग.
5 °साध्यक° ग.

## अथ गुणनिरूपणम्



गुणास्तु – "रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः" कण्ठोक्ताः सप्तदश । सूत्रस्थ च शब्दसमुच्चिता 'गुरुत्वद्रवत्वस्नेहसंस्कार[1]धर्माधर्मशब्दाः सप्तेति [2]चतुर्विंशतिरेवेति वैशेषिकनैयायिकौ । परत्वापरत्वपृथक्त्वानां निरस्यत्वादेकविंशतिगुणा इति नव्याः ।

---

क्रमप्राप्तान् गुणान् विभज्य दर्शयति – गुणा इति । कण्ठोक्ता इति । रूपादयः प्रयत्नान्ताः भगवता सूत्रकारेण कणादमुनिना कण्ठरवोक्ताः सप्तदश इत्यर्थः । सूत्रं च 'रूपरसगन्धस्पर्शसङ्ख्यापरिमाणानि, पृथक्त्वं, संयोगविभागौ, परत्वापरत्वबुद्धयः, सुखदुःखेच्छाद्वेषो प्रयत्नश्च गुणा' [वै. सू. १.१.५.] इति । सूत्रस्थ च शब्द इति । [3]प्रागुक्तगुणविभाजकसूत्रस्थचशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः सप्तगुणाः समुच्चिता इत्यर्थः । न च सप्तदशैव गुणाः, गुरुत्वादयः सप्त च न [4]गुणा इत्येव किं न स्यादिति वाच्यम् । तथा सति सूत्रभाष्यादिभिः तत्र तत्र तेषां गुणत्वेन व्युत्पादनविरोधापत्तेः, सूत्रस्थचशब्दानर्थक्यापत्तेश्चेति । चतुर्विंशतिरिति । अत्र चतुर्विंशतित्वं न सङ्ख्या बाधात्; किं तु रूपादयो गुणा इति बुद्धिविशेषविषयत्वम् । तेन तत्र चतुर्विंशतिव्यवहारो गौणः । एवं कर्मादावपीति । वैशेषिकनैयायिकाविति । वैशेषिकमते तत्र रूपादेः सर्वस्यव्युत्पादितत्वात् तदभिमतत्वम् । न्यायनये तु तत्र व्यवहृतत्वादभिमतत्वम् । तदुक्तम् —

"मोक्षे साक्षादनङ्गत्वादक्षपादैर्न लक्षितम् ।
तन्त्रान्तरानुसारेण द्रव्यादिकमिहोच्यते" ॥ इति ।

---

1 'धर्माधर्मशब्दाः' नास्तिः ई.
2 'चतुर्विंशतिरेवेति' नास्ति इ.
3 'प्राक्' नास्ति ग.
4 गुणादित्येव ग.

## गुणत्वजातिसाधनम्

ते चेतरेभ्यो भिद्यन्ते गुणत्वात्। गुणत्वं[1]नाम सामान्यं सद्विशेष इति भाष्यादयः। तत्सिद्धिस्तु [2]योग्यरूपादौ गुणाकारानुगतमतेः। एवं चायोग्येऽपि तत्सिद्धिः। अन्यथा [3]रूपत्वं विना गुणत्वं रसादौ, गुणत्वं विना रूपत्वमयोग्ये रूपे, योग्ये रूपे [4]तदुभयसत्त्वमिति रूपत्वादिना साङ्कर्यप्रसङ्गात्। धर्माधर्मयोस्तु चैत्राद्य-शरीरं, [5]चैत्रीयभावनान्यवशेषगुणपूर्वकं चैत्रशरीरत्वात् [6]द्वितीयशरीरवदिति धर्माधर्मसाधकेन तत्सिद्धिः।

[7]यद्यपि शरीरत्वाद्यवच्छिन्ने न विशेषगुणत्वादिना हेतुत्वं, [8]मानाभावात्; किं तु कार्यत्वावच्छिन्ने तज्जातीयादृष्टत्वेन वेति शरीरत्वेनादृष्टजन्यत्वमात्रं सिद्धम्।

---

परत्वेति। परापरव्यवहारस्य विप्रकृष्टत्वसन्निकृष्टत्वाभ्यां पृथक्त्वव्यवहारस्य [9]वाऽन्योन्या-भावेन चारितार्थत्वात् तेषां गुणत्वे मानाभावादिति भावः।

लक्षणज्ञानस्य विभागानुपयुक्तत्वात् गुणविभागानन्तरं तल्लक्षणमाह – ते चेति। [10]गुणा इतरेभ्यो भिद्यन्ते, [11]गुणत्वात्; ये नेतरेभ्योभिद्यन्ते न ते गुणाः, यथा द्रव्यादयः। न च नेमे गुणत्ववन्तः, तस्मादितरेभ्यो भिद्यन्त इति पञ्चावयवप्रयोगो द्रष्टव्यः। न च

---

1 वा नाम सामान्यविशेष अ., 'तु' इत्यधिकः ई.
2 'योग्य .... .... मयोग्ये रूपे' इत्यन्तस्त्रुटितः अ.
3 रूपवत्वं इ.
4 तदुभयत्वमिति अ.
5 चैत्रविशेष° ई.
6 'न' इत्यधिकः इ.
7 ननु आ.
8 'मानाभावात्; किन्तु' नास्ति ई.
9 न चान्योन्या° क.
10 गुणः ग.
11 न भिद्यते ग.

न त्वदृष्टे गुणत्वम्, तथापि [1]नरादिशरीरं पश्वादिशरीरजनकजन्यं तद्विलक्षणं कार्यत्वादित्यनुमानेन सिद्धे तत्र द्रव्यकर्मान्यसामान्यवत्वेन गुणत्वं सिध्यतीत्यत्र तात्पर्यम् ।

एवं [2]गुरुत्वादावपि पतनादिकं गुणासमवायिकारणं कर्मत्वात्, आद्यइषु-कर्मवदित्यनुमानेन तत्सिद्धिरिति दिक् ॥

नव्यास्तु – गुणत्वं नाध्यक्षगम्यम्; प्रहरं निरीक्षमाणेऽपि रूपरसादावेक-जातीयाननुभवात् । न च पद्मरागत्वमिव द्रव्यकर्मान्यसामान्यवान् गुण इत्युपदेश-सहकृतेन्द्रिय[3]गम्यं तदिति वाच्यम् । विषयासत्त्वे उपदेशसहस्रस्याप्यकिंचित्कर-त्वादिति, पद्मरागत्वं चानुभाविकत्वादस्तूपदेशसहकृतेन्द्रियवेद्यम् ।

---

गुणत्ववान् गुण इति लक्षणाभिधानानन्तरं व्यावृत्तिसाधनस्योचितत्वादादावेव कथं तदिति वाच्यम् । लाघवेन प्रयोजनाभिधानपुरस्सरं लक्षणस्याभिहितत्वात् । एवं पृथिव्यादिलक्षणेऽपि बोध्यम् । गुणत्वं नाम इति । सत्ताया अनुवृत्तिप्रत्ययमात्रहेतुत्वात् सामान्यवत्वमेव, तस्याः कुतोऽप्यव्यावृत्तत्वात् । जात्यादौ बाधकबलेन तत्साक्षात्संबन्धमात्रपरित्यागात् । अत एव सामान्यादि सदिति धीरेकार्थसमवायादिनोपपद्यते । [4]विशेषपदार्थस्य तु व्यावृत्ति – [5]प्रत्य-यमात्रहेतुत्वात् विशेषत्वमेव ; तस्य प्रत्येकव्यक्तिनिष्ठत्वेनानुवृत्तत्वाभावात् । द्रव्यत्वगुणत्वादे-स्तूभयविधिप्रत्ययहेतुत्वात् सामान्यविशेषत्वमिति भावः । ननु गुणत्वसद्भावे किं मानमत आह – तत्सिद्धिस्त्वित्यादि ।

---

1 'नरादि .... .... त्यनुमानेन' इत्यन्तस्त्रुटितः आ. इ. ई.
2 गुणत्वादावपि यज्ज्ञानादिकं आ.
3 यद्येवं तदिति इ.
4 विशेषणपदार्थस्य क.
5 °प्रत्ययमभिन्नहेतुत्वात् ग.

वस्तुतस्तु पद्म – [1]रागत्वप्रत्यक्षे रूपप्रभाविशेषग्रहणमेव हेतुः। रूपादिविशेषवान् मणिः। पद्मराग इत्युपदेश[2]स्तु गोसदृशो गवय इत्यतिदेशवाक्यवत् पद्मरागपदवाच्यत्वोपमितावुपयुज्यते। न च द्रव्य – [3]कर्मणि(णो) वध्यघातकभावलक्षणविरोधशालिसंयोगविभागवर्जयतः तद्विपरीतकार्यं रूपादय इत्यविरुद्ध – [4]रूपादिकार्यकारित्वात्, पारिमाण्डल्यादेः कार्य – [5]मात्राकारित्वाच्च।

एतेन द्रव्यकर्मान्यसामान्यवद्वृत्तिकारणतावच्छेदकतया गुणत्वसिद्धिरित्यपास्तम्। यथाकथंचिद्रूपेण कार्याण्यनुगतीकृत्य तज्जनकत्वानां यथाकथंचिद्रूपेणानुगतानां जनकत्वानां वाऽवच्छेदकत्वेन जातिकल्पने रूपान्यस्य

---

नव्यास्त्विति। नाध्यक्षगम्यं – न जातित्वप्रकारकप्रत्यक्षवेद्यम्। तेन वक्ष्यमाणरूपोपाधितः तस्य प्रत्यक्षत्वे[6]ऽपि न क्षतिरिति। प्रहरमिति। दीर्घशष्कुलीभक्षणादौ चिरं तत्तदिन्द्रियेण प्रतीयमानेऽपीत्यर्थः। तेन रूपरसादेः [7]बहिरेकेन्द्रियवेद्यत्वाभावेऽपि न क्षतिः।

[8]ननूपदेशस्य शब्दादन्यत्रानुमित्युपमित्योरेवोपयोगित्वदर्शनात् न प्रत्यक्षोपयोगित्वमत आह – वस्तुतस्त्विति। वध्यघातकभावः – नाश्यनाशकभावः। विभागेन पूर्वसंयोगनाशात् [9]तयोर्वध्यघातकभावलक्षणविरोधसत्त्वादिति भावः।

---

1 °रागवत्व° ई.
2 °स्तु वाक्यपद्म° ई.
3 °कर्मणवत् यथा तवल्लक्षण° ई.
4 °रूपाप्तिकार्य° इ.
5 °मात्राकाशित्वाच्च ई.
6 'अपि' नास्ति ग.
7 बहिरिन्द्रियनिष्ठत्वाभावे ग.
8 न तूप° ग.
9 'तयोः .... .... भावः' इत्यन्तस्त्रुटितः ग.

विरोधिकार्यस्य जनकतावच्छेदकतया रूपान्यवृत्ति तादृश – [1]जनकताया वाऽवच्छेदकतया रूपावृत्तित्रयोविंशतिगुणवृत्तिजातेः तथा रसाद्यवृत्तिजातीनामपि सिद्ध्यापत्तेश्च ।

न च रूपावृत्ति – [2]रसावृत्तिजात्योः सिद्धौ गन्धादौ मिथः साङ्कर्यं बाधकम् । गुणत्वसिद्धावपि रूपावृत्तिसामान्यवद्वृत्तिकारणता – [3]वच्छेदकजातिप्रसक्त्या साङ्कर्यापत्तेः । [4]न चैवं जनकतावच्छेदकतया जातिसिद्धिः क्वापि न

---

एतेन – [5]'यथाकथंचिदि'त्यादिवक्ष्यमाणदूषणेन । [6]कार्याण्यनुगतीकृत्येति । अविरुद्धकार्यकारितावच्छेदकत्वेन गुणत्वसिद्धिपक्षमभिप्रेत्य । तत्र पक्षे वध्यघातकभाव – लक्षणां [लक्षण] विरोधशालिसंयोगविपरीतत्वेऽरूपादीनि कार्याण्यनुम[ग]तीकृत्य तज्जनकतावच्छेदकत्वेन रूपादीन् वतुवितौ [रूपत्वाद्यनुमितौ] गुणत्वजातिसाधनादिति भावः । अनुगतानां जनकत्वानां वेति । द्रव्यकर्मसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन गुणत्वसिद्धिपक्षमभिप्रेत्य तत्र पक्षे [वध्यघातक] भावलक्षणविरोधशालिसंयोगविभाग – विभितत्व [विपरीत] द्रव्यकर्मसामान्यवद्वृत्तिकारणतात्वेन रूपादिनिष्ठकारणत्वान्यनुगतीकृत्य तदवच्छेदकत्वेन गुणत्वजातिसाधनादिति भावः । कार्यानुगतपक्षे दूषणमाह – रूपान्यस्येति । अविरोधकार्यस्य

---

1 °जनकत्वानां वा  अ.
2 'रसावृत्ति' नास्ति  अ. इ.
3 °वच्छेदकनातिप्रसक्ततया  अ.
°वच्छेदक जातिप्रसक्ततया  इ.
4 'न चैवं ... .... न स्यात्' इत्यन्तस्त्रुटितः  अ. इ.
5 'यथाकथंचिदित्यादि' नास्ति  ग.
6 'कार्याण्यनु .... .... तात्पर्यार्थः' इत्यन्तस्त्रुटितः । तत्स्थाने 'यथाकथंचिद्रूपेण कार्याणीति । अविरुद्धकार्यकारितावच्छेदकत्वेन गुणत्वसिद्धिपक्षे यथाकथंचिद्रूपेणानुगतानामिति द्रव्यकर्मान्य – सामान्यवद्वृत्तिकारणतावच्छेदकत्वेन तत्सिद्धिपक्षेऽनुगतकारणतावच्छेदकमिति । अस्य च कारणानुगुणमार्थमित्यादिः । न च प्रकृते इति' इति दृश्यते  ग.

स्यात्। अनुगतस्यैव [1]हि कार्यस्यानुगतकारणनियम्यतयाऽनु – [2]गतकारणताव-च्छेदकं कल्प्यमानमसति बाधके जातिरूपं सिध्यति।

न च प्रकृते तादृशकार्यमस्ति। [3]न चैवमपि स्वरूपसंबन्धविशेषादेः कारणत्वे तदसिद्धिः, तत्रापि व्यञ्जकत्वे [व्यञ्जकत्वेन] तत्तज्ज्ञानस्याप्यक्षतत्वात्

---

संयोगविभागविपरीतरसादित्रयोविंशतिकलक्षणकार्यस्य कारणत्वानुगमपक्षे दूषणमाह – रूपान्यवृत्ति इति। तादृशजनकतायाः – द्रव्यकर्मसामान्यवद्वृत्तिजनकतायाः।

गुणत्वसिद्धावपीति। यदि द्रव्यकर्मसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन गुणत्वं जातिः सिध्येत्, तदा रूपावृत्तिसामान्यवद्वृत्तिकारणतावच्छेदकत्वेनापि रूपं विहाय सर्वत्र सामान्यवति जातिः सिध्येत्। तथा च तादृशजात्योः रूपरसादौ परस्परपरिहारेण वर्तमानयोः गन्धादौ मिथः साङ्कर्यापत्तिः, अतः रूपादिचतुर्विंशतौ गुणत्वमिति जातिः न सिध्यतीति भावः न चैवमिति। द्रव्यकर्मान्यसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन गुणत्वजातिसिद्धा-वित्यर्थः। अनुगतस्यैव हीति। अनुगतं कार्यमनुगतकारणजन्यमिति नियमः सर्वसिद्धः। अन्यथा कार्यस्याकस्मिकत्वापातात्। तथा चानुगतकार्ये कारणानुगमार्थं कल्प्यमानं कारण-तावच्छेदकं जातिसाङ्कर्यादिबाधकाभावे जातिरूपमेव सिध्यति। यथा गन्धत्वावच्छिन्ने पृथिव्यात्मककारणानुगमार्थं कल्प्यमानमवच्छेदकं पृथिवीत्वं जातिरूपमेव सिध्यति। बाधकसत्त्वेत्वखण्डोपाधिरूपमेव कारणतावच्छेदकं तत्र तत्र कल्प्यते। तथा दाहादिकारणे मण्यभावादौ ध्वंसादिसाधारणं संसर्गाभावत्वमिति तात्पर्यार्थः।

न च प्रकृते इति। रूपरसादेः भिन्नभिन्नकार्यतावच्छेदकाक्रान्तत्वात् [4]रूपादि-चतुर्विंशतौ नानुगतं कार्यत्वमिति [5]न तत्र कारणतावच्छेदकत्वेन गुणत्वजातिसिद्धिरिति

---

1 'हि' नास्ति अ. इ.
2 °गतं कारणत्वाव° अ. °गतं कारणताव° आ.
3 'न .... .... कारणत्वबुद्धेश्च' इत्यन्तस्त्रुटितः अ. इ.
4 'रूपादिचतुर्विंशतौ' नास्ति ग.
5 'न .... .... सिद्धिरिति' इत्यन्तस्त्रुटितः ग.

दण्डत्वादिना कारणत्वबुद्धेश्च । न च रूपादयो रूपत्वादि – तद्व्याप्येतर सत्ताभिन्नजातिमन्तः सत्त्वादित्यनुमानात् तत्सिद्धिः; अप्रयोजकत्वात् । अन्यथा गुणत्वेतरत्वमपि निक्षिप्य जात्यन्तरसिद्ध्यापत्तेः । एवं तत्तदितरत्वं निक्षिप्यानन्तजातिसिद्ध्यापत्तिः । रूपादयो तादृशजातिरहिताः द्रव्यकर्मान्यत्वादित्यादिनाऽऽपाततः [1]सत्प्रतिपक्षापत्तेः ॥

---

[2]भावः । नन्वनन्यथासिद्धनियतपूर्ववर्तित्वं कारणत्वमिति पक्षे तस्याननुगतस्या[3]वच्छेदकतयाऽस्तु जातिसिद्धिः । स्वरूपसंबन्धविशेष एवातिरिक्तमेव वा तच्चमिति पक्षेऽनुगतेन तेनैव कारणानुगमसंभवात् तदवच्छेदकतया जातिसिद्धिर्न स्यादित्याशङ्क्य निषेधति – न चेति । एवमपि – [4]अनन्यथासिद्धनियतपूर्ववर्तितावच्छेदकत्वेन जातिसिद्धावपि । तत्रापि – स्वरूपसंबन्धविशेषाद्यात्मककारणतापक्षेऽपि । व्यञ्जकत्वेनेति । स्वरूपसंबन्धविशेषाद्यात्मककारणताव्यञ्जकत्वेन तादृशनियतपूर्ववर्तित्वज्ञानस्यापेक्षितत्वात् व्यञ्जकज्ञानविषयतावच्छेदकत्वेनैव जातिसिद्धिरित्यर्थः । नन्वननुगतस्यापि व्यञ्जकत्वे दोषाभावात् न व्यञ्जकतावच्छेदकतया जातिसिद्धिरित्यरुचेराह – दण्डत्वादिनेति । यद्यपि स्वरूपसंबन्धविशेषाद्यात्मकहेतुतापक्षे तदवच्छेदकजातिसिद्धिः नापेक्षिता । [5]तादृशहेतुत्वस्य सहजत एवानुगतत्वात् तथापि दण्डत्वादिना घटकारणत्वमिति प्रतीतिबलात् तदवच्छेदकत्वं जातेः कल्प्यत इति भावः । न च रूपादय इति । अत्र साध्ये सत्तामादाय सिद्धसाधनवारणाय सत्ताभिन्न इति । रूपत्वादि-

---

1 सत्प्रतिपक्षत्वाच्च आ.

2 अर्थः । नन्वन्यथा° ग.

3 °गतस्यतदेकतया तज्जातिसिद्धिः क.

4 'अनन्यथा .... .... व्यञ्जकतावच्छेदकतया' इत्यन्तस्त्रुटितः । तत्स्थाने – 'अनुगत कार्यस्थलेऽनन्यथासिद्धकारणताव्यञ्जकत्वेन यत्किंचिदनुगत – धर्मज्ञानस्यावश्यापेक्षितत्वात् तद्धर्मस्य तादृशकारणतावच्छेदकतया दण्डादौ दण्डत्वजातिसिद्धिरित्यर्थः । न चानुगतस्यावश्यकव्यञ्जकसत्त्वे मानाभावात् तादृशकारणतावच्छेदकतया' इत्यस्ति क.

5 'तादृश .... .... गुणत्वसिद्धिः' इत्यन्तस्त्रुटितः । तत्स्थाने – 'तथापि दण्डत्वादिना घटकारणत्वमिति बलात् तदवच्छेदकदण्डत्वादि – जातिकल्पने इति भावः' इत्यस्ति ग.

यत्तु – गुणपदशक्यतावच्छेदकत्वेन गुणत्वसिद्धिरिति – तन्न – पदानामसति बाधके तत्तद्धर्मविशिष्टबोधकत्वेन [1]प्रतीतानां तत्तद्धर्मविशिष्टे शक्तिः सिध्यति। न चेह गुणत्वं तद्विशिष्टे बोधकत्वं वा प्रतीतम्; प्रकारान्तरेण सिद्धायाः शक्तेरवच्छेदकत्वेन जातिसिद्धौ च [2]विभ्वादिपदस्य सैन्धवादिपदस्य च शक्यतावच्छेदकत्वेनापि जातिसिद्ध्यापत्तेः।

किं च लौकिकानां गुणव्यवहारोऽतिप्रसक्तः, बलादप्रसक्तः परत्वादौ। तान्त्रिकाणां तु स्वस्वपरिभाषयोपपद्यमानो न जातिसाधकः; न वा तुल्यरूपः; मीमांसकानां सङ्ख्यादावसत्त्वात्। भूषणस्य कर्मण्यपि सत्त्वाच्च।

एतेन व्यवहारादिना यत्र रूपरसादिव्यक्तिमात्रबोधकत्वं निर्णीतं, अनुगता–[3]ननुगतप्रकारांशबोधकत्वेन संशयः तत्र तत्तद्व्यक्तिमात्रगृहीतशक्तेरवच्छेदक-

---

तद्व्याप्यनीलत्वादिकमादाय तद्वारणाय रूपादितद्व्याप्येतरेति च जातिविशेषणम्। दृष्टान्ते तादृशजातिः द्रव्यत्वादिरस्त्विति, साध्यत्वपक्षे च पक्षधर्मताबलात् तादृशजातित्वेन गुणत्वसिद्धिरिति भावः। तादृश इति। रूपत्वादितद्व्याप्येतरजातिरहितेत्यर्थः। एतस्याप्यनुकूलतर्कासत्त्वेनाप्रयोजकत्वादाह – आपातत इति।

प्रकारान्तरेण – कोशाप्तवाक्यादिना। विभ्वादीति। [4]परममहति विभ्वादिपदस्याश्वलवणादौ सैन्धवादिपदस्य कोशादिना सिद्धशक्त्यवच्छेदकतया गगनादिविभुचतुष्टयसाधारण्याऽश्वलवण साधारण्याश्च जातेश्च सिद्ध्यापत्तिः। अत्रेष्टापत्तौ सैन्धवादिपदस्य नानार्थत्वोच्छेदः। शक्यतावच्छेदक – [5]नानात्व एव तस्याभिमतत्वादिति भावः।

---

1 प्रतीतेन आ.
2 विश्वादि° आ.
3 'अननुगत' नास्ति अ. इ.
4 'परममहति' नास्ति ग.
5 °नानात्वमेव क.

त्वेनानुगतप्रकारसिद्धिः । विभुसैन्धवादिपदे तु परममहति नानार्थे च शक्तिग्राहकं, कोशाद्येव [1]बाधकमित्यपास्तम् । प्रकृते व्यवहारस्यैव विरुद्धत्वादिति द्रव्यकर्मान्यसामान्यवत्वमेव गुणत्वमित्याहुरित्यलं पल्लवेन ॥

इति श्रीमज्जयरामन्यायपञ्चानन-
विरचितायां पदार्थमालायां
गुणनिरूपणं समाप्तम् ॥

---

[2]ननु रूपादौ गुणत्वव्यवहारादेव गुणत्वजातिसिद्धिरित्यतस्तदपि दूषयति—किं च इति । भूषणस्येति । एतन्मते समवायिकारणत्वद्रव्यसामान्यव्यवहारादेव गुणत्वजातिसिद्धित्वं वा गुणत्वमिति कर्मण्यपि गुणत्वव्यवहार इति भावः ।

एतेन – 'किं चे'त्याद्युक्तदूषणेन । विभुसैन्धवादीति । कोशादिकमेव हि विभुसैन्धवादिपदे तद्धर्मविशिष्टशक्तिग्राहकम् ; न तु तत्तद्व्यक्तिमात्रेण । एवं च विभ्वादिपदशक्यतावच्छेदकतया गगनादिचतुष्टयसाधारणजातेः, अश्वलवणसाधारणजातेश्च सिद्धौ कोशाद्येवबाधकमित्यर्थः । 'एतेने'त्यस्य परामर्शार्थं 'किं चे'त्याद्युक्तं स्वयमेव स्पष्टयति – प्रकृते इति । एतावता गुणत्वस्य जातित्वं खण्डयित्वा तस्य सखण्डोपाधित्वं दर्शयितुं निर्वचनमाह – द्रव्यकर्मान्य इति ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत श्रीमद्दुद्गकवीन्द्र-
तनूजमुद्गलविदुषसूनुना भास्करेण विरचितपदार्थमालाप्रकाशे
गुणनिरूपणं समाप्तम् ॥

---

1 'बाधकं' नास्ति अ., इ.

2 'ननु .... .... स्पष्टयति' इत्यन्तस्त्रुटितः तत्स्थाने – 'एतेनेत्यादि वक्ष्यमाणस्वरसादाह – किं चेति । एतेनेत्यस्यार्थमाह – प्रकृते इति' इत्यस्ति ग.

## अथ कर्मनिरूपणम्

कर्माणि — उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव । भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यक्पतननमनोन्नमनादयो गमनविशेषा एवेति नाधिक्यम् ।

वस्तुतः कर्म एकविधमेव; निष्क्रमणत्वप्रवेशनत्वादिव — दुत्क्षेपणत्वादेः जातित्वाभावेन भेदकत्वाभावात् । अन्यथाऽनन्तविधत्वापत्तेः । न च कुड्याद्बहिर्गमने [1]निष्क्रमणत्वमेव, बहिर्देशात् कुड्यगमने प्रवेशनत्वमेव, कुड्यात् कुड्यान्तरगमने गमनत्वं चेति साङ्कर्यात्, कुड्यभङ्गे तद्देशात् बहिर्गमने निष्क्रमणत्वाद्यव्यवहाराच्च; निष्क्रमणत्वादिकं न जातिः, उत्क्षेपणाद्यनुगतप्रत्ययादुत्क्षेपणत्वादिकं जातिरेवेति वाच्यम् । [2]तथापि भ्रमणाद्यनुगतव्यवहारात् भ्रमणत्वादेरपि जातित्वेन भेदकत्वापत्तेः । भ्रमणादौ गमनव्यवहारात् गमनत्वे उत्क्षेपणादावपि 'ऊर्ध्वं गच्छति' इत्यादिव्यवहारवत् तत्त्वं दुर्वारमिति ।

तानीतरेभ्योभिद्यन्ते कर्मत्वात् । कर्मत्वं च सामान्यविशेषः, चलनाकारानुगतप्रत्ययवेद्यः । संयोग — [3]विभागासमवायिकारणतावच्छेदकमपि तदेवेति दिक् ॥

इति श्रीमज्जयरामन्यायपञ्चानन विरचितपदार्थमालायां
कर्मनिरूपणं समाप्तम् ॥

---

**कर्माणि विभजते** — कर्माणीति । **कर्मलक्षणमाह** — तानीति । **कर्माणीत्यर्थः** ।

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत श्रीमद्दुर्गकवीन्द्रतनूजमुद्गलविदुषसूनुना
भास्करेण विरचिते पदार्थमालाप्रकाशे कर्मनिरूपणं समाप्तम् ॥

---

1 'निष्क्रम .... .... तद्देशाद्बहिर्गमने' इत्यन्तस्त्रुटितः इ.

2 तथाभ्रमण° आ.

3 °विभागात्सम° अ.

## अथ सामान्यनिरूपणम्

सामान्यं त्रिविधम् – परमपरं परापरं चेति । तत्र परं सत्ता; निखिलजातिव्यापकत्वात् । अपरं चैत्रत्वादि; स्वेतरजात्यव्यापकत्वात् । परापरं द्रव्यत्वादि; स्वेतरजातिव्यापकत्वे सति स्वेतरजातिव्याप्यत्वात् । भवति हि द्रव्यत्वादि – पृथिवीत्वादि – व्यापकं सत्ताव्याप्यं च, अत एव द्रव्यत्वादि । सामान्यविशेषाख्यमनुवृत्तिप्रत्ययहेतुत्वात् । अत्र सामानानां भावोऽनागन्तुको नित्यो धर्मः सामान्यमिति योगात्, नित्यत्वे सत्यनेकसमवेतत्वं लक्षणं लब्धम् । सत्यन्तं संयोगादेर्विशेष्यं जलपरमाणुरूपादेर्व्युदासायेति दिक् ॥

इति श्रीमज्जयरामन्यायपंचानन-
विरचित पदार्थमालायां
सामान्यनिरूपणं
समाप्तम् ॥

## अथ विशेषनिरूपणम्

नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः। अन्तेऽवसाने तिष्ठन्तीत्यन्त्याः। अन्तिमविशेषभूताः परमाणुरूपादयो विशेषा अपि रूपत्वादिसामान्ययोगात् न तथा स्वाश्रयव्यावर्तकाः, विशेषास्तु सामान्यराहित्यात्, तथा चैत्रमात्रवृत्तित्वे सति

---

नित्यद्रव्याणामानन्त्येन तद्वृत्तिविशेषाणामनन्ततयाविभागासंभवात् लक्षणमेवाह – नित्यद्रव्य इति। अत्र नित्यद्रव्याणि गगनादिचतुष्टयभिन्नान्येव ग्राह्याणि। गगनस्य शब्दतद्ध्वंसादिनैव दिक्कालयोश्च विजातीयविजातीयपरत्वापरत्वसमवायिकारणसंयोगाश्रयविभुत्वेनात्मनश्च ज्ञानादिनैवेतरव्यावृत्तिसंभवे तत्र विशेषसद्भावे मानाभावात्। न च परमाणुमनसामपि तत्तद्गुणयोगादेवेतरव्यावृत्तिसंभवे [1]किं तत्र विशेषाभ्युपगमेनेति वाच्यम्। समानजाति – [2]गुणकर्मपरमाणुमनस्सु [3]तथात्वासंभवात्। अत एव समानजातिगुण – [4]कर्माणः परमाणवः तथाविधमनांसि च परस्परव्यावर्तकधर्मवन्तः परस्पर[5]व्यावृत्तिज्ञानविषयत्वात् गवाश्वादिवदित्यनुमानात् पक्षधर्मताबलेन तत्रातिरिक्तविशेषसिद्धिः।

ननु विशेषैः परमाणूनामितरव्यावृत्तत्वसंभवेऽपि तेषां तत्कथं स्यात्; न च ते स्वत एव व्यावृत्ता इति वाच्यम्। तर्हि परमाणूनामेव स्वतो व्यावृत्तत्वमस्तु, कृतं विशेषाभ्युपगमगौरवेणेति चेत् – न। धर्मिग्राहकमानेन स्वाश्रयव्यावर्तकविशेषसिद्धावुपस्थिते

---

1 'विशेषसद्भावे' इत्यधिकः क.
2 'गुण' नास्ति ग.
3 तथासंभ° क.
4 °कर्मणः ग.
5 'व्यावृत्ति' नास्ति क.

सामान्यशून्यत्वं विशेषलक्षणम्। सत्यन्तेन सत्ताद्रव्यत्वात्मत्वादेः विशेष्यभागेन रूपादेः व्युदास इति दिक् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां
पदार्थमालायां विशेषनिरूपणं
समाप्तम् ॥

---

तद्गौरवस्य फलमुखत्वेनादोषत्वात्। किं च तेषां स्वतोव्यावृत्तत्वाभावे रूपादिव्यावर्तकरूपादीनामपि तत् न स्यात्। न च तेषां रूपत्वत्वाद्युपाधियोगात् व्यावृत्तिरिति वाच्यम्। तर्हि तत्तद्विशेषेऽपि तत्तद्व्यक्तित्वोपाधिसंभवात् व्यावृत्तिरित्यस्यापि [1]सुवचत्वादिति न किंचिदेतत्।

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत श्रीमद्दुद्गकवीन्द्र-
तनूजमुद्गलविदुषसूनुना भास्करेण विरचित-
पदार्थमालाप्रकाशे विशेषनिरूपणं
समाप्तम् ॥

---

1 सुवचनत्वा° क.

## अथ समवायनिरूपणम्

अयुतसिद्धानामाधार्याधारभूतानामिह प्रत्ययहेतुः संबन्धः समवायः । 'इह भूतले घट' इति प्रत्ययहेतुसंयोगवारणायायुतसिद्धानामिति । अमिश्रणार्थक-युधात्वनुसारात् ययोः द्वयोर्मध्ये एकमविनश्य — [1]दपराश्रितमेवावतिष्ठते तावयुत-सिद्धौ । यथा अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति ।

[2]ननु यस्य घटविशेषादेः भूतलाश्रितस्यैवावस्थानं तत्र पुनः [तत्रायुत] सिद्धाविति चेत् — न । उत्पत्तिकाले घटस्य भूतलसंयोगित्वाभावेन तथाश्रित-त्वाभावात् । तथा [3]चायुतसिद्धानामित्यस्यानित्यसंबन्धशून्यानामित्यर्थः । वाच्य-

---

समवायस्यैकत्वेन विभागासंभवात् लक्षणमेवाह — अयुतसिद्धानामिति । अमिश्रणार्थक इति । युधातोर्मिश्रणामिश्रणो — [4]भयार्थकत्वात् [5]प्रकृतेऽमिश्रणार्थकत्वमादाय युतः तौ युतौ अमिलितौ तथा न भवत इत्यतो [इत्ययुतौ] मिलिताविति यावत्; तथैव सिद्धावयुतसिद्धाविति शब्दार्थो द्रष्टव्यः ।

आधार्याधारभूतानामित्यस्य सार्थक्यायायुतसिद्धानामित्यस्य विवक्षितार्थमाह — तथा चेति । यथाश्रुते वाच्यवाचकभावसंबन्धस्यायुतसिद्धसंबन्धत्वाभावादेव वारणे तस्य वैयर्थ्यापत्तेरिति । वाच्यवाचकभावादीति । भगवदिच्छारूपशब्दशक्तिरेव वाच्यवाचकभाव इति तस्य [6]नित्यत्वम् । आदिना नित्यस्वरूपसंबन्धपरिग्रहः ।

---

1 °दवस्थमपरा° अ.
2 'ननु .... .... तथाश्रितत्वा-भावात्' इत्यन्तस्त्रुटितः अ. आ. इ.
3 'च' नास्ति अ.
4 °भयवत् ग.
5 'प्रकृते .... .... इति यावत्' इत्यन्तस्त्रुटितः, ग.
6 नित्यम् क.

वाचकभावादिसंबन्धवारणायाधार्याधारभूतानामिति । नित्यस्य सामान्यादेः कालिकादिसंबन्धवारणायेहेति । कालिकादिस्तु न इह प्रत्ययस्य हेतुः; किं तु तदानीं गोत्वमित्यादेः । तथा च कालिकादि – संबन्ध [संबन्धा] विषयक-प्रतीतिविषय इत्यर्थः ।

वस्तुतः नित्यसंबन्धे इह गवि गोत्वमित्यादि – प्रत्ययविषय – [1]संबन्धत्वे च लक्षणद्वये तात्पर्यं संबन्धत्वं संयोगसमवायान्यतरत्वम् ।

एतेन 'ज्ञाने घट' इत्यप्रतीतेर्विषयतायाः वृत्त्यनियामकत्वेऽपि 'घटे ज्ञानमि'ति प्रतीतेर्विषयतायाः वृत्तिनियामकत्वात् । ईश्वरज्ञानपरमाण्वादि-विषयतायाः अत्यन्ताभावादिसंबन्धस्यचाधार्याधारभूतानामित्यनेनावारणेऽपि न क्षतिरिति दिक् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां
पदार्थमालायां समवायनिरूपणं
समाप्तम् ॥

---

एतेन 'ज्ञाने घट' इति वक्ष्यमाणस्वरसादाह – वस्तुत इति । [2]आद्यलक्षणे वाच्यवाचक-भावसंबन्धातिव्याप्तिवारणायाह – [3]संबन्धत्वे चेति ।

एतेन – अयुतसिद्धानामित्यादिलक्षणवाक्यस्य लक्षणद्वयपरत्ववर्णनेन ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत श्रीमद्दुर्गकवीन्द्र-
तनूजमुद्गलविदुषसूनुना भास्करेण विरचित-
पदार्थमालाप्रकाशे समवाय निरूपणं समाप्तम् ॥

---

1 'संबन्धाविषयकप्रतीतिविषय' इत्यधिकः अ.

2 अयुक्तलक्षणे क.

3 संबन्धत्वं चेति क.

## अथाभावनिरूपणम्

अभावो द्विविधः – संसर्गाभावोऽन्योन्याभावश्च। संसर्गाभावस्त्रिविधः – प्रागभावप्रध्वंसात्यन्ताभावभेदात्। तत्र 'घटो भविष्यति' इत्यादिप्रतीतिसाक्षिको विनाशी अभावः प्रागभावः। 'घटो ध्वस्तः' इत्यादिप्रतीतिसाक्षिकोत्पत्तिमानभावो प्रध्वंसः। [1]'कपालादौ पटो नास्ती'ति प्रतीतिसाक्षिकः सदातनसंसर्गाभावोऽत्यन्ताभावः। 'घटो [2]ने'त्यादिप्रतीतिसाक्षिकः तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः। संसर्गाभावत्वं तु प्रागभावादित्रिके तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वमिति संप्रदायविदः॥

---

क्रमप्राप्तमभावं विभजते – अभाव इति।

संप्रदायमतं दूषयन् नव्यमतमाह – अत्रेति। संप्रदायमते इत्यर्थः। ननु संयोगि तादात्म्यं, न संयोगाद्यात्मकमननुगतत्वात्; किन्त्वखण्डस्वरूपात्मकमतिरिक्तमेव वा। न च समवायस्य समवायितादात्म्यत्वेन दोषः तस्यैकत्वेनाननुगतत्वादिति वाच्यम्। नव्यमते समवायस्य नानात्वात्। तथा च संसर्गाभावलक्षणे नासंभव इत्यस्वरसादाह – किं चेति। संयोगादिनेति। सामान्यतः प्रतियोगिसत्त्वस्यात्यन्ताभावविरोधित्वे संयोगादिना घटादिमति समवायादिना तदत्यन्ताभावप्रमितिः न स्यादिति तदुपपत्तये तस्य प्रतियोगितावच्छेदकसंबन्धः स्वीक्रियते। तथा च तेन संबन्धेन प्रतियोगिसत्त्वमत्यन्ताभाव – [3]विरोधीति नियमलाभात् संयोगादिना

---

1 भूतलादौ घटो आ.

2 'पटो' इत्यधिकः आ.

3 °विरोधादिति क.

अत्र [1]संयोगसमवायादेरपि संयोगि समवाय्यादितादात्म्यतया तदितरत्वाभावात् संयोगादिना घटात्यन्ताभावादावसंभवः। किं च संयोगादिना घटादिमति समवायादिना तदत्यन्ताभावादि प्रतीतेरत्यन्ताभावस्य प्रतियोगितावच्छेदकसंबन्धस्वीकारेऽपि प्रागभावध्वंसान्योन्याभावानां तत्स्वीकारे मानाभाव इति। भेदाकारानुगतप्रतीतिसिद्धं भेदत्वमखण्डोपाधिः। भेदेतराभावत्वं [2]संसर्गाभावत्वं चाभावत्वं च भावभेदः। प्रागभावत्वं, ध्वंसत्वं, अत्यन्ताभावत्वं चाखण्डोपाधिरूपमेवेति तु नव्याः॥

## प्रागभावसाधनम्.

अथ प्रागभावे किं मानम्? न तावत् प्रत्यक्षम्; असिद्धेः। 'घटो भविष्यती' त्यादिप्रत्ययस्य वर्तमानानन्तर [वर्तमानकालानन्तर] कालोत्पत्तिविषयक-

---

घटादिमति समवायादिना तदत्यन्ताभावप्रमित्युपपत्तिः। परं तु [3]प्रतियोगिमत्येव देशे प्रागभावादीनां स्वीकारात् तेषां [4]प्रतियोगितावच्छेदकसंबन्धस्वीकारे मानाभाव इत्यर्थः। तथा च तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगिताकत्वं ध्वंसप्रागभावयोरव्याप्तं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वमन्योन्याभावेऽसम्भवीति भावः। स्वमतेन भेदादीनां लक्षणानि आह — भेदाकार इति। 'नव्या' इत्यस्वरसोद्भावनम्। तद्बीजं तु 'इह कपाले समवायेन घटो भविष्यति' 'समवायेन घटो ध्वस्तः, न तु संयोगेन' 'इह समवायेन घटः, न तादात्म्येने'ति प्रतीतिबलात् प्रागभावादीनामपि प्रतियोगितावच्छेदकसंबन्धसत्त्वात् न कोपि दोषइति केचित्।

---

1 प्रसङ्गसम° आ.

2 'संसर्गाभावत्वं च' नास्ति इ.

3 प्रतियोगिसमवायिदेशे एव प्रागभावयोर्भेदस्य च प्रतियोगिमत्यपि स्वीकारात् क.

4 'प्रतियोगिना दैशिकविरोधासत्त्वात्' इत्यधिकः क.

त्वात्। [1]इत्थमेव 'श्वो भाविनि' 'अद्य भविष्यति' इत्यादिर्न व्यवहारः; कालादेरुत्पत्तावेवान्वयात्। नापि घटः घटप्रतियोगिकाविनाशि – भिन्नाभावप्रतियोगी मेयत्वात्, पटवदित्यनुमानम्; अप्रयोजकत्वात्। न च घटादिकार्यधारावारणाय प्रागभावसिद्धिः। कार्यद्रव्यत्वावच्छिन्ने समवायेन द्रव्यत्वावच्छिन्नाभावहेतुत्वेनैव तद्वारणात्। न [2]चाव्याप्यवृत्तेः कार्यस्य द्वितीयक्षणे [3]उत्पत्त्यापत्तिः। समानावच्छेदकतया तत्र तदभावस्य हेतुत्वात्। तथापि निर्विकल्पकस्य चतुर्थक्षणे उत्पत्तिःस्यात्। न स्यात्, तन्निर्विकल्पककालोत्पत्तिकध्वंसव्यक्त्यादेरेव तत्र प्रतिबन्धकत्वात्।

---

अथैकदेशप्रागभावं पुरस्कृत्य प्रत्यवतिष्ठते – अथ प्रागभाव इति। 'इह घटप्रागभाव' इत्याकारकप्रत्यक्षं प्रथममाशङ्क्य निषेधति – न तावदिति। अत एवासिद्धेरिति सङ्गच्छते। 'घटो भविष्यती'ति प्रत्यक्षस्य सर्वप्रसिद्धत्वादिति। ननु 'घटो भविष्यती'ति प्रत्यक्षमेव तत्र मानम्; विद्यमानप्रागभावप्रतियोगित्वरूपस्य भविष्यत्वस्यात्र भानादित्यत आह – घटो भविष्यतीत्यादीति। आदिना 'घटो भविष्यन्' इत्यस्य संग्रहः। वर्तमानकाल इति। तथा च भविष्यत्वं [4]वर्तमान– [5]कालोत्तरकालोत्पत्तिकत्वमेव; न तु विद्यमानप्रागभाव प्रतियोगित्वरूपमप्रसिद्धेरिति भावः। अनुमानं तत्र मानत्वेनाशंक्य निषेधति – नापीति। घटप्रतियोगिक इति। अत्र घटप्रतियोगिकाविनाश्यभावः ध्वंसादिस्त्रिविधः; तद्भिन्नपटात्यन्ताभावादिप्रतियोगित्वमादाय दृष्टान्ते साध्यनिश्चयः। पक्षे च घटप्रतियोगिकाविनाशिभिन्नाभावप्रतियोगित्वं विनाशिनं प्रागभावमादायैव पक्षधर्मताबलात् सिध्यतीत्यर्थः। अप्रयोजकत्वादिति। व्याप्तिपक्षधर्मतावत्वेऽप्यनुकूलतर्कविरहादित्यर्थः। कार्यद्रव्यत्व इति। अत्र द्रव्यपदं संपातायातम। कार्यमात्रवारणाय समवायेन कार्यत्वावच्छिन्ने समवायेन कार्यत्वावच्छिन्नाभावहेतुत्वस्यैव वक्तुं

---

1 'इत्थमेव .... .... उत्पत्तावेवान्वयात्' इत्यन्तं नास्ति अ. आ.
2 वा इ.
3 तत्त्वापत्तिः आ.
4 'च' इत्यधिकः ग.
5 'कालोत्तर' नास्ति क.

वस्तुतः निर्विकल्पकत्वस्य कार्यतानवच्छेदकत्वात् तादृशतादृशप्रत्यक्षसामग्रीसत्त्वे तादृशप्रत्यक्षोत्पादनियमात् निर्विकल्पकापत्तिरेव दुर्घटा। सामग्र्याः कार्यतावच्छेदकावच्छिन्नव्याप्यताया एव स्वीकारात्।

अथ तथापि शततन्तुषु भाविनः पटस्य द्विचतुरादितन्तुषु संयुक्तेषूत्पत्तिः स्यात्; सामग्रीसत्त्वात्। न च प्रागभावस्यापि सत्त्वात् तत्रापि तदनुत्पत्तिर्दुर्घटा। तत्पटप्रागभावव्याप्य यावत्संयोगसत्त्वेन हेतुत्वादिति चेत् — न। कतिपयसंयोगेष्वतीते — [1]ष्वनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात्; तत्पटव्याप्ययावत्संयोगत्वेन हेतुत्वसंभवाच्च।

---

योग्यत्वादिति भावः। न चाव्याप्यवृत्तेरिति। शाखावच्छेदेनोत्पन्नसंयोगादेः पुनः द्वितीयक्षणे उत्पत्तिः स्यात्; मूलावच्छेदेन तदभावसत्त्वादित्यर्थः। समानावच्छेदकतयेति। शाखावच्छिन्न – [2]तत्तत्संयोगाद्युत्पत्तिं प्रति शाखावच्छिन्नतत्तत्संयोगाभावस्य कारणत्वात् शाखावच्छिन्नतत्तत्संयोगादेः न पुनरुत्पत्तिरित्यर्थः। तथापि। समानावच्छेदकतया तदभावहेतुत्वाभ्युपगमेनाव्याप्यवृत्तिसंयोगादेः पुनरुत्पत्तिकारणेऽपि [वारणेऽपि] उत्पत्तिचतुर्थक्षणे सविकल्पकस्य पुनरुत्पत्तिरापादयितुमशक्या; तज्जनकविशेषणज्ञानादेस्तु द्वितीयक्षण एव नाशादत आह – निर्विकल्पकस्येति। द्वितीयतृतीयक्षणयोः तदभावसत्त्वात् चतुर्थक्षण इत्युक्तम्। तन्निर्विकल्पककाल इति। "प्रतिक्षणं किंचित् नश्यति" इति न्यायात् तन्निर्विकल्पककालोत्पत्तिकध्वंसव्यक्तेः द्वितीयक्षणादौ तदुत्पत्तिप्रतिबन्धकत्वासंभवात् प्रागभावाभ्युपगमो व्यर्थ इति भावः॥

---

1 °ष्ववान्तरपटा° अ.

2 तत्र संयोगा° अ.

वस्तुतः सामग्र्याः कार्यतावच्छेदकावच्छिन्नोत्पत्ति – व्याप्यताया एवोपगमात्। तदा द्विचतुरादितन्तुकपटस्यैवोत्पत्तेः शततन्तुकपटोत्पत्त्यापादकाभावः; व्यक्तिस्थानीयापत्तिविरहात्। तर्हि तत्पटत्वावच्छिन्ने किं नियामकम्? सामान्यतः क्लृप्तकारणताकतत्तत्तन्तुतत्तत्संयोगादिकम्। तादृशनियामकत्वमेव हेतुत्वमिति चेत् – प्रागभावस्वीकारेऽपि तत्त्वं दुर्वारम्। तद्रूपेण तदाऽन्यथासिद्धत्वमिति चेत् – तदेव विफलम्।

---

ननु तादृशध्वंसव्यक्तेः तत्र प्रतिबन्धकत्वकल्पने तदभावस्य तत्र हेतुत्वमपि कल्पनीयम्; कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकशब्दार्थत्वात्। तथा च कल्पनाद्वयसाम्येन प्रागभावहेतुत्वकल्पनमुचितमित्यरुचेराह – वस्तुत इति। कार्यतानवच्छेदकत्वादिति। [1]सविकल्पकप्रत्यक्षजनकविशेष–जन्यादि [ज्ञानादि] विरहे प्रत्यक्षमात्रसामग्रीतः संनिकर्षादेरेव निर्विकल्पकसंभवे तत्र विशेषणसामग्र्यकल्पनादिति भावः।

कतिपय इति। तत्तन्तुनिष्ठातीतानागतवर्तमानयावत्संयोगानां तत्पटप्रागभावव्याप्यत्वात् कतिपयेष्वतीतेष्वनागतेषु वा तत्पटानुत्पत्तिप्रसङ्ग इत्यर्थः। युक्तिसाम्यादाह – तत्पटव्याप्य इति। न तूक्तदूषणोद्धारः। प्रागभावकल्पनात् लाघवं तु [2]भवत्वेवेति भावः॥

शततन्तुषु द्विचतुरादितन्तुसंयोगकाले भाविशततन्तुक – [3]पटोत्पत्त्यापादनमेव न संभवति। सामान्यतः तन्तुत्वेन तन्तुसंयोगत्वेन च पटत्वावच्छिन्नं प्रति कारणत्वस्वीकारेण विशेषतः [4]तदापादकाभावादित्यभिप्रायवानाह – वस्तुत इति। ननु कालिकव्यक्तिस्थानीयापत्तिरेव तदापादिकेत्यत आह – व्यक्तिस्थानीय इति। तस्याः दूषणत्वविरहादित्यर्थः। तद्दूषणत्वे कुत्राप्युपपत्तौ कालनियमो न स्यात्। न च तत्तत्क्षणविशेषहेतुत्वादेव

---

1 'सविक .... .... संनिकर्षादेः' इत्यन्तस्त्रुटितः। तत्स्थाने – 'ज्ञानस्य सामान्यजनकात्मभावो संयोगादेरेव' इत्यस्ति ग.

2 भावस्यैवेति ग.

3 पटोपादन° ग.

4 तदा बाधकाभावा° क.

तर्हि जन्यसत्त्वेन सत्त्वेनेत्येवास्त्विति चेत् — न। तन्तुत्वादिना कारणत्वबुद्धिव्यपदेशयोरप्रामाण्यापत्तेः, पटत्वावच्छिन्नस्याकस्मिकत्वापत्तेश्च। किमाकस्मिकत्वम्? तदवच्छिन्नसामग्र्यनिश्चय एतावत्सत्त्वेऽवश्यं पटोत्पत्तिरित्यनिश्चयः। इत्थं च प्रवृत्तिरपि दुर्घटा। तादृशनिश्चय एव कृतिसाध्यता — [1]निश्चयसंभवात् तत्पटत्वावच्छिन्नस्याकस्मिकत्वं त्विष्टम्। तद्धर्मावच्छिन्नसामग्रीसत्त्वेऽपि तथानिश्चयायोगात्, तद्धर्मावच्छिन्ने प्रवृत्त्यभावाच्च। किं च विशेषान्वयव्यतिरेकाभ्यां सामान्यव्यभिचारनिर्णयानुगतागुरुविशेषान्तरानुपस्थिति-

---

तन्नियम इति वाच्यम्; [2]एककारणपरिशेषापत्तेः, प्रत्यक्षसिद्धकुविन्दकुलालादिहेतुत्वविलयापत्तेश्चेति भावः। तर्हीति। यदि सामान्यत एव कार्यकारणभावो तदा तत्र तत्र तत्तत्पटत्वावच्छिन्ने किं नियामकमिति प्रश्नवाक्यार्थः। उत्तरमाह — सामान्यतः क्लृप्त इति। तादृशनियामकत्वमेवेति। तथा च [3]द्विचतुरादितन्तुसंयोगकाले शततन्तुकपटोत्पत्त्यापत्तिरिति भावः। प्रागभाव इति। प्रागभावस्वीकारपक्षेऽपि तादृशनियामकत्वरूपहेतुत्वं द्विचतुरादितन्तुसंयोगकालेऽपि तत्र संभवतीति शततन्तुकपटोत्पत्त्यापादितस्य वारणात् प्रागभावस्वीकारो व्यर्थ एवेति भावः। तद्रूपेणेति। तन्तुत्वतत्संयोगत्वादिसामान्यरूपेण तत्तन्तुसंयोगादिकं प्रागभावस्वीकारपक्षे [4]शततन्तुकं प्रत्यन्यथा — [5]सिद्धं न भवतीति द्विचतुरादिसंयोगकाले न तदापादनमित्याशंकार्थः। तदेति [तदेव] विफलमिति। तन्तुत्वतत्संयोगत्वादिना तन्तुसंयोगादेः वस्तुतः शततन्तुकं प्रत्यन्यथासिद्धत्वे द्विचतुरादिसंयोगकाले तदापादनं न संभवतीति प्रागभावस्वीकारो व्यर्थ एवेति भावः।

---

1 धीसंभवात् आ.

2 एवं का.

3 'द्वि .... .... रूपहेतुत्वं' इत्यन्तस्त्रुटितः क.

4 तत्तन्तुकं क.

5 सिद्धेव संभवतीति क.

 

लाघवादिप्रतिसन्धानवशात् सामान्यत एव हेतुहेतुमद्भावग्रहात् । ग्राहकाभावादेव [1]न विशेषकार्यकारणभावसिद्धिः ।

यदि च तदेति न विफलम्; प्रागभावसत्त्व एव तेनान्यथासिद्धत्व-संभवात् । अन्यथा तन्तुत्वाद्यवच्छिन्नस्य पटत्वाद्यवच्छिन्ननियामकत्वेऽप्यन्यथा-सिद्धत्वस्य सुवचत्वात् ।

---

शङ्कते – तर्हीति । यदि सामान्यतः [2]क्लृप्तकारणताक – तत्तत्तन्तुसंयोगादिकमेव तत्तत्पटत्वावच्छिन्ने नियामकं [3]तर्हीत्यर्थः । शङ्कां परिहरति – तन्तुत्वादिनेति । अत्र व्यपदेशोऽभिलापात्मकव्यवहारः । ननु यदि तन्त्वादेर्विशेषतो न तत्तत्पटादौ हेतुत्वं तदा तस्याकस्मिकत्वं स्यादत आह – तत्पटत्वावच्छिन्नस्येति । ननु पटत्वावच्छिन्नं प्रति तन्तुत्वादि-नाऽन्वयव्यतिरेकयोरिव तत्तत्पटत्वावच्छिन्नं प्रति तन्तुत्वादिनाऽन्वयव्यतिरेकयोस्सत्त्वात् कथं न विशिष्यकार्यकारणभावग्रह इत्यत आह – किं चेति । सामान्यरूपेण व्यभिचारग्रहे लघुरूपान्तरोपस्थितौ च सामान्यतः कारणत्वाग्रहादाह – सामान्यव्यभिचार इत्यादि । [4]सामान्यरूपेण व्यभिचारनिर्णयः सामान्यरूपापेक्षया लघुविशेषधर्मान्तरानुपस्थितिः सामान्यरूपेण कार्यकारणभावैक्यलाघवं चेत्यादिप्रतिसन्धानवशादित्यर्थः ।

यदि चेति । 'इति विभाव्यत' इत्यग्रिमेणान्वयि । तदेतीति । तद्रूपेण तदा नानन्यथा-सिद्धमिति प्राक्पठितायां फक्किकायां प्रविष्टं [5]तदेति न विफलमित्यर्थः । वैफल्याभावमेव

---

1 'न' नास्ति आ. 2 'तन्तुत्वादिना' इत्यधिकः क.

3 'समवायेनानन्यसत्त्वावच्छिन्नं प्रति तादात्म्येनासत्त्वेनैव हेतुत्वमस्तु । सत्त्वेन क्लृप्तकारणताकतन्तुकपालादीनामेव पटत्वघटत्वावच्छिन्न नियामकत्वस्यापि सुवचत्वात्' इत्यधिकः क.

4 'सामान्य .... .... वशादित्यर्थः' इत्यन्तस्त्रुटितः ग.

5 तत्पदं न क.

किं च विशेषान्वयव्यतिरेकाभ्यां जन्यसत्त्वावच्छिन्ने सत्त्वेनैव हेतुत्वं सिध्यतु। व्यवहारादिकं तु समानमेवेति विभाव्यते। तदाऽस्तु व्यक्तिस्थानीयापत्तिः; तथापि विशिष्य [विशेषतः] चरमसंयोगहेतुत्वेनैव तदा शततन्तुकानुत्पत्तेः।

अथास्तु कालनियमः, चरमसंयोगहेतुत्वात्, तथापि देशनियमाय [देशनियमार्थं] प्रागभावसिद्धिः। शततन्तूनां तत्संयोगानां वा विशिष्य तद्धेतुत्वे गौरवात्, व्यभिचाराच्च; तत्प्रागभावस्यैव लाघवात् तत्पटहेतुत्वात्।

---

विवृणोति – [1]प्रागभावसत्त्व एवेति। [2]अन्यथा – प्रागभावासत्त्वेऽपि तत्तत्तन्तुसंयोगादेः शततन्तुकं प्रत्यन्यथासिद्धत्वे।

विशेषणान्वयव्यतिरेकाभ्यामपि तन्तुत्वेन पटत्वेनेति सामान्यत एव कार्यकारणभावग्रहो भवतीत्युक्ते दूषणमाह – किं चेति। ननु जन्यसत्त्वावच्छिन्नं प्रति सत्त्वेनैव हेतुत्वे तन्तुत्वादिना पटादिकारणत्वबुद्धिव्यवहारौ न स्यातामत आह – [3]व्यवहारादिकं त्विति। तदाऽस्त्विति। कालिकव्यक्तिस्थानीयापत्तिः, शततन्तुषु द्विचतुरादिसंयोगकाले भाविशततन्तुकपटोत्पत्तिः स्यादित्यादिरूपात् [रूप] दूषणमस्त्वित्यर्थः। एतादृशव्यक्तिस्थानीयापत्तिसत्त्वेऽपि प्रागभावो न सिध्यति। [4]विशेषतश्चरमसंयोगहेतुत्वेनैव तन्निरासादित्याह – तथापीति। विशेषतश्चरम इति। कालिकसंबन्धेन शततन्तुकादितत्तत्पटं प्रति कालिकसंबन्धेन तत्तच्चरमसंयोगस्य तत्तद्व्यक्तित्वेन हेतुत्वं वाच्यमिति द्विचतुरादिसंयोगकाले न शततन्तुकोत्पत्तिरित्यर्थः। देशनियमार्थम् – शततन्तुकादेर्देशनियमार्थम्। विशिष्य – तत्तत्तन्तुत्वेन

---

1 'प्रागभावसत्त्व एवेति' नास्ति क.
2 अन्यप्रागभाव° क.
3 व्यवहाराभ्यां समानमित्यर्थः। तदा° ग.
4 विशेषतः .... .... तथापीति' इत्यन्तस्त्रुटितः क.

किं च यत्र शततन्तुकपटस्य मध्येऽवयवसंयोगनाशात् पञ्चाशत्तन्तुकपटद्वयोत्पत्तिः, तत्र तयोः कालनियमस्य शततन्तुकनाशहेतुत्वेनैव निर्वाहेऽपि देशनियमाय प्रागभावसिद्धिरिति चेत् — न। तत्र चरमसंयोगशततन्तुकनाशयोः स्वसमानाधिकरणान्यतमत्वविशेष संसर्गेण हेतुत्वादेव देशनियमस्यापि संभवात्। न च यत्र युगपदुत्पन्नैः शतसंयोगैः पटोऽऽरभ्यते, तत्र चरमसंयोगानामपि तत्त्वतत्त्वेन हेतुत्वे गौरवात् प्रागभावसिद्धिः। तत्रापि तावात्मयोग [तावत्संयोग] मात्रवृत्तिजात्या द्रव्यारंभकतावच्छेदकजात्यैव वा तत्कालावच्छिन्नान्यतमत्वसंसर्गेण

---

तत्तत्संयोगत्वेन च। तद्धेतुत्वे — शततन्तुकहेतुत्वे। गौरवादिति। शक्तिकार्यकारणभावकल्पनापत्या गौरवमित्यर्थः। व्यभिचाराच्चेति। शततन्तुकस्य समवायेन शततन्तुष्वेव सत्त्वात् तादात्म्येन तत्तन्तोश्चासत्त्वात् परस्परव्यभिचारे इत्यर्थः।

प्रागभावसिध्यर्थं स्थलान्तरमाह — किं चेति। तत्र चरमसंयोग इति। शततन्तुकपटे चरमसंयोगस्य शततन्तुकनाशजन्य पञ्चाशत्तन्तुकपटद्वये च शततन्तुकनाशस्य स्वसमानाधिकरणान्यतमत्वसंसर्गेण [1]हेतुत्वं वाच्यम्। तेन प्राग — [2]भावासत्त्वेऽपि देश — [3]नियमस्य संभवत्येव। स्वं कार्यत्वेनाभिमतो तत्पटः तत्समानाधिकरणमन्यतमत्वं तत्तन्तुनिष्ठं तदात्मकसंसर्गेण चरमसंयोगशततन्तुकनाशयोः तत्तत्पटसमवायिदेश एव सत्त्वादित्यर्थः। [4]चरमसंयोगादेः समवायादिना हेतुत्वे व्यभिचारः। शततन्तुकादेः तत्संयोगशून्यतन्तुष्वपि समवेतत्वात्। तत्र च तत्संयोगस्य समवायेन सत्त्वादित्यन्यतमत्वसंसर्गेण हेतुत्वमुक्तमिति भावः। शत [तत्र] चरमसंयोगानामपीति। तत्पटजनने स्वोत्तरसंयोगानपेक्षत्वरूपचरमसंयोगत्वस्य युगपदुत्पन्नशतसंयोगेष्वपि सत्त्वात् तेपां प्रत्येकचरमसंयोगत्वेन हेतुत्वे गौरावात् प्रागभावसिद्धिरित्यर्थः। तत्रापि — युगपदुत्पन्नशतसंयोगारब्धे पटेऽपि। तावत्संयोगमात्र-

---

1 'हेतुत्वं' नास्ति क.
2 °भावसत्त्वे क.
3 नियमासंभ° क.
4 'चरम .... .... मुक्तमिति भावः' इत्यन्तस्त्रुटितः ग.

हेतुत्वात् । न च यत्र तावत्तन्तुविषयिण्यो नानाबुद्धयः तासामपि हेतुत्वापत्तिः; प्रत्यक्षात्मकबुद्धीनां तावन्मात्रविषयत्वे मानाभावात् । शाब्दबुद्धेस्तथात्वेऽपि सामान्यतः तस्याः अहेतुत्वेन विशिष्याप्यहेतुत्वात् । तत्पटाव्यवहितपूर्वं तावत्तन्तुमात्रविषयकप्रत्यक्षस्य शब्दादेर्वा निर्णयाभावात् । संदिग्धव्यभिचारकत्वेन निश्चिता व्यभिचारस्य संयोगस्यैव हेतुत्वात् सत्त्वेन सर्वेषामेव [1]तत्त्वसंभवाच्च ।

---

वृत्तिज्ञितौ मानाभावादाह – द्रव्यारंभकतेति । द्रव्यारंभकतावच्छेदकजात्यनवच्छिन्नसंयोगस्यान्यतन्तुष्वपि अन्यथापि च सत्त्वात् न देशकालनियमः संभवतीत्यत उक्तं – तत्कालावच्छिन्नान्यतमत्व – [2]संसर्गेणेति । शततन्तुनिष्ठेन कार्यकालावच्छिन्नान्यतमत्वसंसर्गेणेत्यर्थः । न च यत्रेति । युगपदुत्पन्नशतसंयोगानामिव तावत्तन्तुविषयकनानाबुद्धीनामपि विशेष्यतासंबन्धेन तत्पटहेतुत्वादपि देशनियमसंभवादिति भावः । शाब्दबुद्धेरिति । उपादानप्रत्यक्षस्यैव कार्यहेततयोपादानविषयकशाब्दस्य सामान्यतोऽहेतुत्वात् विशिष्याप्यहेतुत्वमिति [3]भावः । ननूपादानप्रत्यक्षस्य संग्राहकलाघवादुपादानज्ञानत्वेनैव हेतुत्वम्; तच्चोपादानशब्देऽपीत्यत आह – तत्पट इति । अनिर्णयादित्ययं संदिग्धव्यभिचारकत्वे हेतुः । संयोगस्यैव – चरमसंयोगस्यैव । तद्धेतुत्वस्यैवोपक्रमादिति भावः । ननूपादानप्रत्यक्षेण विना कार्यानुत्पत्तेः तत्पटाव्यवहितपूर्वं तावत्तन्तुमात्रविषयक – प्रत्यक्षादेर्निर्णयसत्त्वात् निश्चिताव्यभिचारकत्वमिति तद्धेतुत्वे न दोष इत्यत आह – सत्वेनेति । सर्वेषामेव – चरमसंयोगतावत्तन्तुमात्रविषयकप्रत्यक्षादीना – [4]मेव । तत्त्वसंभवादिति । संग्राहकलाघवेन सर्वेषां सत्त्वेन [5]एव हेतुत्वसंभवादित्यर्थः ।

---

1 'तत्त्वसंभवाच्च' नास्ति अ.

2 ०'संसर्गेण .... .... न्यतमत्व' इत्यन्तस्त्रुटितः क.

3 'भावः' नास्ति क.

4 'एव' नास्ति ग.

5 'एव' नास्ति ग.

[1]स्यादेतत् । व्यक्तिस्थानीयापत्तिसत्त्वे बहूनां तन्तूनां युगपदुत्पन्नानन्तसंयोगादुत्पन्नस्यपटस्य नानासंयोगनाशात् नष्टस्य पुनस्तेषामेव तन्तूनां संयोगान्तरात् [2]पटान्तरोत्पत्तिकाले उत्पत्तिवारणाय प्रागभावसिद्धिः । उत्तरपटस्तु प्राङ्नोत्पद्यते, पूर्वपटध्वंसस्यापि तद्धेतुत्वात् । न च प्राक्तन – घटे [पटे] बहुत्वविशेषस्य हेतुत्वात् न दोषः । नव्य – नये [मते] तद्बहुत्वस्याग्रेऽपि सत्त्वात् । [3]ईदृशानन्तप्राक्तनपटोत्पत्तिवारणाय कार्यत्वावच्छिन्ने प्रागभावत्वेन हेतुत्वस्यैवौचित्यात् । आकाशाद्युदासीनमादाय [4]बहुत्वस्य हेतुत्वापत्तेश्च ।

---

व्यक्तिस्थानीय इति । कालिकव्यक्तिस्थानीयापत्तिसत्त्वादित्यर्थः । न दोष इति । [5]उत्तरपटोत्पत्तिकाले प्राक्तनघटोत्पत्यापादनं नेत्यर्थः । नव्यमते इति । द्वित्वत्रित्वादि सङ्ख्यापेक्षा [बुद्ध्या न जन्यते], किन्त्वभिव्यज्यत इति नव्यमतम् । तथा च शक्त न [प्राक्तन] पटहेतुत्वं ... [हेतुबहुत्व] विशेषस्योत्तरपटोत्पत्तिकालेऽपि सत्त्वात् तदापादनं दुर्निवारमिति कार्यत्वावच्छिन्ने प्रागभावत्वेनैव हेतुत्वमुचितमित्यर्थः ।

प्राचां मतेऽपि तत्र बहुत्वविशेषस्य हेतुत्वं नोचितमित्याह – आकाशादीति । ईश्वरीय इति । सर्वानुगतस्येश्वरीयोपादानप्रत्यक्षस्यादिपदग्राह्यास्मदादिप्रत्यक्षस्य[6]वा तत्तत्कार्यकालावच्छिन्न – [7]तत्तत्कार्यावच्छिन्नविशेष्यतासंबन्धेन तत्तत्कार्यं प्रति हेतुत्वात् न देशकालातिप्रसङ्ग इत्यर्थः । [8]ईश्वरप्रत्यक्षस्य तत्पटकालावच्छिन्न विशेषणतायाः तन्त्वन्तरेऽपि

---

1 'स्यादेतत् ... ... पुनस्तेषामेव' इत्यन्तस्त्रुटितः अ.

2 पटोत्पत्ति° अ.

3 तादृशा° आ.

4 बहुत्वापत्तेश्च इ.

5 'उत्तर .... .... विशेषस्य' इत्यन्तस्त्रुटितः क.

6 च क.

7 'तत्तत्कार्यावच्छिन्न' नास्ति क.

8 'ईश्वर .... .... प्रत्यक्षस्यैव' इत्यन्तस्त्रुटितः ग.

एतेन तत्तत्कालावच्छिन्नान्यतमत्वसंसर्गेण संयोगहेतुत्वमप्यपास्तम् । आकाशादिकमादायान्यतमत्वनानात्वादितिचेत् — न । ईश्वरीयोपादानप्रत्यक्षादेः तत्कालावच्छिन्नतत्पटावच्छिन्नविशेष्यतया हेतुत्वात् । किं च अवच्छिन्न [तदवच्छिन्न] समवेतत्वेन तत्तद्व्यक्तिविशिष्टत्वावच्छिन्ने तत्तद्व्यक्तित्वेन तत्तत्क्षणवृत्तिकार्ये च तत्तत्क्षणपूर्वक्षणत्वेन हेतुत्वात् न देशकालातिप्रसङ्गः ॥

---

सत्त्वात् तत्पटावच्छिन्नविशेष्यतासंबन्धेन तत्कार्यं प्रति हेतुतायाः तन्त्वन्तरेऽपि सत्त्वात् तत्पटावच्छिन्नविशेष्यतायाश्चोत्तरपटकालेऽपि सत्त्वात् नातिप्रसङ्गवारणम्; अतः उभयावच्छिन्नत्वं विशेष्यतायामुपात्तम् । उपादानप्रत्यक्षस्यैव [1]हेतुत्वे विनिगमनाविरहात् । तन्तुसंयोगादेः हेतुत्वमभ्युपेत्याह — किं चेति । तदवच्छिन्न इति । तत्पटावच्छिन्नतत्तत्तन्तु समवेतरूपेणेत्यर्थः । तदवच्छिन्नसमवेतत्वेन तन्तुरूपादिसाधारणेन तत्तत्तन्तुसंयोगस्य तत्पटं प्रति हेतुत्वमयुक्तमत आह — तत्तद्व्यक्तीति । तत्तत्तन्त्वादिव्यक्तिविशिष्टत्वावच्छिन्नतत्पटादौ हेतुत्वमित्यर्थः । कालातिप्रसङ्गवारणायाह — तत्तत्क्षणवृत्तीति ।

स्वमतमाह — वस्तुतस्त्विति । तत्काल इति । तत्तत्पटकालावच्छिन्नाः तत्पटहेतुभूताः तत्तत्संयोगाः तदभावकूटस्यात्यन्ताभाव एवेत्यर्थः । न च तादृशकूटात्यन्ताभावस्य तत्तत्संयोगात्मकत्वादननुगमः । तस्यातिरिक्तत्वात् । [2]अनतिरिक्तत्वेऽपि तादृशकूटात्यन्ताभावत्वेनाखण्डेनानुगतेन हेतुत्वमित्यदोषात् । न च [3]कूटस्यैकविशिष्टापररूपतया विशेषण-

---

1 हेतुत्वात् । तन्तु° ग.

2 'अनति .... .... मित्यदोषात्' इत्यन्तस्त्रुटितः ग.

3 कूटस्यैकापरत्वरूपतया क.

वस्तुतस्तु तत्कालावच्छिन्नतत्पटहेतुतत्तत्संयोगाभावकूटात्यन्ताभाव एव देशकालनियामक इति नूतनः पन्था:; अधिकं "दीधिति [1]विद्योतने"-ऽनुसन्धेयम् ॥

इति श्रीमज्जयरामन्यायपञ्चानन-
विरचितायां पदार्थमालाया-
मभावनिरूपणं
समाप्तम् ॥

---

विशेष्यभावे विनिगमकाभावे नानाविधत्वात् तादृशकूटत्वावच्छिन्नात्यन्ताभावो नैकेति वाच्यम्। तत्तत्संयोगाभाव इति। बुद्धिविशेष – [2]विषयत्वरूपकूटस्यात्र प्रवेशादिति ॥

इति श्रिमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत-
श्रीमद्दुर्गकवीन्द्रतनूजमुद्गलविदुषसूनुना-
भास्करेण कृतपदार्थमालाप्रकाशे
अभावनिरूपणं
समाप्तम् ॥

---

1 °विषयित्व° क.

2 द्योतने आ.

## अथ साधर्म्यवैधर्म्यनिरूपणम्

यद्यपि [1]पदार्थानामुद्देशेनैव तद्धर्मा अप्युपदिष्टाः, तद्धर्माणां पदार्थानतिरेकात्; तथापि त एव परस्परधर्माः परस्परविवेकायोपयुज्यन्त इति तद्धर्मा अपि सामान्यतः उद्दिश्यन्ते । तत्र सप्तानां साधर्म्यमस्तित्वाभिधेयत्वज्ञेयत्वादि । अस्तित्वं कालसंबन्धित्वम् । अभिधेयत्वमभिधाविषयत्वम् । अभिधा च सङ्केतग्राह्योऽधिकः पदार्थ इति मीमांसकाः । सङ्केतभिन्नायामभिधायां मानाभावात् । संकेत एवाभिधेति नैयायिकाः । आश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः । यद्यपि गगनादिकं सदैवास्तीत्यादिव्यवहारात् नित्यद्रव्याणामपि कालिकदिक्कृतसंबन्धाभ्यामाश्रितत्वमस्ति । न चेदस्तित्वमेव कुतः, तथापि तदुभयातिरिक्तसंबन्धेनाश्रितत्वं विवक्षितं, समवायस्यापि स्वरूपसंबन्धेनाश्रितत्वाददोषः ।

केचित्तु – नित्यद्रव्येषु कालिकादिनापि नाश्रितत्वम्; अस्तित्वं तु यथाकथञ्चित् कालसम्बन्धित्वमात्रमित्याहुः ।

---

[2]सप्त अपि द्रव्यगुणादीनुद्दिश्य कर्तव्यतत्तद्धर्मोद्देशं प्रतिज्ञातुमुपक्रमते – यद्यपीत्यादि । *धर्मतां – धर्मधर्मिभावम् ।

यथाकथञ्चित् – [3]वृत्त्यनियामकस्वरूपसंबन्धेन ।

---

1 'पदा .... .... सदैव' इत्यन्तस्त्रुटितः अ.

2 द्रव्यगुणादिसप्तपदार्था विशेषतोद्दिश्य कर्तव्यं, विशेषतः तद्धर्मोद्देशं प्रतिज्ञातु° क.

3 वृत्तिनि° क.

---

* एतदनुगुणपाठो मूले नोपलभ्यते ।

 

[1]समवायभिन्नानामनेकत्वं, *नित्यद्रव्यभिन्नानां पञ्चानां समवेतत्वं, द्रव्यादीनां त्रयाणामपि सत्तावत्वं, द्रव्यत्वादिरूपसामान्यविशेषवत्त्वं, वैशेषिकसङ्केतितार्थशब्दाभिधेयत्वं, धर्माधर्मजनकत्वं च। अधर्मं विहाय धर्मकर्तृत्वं, धर्मं विहायाधर्मकर्तृत्वमिति बोध्यम्। जात्यादीनां तु [2]न साक्षाद्धर्मादि-[3]कर्तृत्वं, आश्रयावच्छेदकत्वेनान्यथासिद्धेः। [4]आरुण्यादिगुणानां तु [5]साधनविशेषणत्वात् क्रयभावनान्वययोग्यत्वाच्च धर्मसाधनता।

---

द्रव्यत्वादीति। [6]आदिना गुणकर्मत्वादिपरिग्रहः। एतेषां सामान्यविशेषरूपत्वं [अनु]वृत्तिव्यावृत्ति प्रत्ययहेतुत्वादिति। वैशेषिक इति। वैशेषिकैः स्वशास्त्रे व्यवहार लाघवाय द्रव्यादित्रिकं समुदितप्रत्येकमपि च निरुपपदार्थशब्देनोच्यतामिति सङ्केतो विहितः। अतः तादृशार्थशब्दाभिधेयत्वं त्रयाणामेव साधर्म्यमित्यर्थः। निरुपपदेतिकरणात् 'पदार्थाः सप्तैवे'त्यादेरुपपत्तेरिति। एकस्यैव यागादेः कलञ्जभक्षणादेः वा न धर्माधर्मोभयकर्तृत्वमत आह – अधर्मं विहायेत्यादि। आश्रय इति। "अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति" इत्यादौ गोत्वादिजातेः गवाद्याश्रयावच्छेदकत्वेन दण्डत्वादिवदन्यथासिद्धेरित्यर्थः। नन्वेवमारुण्यादीनामप्याश्रयावच्छेदकत्वेनान्यथासिद्धेः धर्मादिजनकत्वं न स्यादत आह – आरुण्यादीति। आरुण्यादिगुणानां धर्मादिसाधनगवादिविशेषणत्वात् धर्मे साधनत्वमित्यर्थः।

---

1 समवायाभि° आ.

2 'साधनविशेषणत्वात्, यत्र भावनायोग्यत्वाच्च धर्मसाधनता। नत्वेवं गोत्वजातेरपि तत्साधनता स्यात्' इत्यधिकग्रन्थो दृश्यते अ.

3 जनकत्वं अ.

4 आरोप्यादि° अ.

5 'साधन .... .... तत्साधनता स्यात्' इत्यन्तस्त्रुटितः अ.

6 'आदिना .... ... हेतुत्वादिति' इत्यन्तस्त्रुटितः क.

---

* नित्यद्रव्यभिन्नानां पञ्चानामिति। अनित्यद्रव्यगुणकर्मसामान्यविशेषाणां पञ्चानामित्यर्थः

नन्वेवं गौरनुबन्ध्य इत्यादौ जातेरपि तत्साधनता स्यात् । न स्यात्, जातेर्विहितनिषिद्धभावनान्वयासंभवेनोपलक्षणत्वात् । न हि भावना – [1]निर्विशेष [भावनावेशः] जात्यादिषु स्वरूपतो द्रव्यादिकमनन्तर्भाव्य संभवति, जातेः नित्यत्वेनाव्यापारत्वात्, जन्यधर्मानाश्रयत्वेनाव्यापारित्वात् । किं च ज्ञान-धर्माधर्मादिगुणानां धर्मादिसाधनत्वमप्रत्यूहम् ।

एतेनारुण्यस्येव गोत्वस्यापि मूल्यविशेषप्रयोजकत्वेन क्रयभावनान्वयसंभवः । द्रव्यस्यैव क्रयसाधनता, न तु गुणादेरिति तुल्यमित्युक्तावपि न क्षतिरिति दिक् ॥

---

विशेष्यान्वयिन एव विशेषणत्वादिति भावः । क्रय – [2]भावनेति । 'अरुणया' इति श्रुतावारुण्यादिविशिष्टगवा मुख्यभूतया सोमक्रयं भावयेत् । साधयेदिति वाक्यार्थे क्रयभावनाया गोरिवारुण्यादेरपि व्यापारत्वेनान्वययोग्यत्वादपि धर्मसाधनत्वमित्यर्थः ।

शङ्कते – नन्विति । एवं – आरुण्यादेः साधनविशेषणत्वेन क्रयभाव नान्वययोग्यत्वेन च धर्मसाधनत्वे । जातेर्विहितनिषिद्ध इति । 'गां दद्यात्' 'गां न हन्यात्' इत्यादिविहित-निषिद्धभावनायां गोत्वादिजातेरन्वयासंभवेनोपलक्षणत्वम्, न तु विशेषणत्वमित्यर्थः । अन्वयासंभवमेव दर्शयति – [3]न हीति । भावनावेशः – भावनान्वयः । स्वरूपेण भावनाया-मन्वयः द्वेधा ; व्यापारत्वेन व्यापारित्वेन वा । तत्र नाद्य इत्याह – जातेर्नित्यत्वेनेति । नान्त्य इत्याह – जन्यधर्म इति । 'एतेने'त्यादिवक्ष्यमाणस्वरसादाह – किं चेति ।

---

1 °निवेशे जात्या° आ.

2 साधनेति क.

3 तर्हीति क.

## गुणादीनां पञ्चानां साधर्म्यम्

गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे । जन्यभावानामेव विनाशित्वम् । [1]अत्र जन्यत्वेनैव नाशहेतुता लाघवात् अतोनाशस्यापि नाशोऽस्तु । न च घटोन्मज्जनापत्तिः तद्ध्वंसतत्प्रागभावानधिकरणकालत्वस्य तदधिकरण-कालत्वनियमादिति वाच्यम् । तद्ध्वंसस्य तत्प्रागभावध्वंसत्ववत् तद्ध्वंसध्वंसस्यापि तद्ध्वंसत्वस्वीकारात् तद्ध्वंसद्ध्वंसादितत्प्रागभावानधिकरणकालत्वस्यैव तदधि-करणत्वव्याप्यत्वात् वा न दोष इति चेत् — न । अप्रामाणिकानन्तनाशनाशधारा-कल्पनमपेक्ष्य भावत्वस्य हेतुतावच्छेदकनिवेश एव लाघवात् । न हि नाशो नष्ट इति कश्चित् प्रत्येति । किं च जन्यत्वेन हेतुत्वेऽपि विशेषसामग्रीविरहादेव[2]नाशस्य

---

एतेन — 'किं च' इति [3]कल्पाश्रयणेन । मूल्यविशेषः — गवादिरूपः । तुल्यमिति । [4]मूल्यविशेषप्रयोजकत्वेन जातेर्भावनान्वयसंभवेऽपि त्रयाणामेव धर्मादिसाधनत्वं; न तु जात्यादेरित्यनेन त्वदुक्तेन तुल्यमित्यर्थः । न क्षतिरिति । जात्यादौ धर्मादिसाधनत्वस्याति-व्याप्तिः, गुणादावव्याप्तिश्च नेत्यर्थः ॥

तद्ध्वंसस्येत्यादि । प्राचां नये घटध्वंसस्य घटप्रागभावध्वंसत्ववत्, नव्यनये घटध्वंस-स्यापि घट[5]ध्वंसत्वस्वीकारादित्यर्थः । तथा च घटध्वंसध्वंसाधिकरणकालस्यापि घटध्वंसत-त्प्राग — [6]भावानधिकरणत्वाभावात् न घटोन्मज्जनापत्तिरिति भावः । ननु घटादिध्वंसस्य तत्प्रागभावध्वंसत्वमुचितं, तद्दशायां 'प्रागभावो नष्ट' इति प्रतीतेः, न तु स्वध्वंसत्वम् ।

---

1 अथ इ.
2 न नाशः, नाशः द्रव्य° इ.
3 विकल्पा° क.
4 तुल्य° क.
5 °ध्वंसत्वास्वी° क.
6 भावाधिकरणत्वात् क.

न नाशः, द्रव्यनाशेऽसमवायिकारणसंयोगनाशस्य, परमाणुविशेषगुणनाशे तेजस्संयोगविशेषस्य, आश्रय – [1]नाशकालीनतत्समवेतनाशे आश्रयनाशस्य, संयोगादिनाशे विभागादेश्च कारणत्वात् ।

अपि च लाघवात् सत्त्वेन नाशकताऽस्तु; उक्त[2]विशेषसामग्रीविरहादेव नित्यादीनां [3]गगनादीनामनाशोपपत्तेः । जन्यत्वस्य प्रागभावा – [4]स्वीकारे विनाशित्वातिरिक्तस्य [5]दुर्वचत्वात् । न च विनाशित्वेन विनाशहेतुता कार्यस्य, कारणतानवच्छेदकत्वात् तावतापीष्टसिद्धेश्च ।

वस्तुतस्तु [6]तत्तन्नाशे [7]तत्तत्प्रतियोगिनां विशिष्य हेतुत्वात् तन्नाशस्य[न] नाशवार्तापीति दिक् ॥

---

घटध्वंससत्त्वेऽपि 'घटध्वंसो नष्ट' इति प्रतीतेरनुदयादित्यरुचेराह – तद्ध्वंसादीति । घटध्वंस-ध्वंसादित्यर्थः । आदिनोत्तरोत्तरध्वंसपरिग्रहः । तदधि[8]करणत्वव्याप्यत्वात् – [9]घटाधिकरणत्व-व्याप्यत्वात् । न दोषः - न घटोन्मज्जन दोषः । अप्रामाणिकत्वमेव विवृणोति - न हि नाश इति । लाघवात् जन्यत्वेन नाशहेतुत्वमभ्युपेत्यापि नाशनाशं वारयन् कल्पान्तरमाह - किं च जन्यत्वेनेति । विशेषसामग्रीमेव दर्शयति - द्रव्यनाशे इति ।

अतिलाघवादाह - अपि चेति । पूर्वकल्पेऽस्वरसं प्रकाशयति - जन्यत्वस्येति । ननु [10]कार्यस्य कारणतावच्छेदकत्वेऽपि न क्षतिः । न च कार्योत्पत्तेः प्राक् कार्यसत्त्वापत्तिः । कारणस्य हि पूर्वसत्त्वमपेक्ष्यते; न तु कारणतावच्छेदकस्यापि । यदाकदाचित् कारणसंबन्धस्यापि

---

1 'नाश' नास्ति इ.
2 'विशेष' नास्ति आ.
3 गगनादीनां नाशोप° अ.
4 °स्वीकारो अ.
5 दुर्वचनत्वात् अ.
6 तन्नाशे, आ.
7 'तत्तत्' नास्ति इ.
8 करणव्या° क.
9 'घटाधिकरणत्व-व्याप्यत्वात्' नास्ति क.
10 कार्यस्य .... ननु' इत्यन्तस्त्रुटितः क.

## पारिमाण्डल्यभिन्नानां साधर्म्यम्

कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः, द्रव्यादित्रयाणामित्यनुषज्यते। कारणत्वमत्र ज्ञानेतरकार्यं प्रति भावत्वे सति कारणत्वम्। नातः सामान्यादीनामपि ज्ञाननिमित्तत्वात् त्रयाणामित्यस्यानुपपत्तिः। सत्यन्तेनाभावव्युदासः। आदिना द्व्यणुकपरिमाणपरममहत्वपरत्वापरत्वविनश्यदवस्थद्रव्यसंयोगविभागवेगकर्मान्त्य-शब्दचरमसंस्कारज्ञानान्त्यावयविरूपादयः सङ्गृह्यन्ते। नित्यद्रव्येतरद्रव्यगुण-कर्मणां द्रव्यमात्रसमवेतत्वं कथमिति चेत् – जन्यभावत्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुत्वात् जन्यद्रव्यगुणकर्मणामन्यत्रानुत्पत्तेः। न हि निर्गुणे गुणादौ द्रव्योत्पत्तिः;

---

तत्त्वावच्छेदकत्वे बाधकाभावात्। अत एव लौकिकविषयतया साक्षात्कारवत्त्वरूपविषयत्वेन लौकिकसाक्षात्कारं प्रति हेतुत्वं तत्र तत्रोक्तं सङ्गच्छते। तथा च विनाशित्वरूपजन्यत्वेनैव [1]नाशहेतुत्वमस्तु; न तु सत्त्वेनेत्यत आह-तावतापीति। घटादौ विनाशित्वरूपजन्यत्वसत्वात् तन्नाशः। ध्वंसे तु तदसत्त्वात् न तन्नाश इत्येवंरूपेष्टसिद्धेरित्यर्थः।

नन्वसमवायिकारणनाशादेः न द्रव्यादिनाशं प्रति हेतुता। [2]पटासमवायिनाशात् घटनाशापत्तेः। [3]न वा स्वासमवायिनाशो स्वनाशहेतुः। स्वस्याननुगतत्वेनानन्त- [4]हेतुहेतु-मद्भावापत्तेः। स्वत्वघटिततया कार्यकारणतावच्छेदकगौरवाच्च। तथा च जन्यत्वेन सत्त्वेन वा नाशहेतुत्वेन नाशस्य नाशवारणमत आह - वस्तुतस्त्विति॥

जन्यभावत्व इति। समवायेन जन्यभावत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन हेतुत्वात् [5]जन्यद्रव्यगुणादीनां द्रव्यादन्यत्र गुणादावनुत्पत्तेरित्यर्थः। एतदेव विवृणोति–

---

1 नाशकत्वहेतुत्व क.
2 पटादिसमवायिनाशो घट° क.
3 न च स्वसम° क.
4 'हेतु' नास्ति क.
5 जन्यत्वेन द्रव्य° क.

तदारब्धद्रव्यस्य निर्गुणत्वापत्तेः। न वा रूपादौ रूपाद्युत्पत्तिः; प्रमाणाभावात्। नित्यगुणानामपि कार्यं द्रव्यगुणादिमात्रफलकानां कारणद्रव्य एव कल्पनादिति [1]दिक्।

कथं तर्हि 'गन्धः आयाति' 'रथो गच्छति' 'चतुर्विंशति गुणा' इत्यादिव्यवहार इति चेत् – गन्धरसयोराश्रयीभूतद्रव्यागमनगमनारोपात् गुणादौ बुद्धिविशेषविषयत्वस्य सङ्ख्याव्यवहारप्रयोजकत्वाच्चेति दिक्॥

## सामान्यादीनां चतुर्णां साधर्म्यम्

सामान्यादीनां चतुर्णां जातिराहित्यमकार्यत्वं च कथमिति चेत् – सामान्ये सामान्यस्वीकारेऽनवस्थापत्तेः। विशेषे तत्स्वीकारे रूपहानिप्रसङ्गात्। न हि जात्या [जातिमता] समानतापन्नानां विशेषाणां व्यावर्तकत्वं संभवति। संभवे वा नित्यद्रव्यगतैरेकत्वादिभिरेव तत्संभवे विशेषस्यैव वैयर्थ्यप्रसङ्गात्। समवायाभावयोः समवायरूपसंबन्धाभावात् न जातिमत्वम्। कथं तर्हि सामान्यादौ

---

न हि निर्गुण इत्यादिना। प्रमाण इति। रूपादिकं प्रति [2]रूपत्वादिना समवायित्वाभावादित्यर्थः। ननु जन्यभावत्वावच्छिन्नं प्रति द्रव्यत्वेन समवायित्वबलात् जन्यगुणादीनामस्तु द्रव्यमात्रसमवेतत्वम्। नित्यगुणानां तु तन्मात्रसमवेतत्वे किं मानमत आह–नित्यगुणानामिति।

कथं तर्हीति। यदि गुणादीनां द्रव्यमात्रसमवेतत्वं कथं तर्हीत्यर्थः बुद्धिविशेष इति। गुणाः रूपरसादय इति बुद्धिविशेषविषयत्वस्येत्यर्थः।

---

1 'दिक्' नास्ति अ.

2 रूपत्वादिसम° क.

सत्सदिति धीः ? सत्तैकार्थसमवायात् मेयत्वादौ मेयत्ववत् । सत्त्वद्रव्यत्वादौ सत्त्वं साक्षादेव किं न स्यात् । मानाभावात् । प्रतीतेरुक्तपरम्परयाऽप्युपपत्तेः । नाशहेतुत्व – [1]द्रव्यजन्यत्वावच्छेदकस्य तस्य गगनादौ द्रव्यत्वादिना [2]साङ्कर्यभियैव स्वीकारात् ।

[अथ] अस्त्वनुयोगित्वकालिकोभयसंबन्धेन समवायत्वमेव तदुभयावच्छेदकं, सत्त्वस्य समवायकालिकोभयसंबन्धेनावच्छेदकत्वकल्पने

---

रूपहानीति । विशेषविलयप्रसङ्गादित्यर्थः । एतदेव विवृणोति – न हीत्यादिना वैयर्थ्यप्रसङ्गादित्यन्तेन । जातिमता – स्वाश्रयपरमाण्वादिना । व्यावर्तकत्वं – स्वाश्रयव्यावर्तकत्वम् । ननु जातिमतोऽपि तस्य रूपादेरिव स्वाश्रयव्यावर्तकत्वे न दोष इत्यत आह – संभवे वेति । केचित्तु – रूपहानि इति । लक्षणप्रसङ्गादित्यर्थः । निस्सामान्यत्वे सति एकद्रव्यमात्रवृत्तिः विशेष इति तल्लक्षणस्य तत्र सामान्यस्वीकारे हानिसंभवादित्याहुः । तन्न – उत्तरग्रन्थविरोधापत्तेः । तत्र शेषवैयर्थ्यस्यैवोक्तत्वादिति । [3]नाशहेतुत्व इति । प्रतियोगितया नाशं प्रति सत्तावतः तादात्म्येन हेतुत्वबलात् नाशप्रतियोगिनि घटतद्गुणादौ [4]सत्तासिद्धिः । एवं समवायेन सत्तावच्छिन्नं प्रति द्रव्यस्य तादात्म्येन हेतुत्वबलादपि कपालादिद्रव्यजन्ये घटतद्गुणादौ [5]द्रव्यजन्यत्वावच्छेदकतया [6]जातिसिद्धिरि[7]त्यर्थः । गगनादावित्यादिना कालादेः नित्यगुणानां च परिग्रहः । द्रव्यत्वादिनेति । घट – [8]तद्गुणादौ द्रव्यत्वगुणत्वाभ्यां सत्तायाः साङ्कर्यसंभवात् गगनादौ सत्तास्वीकार इत्यर्थः ।

अथास्त्विति । समवायस्यानुयोगित्वसंबन्धेन गगनादावपि कालिकसंबन्धेन च ध्वंसादावपि सत्त्वात् तदुभयत्र नाशप्रतियोगित्वं द्रव्यजन्यत्वं स्यादिति तद्वारणायानुयोगित्व–

---

1 'द्रव्य' इत्यधिकः आ. इ.
2 साङ्कर्यमित्येव इ.
3 नाशहेतुत्वे वेति क.
4 'नाशहेतुतावच्छेदकतया' इत्यधिकः क.
5 'द्रव्यजन्यत्वावच्छेदकतया' नास्ति ग.
6 तत्सिद्धिजातिरिति ग.
7 'अर्थः' नास्ति ग.
8 °तद्रूपादौ ग.

समवायस्यावश्यकत्वादिति चेत् – न। समवायस्य नानात्वात्। [1]तदैक्ये तु तत्र मानं चिन्त्यम्। विद्यमानत्वस्यैव सत्ताबुद्धिविषयत्वात्। अभावः सन्निति धीस्त्वभावस्य व्यावर्तकत्वाग्रहे दृश्यते। "अभावस्य सद्विरुद्धतयैव प्रतीतेः" इत्याचार्योक्तिस्तु सत्यन्ता[2]भाव एवाभावत्वमिति मते तद्रूपेण भानमित्यभिप्रेत्येति दिक्॥

---

कालिकोभयसंबन्धेन [3]तत्समवायत्वं नाशहेतुत्वजन्यद्रव्यत्वोभययावच्छेदक – [4]मस्त्वित्यर्थः। अवच्छेदकत्वकल्पने – नाशहेतुत्वद्रव्य – [5]जन्यो [जन्यत्वो] भयावच्छेदकत्वकल्पने। नव्यमतमाश्रित्याह – समवायस्येति। प्राचां मतमाश्रित्याह – तदैक्येत्विति। समवायस्यैक्ये तु सत्तायां मानं चिन्त्यमित्यर्थः। ननु सत्तायाः असत्त्वे घटः सन्नित्याद्यनुगतधीः [6]कथं स्यादत आह – [7]विद्यमानत्वस्यैवेति। वर्तमानकालसंबन्धित्वस्यैवेत्यर्थः। ननु [8]सामान्यादाविवाभावेऽपि परम्परासंबन्धेन सत्ताया विद्यमानत्वात् "आचार्योक्तिविरोध" इत्यतः तं परिहर्तुमाह – अभावः सन्नितीति। सत्पदस्येत्यस्तीति सद्विद्यमानमिति यावदिति योगेन सत्पदाद्विद्यमानत्वविशिष्टस्य रूढ्या च सत्ताजातिविशिष्टस्य लाभात् सत्पदस्य योगरूढत्वम्; अतः सन्निति धीर्विद्यमानत्वविशिष्ट – सत्तावद्विषयः, न तु सत्तावन्मात्रविषय इत्यर्थः। सत्यन्ताभाव एवेति। सत्ता हि द्रव्यादित्रिके समवायेन, सामान्यादित्रिके चैकार्थसमवायेनास्ति। सत्तावति द्रव्यादौ समवायस्य स्वरूपेण सत्त्वात् तत्स्वरूपस्य च समवायानतिरिक्तत्वात् समवायेऽप्येकार्थसमवायेन सत्तासंभवत्येव। इत्थं च समवायैकार्थसमवायान्यतरसंबन्धेन सत्तात्यन्ताभाव एवाभावत्वमिति मते एतद्रूपेण सर्वत्राभावस्य भानं जायत इत्यभिप्रेत्य तादृग् – "उदयनाचार्योक्तिः" संभवदुक्तिकेत्यर्थः।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | 'तत्' नास्ति | अ. | 5 | °तत्त्वोभय° | ग. |
| 2 | °भावत्वमेव | अ. | 6 | कार्यं | क. |
| 3 | 'तत्' नास्ति | ग. | 7 | विद्यमानस्यै° | क. |
| 4 | °मुक्तमिति भावः | क. | 8 | सामान्यादाविवभेदेऽपि | क. |

अभावव्यावृत्तायाः सत्ताया अनुभवादेव सिद्धिरिति तान्त्रिकाः। सामान्यस्य कार्यत्वे व्यक्तिरेव समवायिकारणं वाच्यम्। तथा च तदुत्पत्तिविनाशयोः (सामान्योत्पत्तिविनाशे) प्रति — व्यक्तिभिन्नं सत् सामान्यरूपतां जह्यात्। अभिन्नं तु तत्; व्यक्तेः प्रागपि सत्त्वात्, न तत्तद्व्यक्तिसमवायिकारणकम्। एवं पूर्वपूर्वतनव्यक्तिभ्योऽपि सत्त्वादनाद्येव तद्विशेषोऽपि तथा। अन्यथा-[1]ऽनित्यस्य विशेषस्य नित्यद्रव्येषु कदाचिदभावस्वीकारे तदा व्यावृत्तिरपि निर्वर्तितेति द्रव्यसङ्करः स्यात्। उत्पादविनाशकल्पनायां मानाभावाच्च। अत एव समवायोप्यनादिः। अभावाश्चात्यन्ताभावान्योन्याभावप्रागभावा अनादय एव, ध्वंसादिरपि न कार्यः, प्रागभावप्रतियोगित्वे सति [2]सत्त्वस्य कार्यरूपत्वादिति दिक्।

---

अभावव्यावृत्ताया इति। अभावः सन्निति स्वारसिकानुभवविरहेण 'द्रव्यं सत्' "गुणः सन्' इत्यनुभवादेवाभावव्यावृत्तसत्तासिद्धिरित्यर्थः। तथा — अनादिरेव। अन्यथा — विशेषस्यादि [म]त्वे। द्रव्यसङ्करः — द्रव्यज्ञानसङ्करः। स्वरूपेण तत्तद्द्रव्याणां मिथःस्वभावत एव भिन्नतया तत्सङ्करासंभवादिति। ननु विशेषस्यानित्यत्वेऽपि [3]न [4]तत्तदाश्रय-द्रव्यसङ्करः; तदसत्त्वदशायामपि तत्प्रागभावेन ध्वंसेन च व्यावृत्तिबुद्धिसंभवादित्यत आह — उत्पाद इति। विशेषस्यातीन्द्रियत्वेन तदुत्पादविनाशकल्पनायां प्रत्यक्षाभावः। विशेषाद्यन्तवान् जातिभिन्नत्वे सति व्यावर्तकभावधर्मत्वात् [5]गन्धादिवदित्यनुमानस्याप्रयोजकत्वेनासंभवादित्यर्थः। वैशेषिकाणां समवायातीन्द्रियत्वाभ्युपगमाभिप्रायेणाह — अत एवेति उत्पादविनाशकल्पनायां मानाभावादेव समवायोप्यनादिरित्यर्थः।

---

1 'अनित्यस्य' नास्ति इ.

2 ध्वंसप्रतियोगिकार्यत्वादिति आ.

3 'न' नास्ति ग.

4 'तत्' नास्ति क.

5 गन्धादित्यनु° क.

कार्यत्वानित्यत्वे कारणवतामेव भावानाम् । सामान्यविशेषसमवायानां बुद्धिमात्रप्रमाणकत्वं, नित्यत्व,मकार्यत्वं, [1]ज्ञातृधर्मेतरकार्याजनकत्वं च कथमिति चेत् – सामान्येऽनुगतबुद्धेः विशेषे व्यावृत्तबुद्धेः समवाये चेहेति बुद्धेरेव मानत्वात् । द्रव्यादीनां तु कार्यद्रव्यादेरपि मानत्वेन विशेषात् नित्यत्वं ध्वंसाप्रतियोगिभावत्वमकार्यत्वं प्रागभावाप्रतियोगिभावत्वमुपपादितप्रायम् ।

विशेषभिन्नानामनित्यवृत्तित्वम् । तत्त्वं चानित्यवृत्तिपदार्थविभाजकोपाधिमत्वम् । तेन नित्यद्रव्यस्यतन्मात्रवृत्ति गुणादेश्चानित्यवृत्तित्वाभावेऽपि न क्षातिः । एवमग्रेऽपि ।

द्रव्यगुणकर्मसामान्यसमवायाभावानां लौकिकप्रत्यक्षत्वं, गुणकर्मणोरेवासमवायिकारणत्वं, नित्यद्रव्यसमवायाभावानामसमवेतत्वमित्याद्यूह्यम् ।

---

ज्ञातृधर्म इति । ज्ञानेतरकार्यजनकत्वमित्यर्थः । [2]नित्यत्वाकार्यत्वनिर्वचने भावत्वनिवेशात् [3]नात्यन्ताभावादावतिव्याप्तिः । उपपादितप्रायमिति । अकार्यत्वस्य पूर्वमुपपादित[4]त्वात् नित्यत्वस्य चानुपपादितप्रायं किंचिदुक्तं किंचित् नोक्तमित्यर्थः ।

एवमग्रेऽपीति । लौकिकप्रत्यक्षत्वमसमवायिकारणत्वमित्यत्राप्येतन्निर्वचन – [5]रीतिर्द्रष्टव्या इत्यर्थः । तेन परमाण्वादितद्गुणादेः लौकिकप्रत्यक्षाभावेऽपि ज्ञानेच्छादेरसमवायिकारणत्वाभावेऽपि च नाव्याप्तिः ।

---

1 ज्ञानधर्मे अ.

2 'ध्वंसप्रतियोगीति । ध्वंसप्रतियोगिवृत्तिपदार्थविभाजकादिशून्यत्वमकार्यत्वं, तेन नित्यगुणादयो नातिव्याप्तिः, भावत्व' क.

3 'च' इत्याधिकः क.

4 'द्रव्य' इत्यधिकः क.

5 रीत्या क.

## द्रव्यादीनां साधर्म्यम्

पृथिव्यादीनां नवानामपि द्रव्यत्वं स्वसमवेतकार्यजनकत्वं चानित्यगुणवत्त्वं चानित्यानि विहायान्त्यविशेषवत्त्वम् । पृथिव्यप्तेजो – [1]वाय्वात्ममनसामनेकत्वद्रव्यत्वव्याप्यजातिमत्वे पञ्चानां भूतत्वेन्द्रिय[2]प्रकृतित्वे ।

नन्वस्तु [3]भूतत्वं बहिरिन्द्रियग्राह्यविशेषगुणजातीयगुणवत्वरूपं पृथिव्यादौ, रूपादेस्सत्त्वादिन्द्रियप्रकृतित्वं कुतः ? पृथिव्यप्तेजोवायुषु [4]घ्राणरसनचक्षुस्त्वक्प्रकृतित्वसंभवेप्याकाशे कर्णशष्कुल्यवच्छिन्नाकाशस्य श्रोत्रस्य विशिष्टस्याकाशानतिरेकेण नित्यतया तत्प्रकृतित्वस्य तदुपादानत्वरूपस्यासंभवादिति चेत् – न । तद्वृत्तिद्रव्यविभाजकोपाधिमत्वस्य तत्प्रकृतित्वस्य विवक्षितत्वात् । नन्वेवं मनस्यपि मनः प्रकृतित्वसंभवे पञ्चानामेवेति कुतः ? इन्द्रियपदस्य प्रकृते बहिरिन्द्रियपरत्वात् ।

यत्तु – विशिष्टाविशिष्टभेदेनोपादानत्वसंभव इति । तन्न – विशिष्टस्य [5]विशेषा [ विशेष्या ] द्यतिरेके मानाभावात् ; अनन्तपदार्थकल्पनाप्रसङ्गेन गौरवाच्च ।

---

इदानीं द्रव्याणां विशिष्य साधर्म्यमाह – पृथिव्यादीनामिति ।

[6]शङ्कते–नन्वस्त्विति । अत्र बहिरिन्द्रियग्राह्यविशेषगुणवत्त्व[स्य] परमाणुद्व्यणुकादा[7]वसत्त्वादव्याप्तिः, अत उक्तं जातीय इति । तद्वृत्ति इति । इन्द्रियवृत्ति इत्यर्थः ।

---

1 वाय्वाद्यात्म° अ.
2 °प्रवृत्तित्वे अ.
3 'भूतत्वं' नास्ति अ.
4 घ्राणनाशचक्षु अ.
5 विशिष्या° अ.
6 'शंकते - नन्वस्त्विति' नास्ति क.
7 °वव्याप्तिः क.

परे तु – कर्णशष्कुल्यवच्छिन्नं नभः; श्रोत्रत्वावच्छिन्नत्वं संयोगविशेष इति तदुपादानत्वेनैव प्रकृति [प्रकृत] संगतिरित्याहुः ।

पृथिव्यप्तेजोवायुमनसां क्रियामूर्तत्वदैशिकपरत्वापरत्ववेगवत्वानि । तत्र मूर्तत्व – [1]मपकृष्टपरिमाणवत्वमिति प्राञ्चः ।

### मूर्तत्वविचारः

नव्यास्तु – मूर्तत्वं पञ्चसु जातिविशेषः । न च भूतत्वेन साङ्कर्यं; [2]भूतत्वस्योक्तोपाधिरूपत्वात् । मूर्तत्वस्यैव क्रियासमवायिकारणतावच्छेदकतया जातित्वात् । न च क्रियां प्रति द्रव्यत्वेनासमवायिकारणताऽस्त्विति वाच्यम् ।

---

तत्प्रकृतित्वस्य – इन्द्रिय – प्रकृतित्वस्य । मनः प्रकृतित्वसंभवे – मनोवृत्तिद्रव्यविभाजकोपाधिमत्व मादायेन्द्रियप्रकृतित्वसंभवे ।

उपादानत्वसंभवः – आकाशेश्रोत्रोपादानत्वसंभवः ।

उक्तोपाधीति । बहिरिन्द्रियग्राह्यविशेषगुणजातीयगुणवत्वोपाधिरूपत्वादित्यर्थः । जातेः स्वभिन्नजात्यैव सह सङ्करस्य दूषणत्वम्; न तूपाधिना सह अपि । [3]अन्यथोपाधिसंकरस्यापि दूषणत्वापत्तावेकत्रोपाधिद्वयसमावेशोऽपि न स्यादिति [4]भावः । नन्वेवं भूतत्वमेव जातिः, मूर्तत्वं चापकृष्टपरिमाणवत्वरूपोपाधिरस्तु; विनिगमकाभावादित्यत आह – मूर्तत्वस्यैवेति । ननु स्पर्शशून्ये गगनादौ क्रियाहेतुनोदनाद्यसंभवात् कथं सहकारिसमवधानमत आह –

---

1 'मपकृष्ट .... .... सांकर्यं, भूतत्व' इत्यन्तस्त्रुटितः अ.
2 भूतत्वस्योक्तोपाधित्वात् अ. भूतत्वस्योपाधि° इ.
3 अन्यस्योपाधि° क.
4 अर्थः क.

नित्यस्य गगनादेः स्वरूपयोग्यत्वे क्रियाफलावश्यंभावापत्तेः । न चानित्यस्येव नित्यस्यापि स्वरूपयोग्यस्य सहकारिविरहात् फलाभावस्संभवतीति वाच्यम् । नित्यस्य सार्वदिकस्य कदाचित् सहकारिसमवधानस्यापि संभवात्, निस्पर्शे मनसि गगनादावपि नोदनसंभवात्, अभिघातनोदनोभयवृत्त्येकजात्यवच्छिन्नैकतर-स्पर्शस्यैव हेतुत्वात्, [1]शब्दनिमित्तासमवायिकारणतयोरभिघातत्वावच्छेद्यत्वे लाघवात्, तत्राभिघातसिद्धेः संयुक्तसंयोगस्य पङ्क – [2]नौकादिस्थतृणादि क्रियाहेतोर्गगनादावपि सत्त्वाच्च । न च विजातीय – [3]संयुक्तसंयोगो क्रियाहेतुः

---

निस्पर्श इति । यथा स्पर्शशून्येऽपि मनसि तत्तदिन्द्रियसंयोगानुकूलक्रियासिध्यर्थं तत्तन्नाड्या नोदनसंभवः । तथा गगनादावपि विजातीयवाय्वादिना नोदनसंभव इत्यर्थः । गगनादौ नोदनं व्युत्पाद्याभिघातमपि व्युत्पादयति – अभिघात इति । स्पर्शवद्वेगवद्द्रव्यसंयोगोऽभिघातः स्पर्शवद्द्रव्यसंयोगः, नोदनमेतदुभयवृत्तिः [4]या स्पर्शजन्य – [5]तावच्छेदकजातिः तदवच्छिन्न प्रत्येकतर – [6]संबन्धिस्पर्शस्यैव हेतुत्वादित्यर्थः । हेतुत्वादिति पञ्चम्यन्तं 'तत्राभिघातसिद्धेरि'-त्यग्रिमेणान्वयि । नन्वभिघातनोदनोभयवृत्त्येकजातेः स्पर्शजन्यतावच्छेदकत्वे तयो वैलक्षण्यं न स्यात् । [7]किं चाभिघाते वेगस्पर्शयोर्हेतुत्वात् तदुभयजन्यतावच्छेदकं नोदनव्यावृत्तं तत्र वाच्यम् । तथा च गगनादौ प्रागुक्तरीत्या नोदनसंभवेऽपि नाभिघातसिद्धिः, अत आह – शब्दनिमित्त इति । विलक्षणशब्दे भेरीदण्डसंयोगो निमित्तम्; भेर्याकाशसंयोगोऽ[8]समवायी;

---

1 शब्दनिमित्तसम° अ.

2 °नौकादिछत्रिणक्रिया° अ.

3 'संयुक्त .... .... प्येकजातीय' इत्यन्तस्त्रुटितः अ.

4 'या' नास्ति ग.

5 'शक्य' इत्यधिकः ग.

6 'संबन्धि' नास्ति ग.

7 'स्पर्शात्महेतोः तुल्यत्वात् । किं चाभिघातनोदनसंभवेऽपि नाभिघातसंभवेऽपि नाभिघातसंभवः, अत' इत्यस्ति ग.

8 °समवायात् ग.

पङ्कादिक्रियया तृणादिनेव गगनादिनाप्येकजातीयसंयोगजननात् । न च तत्तद्व्यक्ति– [1]समवेतकार्ये तत्तद्व्यक्तेर्हेतुतया न गगनादौ [2]क्रिया, तत्तद्व्यक्तित्वस्य रूपरसादिरूपतया नानात्वात् व्यक्तिस्थानीयापत्तिविरहात् रूपादेः कालनियामकस्य क्रिया अपेक्षाबुद्ध्यादेः स्वसमानाधिकरणान्यतमत्वविशेषणहेतुतया च संयोगविभागद्वित्वादेरन्यत्रापत्तिविरहे उक्तहेतुतायां मानाभावाच्चे[3]त्याहुः ॥

---

तत्राद्ये[4]ऽभिघातत्वमवश्यं हेतुतावच्छेदकमित्युत्तरत्रापि तदेव तथालाघवात्, न त्वन्यत् गौरवादिति तत्राकाशेऽ[5]भिघातसिद्धिरित्यर्थः । ननु शब्दनिमित्तासमवायिकारणतयो[6]रभिघातत्वमेकमेव नावच्छेदकम्; एकतरसत्त्वे तदुत्पत्त्यापत्तेः । एवं गगनादौ नोदनमस्तीत्यत्रापि प्रबलसाधकाभाव इत्य[7]स्वरसात् तत्र क्रियासाधकान्तरमाह – संयुक्तसंयोगस्येति । [8]महत्संयुक्तसंयोगस्य जलसंयुक्तनौकादिसंयोगस्य चेत्यर्थः । ननु द्रव्यत्वेन क्रियां प्रति समवायित्वेऽपि गगनादौ न क्रियापादनं संभवति । वस्तुतो यद्यत्समवेतं कार्यमुत्पद्यते तत्तत्कार्यं प्रति तत्तद्व्यक्तित्वेनापि हेतुत्वं कल्प्यते; अन्यथा व्यक्तिस्थानीयापत्तेः । तथा च गगनादौ सामान्यसामग्रीसत्त्वेऽपि विशेषसामग्रीविरहात् न क्रियोत्पत्तिरित्याशङ्क्य निषेधति – न च तत्तद्व्यक्ति इति । नानात्वादिति । तथा च कार्यकारणतावच्छेदकभेदादेकत्रापि कार्यकारणभावनानात्वमिति भावः । ननु तत्तद्व्यक्तित्वं स्वरूपसंबन्धविशेष एवेति न तन्नानात्वमित्यत आह - व्यक्तिस्थानीय इति । सामग्र्याः कार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्यत्वस्योपगमेन व्यक्तिस्थानीयापत्तिविरहादित्यर्थः । तथा च प्रयोजनाभावात् न तत्तद्व्यक्तित्वेन हेतुत्वकल्पनमिति

---

1 समवेतेन कार्ये अ.

2 'क्रिया .... .... कालनियामकस्य' इत्यन्तस्त्रुटितः अ.

3 'इत्याहुः' नास्ति अ.

4 °भिधानत्व° ग.

5 °भिधानसिद्धि° ग.

6 °रभिधानत्व° ग.

7 °स्वरसतन्त्रं क्रिया° ग.

8 'महत्सं .... .... रूपादेरिति' इत्यन्तस्त्रुटितः । तत्स्थाने – 'हस्तजलादिसंयुक्तपङ्कनौकादिसंयोगस्येत्यर्थः । तत्तद्व्यक्तितत्तद्व्यक्तित्वस्यसाधारणधर्मस्य । उक्तहेतुतायां' इत्यस्ति ग.

## पृथिव्यप्तेजोवायूनां साधर्म्यम्

पृथिव्यप्तेजोवायूनामवान्तराणुत्वं, द्रव्यारंभकत्वं, शरीरारम्भकत्वं स्पर्शवत्त्वं [1]वा । [2]अवान्तराणुत्वं चानणुवृत्तिद्रव्यविभाजकोपाधिमत्त्वम् । द्रव्यारंभकत्वं द्रव्यसमवायिकारणतावच्छेदकमूर्तत्वव्याप्यजातिमत्त्वम् । न च स्पर्शवत्त्वेन द्रव्यारम्भकता, गौरवात् । चक्षुरादीन्द्रियावयवेषु स्पर्शवत्त्वाभावाच्च । न च तत्रारम्भकानुपपत्त्यैवानुद्भूतस्पर्शवत्त्वं कल्प्यम् । अनन्तानुद्भूतस्पर्शकल्पनामपेक्ष्य जातिविशेषकल्पनाया एवोचितत्वात् ।

नन्वस्तु मूर्तत्वे[3]नैव द्रव्यारम्भकत्वम् । न च मनसोऽपि मूर्तसमवायित्वापत्तिः; मनोन्यमूर्तत्वेन तत्त्वात् । वस्तुतः मूर्तत्वेनैव तत्त्वं विजातीयसंयोगस्य द्रव्यासमवायिकारणस्य विरहेणैव द्रव्यानुत्पत्तेरिति चेत् — न । यत्कपालक्रियया स्पर्शवत्यारम्भक एव निस्पर्शे मनःप्रभृतौत्वनारम्भकः संयोगो जनितः [4]तेष्वेकजात्या तत्क्रियाजन्यतावच्छेदाय [5]मनस्यपि विजातीयसंयोगसंभवात्

---

भावः । व्यक्तिस्थानीयतामभ्युपेत्याप्यन्यथैव तद्वारणमाहरूपादेरिति । उक्तहेतुतायां — तत्तद्व्यक्तिसमवेतकार्यं प्रति तत्तद्व्यक्तिहेतुतायामित्यर्थः ।

द्रव्यारम्भकत्वमिति । [6]अत्र मूर्तत्वस्यैव द्रव्यसमवायिकारणतावच्छेदकत्वे मनस्यपि द्रव्यारंभः स्यात्, अतः मूर्तत्वव्याप्य इति जातिविशेषणम् । प्राचांमतं निरस्यति — न च स्पर्शवत्त्वेनेति ।

---

1 च अ.

2 'अवान्तरातत्तद्व्यक्ति, तस्य रूपरसादिरल्पतया नानात्वात् व्यक्तिस्थानीयापत्त्यभावात् । रूपादेः कालनियामकस्य विजातीयतेजस्संयोगक्रिया तथाणुत्वं । ननु अणु इति द्रव्यविभजको° अ.

3 'एव' नास्ति इ.

4 'न' इत्यधिकः इ.

5 मनसा अपि अ.

6 अथ क.

तत्तदन्त्यावयवि – त्वेनेव [त्ववत्] मनस्त्वेनापि द्रव्यप्रतिबन्धकत्वे गौरवात् चतुर्षु जातिकल्पनाया एव युक्तत्वात्। न च स्पर्शवत्यारंभक एवेत्ययुक्तम्; अन्ततः कपालान्तरारम्भककपालिकयापि संयोगादिति वाच्यम्। कपालिकादिनाऽन्त्यावयवि-प्रभादिसत्त्वे तेनापि संयोगस्यारम्भकत्वस्वीकारात् द्रव्यसत्त्वात् कपालि-कादावन्त्यावयवित्वेन प्रतिबन्धकत्वात् प्रभादौ ततो द्रव्यानुत्पत्तिरिति ॥

---

मनोन्यत्वनिवेशे गौरवमत आह – वस्तुत इति। स्पर्शवत्येव – कपालान्तर [1]एव। तेषु – [2]सक्रियतत्कपालस्य कपालान्तरेण तदवयवकपालिकया प्रभादिना च सहारम्भकाना-रम्भकसंयोगेषु। तत्क्रिया इति। तत्कपालक्रियेत्यर्थः। ननु पृथिव्यादिचतुष्टयेद्रव्यारम्भक-तावच्छेदकजातिकल्पनेऽपि घटाद्यन्त्यावयविनि द्रव्यारंभवारणायान्त्यावयवित्वेन [3]द्रव्यो-त्पत्ति प्रतिबन्धक[त्व]–कल्पनवत् मूर्तत्वे [न] द्रव्यारम्भकत्वपक्षे मनस्त्वेनापि [4]द्रव्योत्पत्ति-प्रतिबन्धकत्वं [5]कल्पनीयमिति [6]न कोऽपि दोष इत्यत आह – तत्तदन्त्यावयवित्ववदिति। यत्कपालक्रिययेत्याद्युक्तं दूषणमाशङ्क्य [7]निषेधति – न चेति। वस्तुतः निबिडद्रव्यस्य घटादावेवान्त्यावयवित्वं प्रमाणसिद्धम्। प्रभादेश्च विसरालतया नैतत्सम्भवतीत्यभिप्रायवानाह - अन्त्यावयवप्रभादिसत्त्व इति। संयोगस्य – कपालप्रतियोगिकसंयोगस्य। ततः – प्रभावयाकालिकादिकपालसंयोगात्॥

---

1 'एव' नास्ति ग.

2 'सक्रिय .... .... च सह' इत्यन्तस्त्रुटितः ग.

3 'द्रव्योत्पत्ति .... .... मनस्त्वेनापि' इत्यन्तस्त्रुटितः ग.

4 द्रव्यप्रति° ग.

5 कल्पनवादेपि इति ग.

6 'न .... .... तत्तदन्त्यावयवित्ववत्' इत्यन्तस्त्रुटितः ग.

7. निराकरोति क.

## पृथिव्यादीनां त्रयाणां साधर्म्यम्

पृथिव्यादीनां त्रयाणां बाह्येन्द्रियप्रत्यक्षत्वरूपवत्त्वद्रवत्ववत्त्वानि ।

### वायुप्रत्यक्षविचारः

मीमांसकास्तु — वायुरपि बाह्येन्द्रियप्रत्यक्षः । न च पिशाचादेरप्रत्यक्षत्वात् बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे आत्मभिन्नद्रव्यप्रत्यक्षे वा रूपवत्त्वेन हेतुत्वस्यावश्यकतया न नीरूपस्य वायोः प्रत्यक्षत्वसंभवः । अन्वयव्यतिरेकाभ्यां लाघवेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येवोद्भूतरूपवत्त्वेन हेतुत्वात् । न चैवं पिशाचादेः स्पार्शनापत्तिः; द्रव्यस्पार्शनत्वावच्छिन्नं प्रत्युद्भूतरूपवत्त्वेन हेतुत्वात् । न चैवं कार्यकारणभावद्वये गौरवात् बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्ने उद्भूतरूपस्पर्शोभयत्वेन हेतुत्वमस्त्विति वाच्यम् । प्रभाया अचाक्षुषत्वापत्तेः । न चेष्टापत्तिः; अनुभवविरोधात् । इह पक्षी नेह पक्षीत्यादिप्रभामण्डलरूपदेशविषयकबुद्धेरानुभविकत्वात् । उभयत्वस्य प्रकृते एकविशिष्टापरत्वरूपतया विशेषणविशेष्यभावे विनिगमकाभावात् कार्यकारणभावद्वयापत्तेः गौरवाच्चेत्याहुः ।

---

कार्यतावच्छेदकलाघवं मत्वाऽऽह — आत्मभिन्न इति । अनुभवमेवस्पष्टयति — इह पक्षी इति । [1]न चात्र प्रतीतौ पाक्षि — तदभावाधिकरणदेशो गगनादिरेव किं न स्यादिति वाच्यम् । गगनादेरतीन्द्रियतया प्रत्यक्षप्रतीतावधिकरणत्वेन भानासंभवात् प्रभामण्डलस्यैव तत्त्वेन भानादिति भावः । रूपस्पर्शोभयस्मिन्नुभयत्वसङ्ख्याया बाधादाह — उभयत्वस्येति ।

---

1 'न ... ... भानादिति भावः' इत्यन्तस्त्रुटितः ग.

तत्न[1]युक्तम्। सङ्ग्राहकत्वलाघवेन मूर्तप्रत्यक्षत्वावच्छिन्ने रूपस्य हेतुत्वात्। न च मूर्तप्रत्यक्षत्वमजन्येश्वरप्रत्यक्षवृत्ति न जन्यतावच्छेदकम्; जन्यमूर्तप्रत्यक्षत्वस्य तत्त्वे [तु] गौरवमिति वाच्यम्। लौकिकविषयितया मूर्तविशिष्टप्रत्यक्षत्वस्य तत्त्वात्। न चेश्वरप्रत्यक्षे लौकिकविषयतासंभवः; इन्द्रियादिजन्यतावच्छेदिकायास्तस्याः जन्यप्रत्यक्षमात्रवृत्तित्वात्। [2]"पश्यत्यचक्षुः स श्रृणोत्यकर्ण" इत्यादि तु लौकिकचाक्षुषसमानाकारज्ञानपरं भाक्तं चाक्षुषादेस्तत्रासंभवात्। इत्थं च त्वाचप्रत्यक्षे त्वगिन्द्रियवृत्त्यनुद्भूतस्पर्शस्य प्रतिबन्धकत्वमपि न कल्प्यते; [3]रूपवत्वविरहेणैवाप्रत्यक्षत्वात्।

---

[4]सङ्ग्राहक इति। द्रव्यचाक्षुषस्पार्शनोभयसङ्ग्राहकत्वलाघवेनेत्यर्थः। तत्त्वे तु — रूपान्यता [रूपजन्यता] वच्छेदकत्वे तु। तत्त्वात् — रूपजन्यतावच्छेदकत्वात्। इन्द्रियादीत्यादिना तत्सन्निकर्षपरिग्रहः। लौकिकविषयत्वावच्छिन्नं प्रतीन्द्रियत्वेन तत्संनिकर्षत्वेन च हेतुत्वात् [5]तस्य जन्यप्रत्यक्षमात्रवृत्तित्वमित्यर्थः। नन्वीश्वरप्रत्यक्षे यदि न लौकिकविषयिता तदा श्रुत्यादावीश्वरः पश्यतीत्यादिप्रयोगो कथमित्यत आह — पश्यतीति।

" अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
सवेत्ति वेद्यं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्॥ "

इत्यादिश्रुतौ पश्यतीत्यादिकं लौकिकविषयताशालिचाक्षुषादि — समानाकारज्ञानपरम्; अत एव भाक्तं लाक्षणिकमित्यर्थः। इत्थं च — मूर्तप्रत्यक्षत्वावच्छिन्नं प्रति [6]रूपत्वेन हेतुत्वाभ्युपगमे च।

---

1 'युक्तम्' नास्ति अ.
2 पश्याम्यचक्षुः अ.
3 रूपविर॰ अ.
4 'संग्राहक .... ... तत्संनिकर्षत्वे' इत्यन्तस्त्रुटितः क.
5 'तज्जन्यतावच्छेदकस्य' इत्यधिकः क.
6 रूपहेतु॰ क.

एतेन प्रामाणिकस्य घटपटादिनिष्ठोपादान – [1]गोचर [2]प्रत्यक्षादिजन्यत्वस्याव-च्छेदकं कार्यत्वमस्तु; सङ्ग्राहकत्वात्। न तु घटे घटत्वं पटादौ पटत्वादिकं; गौरवात्। प्रकृते तु स्पार्शनस्य रूपजन्यत्वे मानाभावात्, निश्चिताव्यभिचारित्वाच्च, द्रव्यचाक्षुषमेव तथा।

अस्तु वा मूर्तप्रत्यक्षत्वावच्छिन्ने स्पर्शत्वेनैव हेतुतेत्यपास्तम्। वायोश्चाक्षुषापत्तेश्च। प्रभादिवृत्त्यनुद्भूतस्पर्शादेः द्रव्यस्पार्शनादौ विरोधित्वात् न प्रभादेः स्पर्शनत्वापत्तिः।

अत्रेदं बोध्यम् – अनुद्भूतस्पर्शासत्त्वे रूपत्वेन द्रव्यचाक्षुषे स्पर्शत्वेन द्रव्यस्पार्शने हेतुतैव युक्ता। अन्यथा प्रभायाः स्पार्शनापत्तेः। अपि च

---

एतेन – उक्तवक्ष्यमाणदूषणेन। [3]मूर्तप्रत्यक्षं प्रति स्पर्शत्वेनैव हेतुत्वे त्वगादिस्पार्शन-वारणायानुद्भूतस्य स्पर्शस्य तत्र प्रतिबन्धकत्वकल्पनापत्तिरित्युक्तदूषणम्। वायोश्चाक्षुषापत्तिरिति वक्ष्यमाणं तद्बोध्यमित्यर्थः। तथा – रूपजन्यतावच्छेदकम्।

अथाप्याग्रहेण मूर्तप्रत्यक्षत्वावच्छिन्नं प्रति रूपत्वेन हेतुत्व – [4]मुच्यतां, विनिगमका-भावादित्याशयवानाह – अस्तु वेति। ननु मूर्तप्रत्यक्षत्वावच्छिन्नं [5]प्रत्युद्भूतरूपत्वेन हेतुत्वे [6]प्रभायाः स्पार्शनापत्तिः; तत्रोद्भूतरूपस्य सत्त्वादित्यत आह – प्रभादि इति।

---

1 ०'गोचर' नास्ति अ.
2 प्रत्यक्षजन्य० अ.
3 'मूर्त .... .... तद्बोध्यमित्यर्थः' इत्यन्तस्त्रुटितः। तस्थाने – 'अस्य चापास्तमित्यग्रिमेणान्वयः' इत्यस्ति ग.
4 ०मुच्यते ग.
5 प्रति रूपत्वेन क.
6 'अनुद्भूत' इत्यधिकः क.

त्रुटेरस्पार्शनत्वे द्रव्यस्पार्शने त्वक्संयुक्तमहत्त्वोद्भूतस्पर्शवत्समवायः, द्रव्यान्यसमवेतस्पार्शने च त्वक्संयुक्तसमवेतस्पार्शनसमवायो हेतुः। द्वितीयक्षणे घटादेः स्पर्शाविषयकस्पार्शनस्य वारणीयत्वे [1]आस्तां द्रव्यस्पार्शने त्वक्संयुक्तमहत्समवायोद्भूतस्पर्शौ तथा ।

---

अत्रेदं बोध्यमिति । [2]वायोः स्पर्शनत्ववारणाय मूर्तप्रत्यक्षत्वावच्छिन्नं प्रत्युद्भूतरूपत्वेन [3]हेतुत्वे व्यवस्थापिते इदं [4]वायोः स्पार्शनत्वोपपादकं वक्ष्यमाणमेकदेशिमतं बोध्यमित्यर्थः। अनुद्भूतस्पर्शसत्त्वे द्रव्यस्पार्शने स्पर्शत्वे [न] हेतुत्वं वक्ष्यमाणं न संभवति,प्रभादिस्पार्शनापत्तेरत आह – अनुद्भूत – [5]स्पर्शासत्त्व इति। [6]अनुद्भूतरूपासत्त्वे इत्यपि बोध्यम्। अन्यथा द्रव्यचाक्षुषे रूपत्वेन वक्ष्यमाणहेतुत्वानुपपत्तिः। चक्षुरादेरपि चाक्षुषादिः संभवतीति भावः। अन्यथा – मूर्तप्रत्यक्षत्वावच्छिन्नं प्रत्येव रूपत्वेन हेतुत्वेऽनुद्भूतस्पर्शाभ्युपगन्तॄणां प्राचां नये द्रव्यस्पार्शनं प्रति स्पर्शत्वेन हेतुत्वं न संभवति। प्रभादिस्पार्शनापत्तेरित्यस्वरसादाह – अपि चेति। त्रुटिस्पार्शनोपगमे द्रव्यस्पार्शने त्वक्संयुक्तमहत्त्वोद्भूतस्पर्शवत्समवायेन हेतुत्वं वक्ष्यमाणं न संभवति; त्रुटावेव व्यभिचारादत आह – त्रुटेरस्पार्शनत्वे इति। त्रुटिः– त्रसरेणुः। द्रव्यान्य इति। [7]द्रव्यभिन्नं यत्समवेतं गुणकर्मादि तत्स्पार्शने इत्यर्थः। [8]द्रव्यस्पार्शने प्रागुक्तसन्निकर्षस्योक्तत्वात् द्रव्यान्य इति। अभावस्पार्शने एतत्सन्निकर्षासंभवात्, व्यभिचारवारणाय समवेतेति। त्वक्संयुक्त [9]इति। त्वक्संयुक्त – समवेतं यत्स्पार्शनं स्पर्शनेन्द्रिययोग्यं तत्र समवाय इत्यर्थः। [10]न च द्रव्यभिन्नसमवेतस्पार्शने त्वक्संयुक्त-

---

1 'आस्तां' नास्ति अ. इ.
2 'वायोः स्पर्शनत्ववारणाय' नास्ति ग.
3 'हेतुत्वे' नास्ति ग.
4 'वायोः स्पार्शनत्वोपपादकं' नास्ति ग.
5 °स्पर्श इति ग.
6 'अनुद्भूत .... .... संभवतीति भवः' इत्यन्तस्त्रुटितः ग.
7 द्रव्यान्यं यद्यत्समवेतं ग.
8 'द्रव्य ... ... समवेत इति' इत्यन्तस्त्रुटितः ग.
9 'समवेत' इत्यधिकः ग.
10 'न च .... .... स्पर्शादित्यर्थः' इत्यन्तस्त्रुटितः ग.

अस्तु वा द्रव्यस्पार्शने त्वक्संयोगादिकं द्रव्यसमवेतस्पार्शनादौ त्वक्संयुक्तस्पार्शनसमवायादिकं हेतुः। उभयथापि विना वायोः स्पार्शनत्वं तत्स्पर्शादेः तत्त्वं दुर्घटम्। सन्निकर्षघटकस्पार्शनत्वं लौकिकविषयतया स्पार्शनवत्वमुपलक्षणम्। नातः केवल घटादिस्पार्शनं विना घटत्वादि — [1]तत्स्पर्शादेः स्पार्शनानुपपत्तिः। घटाद्युत्पत्तिद्वितीयक्षणे घटाद्यविषयकघटत्वादिनिर्विकल्पकमिष्टम्। न चैवं वायुगतसङ्ख्यापरिमाणादेः प्रत्यक्षापत्तिः। सजातीयसंवलनाभावे [2]भूयोऽवयवावच्छेदेन

---

समवेतसमवाय एव हेतुरस्तु, कृतं तत्र स्पार्शनत्वनिवेशेनेति वाच्यम्। द्व्यणुकस्पर्शादेः स्पार्शनापत्तेः। त्वक्संयुक्तपरमाणुसमवेतद्व्यणुकसमवायस्पार्शादित्यर्थः। ननु द्वितीयक्षणावच्छिन्नघटादेः स्पार्शनं स्यात्, तादृशघटादेः त्वक्संयुक्तमहत्वोद्भूतस्पर्शवत्कपालसमवायस्य तत्र सत्त्वादत आह — द्वितीयक्षणे इति। तथा — हेतू।

द्रव्यस्पार्शनादौ त्वक्संयोगत्वादिना हेतुत्वे लाघवं मत्वाऽऽह — अस्तु वेति। उभयथापीति। द्रव्यान्यसमवेत [3]स्पार्शने त्वक्संयुक्तसमवेतस्पार्शनसमवायो हेतुरिति पक्षे द्रव्यसमवेतस्पार्शने त्वक्संयुक्तस्पार्शनसमवायो हेतुरिति पक्षे चेत्यर्थः। दुर्घटमिति। [4]तथा च वायुस्पर्शादेः स्पार्शनोपपत्तये वायोरपि स्पार्शनत्वमुपेयमिति भावः। ननु त्वक्संयुक्तात्मादेरप्यलौकिकविषयतासंबन्धेन [5]स्पार्शनत्वात् तत्समवायस्य चात्मत्वादौ सत्त्वात् तत्स्पार्शनापत्तिरत आह — लौकिकविषयतयेति। उपलक्षणत्वविवक्षाया फलमाह — नात इति। [6]ननु सन्निकर्षघटकस्पार्शनस्योपलक्षणत्वे घटोत्पत्तिद्वितीयक्षणे घटसंयोगाभावात् विशेषणज्ञानाभावाच्च घटविषयकघटत्वसविकल्पकासम्भवेऽपि घटविषयकघटत्वादिनिर्विकल्पं तु स्यादेव।

---

1 'तत्' नास्ति आ. इ.

2 रूपोऽवयवा° अ.

3 °स्पार्शनत्व संयुक्त° ग.

4 'तथा .... .... त्मादेरपि' इत्यन्तस्त्रुटितः ग.

5 स्पार्शन भानात्मादिरपि तत्सम° ग.

6 'ननु .... .... घटाद्युत्पत्ति इति इत्यन्तस्त्रुटितः ग.

त्वक्सन्निकर्षे चेष्टत्वात् पार्श्वद्वयलग्नफूत्कारद्वयसङ्ख्यापरिमाणग्रहस्यानुभविकत्वादवच्छेदकताया व्यासज्यवृत्तित्वोपगमे तु मूर्तप्रत्यक्षत्वावच्छिन्ने महत्वरूपस्पर्शवत्वेन तत्तत्वेन [तत्त्वतत्त्वेन] वा विषयस्य हेतुत्वेन वायोः स्पार्शनत्वं, न वा प्रभादेश्चाक्षुषत्वं तत्त्वतत्त्वेनानन्तहेतुहेतुमद्भावापत्तेः स्पर्शरूपादिग्रहेण वायुप्रभादेरनुमितिः स्मृतिर्वा । घटादेः प्रत्यक्षत्वं तु सर्वसिद्धमित्यलं पल्लवेन ॥

## पृथिव्युदकयोः साधर्म्यम्

पृथिव्युदकयोः गुरुत्वपतनरसवत्वाभास्वररूपवत्वानि । गुरुत्वं रतिकामापकतोलकत्वादि । गुरुत्वासमवायिकारणिका क्रिया पतनम् । उल्का पततीत्यादिकं तु भाक्तम् । रसो मधुरादिः । अभास्वरं रूपं पराप्रकाशकं रूपम् ॥

---

द्रव्यसमवेतस्पार्शनहेतोः त्वक्संयुक्तस्पार्शनसमवायस्य घटत्वादौ सत्त्वादत आह — घटाद्युत्पत्ति इति । न चैवमिति । वायोः स्पार्शनत्वे इत्यर्थः । एकदेशिनोपपादितवायुस्पार्शनं दूषयितुमाह । अवच्छेदकताया इति । कारणतावच्छेदकताया [1]व्यासज्यवृत्तित्वोपगमे तदवच्छिन्नमहत्वादित्रयस्यानुगतकारणतावच्छेदकत्वोपपत्त्या महत्वरूपस्पर्शवत्वेन मूर्तप्रत्यक्षत्वावच्छिन्ने हेतुत्वोपपत्तिः । अन्यथा कारणतावच्छेदकभेदात् कार्यकारणभावभेदापत्तेरिति [2]भावः । अवच्छेदकतायाः व्यासज्यवृत्तित्वे मानाभावादाह — तत्त्वतत्त्वेन वेति । तत्तद्व्यक्तित्वेन वा विषयस्य तत्तत्प्रत्यक्षव्यक्तिं प्रतिहेतुत्वे इत्यर्थः । ननु घटादेरिव वायुप्रभादेरपि तत्तद्व्यक्तित्वेन प्रत्यक्षहेतुत्वं वाच्यम् । तथा च वायुस्पार्शनस्य प्रभाचाक्षुषस्य च नानुपपत्तिरत आह —

---

1 'व्यासज्य .... .... भावभेदापत्तेरिति' इत्यन्तस्त्रुटितः ग.

2 इत्यर्थः ग.

## भूतात्मनां साधर्म्यम्

भूतात्मनां विशेषगुणवत्त्वम् । विशेषगुणाः रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वानि । बुद्ध्यादयो भावनान्ताः शब्दाश्च तद्वत्त्वम् ।

## आकाशादिचतुष्टयस्य साधर्म्यम्

- "आकाशकालदिगात्मनां सर्वगतत्वं, परममहत्वं, सर्वसंयोगिसमानदेशत्वं वा" इति भाष्यम् । एतद्व्याख्यायां आचार्यैः सर्वगतत्वं संयोगेन सर्वमूर्तवृत्तित्वं, सर्वसंयोगिसमानदेशत्वं सर्वेषां संयोगिनां [1]मूर्तानां समानदेशाकाशादयः तत्त्वं संयोगेन सर्वमूर्ताधिकरणत्वमिति यावत्; नातो पौनरुक्त्यम् ।

यद्वा निखिलमूर्तसंयोगित्वमाद्यस्य, निखिलमूर्ताधारत्वं द्वितीयस्यार्थ इति। अत्र गगनादेः संयोगेनाप्यवृत्तित्वे यद्वेति विकल्पोबोध्यः। परममहत्वं सर्वोत्कृष्टमहत्वं। नन्वियत्ताव्यवहारविषयः परिमाणम् । न च परममहत्वं तथेति

---

तत्त्वतत्त्वेनेति । [2]विवादग्रस्तवायुस्पर्शनादेः स्वीकारे तत्र विषयस्य तत्त्वतत्त्वेन हेतुहेतुमद्भावानन्त्यप्रसङ्गादित्यर्थः । ननु वायुप्रभादेः यदि न प्रत्यक्षं तर्हि तज्ज्ञानं स्यादत आह - स्पर्शरूपादि इति । विलक्षणस्पर्शरूपादिप्रत्यक्षानन्तरमयं स्पर्शो वायवीयः विलक्षणस्पर्शत्वादित्यनुमानेन सर्वत्र वायोरनुमितेरेव प्रभायामपीति बोध्यम् । ननु व्याप्त्याद्यप्रतिसन्धानेऽपि वायुप्रभादिज्ञानस्य जायमानत्वात् न तदनुमितिरूपमत आह - स्मृतिर्वेति । स्पर्शरूपादिग्रहोद्बुद्धसंस्कारवशात् वायुप्रभादेः स्मृतिरित्यर्थः । ननु घटादेरपि न प्रत्यक्षं, किं तु तदीयरूपस्पर्शप्रत्यक्षानन्तरं तस्यानुमितिः स्मृतिर्वेत्यास्ताम्; अत आह - घटादेरिति ॥

---

1 'मूर्तानां' नास्ति आ. इ. 2 'विवाद .... .... प्रसङ्गादित्यर्थः' इत्यन्तस्त्रुटितः ग.

चेत् - न । सङ्ख्यागुरुत्वयोरपि तथाव्यवहारविषययोरपरिमाणत्वात् तथाव्यवहारविषयस्य पारिमाण्डल्यादेः परिमाणत्वाच्च ।

एतेन हस्तवितस्त्यादिव्यवहारविषयस्य परममहत्वस्य कथं परिमाणत्वमित्यपास्तम् । परमाणुत्वस्याप्यतथात्वापत्तेः । तस्मात् यथाऽपकर्षकाष्ठया परमाणुत्वं तथा प्रकर्षकाष्ठया परममहत्वमपीति दिक् ।

अणुत्वे परममहत्वे च मानाभावः । द्रव्यत्वादौ रूपादेरिव परिमाणवादेरपि व्याप्तौ मानाभावादिति तु नव्याः ।

त्रुटेःस्पार्शनत्वे द्रव्यलौकिकसाक्षात्कारत्वावच्छिन्ने महत्वस्य हेतुत्वादात्मनि परममहत्वं सिध्यतीत्यन्ये ।

---

इयत्ताव्यवहारविषयो परिमाणमिति निर्वचनमतिव्याप्त्यव्याप्तिभ्यां दूषयति – सङ्ख्या इत्यादिना । पारिमाण्डल्यादेरित्यादिना द्व्यणुकादिपरिमाणसङ्ग्रहः । पारिमाण्डल्यं परमाणुपरिमाणम् ।

एतेन – "परमाणुत्वस्या"पी"ति वक्ष्यमाणदूषणेन । अतथात्वापत्तेः – अपरिमाणत्वापत्तेः । परममहत्वमपीति । आत्मन्यपकृष्टमहत्वे बाधात् परममहत्वं सिध्यतीत्यर्थः ।

अन्ये इत्यस्वरसोद्भावनम् । तद्बीजं तु प्रत्यक्षान्यथाऽनुपपत्याऽऽत्मनि परममहत्वसिद्धावप्याकाशादौ तदनुपपत्तिविरहात् तदसिद्धिरिति ।

ग्रन्थकृत्स्वमतमाह – मूर्तप्रत्यक्ष एवेति । ननु [1]मूर्तप्रत्यक्ष एव महत्वस्य हेतुत्वे द्रव्यमानसे विजातीयात्मनो [2]योगस्यैव हेतुत्वं वाच्यम् । तथा च तस्य मनस्यपि सत्त्वात्

---

1 'मूर्तप्रत्यक्ष एव महत्वस्य' नास्ति    ग.

2 'योगस्य हेतुत्वात् तस्य च मनस्यपि' इत्यस्ति    ग.

मूर्त प्रत्यक्ष एव महत्वं हेतुः । आत्मत्वेन द्रव्यमानसे तत्तदात्मत्वेन वा तत्तत्पुरुषीयमानसे हेतुत्वात् न मनःप्रभृतेर्मानसत्वम् । आत्मादौ [1]महत्व-सिद्धिस्तु रूपाभावादेः तत्र प्रत्यक्षत्वमेवे [प्रत्यक्षत्वादेवे] ति तु युक्तमित्यन्ये ॥

## पृथिवीजलजीवानां साधर्म्यम्

पृथिवीजलजीवात्मनां चतुर्दशगुणवत्वं, सङ्ख्यामात्रेणैतत्; न तु य एव पृथिव्यां त एव जलादावित्यग्रे स्फुटीभविष्यति ॥

## ईश्वरमनसोः साधर्म्यम्

ईश्वरमनसोरष्टगुणवत्वम् ।

## आकाशात्मनां साधर्म्यम्

आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्वम् । [2]अत्र क्षणिक-गुणवत्वमेकदेशवृत्तिगुणवत्वं चेति लक्षणद्वये तात्पर्यम् । तत्र क्षणिकत्वं तृतीयक्षण-

---

तन्मानसापत्तिः । न च घटप्रत्यक्षहेतुघटचक्षुस्संयोगस्य चक्षुष्यपि सत्त्वात् तच्चाक्षुषापत्तिः । तत्रोद्भूतरूपविरहेण तच्चाक्षुषासंभवादित्यत आह – आत्मत्वेनेति । नन्वेवमपि चैत्रात्ममानसस्य [3]मैत्रात्मानुत्पत्तिः [ मैत्रात्मन्युत्पत्तिः ] स्यादत आह – तत्तदात्मत्वेन वेति । आत्मादाविति । महत्ववत्येव रूपाभावादिप्रत्यक्षस्योत्पादादात्मादावपि तत्प्रत्यक्षान्यथाऽनुपपत्याऽपकृष्ट-महत्वबाधात् परममहत्वसिद्धिरित्यर्थः ।

---

1 महत्वासिद्धि° अ.

2 'अत्र .... .... नाशात्' इत्यन्तस्त्रुटितः अ.

3 चैत्रात्मन्युपपत्तिः क.

वृत्तिध्वंसप्रतियोगित्वम्। इदं चापेक्षाबुद्धिभिन्नानां जन्यानां बोध्यम्। अपेक्षाबुद्धेश्चतुर्थक्षणे नाशात्। इत्थं च क्षणिकेतरत् यदपेक्षाबुद्धिभिन्नं जन्यं तदवृत्तिजातिमद्गुणवत्वमाद्यं बोध्यम्।

एतेन कस्यचिद्रूपादेः क्षणिकत्वेऽपि न क्षतिः। [1]ननु प्रहरमात्रममुमर्थं जानन्नेवासमित्याद्यनुभवादस्तु ज्ञानस्य बहुक्षणावस्थायिता; अन्यथा ज्ञाना [ज्ञान] धाराकल्पने गौरवात्। न च विभुविशेषगुणानां स्वोत्तरोत्पन्न[2]विशेषगुणनाश्यत्वात् नेदं युक्तमिति वाच्यम्। स्वत्वस्याननुगततया विशिष्य नाश्यनाशकभावे विश्रामात्, यदुत्तरं यस्य नाशोऽनुभवसिद्धः तस्यैव तन्नाशकत्वोपगमादिति चेत् — न। प्रतियोगितया योग्यात्मविशेषगुणनाशं प्रत्यैकाधि-

---

निरुक्तक्षणिकत्वमपेक्षाबुद्धौ ईश्वरज्ञानेच्छादौ [3]चासत्त्वादाह — इदं चापेक्षेति। इत्थं चेत्यादि। क्षणिकेतरत् यदपेक्षाबुद्धिभिन्नं जन्यं रूपावेव [रूपाद्येव], तद्वृत्ति [तदवृत्ति] — जातिः शब्दत्वज्ञानत्वादिः, तद्वान् गुण शब्दज्ञानादिः, [4]तद्वत्वं क्षणिकगुणवत्वं [5]बोध्यमित्यर्थः।

प्रतियोगितयेति। कार्यतावच्छेदकसंबन्धकीर्तनम्। ऐकाधिकरण्य इत्यादि। कारणतावच्छेदकसंबन्धकीर्तनम्। कारणत्वेनाभिमतस्य पूर्ववर्तितासंबन्धेन व्यधिकरणज्ञानादावपि

---

1 'अत्र क्षणिकगुणवत्वमेकदेशवृत्तिगुणवत्वं चेति लक्षणद्वये तात्पर्यम्। तत्र क्षणिकत्वं तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमपेक्षाबुद्धिजन्यानांबोध्यम्। अपेक्षाबुद्धेःचतुर्थक्षणेनाशात्' इत्यधिकः अ.

2 'विभु' इत्यधिकः अ.

3 च नास्तीत्यत आह - इत्थं चे° क.

4 तद्वत्क्षणिक° ग.

5 'बोध्यं .... .... ज्ञानादेरिति' इत्यन्तस्त्रुटितः। तत्स्थाने — 'च क्रिमिकचेष्टादिविलक्षणकार्यालाभादेकज्ञानोत्पत्तिक्षणेऽपरज्ञानाद्युत्पत्तिसामग्रीसमवधानकालनियम इति भावः। चेष्टादिक्रमादित्यल' इत्यस्ति क.

करण्यावच्छिन्न स्वपूर्ववर्तितासंबन्धेन विशेषगुणत्वेन कारणत्वात् ज्ञानादेः सामग्रीबलाया तद्व्यक्षणोत्पन्न [द्वितीयक्षणोत्पन्न] ज्ञानादिना नाशात् । अन्यथा सौदामिनीसंपातजनितप्रत्यक्षस्य तद्विगमेऽपि चिरमनुभवप्रसङ्गात्, ज्ञानादेराशूत्पत्तिरपि क्रमिकचेष्टासन्तानबलेन सिद्धा । ज्ञानेच्छाकृतीनां क्रमेणैवेच्छाकृतिचेष्टादिक्रमात् । रोगादिनाश [नाश्य] संस्कारस्य कीर्तनगङ्गास्नानादिनाश्यादृष्टस्य च वारणाय योग्येति । वेगावृत्तियोग्यजातिमदर्थकम् । अतो निर्विकल्पकजीवनयत्नादिसङ्ग्रहः । अपेक्षाबुद्धेः स्वद्वितीयक्षणोत्पन्नसंयोगादिना तृतीयक्षणे नाशवारणाय नाशकतावच्छेदके विशेषेत्युभयावृत्तिपरम् । स्वपूर्ववर्तित्वं च स्वप्रागभावाधिकरणक्षणवृत्तित्वम् । अतो न स्वस्मिन् स्वपूर्वत्वेन नाशकत्वापत्तिः। अत्र चरमज्ञानान्येत्यपि नाशकोटौ निवेशनीयम् । चरमज्ञानं स्वजन्यसंस्कारात् नश्यति; संस्कारस्तु कालादित्यन्ये ॥

---

तन्नाशकत्ववारणायैकाधिकरण्यावच्छिन्न इति स्वपूर्ववर्तिता – विशेषणम् । अन्यथा – ज्ञानादेः निरुक्तक्षणिकत्वानभ्युपगमे । तद्विगमेऽपि – सौदामिनीसम्पातविगमेऽपि । नन्वेकज्ञानाद्युत्पत्त्यनन्तरक्षण एव यद्यपरज्ञानाद्युत्पत्तिः स्यात्; तदा तेन तृतीयक्षणे पूर्व – नाशादेः [ज्ञानादेः] नाशः स्यात्; तत्रैव किं मानमित्याकाङ्क्षायामाह – ज्ञानादेरिति । चेष्टादिक्रमादित्यत्रादिना शब्दसन्तानस्थले कण्ठाद्यभिघाते शब्दसाधनत्वज्ञानचिकीर्षाकृतिकण्ठादिचेष्टा [1]तदभिघातशब्दोत्पत्तीनांक्रमो बोध्यः । कार्यतावच्छेदक – [2]प्रविष्टयोग्येत्यस्य फलमाह – रोगादीति । वेग इति । अत्र वेगावृत्तीति योग्यजातेः विशेषणं भावनायाऽसंग्रहाय । अन्यथा संस्कारत्वादियोग्यजातिमत्त्वस्य तत्रापि सत्त्वेन तत्सङ्ग्रहेऽसङ्गत्यापत्तेः । तस्याः स्थिरस्थायित्वं सिध्यतीति भावः । वक्ष्यमाणविशेषगुणत्वस्याप्रवेशे गौरवादाह – उभयावृत्तिपरमिति । एतावतापि संयोगादिवारणसंभवादिति भावः । ननु स्वपूर्ववर्तित्वं स्वप्रागभावाधिकरण – [3]समयवर्तित्वम् । तच्च स्थूलकालमादाय स्वपूर्वोत्पन्न इव स्वस्मिन्नपि

---

1 तदभिधानशब्द° ग. 2 प्रतियोग्यत्वस्य फलमाह - योगादीति° क. 3 °समवायवृत्तित्वम् क.

यद्वा तत्क्षणोत्पन्ननाशानाश्ययोग्यविभुविशेषगुणनाशं प्रति समवायेन द्वितीयक्षणोत्पन्नत्वेन हेतुत्वं, अपेक्षाबुद्धिनाशे द्वित्वनिर्विकल्पकत्वेन पृथक्कारणत्वात् न तृतीयक्षणे तन्नाशः अपेक्षाधीः, अथ द्वित्वं, ततः तन्निर्विकल्पकं, ततोऽपेक्षाधीनाश इति चतुर्थक्षणे नाशात् । अत्र नाशानाश्येति चरमज्ञानान्त्यशब्दादिव्युदासाय । न च चरमज्ञानादेरपि स्वद्वितीयक्षणोत्पन्नसंयोगादिनाश्यत्वसंभवः । तदा संयोगाद्युत्पत्तौ मानाभावात् । योग्येति प्राग्वत् रूपादिवारणाय । विभ्वित्यात्म-

---

संभवतीति तद्घटितसंबन्धेन स्वस्यापि स्वस्मिन् सत्त्वात् स्वनाशकापत्तिरत आह – स्व पूर्व इति । तथा च तन्निर्वचने क्षणरूप – [1]समयस्यैव प्रवेशात् नोक्तदूषणमिति भावः । चरम – [2]ज्ञानाद्यनन्तरक्षणे विशेषगुणोत्पादे मानाभावात् तन्नाशे व्यभिचारः स्यादत आह – अत्र चरम इति । चरमज्ञाननाशे व्यभिचारवारकं मतान्तरमाह – चरमज्ञानमिति ।

शब्दज्ञानादिनाशसाधारणं कार्यकारण – [3]भावं दर्शयितुं कल्पान्तरमाह – यद्वा तत्क्षण इति । [4]अत्र तत्क्षणपदेन नाश्यज्ञानाद्युत्पत्ति – [5]द्वितीयक्षण एव ग्राह्यः । उत्पत्तिक्षणसाधारणक्षणोपादाने चरमज्ञानादेरुत्पत्तिक्षणोत्पन्ननाशनाश्यत्वापत्तौ क्षणिकत्वापत्तेः । इत्थं च तत्क्षणोत्पन्ननाशनाश्यं चरमज्ञानान्त्य[6]शब्दादि तद्भिन्नो योग्यविभुविशेषगुणः [7]चरमज्ञानान्त्यशब्दादिपूर्वतन एव ज्ञानशब्दादिः तन्नाशं प्रति तद्द्वितीयक्षणोत्पन्नस्य तत्त्वेन समवायेन हेतुत्वमित्यात्मनभोनिष्ठ एव कार्यकारणभाव इत्यर्थः । अत्र – यद्वेति- कल्पीयकार्यतावच्छेदके । नाशानाश्येतीति । तत्क्षणोत्पन्ननाशानाश्येतीत्यर्थः । न च ध्वंसीयस्वरूपसंबन्धविशेषेण योग्यविभुविशेषगुणनाशे तद्द्वितीयक्षणोत्पन्ननाशस्य संबन्धसामान्येनैव हेतुत्वमस्तु । इत्थं च चरमज्ञानादिनाशेऽपि तद्द्वितीयक्षणोत्पन्नस्यापि (इत्य)

---

1 °समवायस्यैव क.
2 °ज्ञानघटानन्तर° क.
3 °भावदर्शनम्, अयं तु कल्पा° ग.
4 तत्र क.
5 'द्वितीय' नास्ति क.
6 °शब्दादिवद्भिन्नो क.
7 आद्यमध्यमज्ञानशब्दादिस्तन्नाशं प्रति पूर्वतन ग.

संयोगवारणाय । विशेषेत्युभयावृत्तिपरम् । तत्क्षणोत्पन्नत्वं तत्पूर्वक्षणावृत्तित्वे सति तत्क्षणवृत्तित्वं सत्यन्तमेव वा, अन्त्ये विभ्विति विशेषेति च नाश्यकोटौ न देयम् । क्षणिकश्च क्षणोऽतिरिक्त इति नानुगमः ।

---

नाशस्य स्वरूपसंबन्धेन हेतुत्वसंभवेन व्यभिचाराभावात् तन्नाशनाश्येत्यस्याप्यप्रवेशात् लाघवमिति वाच्यम् । तथा [2]सत्युक्तसंबन्धेन ज्ञानादिनाशस्य कालादावप्युत्पादापत्तेः । तद्द्वितीयक्षणोत्पन्नज्ञानादेः कालिकादिना तत्रापि [आत्मन्यपि] सत्त्वादिति । योग्येति प्राग्वदिति । [3]रोगादिनाश्यसंस्कारादेः वारणायोपात्तं योग्येति पदम् । वेगावृत्तियोग्यजातिमदर्थकमित्यर्थः । तत्क्षणोत्पन्न – [4]नाशानाश्येत्यत्र [5]तद्द्वितीयक्षणोत्पन्नत्वेनेत्यत्र च स्वत्वघटितोत्पत्तिप्रवेशे गौरव – [6]मननुगमश्चेत्युभयघटकं तत्क्षणोत्पन्नत्वं प्रकृतोप – [7]योगित्वात् लघु, तन्निर्वक्ति – तत्क्षणोत्पन्नत्वं चेति । नन्व[8]त्र विशेष्य भागो व्यर्थः । न च सत्यन्तस्य गगनादावपि सत्त्वात् तद्वारणार्थत्वेन तत्सार्थक्यमिति वाच्यम् । तद्वारणेऽपि प्रकृतेक्षतिविरहादित्याह – सत्यन्तमेव वेति । तत्क्षणोत्पन्नत्वं यदि तत्पूर्वक्षणावृत्तित्वमात्रं तदाश्रयनाशनाश्यरूपसंयोगादेः स्वपूर्वपक्षवृत्त्याश्रयनाशनाश्यरूपसंयोगादेस्तु वारणे प्रयोजनाभावः । तन्नाशकतेजस्संयोगविभागादेः द्वितीयक्षणपूर्वक्षणवृत्तितया तद्द्वितीयक्षणोत्पन्नत्वरूपकारणतावच्छेदकाक्रान्तत्वेन व्यभिचाराभावात् । तथा च तद्वारकविभुविशेषपदोपादानं न स्यादिति चेत् – नोपादीयत एतद्द्वयमपीत्याह – विभ्विति । विशेषेति चेति । ननु

---

1 संयुक्त क.
2 योगादि° क.
3 'नाशानाश्य' नास्ति ग.
4 'तद्द्वितीय ... स्वत्वघटित' इत्यन्तस्त्रुटितः ग.
5 'अननु ... .... प्रकृतोपयोगित्वात्' इत्यन्तस्त्रुटितः ग.
6 °योगित्वलघुमुख निर्वक्ति क.
7 'अत्र .... .... तथाच तद्वारक' इत्यन्तस्त्रुटितः । तत्स्थाने – 'तत्पूर्वक्षणावृत्तित्वमेव यदि तत्क्षणोत्पन्नत्वं प्रकृते तदा रूपसंयोगादेरपि स्वद्वितीयक्षणपूर्वक्षणावृत्त्या भ्रमनाशादिनाश्यत्वात् तत्क्षणोत्पन्ननाशानाश्येत्यनेनैव कार्यतावच्छेदकानाक्रान्तसंभवे तद्बहिर्भावाय तत्र विभुविशेष°' इत्यस्ति ग.

यत्तु – तत्क्षणध्वंसावृत्तितत्क्षणवृत्तिनाशानाश्ययोग्यगुणनाशे तत्क्षणोत्पन्नत्वेन हेतुत्वम्। एवं च ज्ञानादेः चिरस्थायिता अपेक्षाबुद्धेः [1]त्रिक्षणावस्थायिता च संभवतीति –

---

स्वजन्यविभागप्रागभावावच्छिन्नक्रियारूपक्षणस्य [2]स्वत्वघटिततयाऽननुगतस्य [3]कार्यतावच्छेदकप्रवेशे तदननुगमः स्यादत आह – तत्क्षणश्च [क्षणिकश्च] इति।

ज्ञानादेः स्थिरस्थायित्वोपपादकमतं दूषयितुमुपन्यस्यति – यत्त्विति। तत्क्षण इत्यादि। अत्र कृत्स्नमपि तत्क्षणपदं नाश्य – [4]ज्ञानादिपरम्; [5]तत्रापि कार्यतावच्छेदके [6]क्षणपदद्वयमप्युत्पत्तिक्षणपरम्। कारणतावच्छेदके तु यथासंभवं द्वितीयतृतीयक्षणादिपरमिति बोध्यम्। तथा च तत्क्षण – [7]ध्वंसावृत्ति सत् तत्क्षणवृत्तिरूपान्त्यज्ञानशब्दादि तन्नाशनाश्यं चरमज्ञानान्त्यशब्दादि [8]तद्भिन्नो योग्यविभुविशेषगुणः आद्यमध्यमशब्दादिः तन्नाशं प्रति तदुत्तरोत्पन्न – [9]ज्ञानादेः तत्क्षणोत्पन्नत्वेन हेतुत्वमित्यर्थः। कार्यदिशि ध्वंसीय – विशेषणताविशेषः। कारणदिशि च समवाय एव संबन्धः। योग्यविभुविशेषगुणनाशत्वमात्रं चरमज्ञानान्त्यशब्दादिनाशेऽपि। न च तत्र तत्क्षणोत्पन्नः समवायेन हेतुः संभवति। तदुत्तरकाले ज्ञानाद्युत्पत्तौ मानाभावादिति तत्र व्यभिचारवारणाय तत्क्षणध्वंसावृत्तितत्क्षणावृत्तिनाशानाश्येति गुणविशेषणम्। चरमज्ञानादिस्तु तादृशेनोपान्त्यज्ञानादिनाशेन नाश्य एवेति तन्नाशस्य तादृशकार्यतावच्छेदकाक्रान्तत्वाभावात् न व्यभिचारः। अत्र चरमज्ञानादेः तादृशनाशानाश्यतया द्विक्षणावस्थायित्वमेव; न त्वितरज्ञानादिवद्बहुक्षणावस्थायित्वं

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | त्रिक्षणस्था° | अ. | 6 | 'क्षणपदद्वयमपि' नास्ति | ग. |
| 2 | स्वत्वाननु° | ग. | 7 | °ध्वंसवृत्ति° | ग. |
| 3 | कार्यकारणाताव° | ग. | 8 | 'तद्भिन्नो.... .... आद्यमध्यमशब्दादि' इत्यन्तस्त्रुटितः | ग |
| 4 | °ज्ञानक्षणपरम् | ग. | | | |
| 5 | 'तत्रापि' नास्ति | क. | 9 | ज्ञानादितत्क्षण° | ग. |

तन्न । [1]तत्क्षणोत्पन्ननाशानाश्ययोग्यगुणनाशत्वावच्छिन्ने तत्क्षणावृत्तित्वेन हेतुताया एव युक्तत्वात् । तत्क्षणोत्पन्नत्वस्य वस्तुगत्या [2]तत्क्षणप्राक्क्षणो यः [3]तदवृत्तित्वरूपतायां लाघवात् । न चापेक्षाबुद्धिशब्दयोः तृतीयक्षणपर्यन्तस्थितये तत्क्षणद्वितीयक्षणावृत्तित्वेन हेतुत्वमस्तु । तथा च ज्ञानमात्रस्य सुखादेश्च [4]तृतीयक्षणपर्यन्ततत्त्वेऽपि न क्षतिरिति वाच्यम् । [5]तथासति तत्तत्क्षणे विनश्यदवस्थैः तत्क्षणोपत्नानां नाशे क्षणिकत्वापत्तेः ।

वस्तुतः प्रतियोगितया नाशं प्रति कालिकावच्छिन्नस्वप्रतियोग्याधारवत्तादात्म्येन नाशत्वेन हेतुत्वात् । ज्ञानमात्रस्य [6]शब्दस्य च द्विक्षणावस्थायि – तयैव [तैव] । न चैवं घटादेरपि तत्त्वापत्तिः । तन्नाशे कपालादिनाशस्य

---

प्रयोजनानुभवयोरभावादिति बोध्यम् । एवमिति । यस्मिन् क्षणे ज्ञानादेर्नाशः तत्पूर्वक्षणोत्पन्नस्य तत्क्षणोत्पन्नत्वेन तत्र हेतुत्वे ज्ञानादेः यथानुभवं द्वित्रिक्षणावस्थायित्वं स्थिरस्थायित्वं चापि संभवतीत्यर्थः ।

प्रागुक्त – 'यद्वे'ति कल्पमाश्रित्यैव यत्तु मतं दूषयति – [7]तत्क्षणोत्पन्न इति । ननु तदुक्तेऽपि गुरुतरोत्पत्तिघटिततत्क्षणोत्पन्नत्वप्रवेशात् कथं युक्तत्वमत आह – तत्क्षणोत्पन्नत्वस्येति । अपेक्षाबुद्धिनाशसाधारणं कार्यकारणभावमाशङ्क्य निषेधति – न चापेक्षा इति । तत्त्वेऽपि – त्रिक्षणावस्थायित्वेऽपि ।

---

1 तत्तत्क्षणो° अ.
2 तत्क्षणप्राक्क्षणे आ. तत्प्राक्क्षणां इ.
3 तदवृत्तिरूपतायाः आ.
4 'तृतीयक्षणपर्यन्त' नास्ति आ.
5 तथा च तत्त° अ.
6 'शब्दस्य .... .... कपालादिनाशस्य' इत्यन्तस्त्रुटितः अ.
7 'तत्क्षणो .... .... युक्तत्वमत आह' इत्यन्तस्त्रुटितः ग.

तत्तन्नाशे तत्प्रतियोगिनां च हेतुत्वात्। यदि च तत्तत्क्षणध्वंसावृत्ति – [1]तत्तत्क्षण-वृत्तिनाशे तत्तत्क्षणत्वेन तत्क्षणप्राक्क्षणावृत्तित्वेन वा हेतुत्वं प्रत्यासत्तिः, कालिकी।

---

शब्दज्ञानादेः द्विक्षणावस्थायित्वसिद्धान्तमनुसृत्याह – वस्तुत इति। नाशं – शब्द-ज्ञानादिनाशम्। कालिक इति। कालिकावच्छिन्ना या स्वप्रतियोग्याधारता तद्वत् नाश्यत्वाभिमतशब्दज्ञानादि – [2]तद्वत्ता [तत्ता] दात्म्येनेत्यर्थः। स्वपदं नाशकारणत्वेना-भिमतनाशपरम्। स चाद्यशब्दज्ञानादिनाशस्थले निमित्तसंयोगादिनाशः तत्प्रतियोग्याधार-ताया कालिकेन नाश्यशब्दादौ सत्त्वात्। समवायावच्छिन्नतत्प्रतियोग्याधारताया गगना-त्मादावेव सत्त्वात् प्रतियोगितया च तत्र शब्दज्ञानादिनाशानुत्पत्तेः व्यभिचारवारणाय कालिकावच्छिन्नेत्याधारताविशेषणम्। महाकालादिव्यावृत्तकालिकसंबन्धावच्छिन्न इति तदर्थः। अन्यथा सामान्यतः कालिकसंबन्धावच्छिन्नस्वप्रतियोग्याधारतावत् तादात्म्येन निमित्तसंयोगादिनाशस्य महाकालादावपि सत्त्वात् प्रतियोगितया शब्दादिनाशस्य चासत्त्वात् व्यभिचारस्य दुर्वारत्वापातात्। यद्यपि कालिकावच्छिन्नप्रतियोग्याधारताया एव संबन्धत्वे दोषाभावात् तादात्म्यपर्यन्तानुधावनं व्यर्थम्; तथाप्याधारतायाः तत्तदाधारादि-स्वरूपात्मिकाया[3]ऽननुगतत्वात् तादृशाधारतोपलक्षिततत्तत्तादात्म्यस्य चाभेदरूपस्यानुग-तत्वात् तत्पर्यन्तानुधावनम्। एवं कार्यतावच्छेदकसंबन्धभूतायाः [4]प्रतियोगितायाः स्वभाव-

---

1 'तत्तत्क्षणवृत्ति' नास्ति इ. 2 तादात्म्येन क.

3 'पक्षवृत्त्याश्रयनाश्यरूपसंयोगादेस्तु वारणे प्रयोजनाभावः। तन्नाशके तेजस्संयोगविभागादेः तद्द्वितीयक्षणपूर्वक्षणवृत्तितया तद्द्वितीयक्षणोत्पन्नत्वरूपकारणतावच्छेदकाक्रान्तत्वेन व्यभिचारा-भावात्। तथाच तद्वारकविभुविशेषपदोपादानं स्यादिति चेन्न। यदि ये त एव तद्वयमपीत्याहुः। न चेति। विशेषेति चेति। ननु स्वजन्यविभागप्रागभावावच्छिन्नक्रिया-रूपक्षणस्य स्वत्वघटिततयाऽननुगतस्य कार्यतावच्छेदकप्रवेशे तदनुगमः स्यादत आह – क्षणश्चेति। ज्ञानादेः स्थिरस्थायित्वोपपापकं मतं दूषयितुमुपन्यस्यति – यत्त्विति। तत्क्षणेत्यादि। अत्र कृत्स्नमपि तत्पदं नाश्यज्ञानादिपरम्। कार्यतावच्छेदकेक्षणपदद्वयमपि तदुत्पत्तिक्षणपरम्। कारणतावच्छेदके तु यथासंभवं द्वितीयतृतियक्षणादिपरमिति बोध्यम्। तथा च' इत्यधिकः क.

4 'प्रतियोगितायाः' नास्ति क.

इत्थं [1]च निखिलद्रव्यगुणादिनाशसाधारण्यं तदा ज्ञानादेः चिरस्थितिः दुर्वारेत्यप्याहुः ॥

---

विरहात्मिकायाऽनुगतत्वं बोध्यम् । नाशत्वेनेत्यस्य नाश्यशब्दज्ञानात् द्वितीयक्षणोत्पन्ननाशस्येत्यादिः । न चेति । प्रतियोगितया नाशं प्रति कालिकावच्छिन्नस्वप्रतियोग्याधारतावत्तादात्म्येन नाशस्य हेतुत्वे घटादेरपि द्विक्षणावस्थायित्वापत्तिः । घटादिद्वितीयक्षणोत्पन्ननाशस्य तादृशसंबन्धेन तत्रापि सत्त्वादित्यर्थः । तन्नाशे – घटादिनाशे । ननु शब्दज्ञानादिनाशस्य प्रतियोगितया घटादावप्युत्पत्त्यापत्तिः । कालिकावच्छिन्नस्वप्रतियोग्याधारतावत्तादात्म्येन निमित्तसंयोगादिनाशस्य तत्रापि सत्त्वादित्यत आह – तत्तन्नाश इति । प्रतियोगितासंबन्धेन तत्तन्नाशे तत्तत्प्रतियोगिनामपि विशिष्य हेतुत्वात् न कोऽप्यतिप्रसङ्ग इति भावः । लाघवात् द्रव्यगुणादिनाशसाधारणं कार्यकारण – [2]भावमाह – यदि चेति । अत्र शब्दज्ञानादेः चिरस्थायित्वोपगमेन सिद्धान्तविरोधस्य दुष्परिहारत्वात् यदि चेत्युक्तम् । तत्तत्क्षणध्वंस इति । [3]यस्मिन् क्षणे शब्दज्ञानादिनाशोत्पत्तिः स एव तत्क्षणशब्दैः धर्तव्यः । तथा च तत्क्षण – [4]ध्वंसावृत्ति सत् यत् [5]तत्क्षण – वृत्तिशब्दज्ञानादि तन्नाशे इत्यर्थः । तादृशनाशे तत्क्षणत्वेन [6]हेतुत्वे प्रमाणसिद्धेतरकारणविलोपापत्तिरत आह - तत्क्षणप्राक्क्षणावृत्तित्वेन वेति । [7]अत्र तत्क्षणप्राक्क्षणं शृङ्गिग्राहिकया धृत्वा तद्वृत्तित्वावच्छिन्नाभाववत्त्वेन सर्वेषां तत्क्षणानामनुगम इति भावः । कालिकीति । तथा च यदा तत्क्षणध्वंसावृत्ति – तत्क्षणवृत्तिनाशः तदातत्क्षणलक्षणा [तत्क्षणः तत्क्षण] प्राक्क्षणावृत्तिर्वेति [8]नियमगर्भार्थं हेतुत्वं पर्यवसितमिति भावः ॥

---

1 च न च द्रव्य° अ.

2 °'भावं' नास्ति क.

3 'यस्मिन् .... .... धर्तव्यः, तथा च' इत्यन्तस्त्रुटितः क.

4 ध्वंसवृत्ति क.

5 तत्क्षणध्वंसनाशदि क.

6 'हेतुत्वमयुक्तं, तत्क्षणस्यानुगतस्याभावादत आह –' क.

7 'अत्र .... .... मनुगम' इत्यन्तस्त्रुटितः। तत्स्थाने – तथा च यद्रूपेण सर्वेषामपि तेषां हेतुत्वात् न तद्विलोपापत्तिरितिभावः' इत्यस्ति ग.

8 नियमार्थं ग.

## शब्दानित्यत्वनिरूपणम्

[1]ननु शब्दो न क्षणिकः, 'स एवायं गकारः' 'श्रुतपूर्वोऽयं गकार' इति प्रत्यभिज्ञयैक्यसिद्धौ [2]तन्नित्यत्वसिद्धेः। उत्पादविनाशप्रतीतिस्तु भ्रान्ता। न चोत्पादविनाशप्रतीतानां भ्रमत्वकल्पनामपेक्ष्य प्रत्यभिज्ञामात्रस्य तत्कल्पने लाघवम्; प्रत्यभिज्ञानानामप्यानन्त्यात्। विषयबाहुल्यस्य ज्ञानबाहुल्याप्रयोजकत्वात्।

अथ तारमन्दादिभेदेन गकारादेः [3]नानात्वावश्यकत्वात् कथं प्रत्यभिज्ञयैक्यसिद्धिः। न च तारत्वादयो वायुगता एव गकारादावारोप्यन्ते, तर्हि कत्वादेरपि वायुधर्मत्वापत्तौ शब्दस्यैक्यापत्तिरिति चेत् — न। तारमन्दशुक-

---

उक्तशब्दक्षणिकत्वं व्यवस्थापयितुं मीमांसकमतमालम्ब्य पूर्वपक्षमाह -- नन्विति। [4]'स एवायमि'ति प्रत्यभिज्ञया पूर्वपरगकारादिव्यक्त्योरैक्यसिद्धौ, तच्चैक्यं नित्यत्वं विना नोपपद्यत इति तन्नित्यत्वसिद्धिरित्यर्थः। [5]ननूत्पत्तिविनाशरूपविषयानेकत्वात् तत्प्रतीतिबाहुल्यमुचितम्; पूर्वापरव्यक्तिभेदरूपप्रत्यभिज्ञाविषयस्यैकत्वात् कथं तद्बाहुल्यमत आह — विषयबाहुल्यस्येति। विषयैक्येऽपि नानाज्ञानसंभवादिति भावः।

[6]अथ तार इति। तारमन्दादिककारादेरैक्ये तारत्वादेः कत्वादिना सङ्करप्रसङ्गात् तारमन्दादिभेदेन तन्नानात्वमावश्यकमिति 'स एवयमि'ति प्रत्यभिज्ञया कथं तदैक्यसिद्धिरित्यर्थः।

---

1 'ननु .... .... भ्रान्ता' इत्यन्तस्त्रुटितः आ.

2 तन्नित्यतासिद्धेः इ.

3 नानात्वात् आ.

4 'स .... .... तन्नित्यत्वसिद्धिरित्यर्थः' इत्यन्तस्त्रुटितः ग.

5 ननु सति विनाश° क.

6 'अथ .... .... सिद्धिरित्यर्थः' इत्यन्तस्त्रुटितः ग.

सारिकादिप्रभवभेदेनैव शब्दनानात्वस्वीकारात् । एतेन ककारादेरैक्ये शुकाद्यनुमानं न स्यादित्यपास्तम् ।

अत्रोच्यते – 'उत्पन्नो गकारः' 'विनष्टो गकार' इत्याद्युत्पत्तिविनाशरूपवैधर्म्यज्ञानकालोत्पत्तिकायाः प्रत्यभिज्ञायाः तज्जातीयाभेदविषयकत्वात् [1]कथं पूर्वापरकालीनगकारादिव्यक्त्यैक्यसिद्धिः । न च 'श्यामो विनष्टः' 'रक्त उत्पन्नः' 'शिखी विनष्टः' 'शिखी उत्पन्न' इत्यादिज्ञानकाले 'स एवायमि' त्यादि – [2]व्यक्त्यैक्यवदत्रापि स्यादिति वाच्यम् । तत्र [3]विशिष्टोत्पादादिप्रतीतेः शुद्धव्यक्त्यभेद – [4]बुद्ध्यविरोधित्वात् । इह तु शुद्धस्यैव गकारादेरुत्पादादिधीरिति विशेषात् । न च तादृशवैधर्म्यज्ञानाभावकालोत्पन्नपूर्वापरकालीनव्यक्त्यभेदविषयकप्रत्यभिज्ञया तदैक्यसिद्धौ उत्पादादिप्रतीतेः वायुसंयोगाद्युत्पादादिविषयकत्वमस्त्विति वाच्यम् । उत्पत्तेः स्वत्वगर्भादेकोत्पत्तेरन्यात्रारोपायोगात् ।

---

तदैक्यसिद्धौ – **पूर्वापरगकारादिव्यक्त्यैक्यसिद्धौ** । उत्पादादिप्रतीतेरिति । **'उत्पन्नो गकारः 'विनष्टो गकार' इत्यादिप्रतीतेः गकारादिव्यञ्जकवायुसंयोगाद्युत्पादादिविषयकत्वमित्यर्थः । प्रयत्नेन शब्दमुच्चरितवतः पुंसो वायुः नाभेरुत्थित उरसि विस्तीर्णः कण्ठे [5]विवर्तितो मूर्धानं – [6]माहत्य [मूर्धानमाहत्य] वक्त्रे विचरन् [7]नानाविधशब्दानभिव्यनक्तीति** मीमांसकसिद्धान्तात् **नानाविधान् शब्दानुत्पादयतीति** तार्किकपाठः । उत्पत्तेरिति । **स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणसंबन्धः, स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयसंबन्धो वोत्पत्तिः । स्वमुत्पाद्यमानत्वेनाभिमतं घटादि । आद्यक्षणसंबन्धः उत्पत्तिरित्यस्यापि निरुक्त**

---

1 न इ.
2 °व्यक्त्यैक्यसिद्धिः तद्वदत्रापि आ.
3 विनाशोत्पादादि आ.
4 'बुद्ध्य .... .... न च तादृश' इत्यन्तस्त्रुटितः अ.
5 विवर्तिनो ग.
6 °माहात्म्यपरावृतो वक्त्रे क.
7 'नाना.... .... नानाविधान्' इत्यन्तस्त्रुटितः क.

किं च तारमन्दशुकसारिकादिप्रभावादिभेदेन नानाविधेषु वर्णेष्वपि प्रत्यभि–[1]ज्ञादर्शनात् तस्याः भ्रमत्वमावश्यकम् ।

एतेनान्योत्पत्तेरन्यत्रारोपायोगेपि वह्न्यादौ धूमादिव्याप्तिभ्रमवत् नित्येऽपि शब्दे स्वत्वघटितसखण्डोत्पादभ्रमः संभवति। न [2]वा एषा व्यक्त्यभेदबुद्धे[3]र्बाधिनी।

---

एव पर्यवसानात्। तथा [4]चोत्पत्तेः [5]स्वत्व–गर्भा [गर्भत्वा] वश्यकत्वात् तस्य चाननुगततया वायुसंयोगादिनिष्ठोत्पत्तेः गकारादावारोपायोगादित्यर्थः। नव्यमते स्वपदस्य विशेषरूपेण तत्र तत्र शक्तेः स्वत्वघटितोत्पत्तिज्ञानस्य विशेष दर्शन – [6]जन्यस्यारोपत्वं न संभवतीति भावः।

[7]'एतेनेत्यादिवक्ष्यमाणास्वरसादाह – किं चेति ।

---

1 °ज्ञानादर्शनात् अ.

2 च अ.

3 विरोधिनी अ.

4 चोत्पत्तिः ख. ग.

5 'स्वत्व .... .... स्वत्वघटितोत्पत्तिज्ञानस्य' इत्यन्तस्त्रुटितः। तत्स्थाने – 'इत्यस्यापिक्षणैकेन निरुक्तार्थ एव पर्यवसानात् इत्युक्तेः स्वत्वगर्भत्वं नावश्यकम्। स्वपदस्य च तदादेरिव। नव्यमते विशेषरूपेणैव तत्र शक्तेः स्वत्वस्यानुगतस्याभावात् वायुसंयोगादिषु स्वत्वघटिततदुक्तेः गकारार्थो वायोर्योगादित्यर्थः। संयोगादिषु स्वत्वघटितोत्पत्ति ज्ञानस्य स्वात्मकविशेषदर्शन' इत्यस्ति क.

6 जन्यत्वं न क.

7 'ननु वायुसंयोगादेरखण्डोक्त्याऽस्य गकारादावारोपसम्भव इति तदपि सखण्डोक्त्या तस्यारोपस्तु स्यात्। तस्य तद्घटकतावत्पदार्थानां मिथस्संसर्गावगाहिज्ञानरूपस्य विशेषदर्शनाप्रसिद्धत्वादित्यस्वरसादाह' इत्यधिकः क.

[1]साक्षादविरोधिनः तथाविधोत्पादस्य व्यावर्तकत्वेनागृहीतत्वात् तद्बुद्धेरविरोधित्वादित्यपास्तम् ।

अपि च [2]चैत्रादेः स्वीयमैत्रशुकादिककारादेः प्रत्यक्षे चैत्रादिकर्णावच्छिन्नाः विजातीयविजातीयवायुसंयोगाः कारणं वाच्यमित्यतिगौरवम् । मम त्ववच्छेदकतया

---

एतेन 'किंचे'त्याद्युक्तदूषणेन । [3]धूमादिव्याप्तिभ्रमवत् — धूमादिनिष्ठव्याप्तिघटकतावत्पदार्थानां संसर्गभ्रमत्वात् । स्वत्वघटितसखण्डोत्पादभ्रमः — स्वत्वघटितोत्पत्तिघटकतावत्पदार्थानां संसर्गभ्रमः । एषा — सखण्डोत्पादभ्रमः । व्यक्त्यभेदबुद्धेः — 'स एवायं गकार' इत्यादिबुद्धेः । साक्षादविरोधिनः — व्यक्त्यभेदबुद्धिग्राह्याभावानवगाहिज्ञानविषयस्य । तथाविधोत्पादस्य — स्वत्वघटितसखण्डोत्पादस्य । ननु सखण्डोत्पादस्यपि व्यक्त्यभेदव्यावर्तकत्वात् तद्भ्रमो व्यक्त्यभेदबुद्धिविरोधि स्यादेवेत्यत आह — व्यावर्तकत्वेनेति । तद्बुद्धेः — 'स एवायं गकार' इत्यादि [4]व्यक्त्यभेदबुद्धेः ।

---

1 'कुतो न विरोधीत्यत आह — साक्षादिति । द्विविधं विरोधिज्ञानग्राह्याभावावगाहि तद्व्यावर्तकधर्मदर्शनं च । प्रकृते च स्वत्वघटितसखण्डोत्पादभ्रमस्य ग्राह्याभावावगाहिज्ञानविधया व्यावर्तकधर्मदर्शनविधया वा न व्यक्त्यंशे दुर्बुद्धिविरोधितम् । तद्विषयीभूत सखण्डोत्पादस्य व्यक्त्यभेदविरहरूपत्वाभावेन साक्षादविरोधित्वात् व्यक्त्यभेदव्यावर्तकत्वेन ग्राहितत्वाच्चेति भावः' इत्यधिकः क.

2 'चैत्रादेः' नास्ति अ.

3 'धूमादि .... .... संसर्गभ्रमः' इत्यन्तस्त्रुटितः । तत्स्थाने — 'वह्न्यादाविति । धूमवान् वह्नेरित्यादौ धूमादिनिरूपितव्याप्तेः तत्सामग्र्यादिनिष्ठायाः स्वत्वघटितायाः वह्नावारोपासंभवेऽपि सखण्डव्याप्ति घटकतावत्पदार्थानां मिथः संसर्गावगाहिभ्रमवन्नित्येऽपि शब्दे स्वत्वघटितसखण्डोत्पादिते भ्रमः तद्घटकतावत्पदार्थानां मिथः संसर्गावगाहिज्ञानरूपो संभवत्येवेत्यर्थः । एषा' इत्यस्ति क.

4 'व्यक्त्यभेद' नास्ति क.

चैत्रादिककारादौ तया विजातीयवायुसंयोगो हेतुः। तत्पुरुषीयनिखिलप्रत्यक्षे च तत्पुरुषीयकर्णावच्छिन्नसमवाय इति लाघवम्।

किं च व्यञ्जकत्वे निमित्तपवनसंयोगादेः कप्रत्यक्षत्वं जन्यतावच्छेदकं वाच्यम्। उत्पादकत्वे तु कत्वमिति लाघवम्। न च व्यञ्जकत्वेऽपि लौकिकविषयतया कत्वमेव तथा कोलाहलादौ कत्वादेरग्रहेऽपि शब्दत्वादिना ककारादिप्रत्यक्षात् शब्दत्वादिप्रकारकककारादिप्रत्यक्षे पृथग्घेतुत्वे तु गौरवम्। एवं ककारादौ गुणत्वादेः खभेदादेः प्रत्यक्षेऽपि तथात्वे गौरवं [1]बोध्यम्।

---

गकारादिनित्यत्ववादिनो मीमांसकस्य तत्प्रत्यक्षकार्यकारणभाव - [2]बाहुल्यगौरवम्। तदनित्यत्ववादिनस्तु [3]तन्न इत्याह - अपि चेति। [4]चैत्रादेरिति। यत्र चैत्राद्यनेकपुरुषाणां चैत्रमैत्रादिककारप्रत्यक्षं जायते चैत्र [तत्र] मैत्राद्यनेकपुरुषीयकर्णावच्छिन्नविजातीयविजातीय-वायुसंयोगानां कारणत्वं कल्प्यम्। अन्यथा विजातीयविजातीयवायुसंयोगस्य चैत्रमैत्रादि-ककारव्यञ्जकत्वानुपपत्तेः। तथाचानेकपुरुषीयककारप्रत्यक्ष एव कार्यकारणबाहुल्यम्। एवमनेकपुरुषीयमैत्रादिककारप्रत्यक्षेऽपि तद्बोध्यम्। शब्दादिनित्यत्ववादिनस्तु चैत्रमैत्रादि-ककारादेः चैत्रमैत्रादावेव नियतोत्पत्त्या तत्तदुत्पादकविजातीयविजातीयसंयोगस्यानेककारणभाव-कल्पनेऽपि तदपेक्षया लाघवमेव। चैत्रमैत्रादिनिखिलशब्दप्रत्यक्षे चैत्रमैत्रादिकारणावच्छिन्न-श्रोत्रसमवायस्यैकस्यैव हेतुत्वकल्पनादिति निखिलार्थः। मम तु - वैशेषिकस्य तु। अवच्छेदक-तया - सुखादिनिष्ठावच्छेदकतया। तया - तादृशावच्छेदकतया।

---

1 'बोध्यम्' नास्ति अ. आ. 2 बहुगौरवं क. 3 वा न क.

4 'चैत्रादे ... ... निखिलार्थः' इत्यन्तस्त्रुटितः। तत्स्थाने - चैत्रादेः स्वीयककारादि-प्रत्यक्षे चैत्रादिकर्णावच्छिन्नविजातीयविजातीयवायुसंयोगो हेतुः। एवं चैत्रादेरेव .... .... ककारादिप्रत्यक्षेऽपि तथाविधविजातीयविजातीयवायुसंयोगो हेतुर्वाच्यः। तादृशप्रत्यक्षस्य शरीरनिष्ठावच्छेदकत्वं कार्यतावच्छेदकसंबन्धतादृशवायुसंयोगस्य तु समवायकारणतावच्छेदक-संबन्ध इति' इत्यस्ति क.

न च स्वाश्रयविषयितया कत्वादिकं तथा शब्दोत्पत्तिनाशकल्पनातो लघुत्वात्। शुकादिककारादिकमेव वा विषयितया तथा। कण्ठताल्वाद्यभिघातादयस्तु विजातीयनिमित्तपवनसंयोग एवोपयोगिनः तत्पुरुषीयश्रावणसमवायश्रावणविशेषण तयोस्तदीयगुणत्वादि खकारादिभेदग्रहे हेतुताऽस्त्विति वाच्यम्। [1]श्रावणसमवाये श्रावणत्वस्योपलक्षणत्वेऽतिप्रसङ्गतादवस्थ्यात्। विशेषणत्वे तु प्रथमं केवलशब्दप्रत्यक्षस्वीकारेऽपसिद्धान्तात्। एवं ध्वनेरपि नित्यतापत्तेश्च। न च सर्वत्र शब्दोत्पादविनाशप्रतीतिः ध्वनेरेवेति तदनित्यत्वं वर्णोत्पादकाले सर्वत्र [2]ध्वनेरनुत्पादादिति दिक्।

---

ककारादिनित्यत्वानित्यत्ववादिनो प्रकारान्तरेणापि गौरवलाघवे दर्शयति — किंचेति। व्यञ्जकत्वेऽपि — ककारादिलौकिकप्रत्यक्षजनकत्वेऽपि। तथा — जन्यतावच्छेदकम्। कोलाहलादाविति। गृहीतागृहीतशब्दत्वतदवान्तरजातिमत्ककारादिशब्दसमुदायादावित्यर्थः। आदिना दूरोत्पन्नककारादेः सङ्ग्रहः। तत्रापि कत्वादेरग्रहेऽपि शब्दत्वादिग्रहसत्त्वात्। तथा च ककारादिप्रत्यक्षे लौकिकविषयतया कत्वादिना निमित्तसंयोगादेः जन्यतावच्छेदकं [3]संभवति। [4]शब्दत्वगुणत्वादिप्रकारकतत्प्रत्यक्षे तत्संयोगजन्यतायाः सत्त्वेऽपि लौकिकविषयताकत्वादेरसत्त्वेन न्यूनवृत्तित्वाभावादिति भावः। पृथग्घेतुत्वे — [5]कत्वादिप्रकारकप्रत्यक्षहेतुसंयोगव्यावृत्तवैजात्यशालिनिमित्तपवनसंयोगहेतुत्वे। तथात्वे — शब्दत्वकत्वादिप्रकारक — तत्प्रत्यक्षहेतुसंयोगव्यावृत्तवैजात्यशालिनिमित्तपवनसंयोगहेतुत्वे।

तत्पुरुषीय इति। तत्पुरुषीय श्रवणविषय समवायस्थतत्पुरुषीय — श्रवणविषयविशेषणतायाश्च ककारादौ गुणत्वादि खकारादि — वदग्र [भेदग्रहे] हेतुतेत्यर्थः। अतिप्रसङ्ग इति।

---

1 'श्रावणसमवाये' नास्ति इ.
2 ध्वनेरुत्पादा° अ.
3 'न' इत्यधिकः ग.
4 'शब्दत्व .... .... रसत्त्वेन' इत्यन्तस्त्रुटितः ग.
5 'कत्वादि .... .... सादित्यर्थः [स्यादित्यर्थः]' इत्यन्तस्त्रुटितः ग.

अत्र शब्दजनकशब्दस्य कार्यशब्दः शब्दजन्यशब्दस्य कारणशब्दनाशो नाशक इत्याद्यशब्दस्य कार्यशब्देनैवान्त्यशब्दस्य कारणशब्दनाशेनैव मध्यमानामुभाभ्यामेव [1]नाश इति संप्रदायः ।

कारणनाशादेव सर्वेषां शब्दानां नाशः, अन्त्यशब्दस्य प्रदेशान्तरे स्वोत्तरभाविशब्देन नाशसंभवेऽपि चरमशब्दस्य कारणनाशं विना नाशस्य दुरुपपादत्वात् । [2]इत्थं चाद्यस्य निमित्तपवनसंयोगनाशादेव नाशः । तथा च पवनसंयोगस्य उत्सर्गतः क्षणचतुष्टयस्थायितया शब्दोत्पत्ति - [3]क्षणचतुर्थक्षणे

---

कादाचित्ककककारश्रवणसत्त्वे भवेदेव तत्र गुणत्वादिग्रहः सादिव्यर्थः [स्वादित्यर्थः] । वर्णोत्पादकाल इति । वर्णोच्चारणे स्थानान्तरोत्पन्नप्रयत्नवदात्मसंयोगादूर्ध्वं गच्छता प्राणवायुना कण्ठादिरभिहन्यते । तस्मादभिघातात्मकनिमित्तपवन – [4]संयोगात् शब्दासमवायित्वेन प्रसिद्धे विजातीयकण्ठाद्याकाशसंयोगोत्पत्तिः, तदनन्तरं वर्णोत्पादः तत्काले इत्यर्थः । [5]उपांशुजपाद्यभ्यासवता कण्ठाद्याकाशसंयोगात् वर्णोत्पादकाले ध्वन्युत्पत्ते – [6]रभावादुक्तं सर्वत्र इति ।

शब्दोत्पत्तिं निरूप्य तन्नाशं निरूपयितुमाह – अत्र शब्द इति ।

दीधितिकृन्मतमाह – कारण इति । अत्र कारणपदेन यथासंभवं निमित्तपवनसंयोग – आद्यशब्दादिश्च संगृह्यते । तन्नाशादेव आद्यद्वितीयादिशब्दानां नाशादिति बोध्यम् । कार्यशब्दादेव सर्वशब्दानां नाशोऽस्त्वित्याशङ्कां निराकर्तुमाह – अन्त्यशब्दस्येति । दुरुपपादत्वादिति । तथा च सर्वत्र कारणनाशादेव शब्दनाशः, न तु कार्यशब्दादिति भावः । इत्थं च – सर्वशब्दानां कारणनाशनाश्यत्वे च । तथा च आद्यशब्दस्य निमित्तपवनसंयोगनाशनाश्यत्वे च । सामान्यतः संयोगस्य स्वजनकपूर्वक्रियानाशानन्तरक्षण एव

---

1 'नाश' नास्ति इ.
2 स चाद्यस्य अ.
3 'क्षण' नास्ति अ.
4 संयोगाद्द्वितीयकण्ठाद्याकाशसंयोगाच्चासमवायसमवायिभूतात् वर्णोत्पादः, तत्काले' इत्यस्ति ग.
5 सङ्गीतशास्त्राभ्यासवतां,कण्ठा° ग.
6 संभवा° ग.

निमित्तपवनसंयोगनाशात् पञ्चमक्षणे शब्दनाश इति शब्दस्य क्षणचतुष्टय-स्थायितया कत्वादिलौकिकविशिष्टप्रत्यक्षं सूपपादमिति दीधितिकृतः ॥

अत्र विजातीयपवनसंयोगनाशत्वेन शब्दनाशहेतुतेत्येके ॥

नाशत्वेन [नाशत्वेनैव] हेतुता स्वप्रतियोगिजन्यत्वं कारणस्य प्रतियोगित्वं कार्यस्य संबन्धः। एतेन पूर्वपूर्वनिमित्तपवनसंयोगनाशस्य गगने सर्वदा सत्त्वात् शब्दमात्रं क्षणिकं स्यादित्यपास्तम्। फलतः स्वप्रतियोगिजन्यशब्दनाश एव स्वस्य हेतुतालाभात्। इत्थं च द्वितीयशब्दनाशे आद्यशब्दनाशोऽपिहेतुः। अत एवाद्यशब्दस्य निमित्तपवनसंयोगनाशादेव नाश इति दीधितिकृतावप्ययुक्त [कृतावपि युक्त] मित्यन्ये ॥

---

[1]चोत्पन्नक्रियान्तरजनितविभागेन नाशात् क्षणचतुष्टयावस्थायित्वं यत्संयोगस्य तु स्वजनक-पूर्वक्रियानाशानन्तरक्षण एव न क्रियान्तरोत्पत्तिः तस्य दिनमासवर्षादिस्थायित्वमपि संभवत्यत उक्तं उत्सर्गत इति। सूपपादमिति। संप्रदायमते तु शब्दोत्पत्तिद्वितीयक्षणे कत्वादिनिर्विकल्पकानन्तरं [2]तद्विशिष्टलौकिकप्रत्यक्षं ककारादेः विनश्यदवस्थैवेति न समञ्जसमिति भावः ।

अत्र – दीधितिकृन्मते । [3]निमित्तपवनसंयोगनाशत्वेनैवाद्य – शब्दनाशं प्रति हेतुतेत्येतेषां मतमित्यर्थः ।

[4]अन्येषां मतमाह – नाशत्वेनैवेति । [5]एतेन – नाश्यशब्दनिष्ठतयैव कार्यकारण-भाववर्णनेन। 'एतेने' त्यस्यार्थं विस्पपष्टयति – फलत इति। तात्पर्यत इत्यर्थः। स्वप्रतियोगीति।

---

1 तत्र क्रिया° ग.
2 कत्वादिलौकिक° क.
3 'निमित्त .... .... मतमित्यर्थः इत्यन्तस्त्रुटितः ग.
4 मतान्तरमाह क.
5 'एतेन संयोगनाशशब्दनाशोभयसाधारण-मेतत्, कार्यतावच्छेदकं तु शब्दत्वमेव-सर्वसाधारणमिति भावः। एकेषांमते स्वरसंप्रकाशयति एतेनेति। नाश्य'° इत्यधिकः क.

न च मतद्वयेऽपि निमित्तपवनसंयोगनाशक्षणोत्पन्नस्य शब्दस्य क्षणिकत्वापत्तिः। निमित्तपवनसंयोगस्योत्पत्तिसंबन्धेन कार्यसहभावेन वा शब्दहेतुत्वात्। अवच्छेदकतया शुकीयककारादौ तादृशककाराद्यभावस्य हेतुत्वात् तत एव नैकावच्छेदेन सदृशनानाशब्दोत्पत्तिरपि ।

वस्तुतः प्रतियोगितया नाशं प्रति कालिकावच्छिन्न स्वप्रतियोग्याधारतावत्तादात्म्यसंबन्धेन नाशत्वेन हेतुत्वात् ज्ञानादिवत् शब्दस्य द्विक्षणावस्थायितैव। अत एव न शब्दस्य न वा स्मृत्यादिकालोत्पन्नसंस्कारादेः क्षणिकत्वमिति दिक् ।

---

[1]स्वं शब्दनाशकरणत्वेनाभिमतो नाशः। [2]स चाद्यशब्दनाशस्थले निमित्तपवनसंयोगनाशः; तत्प्रतियोगिजन्यत्वादाद्यशब्दस्य । द्वितीयादिशब्दनाशस्थले चाद्यादिशब्दनाशः तत्प्रतियोगिजन्यत्वद्वितीयादिशब्दस्य। इदं च स्वप्रतियोगिजन्यशब्दनाशत्वं न [3]संयोगादिनाशजन्यतावच्छेदकम्; स्वत्वस्याननुगतत्वात्, गौरवाच्च। [4]लाघवेन संबन्धाननुगमस्यादोषत्वेन च प्रतियोगितया शब्दनाशत्वावच्छिन्नं प्रति स्वप्रतियोगिजन्यत्व संबन्धेन नाशत्वेनैव [5]हेतुत्वस्य प्रागुपदर्शितत्वादत एवोक्तं फलत इति। आद्यशब्द – नाशे [नाशो] पीति। नाश्यत्वेनैव [6]हेतुत्वमित्यर्थः। अत एव – फलतः स्वप्रतियोगिजन्यशब्दनाशे [7]स्वस्य हेतुत्वादेव ॥

न च मतद्वयेऽपीति। निमित्तपवनसंयोगनाशक्षणे विनश्यदवस्थतत्संयोगादेवोत्पन्नशब्दस्य क्षणिकत्वापत्तिः तन्नाशस्य स्वप्रतियोगिजन्यत्वसंबन्धेन [8]तत्र शब्दे सत्त्वादित्यर्थः। निमित्तपवन इति। तथाचोत्पत्तिसंबन्धेन निमित्तपवनसंयोगस्य प्रथमक्षणे सत्त्वात् द्वितीयक्षण एव ततः शब्दोत्पत्तिः; न तु तादृशसंयोगनाशक्षणे। तत्पूर्वक्षणे तस्योत्पत्तिसंबन्धेनासत्त्वादिति भावः।

---

1 'स्वं' नास्ति ग.
2 'स च' नास्ति ग.
3 'संयोगादि' नास्ति ग.
4 किन्तु संबन्धाननुगमस्यादोषतया-लाघवात् प्रतियोगितया' इत्यस्ति क.
5 हेतुत्वमित्युक्तं प्रागत क.
6 हेतुरित्यर्थः ग.
7 °स्वस्वहेतु ग.
8 'तत्र .... .. चोत्पत्तिसंबन्धेन' इत्यन्तस्त्रुटितः क.

## अव्याप्यवृत्तितानिरूपणम्

एकदेशवृत्तित्वमव्याप्यवृत्तित्वम् । वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्न-स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वम् । नातः शब्दरूपोभयत्वादिना । रूपादेरभावस्य रूपाधिकरणघटादौ सत्त्वेऽपि [1]न रूपादेरव्याप्य-[2]वृत्तित्वम् ।

---

ननु तादृशसंयोगस्योत्पत्तिसंबन्धेन शब्दहेतुत्वे तृतीयक्षणे ततः शब्दोत्पत्तिर्न स्यात्, द्वितीयक्षणे तस्य तत्संबन्धेनासत्त्वादित्यरुचेराह — कार्यसहभावेनेति । कार्यकालवृत्तित्वेनेत्यर्थः । तथा च तादृशसंयोगनाशक्षणे न ततः शब्दोत्पत्तिरिति भावः । ननु तादृशसंयोगस्य कार्यसहभावेन शब्दहेतुत्वे तस्य चतुर्थक्षण एव नाशोत्पत्त्या द्वितीयतृतीयक्षणयोरपि कार्यसहभावः संभवतीति । तस्मादेकावच्छेदेन सदृशनानाककाराद्युत्पत्तिदुर्वारेत्यरुचेराह — अवच्छेदकतयेति । तथा च निमित्तपवनसंयोगनाशक्षणे न शब्दोत्पत्तिः, तत्पूर्वक्षणोत्पन्नशब्दस्य प्रतिबन्धकस्य सत्त्वादिति भावः ।

नन्वेकावच्छेदेन सदृशनानाककाराद्युत्पत्तिः क्वचिदिष्टैव । न च सर्वत्र तदुत्पत्त्यापत्तिः; तद्धेतोरिच्छाविशेषस्याभावात् । तथा चावच्छेदकतया शुकीयककारादौ तादृशककाराद्यभावहेतुत्वकल्पने गौरवम्; अतोलाघवं स्वसिद्धान्तं चानुसृत्याह — वस्तुत इति । [3]नाशं — शब्दज्ञानादिनाशम् । एतद्व्याख्यातमधस्तात् । अत एव वस्तुत इत्यादिनोक्तकार्यकारणभावाभ्युपगमादेव । न शब्दस्येति । निमित्तपवनसंयोगनाशक्षणोत्पन्नशब्दस्य स्वीकारेऽपि न तस्य क्षणिकत्वम्; तन्नाशस्य कालिकावच्छिन्नस्वप्रतियोग्याधारतावत्तादात्म्येन तत्र शब्देऽसत्त्वात् । [4]तथा च तद्द्वितीयक्षणोत्पन्ननाशेनैव तन्नाश इति भावः । न वा स्मृत्यादीति ।

---

1 'न' नास्ति — अ.
2 °वृत्तिकत्वम् — अ.
3 'नाशं - शब्दज्ञानादिनाशं' नास्ति — ग.
4 'तथाच .... .... तन्नाश' इत्यन्तस्त्रुटितः — ग.

अवच्छिन्नवृत्तिकत्व – [1]मव्याप्यवृत्तित्व – मि[2]त्यपि कश्चित् ।

अथ ज्ञानेच्छयोरव्याप्यवृत्तित्वे किं मानम् ? न हि 'वने सिंहनादः' 'शिरसि वेदना' इत्यादिवत् शरीरे ज्ञानमित्यादि धीरस्ति । न च चेष्टानुरोधात् प्रवृत्तेः, प्रवृत्त्यनुरोधादिच्छादेस्तत्त्वम् । समूहालंबनज्ञानेच्छयोः विंशत्यङ्गुल्यवच्छेदेन विंशतिप्रयत्नजनकत्वेन तदुपपत्तेरिति चेत् – न । कायव्यूहस्थले

---

[3]विनश्यदवस्थस्मृत्यादीत्यर्थः । आदिनाऽनुभवपरिग्रहः । तथा च विनश्यदवस्थस्मृत्यादिक्षणोत्पन्नसंस्कारस्वीकारेऽपि न तस्य क्षणिकत्वम् । तत्स्मृत्यादिज्ञानस्य कालिकावच्छिन्नस्वप्रतियोगीत्यादिनिरुक्तसंबन्धेन तत्र संस्कारे सत्त्वात् । तथा च कालान्तरे तदुत्पन्नस्मृत्यादिनैव तस्य नाश इति भावः ।

अव्याप्यवृत्तित्वं निर्वक्ति – वैशिष्ट्य इत्यादि ।

मतान्तरमाह – अवच्छिन्नवृत्ति [क]त्वमिति । देशावच्छिन्नवृत्तिकत्वमित्यर्थः । तेन कालिकावच्छिन्नवृत्तिकत्वस्य पृथिवीपरमाणुरूपादौ सत्त्वेऽपि नातिव्याप्तिः । केचित् [कश्चित्] इत्यस्वरसोद्भावनम् । तद्बीजं तु शब्दज्ञानाद्यवच्छेदके मृदङ्गशरीरादावनवच्छेदकत्वं न स्वरूपसंबन्धविशेषरूपम् । तस्य लघुधर्म एव स्वीकारात् । किन्त्ववच्छेद्यान्यूनानतिरिक्तवृत्तित्वं तत्र स्वरूपविवेके चातिगौरवमिति ।

वने – वनावच्छिन्ने नभसि । शिरसि – शिरोवच्छिन्ने आत्मनि । शरीरे – शरीरावच्छिन्ने आत्मनि । न च चेष्टेति । चेष्टाऽत्र शरीरे क्रिया । तदनुरोधात् तज्जनकप्रयत्नस्य

---

1 'अव्याप्यवृत्तित्वं' नास्ति आ. इ. 2 'अपि' नास्ति अ.

3 'विनश्य .... .... तस्य नाश' इत्यन्तःत्रुटितः । तत्स्थाने – 'समानाकारस्मृतेः संस्कारनाशकत्वोपगमे स्मृत्यादिकाले कारणबलादुत्पन्नसंस्कारस्य तयैव स्मृत्या नाशसंभवात् अतीतमपि क्षणिकत्वं न स्मृत्यादिकालोत्पन्नपूर्वसंस्कारनाशादेः निरुक्तसंबन्धेन तत्संस्कारेऽसत्त्वादिति भावः' इत्यस्ति ग.

 

एकशरीरावच्छेदेन बाधबुद्धौ शरीरान्तरावच्छेदेन विशिष्टबुद्ध्युत्पादस्य तत्र बाधबुद्ध्यभावं विना संभवात् तत्सिद्धेः। न च कायव्यूहवतः सार्वज्ञ्यात् नैवम्; असर्वज्ञस्यापि कायव्यूहात् सर्वज्ञस्यापि प्रणिधानं विना भ्रमसंभवात्। अन्यथा स्वाप्नभ्रमादिनिमित्तभोगानुपपत्तेः। एवं 'कामिनीजिज्ञासादेः' विरोधित्वादिच्छादेश्चापि तत्सिद्धिरिति दिक्।

नन्वेवमपि रूपादेरव्याप्यवृत्तित्वं दुर्वारम्। प्रलयेऽपि पार्थिवपरमाणावुत्पत्तिकालेऽवयविनि रूपसामान्याभावसत्त्वादिति चेत् – न; मानाभावात्। न ह्यत्र प्रत्यक्षं, सन्निकर्षाभावात्। न च चक्षुस्संयुक्तमहद्विशेषणताया अभावेऽपि तादृशमहत्ववत्कपालसमवेतविशेषणताऽस्त्येवेति वाच्यम्। द्रव्यवृत्यभावचाक्षुषे आद्याया एव हेतुत्वात्। घटादावुत्पत्तिकाले निरुक्तसंनिकर्षेऽपि द्वितीयक्षणे विषयाभावात् संनिकर्षाभावाद्वा। नाप्यनुमानप्रयोजकम्। न च रूपधारावारणाय रूपं प्रति रूपसामान्याभावस्य हेतुत्वात् [1]रूपोत्पत्तेः प्राक्तत्सिद्धिः। तत्तत्प्रागभावस्य तत्तत्समवायिनो वाऽवयवि – [2]गते तत्तद्रूपादौ परमाणुवृत्तिरूपेच

---

शरीरावच्छिन्नवृत्तिकत्वम्; तदनुरोधाच्च तज्जनकज्ञानेच्छयोः तदवच्छिन्नवृत्तिकत्वमिति तयोरव्याप्यवृत्तित्वं न चेत्यर्थः। समूहालंबन इति। विंशत्यङ्गुलयः ततः चेष्टोपादानमित्याकारज्ञानस्य विंशत्यङ्गुलिषु तत्तच्चेष्टा भवत्वित्याकारेच्छायाश्च विंशति चेष्टाजनकविंशत्यङ्गुल्यवच्छेदेन विंशतिप्रयत्नजनकत्वमस्तीति ज्ञानेच्छयोः चेष्टाजनकप्रयत्नसमानदेशत्वानुपपत्तेरित्यर्थः।

[3]द्रव्यवृत्यभावप्रत्यक्षे आद्याया एव हेतुत्वे विनिगमकाभावादाह – घटादाविति। निरुक्त इति। चक्षुस्संयुक्तमहत्वकपालसमवेतविशेषणतारूपसन्निकर्षेऽपीत्यर्थः। प्रलयकालीन-

---

1 'संनिकर्ष' इत्यधिकः अ.

2 °गततद्रूपे परमाणु° इ.

3 'द्रव्य .... .... सन्निकर्षेऽपीत्यर्थः, इत्यन्तस्त्रुटितः ग.

तत्तत्तेजस्संयोगस्य हेतुत्वेन[1]रूप – धारायाऽसंभवात् प्रलये पार्थिवपरमाणावुत्पत्ति-काले 'घटादौ रूपं नास्ती'ति व्यवहारस्तु यावद्रूपप्रतियोगिकसंसर्गाभावनिबन्धन इति प्राञ्चः।

नव्यास्तु – अन्वयितावच्छेदकावच्छिन्नप्रतियोगिता[2]कत्वस्य व्युत्पत्ति-सिद्धत्वात्, रूपत्वावच्छिन्न प्रतियोगिताकाभाव एव निरुक्त [3]व्यवहारविषयः। न च ध्वंसप्रागभावौ तथा। संभवतो वा तत्र बहूनां रूपाणामुत्पत्स्यमानत्वात् नष्टत्वाच्च।

---

पार्थिवपरमाणुरुत्पत्तिकालीन – [4]घटश्च तदा रूपादिसामान्या – [5]भाववान् तदा रूपादि-मत्ताया ऽनुपलभ्यमानत्वादित्याकारमनुमानमाशंक्य निषेधति – नाप्यनुमानमिति।

प्राचां मतं दूषयितुं नव्यमतमुपन्यस्यति–नव्यास्त्विति। अन्वयितेति। नञादिपदोपस्थाप्ये प्रतियोगिनोऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंसर्गेणैवान्वयस्य व्युत्पत्तिसिद्धत्वात्। अन्यथा रूपवत्यपि यत्किंचिद्रूपाभावसत्त्वेन 'रूपं नास्ती'ति व्यवहारस्य दुर्वारत्वादिति भावः। तथा – रूपत्वावच्छिन्नप्रतियोगिताकौ। तयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानङ्गी-कारादिति भावः। [6]नन्वनङ्गीकारो निर्युक्तिक इत्यत आह – संभवतो वेति।

ननु यावद्रूपप्रतियोगिताकसंसर्गाभावत्वेन प्रागभावादिरेव निरुक्तव्यवहारविषयः, न तु रूपसामान्याभाव इत्यरुचेराह – किंचेति। ननु नीलपीताद्यारब्धेऽवयविन्यव्याप्य – [7]वर्तिनीलपीतादिसत्त्वात् स्वकालावच्छेदेन स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वरूपैकदेश-वृत्तित्वस्य तादृशनीलादावतिव्याप्तितादवस्थ्यमत आह – चित्र इति।

---

1 रूपाधाराऽसत्त्वात् मानसे पार्थिव° अ.
2 °कत्वव्युत्पत्ति° इ.
3 'व्यवहार' नास्ति इ.
4 पटश्च ग.
5 °भाववत् ग.
6 नन्वङ्गीकारो क.
7 °वृत्ति° क.

किं च विजातीयतेजस्संयोगस्य विजातीयरूपहेतुतया तत्तद्रूपं प्रति [1]तत्त्वतत्त्वेन हेतुत्वात् । वैशेषिकनये परमाणौ, न्यायनये चावयविन्यपि रूपधारावारणाय प्रागभावासत्त्वे उत्पन्नपुनरुत्पादवारणाय च रूपत्वावच्छिन्नात्यन्ताभाव एव जन्यरूपे हेतुरिति रूपादेरव्याप्य[2]वृत्तित्वं दुर्वारम् । एवमेकत्वादावेकत्वसामान्याभावस्य हेतुत्वात् घटादावुत्पत्तिकाले एकत्वादिसामान्याभावः सिद्धः । स एव च गुणसामान्याभाव इति सोऽपि सिद्धः । इत्थं च प्रकृतलक्षणे एकदेशवृत्तित्वं स्वकालावच्छेदेन स्वाधिकरणवृत्यत्यन्ताभावप्रतियोगित्वम् । न चैतत् रूपादौ, चित्ररूपस्वीकारात् इत्याहुः ।

## दिक्कालयोः साधर्म्यम्

"दिक्कालयोः पञ्चगुणवत्वं सर्वोत्पत्तिमन्निमित्तकारणत्वं (परत्वानुमेयत्वं) च" इति भाष्यम् (प्र. भा. ६५) । पञ्चगुणाः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः, सर्वेषामुत्पत्तिमतां तत्तत्समवेतद्वित्वपृथक्त्वादिसंयोगविभागभिन्नानां निमित्तकारणत्वमित्यर्थ (किर. ३८) इत्याचार्याः ।

---

नन्वेकदेशवृत्तिविशेषगुणवत्त्वमीश्वरेऽव्याप्तम्; तद्भिन्नादेः व्याप्यवृत्तित्वादत आह – ईश्वर इति ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूतश्रीमद्दुर्गकवीन्द्रतनूजमुद्गलविदुषसूनुना भास्करेण कृतपदार्थमालाप्रकाशे साधर्म्यवैधर्म्यनिरूपणे द्रव्यसाधर्म्यनिरूपणं समाप्तम् ॥

---

1 तत्तत्त्वेन इ.

2 'प्रागभावासत्त्वे उत्पन्न पुनरुत्पादवारणाय रूपत्वावच्छिन्नात्यन्ताभाव एव जन्यरूपहेतुरिति रूपादेरव्याप्य' इत्यधिकः आ.

वस्तुतस्तु निमित्तकारणत्वं न समवाय्यसमवायिकारणान्यकारणत्वम्[1]। किन्तु समवाय्यसमवायिकारणतान्यकारणतावत्त्वम्। समवायिकारणत्वं च समवायसंबन्धावच्छिन्न - [2]कार्यता - [3]निरूपित - तादात्म्यसंबन्धावच्छिन्नकारणत्वम्। तथा च दिक्कालयोः समवायेन स्वसमवेतद्वित्वादिकं प्रति समवायिकारणत्वेऽपि दैशिककालिकविशेषणताभ्यां जन्यमात्रं प्रति निमित्तकारणत्वमव्याहतमेवेति बोध्यम्। यद्यपि सर्वोत्पत्तिमन्निमित्तत्वं अदृष्टेश्वरादावतिव्याप्तम् तथाप्यधिकरणतया निमित्तत्वं [4]इह विवक्षितम् न तददृष्टादाविति भावः।

## क्षितितेजसोः साधर्म्यम्

क्षितितेजसोः नैमित्तिकद्रवत्ववत्वं क्षितौ घृतादौ सुवर्णादौ तेजसि द्रवत्वमस्तीति नैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तयोः लक्षणमिति न घटादावव्याप्तिरिति बोध्यम्।

## अष्टानां द्रव्याणां साधर्म्यम्

क्षितिभिन्नद्रव्यत्वमष्टानाम्। एवं जलादिभिन्नद्रव्य[त्व]मपि। क्षितिभिन्नानां निर्गन्धत्वं, अम्भो विहाय निःस्नेहत्वं, तेजो विहायानुष्णत्वमदाहकत्वं च [5]एवमात्मानं विहाय परार्थत्वमचेतनत्वं, चेत्यादि।

जलज्योतिरनिलानामपाकजस्पर्शवत्वं, जलज्योतिषोरपाकजरूपवत्वं दिक्कालमनसां विशेषगुणशून्यत्वं, वाय्वादीनां बाह्येन्द्रियाप्रत्यक्षत्वं, नीरूपत्वमात्मभिन्नानाम्। एषामतीन्द्रियत्वमाकाशादीनां निस्पर्शत्वं, कालादीनामभूतत्वमित्यादि।

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां पदार्थमालायां साधर्म्यवैधर्म्यनिरूपणे द्रव्यसाधर्म्यनिरूपणं समाप्तम्॥

---

1 'इत्यर्थः' इत्यधिकः अ.

2 'करणत्वं' इत्यधिकः आ.

3 प्रतियोगिक तादात्म्य आ.

4 अत्र अ.

5 'एव .... चेत्यादि' इत्यन्तस्त्रुटितः इ.

## अथ गुणसाधर्म्यनिरूपणम्

अथ गुणानां साधर्म्यम । तत्र सर्वेषां गुणत्वम् ।

### मूर्तगुणनिरूपणम्

रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहभावनान्यसंस्काराणां मूर्तगुणत्वम् । तच्चामूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वम् । शून्यान्तेन संख्यादिबुद्ध्यादिव्युदासः । वेगस्थितिस्थापकोभयसंग्रहाय संस्कारत्वान्येति । वेगस्थितिस्थापकभावनासाधारणसंस्कारत्व – [1]जात्यभावे तु नोपादेयमिदम् ॥

---

द्रव्यसाधर्म्यं निरूप्य शिष्यावधानाय गुणसाधर्म्यनिरूपणं प्रतिजानीते – अथ गुणानामिति ।

मूर्तगुणत्वस्य संख्यादावपि सत्त्वादतिव्याप्तिरत आह – तच्चामूर्त इति । ननु भावनास्थितिस्थापकजातीयस्य कस्याप्य – [2]प्रत्यक्षत्वात् तत्र संस्कारत्वजातिसद्भावे मानाभावः । न च वेगादित्रयेपि कार्यकारणतावच्छेदकतया जातिसिद्धिरिति वाच्यम् । त्रितय साधारण – [3]संस्कारत्वेन कस्याप्यकार्यत्वादकारणत्वाच्च । एवं च प्रत्यक्षसिद्धं वेगत्वमेव संस्कारत्वम् । न चैवं गुणविभागः षड्विंशतिधा स्यादिति वाच्यम् । स्वकारणसजातीय – [4]स्वविजातीयकार्यजनकत्वस्य वेगाद्यन्यतमत्वस्य वा संस्कारत्वस्य वेगादिनिष्ठगुणविभाजकोपाधित्वाङ्गीकारात् । इत्थं च मूर्तगुणवृत्तिगुणत्वव्याप्यजातिः [5]सङ्ख्यादिवत् भावनात्वमेव

---

1 'व्याप्य' इत्यधिकः अ.

2 °प्रत्यक्षात् ग.

3 संस्कारगोत्वत्वेण क.

4 स्वजीवस्य विजा° क.

5 शब्दत्वादिकैव तच्छून्य ग.

## अमूर्तगुणनिरूपणम्

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दानां दशानाममूर्तगुणत्वम्। तच्चमूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वम्। शून्यान्तेन संख्यादि-रूपादिव्युदासः ॥

## उभयगुणनिरूपणम्

[1]सङ्ख्यापरिमाणसंयोगविभागपृथक्त्वानामुभयगुणत्वम् । तच्च काल-वृत्तिवृत्तिगुणत्वव्याप्यजातिमत्वम् । एवं दिग्वृत्तिवृत्तीत्यादिकमपि बोध्यम् । वृत्यन्तेन रूपत्वादिबुद्धित्वादिव्युदासः ॥

## अनेकाश्रितगुणनिरूपणम्

संयोगविभागद्वित्व — [2]द्विपृथक्त्वादीनामनेकाश्रितत्वम्। तच्च स्वाश्रय-प्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वं नानैकत्वसमानाधिकरणगुणत्वं वा ॥

---

तच्छून्यगुणत्वस्य वेगस्थितिस्थापकयोः सत्त्वेन सङ्ग्रहसंभवात् संस्कारत्वान्येति जाति-विशेषणं व्यर्थमत आह — [3]वेगस्थितिस्थापक इति ।

अमूर्तगुणत्वं सङ्ख्यादावप्यस्तीत्यतिव्याप्तिरत आह — तच्च मूर्त इति। अत्रापि संस्कारत्वान्येति जातिविशेषणं भावनासङ्ग्रहाय ।

---

1 'संख्यादि .... .... व्युदासः' इत्यन्तस्त्रुटितः  अ.

2 'द्वि' नास्ति  अ.

3 'वेग .... .... तिव्याप्तिरत आह' इत्यन्तस्त्रुटितः  क.

## एकैकाश्रितगुणनिरूपणम्



रूपरसगन्धस्पर्शैकत्वैकपृथक्त्वपरिमाणपरत्वापरत्वद्रवत्वगुरुत्वस्नेहसंस्कार-बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मशब्दानामेकैकाश्रितत्वम् । तच्च [1]स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिगुणत्वं [2]स्वाश्रयान्योन्याभावासमानाधिकरणत्वं वा ॥

## विशेषगुणनिरूपणम्



रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्म-भावनाशब्दानां षोडशानां विशेषगुणत्वम् । [3]तच्च भावनाभिन्नवायुवृत्ति[4]वृत्ति-स्पर्शावृत्तिधर्मसमवाय्यन्यत्वे सति [5]गुरुत्वान्याजलद्रवत्वान्यगुणत्वं वायुवृत्ति –

---

उभयगुणत्वस्यैकत्वपरिमाणादावव्याप्तेराह तच्च काल इति । एवं दिगिति । दिग्वृत्ति-[6]वृत्तिगुणत्वव्याप्यजातिमत्त्वमपि लक्षणार्थो विनिगमनाविरहात् बोध्य इत्यर्थः ।

अनेकाश्रितत्वं घटादावतिव्याप्तमत आह – तच्च स्वाश्रय इति । [7]स्व नक्षत्वेना [स्वं लक्ष्यत्वेना] भिमतः संयोगादि, तदाश्रयं प्रत्येकव्यक्तिमादाय लक्षणसमन्वय इति बोध्यम् । गुणत्वनिवेशात् न घटादावतिव्याप्तिः ; लाघवादाह – नानैकत्व इति ।

---

1 स्वीयान्योन्या° इ.
2 'स्वाश्रया .... वा' इत्यन्तस्त्रुटितः इ.
3 'तच्च .... .... वायुवृत्तिवृत्ति' इत्यन्तस्त्रुटितः अ.
4 'वृत्ति' नास्ति आ.
5 गुरुत्मजन° आ.
6 'वृत्ति' नास्ति क.
7 'स्व .... .... वतिव्याप्तिः' इत्यन्तस्त्रुटितः ग.

[1]वृत्ति[2]स्पर्शावृत्तिसङ्ख्यात्वादिसमवायि सङ्ख्यादिनवकवारणाय सत्यन्तम् । तत्रासम्भववारणाय [3]स्पर्शसङ्ग्रहाय [4]च स्पर्शवृत्ति इति । भावनासंग्रहाय भिन्नान्तं समवायिविशेषणम् । गुरुत्वनैमित्तिकद्रवत्वयोर्वारणायान्यान्तम ।

---

एकैकाश्रितत्वं [5]सामान्यावतिव्याप्तम् ; एकत्रापि घटत्वप्रतीतेरत आह – तच्च स्वाश्रय इति । [6]गुणत्वनिवेशात् न [7]विशेषेऽतिव्याप्तिः । विशेषगुणत्वं यदि सङ्ख्यादिसामान्यभिन्नगुणत्वं तदाऽन्योन्याश्रयः । विशेषगुणभिन्नगुणत्वस्यैवाग्रे वक्ष्यमाणत्वादित्यत आह – तच्च भावनेति । भावनाभिन्नं यत् वायुवृत्ति – [8]वृत्तिस्पर्शावृत्तिधर्मसमवायि, तदन्यत्वे सति [9]गुरुत्वनैमित्तिकद्रवत्वान्यगुणत्वमित्यर्थः । वायुवृत्तिवृत्तिः स्पर्शावृत्ति[10]धर्मः संख्यात्वादि[11]रेव । नित्यानेकसमवेतत्वरूपजातित्वप्रवेशे गौरवात् प्रयोजनाभावाच्च, धर्मत्वेनैव तदुपादानम् । अजल – द्रव्यत्व [द्रवत्व इति] । नैमित्तिक – द्रवत्वान्य इति कृते नैमित्तिकत्वप्रवेशात् गौरवं स्यादिति न तथा कृतमितिभावः । सङ्ख्यादिनवकवारणाय – सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगस्थितिस्थापकवारणाय । तत्र – सत्यन्ते । असम्भववारणाय – वायुवृत्तिवृत्तिसत्तागुणत्वमादाय [12]तादृशधर्मसमवायित्वस्यैव रूपादौ सत्त्वेन तदन्यत्वादसम्भववारणाय । ननु सत्तागुणत्वभिन्नेत्येव धर्मविशेषणं वाच्यम् ;

---

1 वृत्तिकं अ.

2 'स्पर्शा .... .... नवक' इत्यन्तस्त्रुटितः अ.

3 स्पर्शसङ्ग्रहवत्वस्पर्शावृत्तित्व इति अ. स्पर्शरूपादिसंग्र° आ.

4 'वायुवृत्तिवृत्तीतिसंग्रहाय' इत्यधिकः इ.

5 द्वित्वादावपि व्याप्तमनेकाश्रितत्वादत आह क.

6 'तद्रूपरसाद्याश्रयतत्तद्व्यक्त्यन्योन्याभावव्यापकात्यन्ताभावप्रतियोगित्वस्य तद्रूपरसादौ सत्त्वाल्लक्षणसङ्गतिः । न चेदं द्वित्वादाविति नातिव्याप्तिः' इत्यधिकः क.

7 विशेषादावति° क.

8 'वृत्ति' नास्ति ग.

9 'गुणत्वात्' इत्यधिकः क.

10 'च' इत्यधिकः ग.

11 'एव ... ... कृतमिति भावः' इत्यन्तस्त्रुटितः ग.

12 तादृश .... .... तदन्यत्वाभावात्' इत्यन्तस्त्रुटितः ग.

## सामान्यगुणनिरूपणम्

[1]सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्व - भावनान्यसंस्कारणां सामान्यगुणत्वम् । [2]भावनान्यसंस्कारोवेगः स्थितिस्थापकश्च । [3]तच्च निरुक्तविशेषगुणान्य[4]गुणत्वम् ।

---

तावताप्यसंभव[5]वारणं भवति । किं स्पर्शावृत्तित्व [6]इति विशेषणेनेत्यत आह – स्पर्शसंग्रहाय चेति । वायुवृत्तिवृत्तिस्पर्शत्वमादाय [7]तादृशमर्थ [तादृशधर्म] समवायित्वस्यैव [8]स्पर्शे सत्त्वेनान्यत्वाभावादव्याप्तिवारणाय [9]इत्यर्थः । इत्थं च स्पर्शावृत्तीत्यनेनैवा-संभवस्यापि *(वारणात्यन्तागुणत्वभिन्नेति ?) न कृतमित्यर्थः । भावनासंग्रहायेति । वायुवृत्ति-वृत्तिस्पर्शावृत्तिधर्मसंस्कारत्वमादाय [10]तादृशधर्मसमवायित्वस्यैव भावनायां [11]सत्त्वेन तदन्यत्वाभावादव्याप्तिवारणाय भिन्नान्तमित्यर्थः । इत्थं च भावनाभिन्नं यत् वायुवृत्ति-वृत्तिस्पर्शावृत्तिधर्मसमवायि, सङ्ख्यादि – [12]नवकमेव तदन्यत्वस्य भावनायामपि सत्त्वात् नाव्याप्तिरिति भावः ।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | संख्यादिपरि° | आ. | 7 | 'तादृशमर्थसमवायित्वस्यैव' नास्ति | ग. |
| 2 | भावनाख्यसं° | आ. | 8 | °स्पर्शाव्याप्ति° | ग. |
| 3 | तन्निरुक्त° | आ. | 9 | 'च' इत्यधिकः | ग. |
| 4 | °'गुण' नास्ति | इ. | 10 | 'तादृशधर्मसमवायित्वस्यैव' नास्ति | ग. |
| 5 | वारणासंभवात् । किं | क. | 11 | सत्त्वेन तदन्यत्वाभावात्' नास्ति | ग. |
| 6 | 'इति' नास्ति | ग. | 12 | 'प्रागुक्त' इत्यधिकः | क |

---

* वाक्यमिदमनन्विततया दृश्यते । अतः सप्रश्नचिह्नं कुण्डलितः

## बाह्यैकैकेन्द्रियगुणनिरूपणम्

शब्दस्पर्शरूपरसगन्धानां बाह्यैकैकेन्द्रियग्राह्यत्वम् । तच्च बहिरिन्द्रियद्वयावेद्यबहिरिन्द्रियवेद्य – [1]गुणत्वसाक्षाद्व्याप्यजातिमत्वम् । चक्षुरादिमात्रग्राह्यवैजात्यशालिद्वित्वपरिमाणादिसत्त्वे तद्वारणाय साक्षादिति ।

## द्वीन्द्रियग्राह्यगुणनिरूपणम्

सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रवत्ववेगानां दशानां द्वीन्द्रियग्राह्यत्वम् । तच्च चाक्षुषस्पार्शन – [2]निर्विकल्पकविषयगुणत्वव्याप्यजातिमत्वम् ।

---

[3]बाह्यैकैकेन्द्रियग्राह्यत्व परमाणुगन्धादावव्याप्तमत आह – तच्च बहिरिन्द्रिय इति । [4]अन्तरिन्द्रियवेद्यगुणत्वसाक्षाद्व्याप्यज्ञानत्वादिजातिमति ज्ञानादावतिव्याप्तिवारणाय बहिरिति । बहिरिन्द्रियवेद्यसंयोगत्वादितादृशजातिमति संयोगादावतिव्याप्तिवारणाय बहिरिन्द्रियद्वयावेद्येति जातिविशेषणम् । संयोगत्वादेस्तु बहिरिन्द्रियद्वयवेद्यत्वात्तन्निरासः । शब्दस्पर्शत्वादेस्तु बहिरिन्द्रियश्रोत्रत्वगादिमात्रवेद्यगुणत्वसाक्षाद्व्याप्यजातिमत्वात् तदादाय शब्दस्पर्शादिपञ्चकलक्षणसङ्गतिः । चक्षुरादिमात्रेति । मिलितोत्पन्नद्व्यणुकादिवृत्तिद्वित्वादिगतवैजात्यस्य चक्षुरादिमात्रग्राह्यत्वात् तद्वद्वित्वादावतिव्याप्तिवारणाय साक्षात्पदोऽ[5]पादानमित्यर्थः । [6]तथा च तादृशवैजात्यस्यगुणत्वव्याप्यत्वेऽपि तत्साक्षाद्व्याप्यत्वाभावात् न तत्रातिव्याप्तिरिति भावः ॥

---

1 'गुणवत्व॰' आ.
2 'निर्विकल्पक' नास्ति आ.
3 'बाह्य' नास्ति ग.
4 'अन्त .... ... संगतिः' इत्यन्तस्त्रुटितः ग.
5 ॰पादान॰ ग.
6 'तथा .... .... भावः' इत्यन्तस्त्रुटितः ग.

## अन्तःकरणग्राह्यगुणनिरूपणम्

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां [1]षण्णामन्तःकरणग्राह्यत्वम् । तच्च प्रत्यक्षात्मविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्वम् ।

## अतीन्द्रियगुणनिरूपणम्

गुरुत्वधर्माधर्मवेगान्यसंस्काराणामतीन्द्रियत्वम् । तच्च लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाद्व्याप्यजातिमत्वं, [2]शब्दज्ञानरूपादिजनकतावच्छेदकनिमित्तपवनाकाशसंयोगात्ममनोयोग[3]तेजः परमाणुसंयोगादिगतवैजात्यवारणाय साक्षाद्व्याप्य – [4]जातिमत्वम् । तत्त्वं च [5]संस्कारत्वान्यगुणत्वव्याप्यजात्यव्याप्यत्वे

---

द्वीन्द्रियग्राह्यत्वं परमाणुसङ्ख्यादावव्याप्तमत आह – तच्च चाक्षुष इति । [6]इन्द्रियसन्निकर्षे सति प्रायः प्रथमतो निर्विकल्पकमेव जायते । अतः निर्विकल्पकमेवात्र निर्वसितमिति बोध्यम् । सङ्ख्यात्वादेस्तु चाक्षुषस्पार्शननिर्विकल्पकविषयत्वात् । गुणत्वव्याप्यजातित्वाच्च । तदादाय सङ्ख्यादौ लक्षणसङ्गतिः ।

अन्तःकरणग्राह्यत्वं निर्विकल्पकजीवनयोः नियतयोरव्याप्तम्; आत्मादौ चातिव्याप्तमत आह – तच्च प्रत्यक्षात्म इति ।

अतीन्द्रियत्वं निर्विकल्पकादावतिव्याप्तमत आह – तच्च लौकिकप्रत्यक्ष इति । गुणत्वसाक्षाद्व्याप्यत्वं गुणत्वव्याप्याव्याप्यत्वे सति गुणत्वव्याप्यत्वम् । तथा च

---

1 'षण्णां' नास्ति इ.
2 विशेषज्ञान° आ.
3 तेषु पर° आ.
4 इति तत्त्वम् आ.
5 साक्षात्कारत्वान्य° अ.
6 'इन्द्रिय .... .... तच्च लौकिकप्रत्यक्ष इति' इत्यन्तस्त्रुटितः ग.

सति गुणवृत्तित्वं, भावनात्वस्थितिस्थापकत्वोपग्रहाय संस्कारत्वान्येति । मिथ्याज्ञानवासनाजन्याद्यवच्छेदकादृष्टत्वमादायैव धर्माधर्मयोर्लक्षणसङ्गतिः ।

## कारणगुणपूर्वकगुणनिरूपणम्

अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वपृथक्त्वगुरुत्वद्रवत्वस्नेहभावनान्यसंस्काराणां कारणगुणपूर्वकत्वम् । अपाकजं पाकं विना जातं; पाकानधीनजन्मवदिति यावत् । तेन नित्यवर्गस्यापि व्युदासः । वेगोऽत्र कर्मजन्यो

---

भावनास्थितिस्थापकयोरव्याप्तिः । [1]तद्गते गुणत्वसाक्षाद्व्याप्यसंस्कारत्वे वेगमादाय लौकिकप्रत्यक्षविषयत्वसत्त्वादतः प्रकृतोपयोगि [2]लघुतन्निर्वचनमाह – तत्त्वं चेति । संस्कारत्व इति । संस्कारत्वान्यगुणत्वव्याप्यजातिः [3]रूपरसत्वादिः, तद्व्याप्यत्वे सति गुणवृत्तित्वं प्रकृते गुणत्वसाक्षाद्व्याप्यत्वं धर्मत्वाधर्मत्वेष्टभावनात्वस्थितिस्थापकयोरप्यस्तीति न भावनास्थितिस्थापकत्वयोरव्याप्तिरिति भावः । मिथ्याज्ञानवासनाशून्ये शुभाशुभकर्मणादृष्टापत्तेरभावात् । अदृष्टोत्पत्तिं प्रति मिथ्याज्ञानवासनात्वेन हेतुमावश्यकमिति, तज्जन्यतावच्छेदकतया दृष्टजातिसिद्धिरित्याशयेनाह – मिथ्याज्ञान इति । आत्मनि शरीराद्यभेदबुद्धिमिथ्याज्ञानतज्जनितदृढसंस्कारो वासनेत्यर्थः । वस्तुतस्तु [4]चतुर्विंशतिधा गुणविभागव्याख्यानात् नादृष्टत्वं जातिरिति धर्मत्वमधर्मत्वं चादायैव तदुभयत्र लक्षणसङ्गति – [5]रितिबोध्यम् ।

तेनेति । अपाकजपदार्थविवेचने जन्मवत्त्वनिवेशनेन नित्यवर्गस्य जलपरमाणुरूपादेरपि व्युदासो लक्ष्यबहिर्भावः । तस्यापि लक्ष्यत्वे कारणगुणपूर्वकत्वस्य तत्राव्याप्त्यापत्तेरिति भावः ।

---

1 तद्गति क.                                        2 'लघु' नास्ति ग.

3 'रूप .... संस्कारो वासनेत्यर्थः' इत्यन्तस्त्रुटितः । तत्स्थाने – गुरुत्वत्वाद्यवान्तरजातिः भावनास्थितिस्थापकयोश्च भावना .... जातिः तद्व्याप्यत्वे सति गुणवृत्तित्वगुरुत्वादिपञ्चकेऽस्तीत्यर्थः । अदृष्टत्वसत्त्व इति' इत्यस्ति ग.

4 धर्मत्वादिना संकरात् नादृष्टत्वजाति° ग.                    5 'इति बोध्यम्' नास्ति ग.

 

ग्राह्यः। तच्च स्वाश्रयसमवायिभिन्नसमवेतासमवायिकारणकान्यत्वे सति स्वाश्रयसमवायि[1]समवेता[2]समवायिकारणकत्वम्। भवति हि घटादिरूपादिकं स्वाश्रयघटादिसमवायिकपालादिरूपादिमात्रासमवायिकारणकत्वम्। कपालाकाशसंयोगादि-[3]जन्यघटाकाशसंयोगादेः घटकपालैकैकत्वादिजन्यघटकपालद्वित्वादेश्च वारणाय सत्यन्तम्। सत्यन्तघटकस्वपदस्य प्रतियोगिपरत्वात् बुद्ध्यादिवारणाय सत्यन्तम्।

---

[4]कर्मजवेगकारणगुणपूर्वकत्वाभावादाह – वेगोऽत्रेति। वेगवत्कपालारब्धघटवेगो ग्राह्य इत्यर्थः। कारणपूर्वकत्वं यदि सामान्यतः कथंचित् कारणगुणजन्यत्वं तदा पाकजरूपादौ कपालाकाशसंयोगज – घटाकाशसंयोगादौ चातिव्याप्तिः विलक्षणतेजस्संयोगरूपपाकस्य पाकज – [5]रूपादिसमवायिपरमाणुसमवेतत्वात्। एवं कपालाकाशसंयोगस्यापि घटाकाशसंयोगसमवाय्याकाशसमवेतत्वादतः निर्वक्ति – तच्च स्वाश्रय इति। [6]अत्र प्रथमस्वपदं सत्त्वं [सत्यन्त] घटकान्योन्याभावप्रतियोगिपरम्। द्वितीयं च स्वपदं लक्ष्यम्। तथा च स्वाश्रयसमवायिभिन्नसमवेतासमवायिकारणम्। कपालाकाशसंयोगाजन्यघटाकाशसंयोगादिकमेव तदन्यत्वे सति स्वाश्रयसमवायिसमवेतासमवायिकारणकत्वमपाकजरूपादौ सर्वत्राप्यस्तीत्यभिप्रायेण लक्ष्ये लक्षणं सङ्गमयति – भवति हीति। सत्यन्त घटक इति। तथा च स्वाश्रयसमवायिभिन्न – समवेतासमवायिकारणं प्रागुक्तघटाकाशसंयोगादिकमेव तदन्यत्वस्य बुद्ध्यादौ सत्त्वादतिव्याप्तिः; तद्वारणाय विशेष्याभाव [विशेष्यभाग] इत्यर्थः। बुद्ध्यादौ

---

1 कारणकान्यत्वे सति स्वाश्रयसमवायि° अ.

2 'असमवायि' नास्ति इ.

3 °जन्याकाश° इ.

4 'कर्मज .... .... विलक्षण' इत्यन्तस्त्रुटितः। तत्स्थाने – 'कारणगुणपूर्वकत्वं यदि कारणगुणजन्यत्वं तदपाकजरूपादावतिव्याप्तिः' इत्यस्ति ग.

5 'रूपादि .... .... समवेतत्वात्' इत्यन्तस्त्रुटितः। तत्स्थाने – 'रूपवत् परमाणुगुणत्वात्' इत्यस्ति ग.

6 'अत्र .... .... बोध्यम्' इत्यन्तस्त्रुटितः। तत्स्थाने – 'प्रतियोगिपरत्वात् – स्वाश्रयसमवायिभिन्न समवेतासमवायिकान्यत्व प्रतियोगि परत्वात्' इत्यस्ति ग.

## अकारणगुणपूर्वकगुणनिरूपणम्

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दानामकारणगुणपूर्वकत्वम् । तच्च विभु[1]विशेषगुणत्वम् ।

## संयोगजगुणनिरूपणम्

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्द[2]तूल[3]परिमाणोत्तरसंयोग-नैमित्तिकद्रवत्वपरत्वापरत्वपाकजानां संयोगासमवायिकारणकत्वम् । भावनान्ते आत्ममनो योगः । शब्द[4]विभागाजन्ये शब्दे भेर्याकाशसंयोगः । तूलपरिमाणे प्रचयः । उत्तरसंयोगे संयोगजसंयोगे[5]ऽवयवसंयोगः । संयोगो द्विविधः — कर्मजः संयोग[6]जश्चेति । विभागवाक्ये चरमपठितत्वादुत्तरत्वम् । नैमित्तिकद्रवत्वे तेजस्संयोगः, परत्वापरत्वयोः दिक्कालपिण्डसंयोगोऽसमवायिकारणम् ।

---

स्वाश्रयसमवायिनोऽप्रसिध्या विशेष्यासत्त्वात् तन्निरास इति भावः । बुद्ध्यादीत्युपलक्षणम् । पाकजरूपादावपि सत्यन्त – सत्त्वादतिव्याप्तिवारणाय विशेष्यभागो बोध्यः । तत्रापि स्वाश्रय-परमाणुसमवायिनोऽप्रसिध्या विशेष्यत्वात् [विशेष्यासत्त्वात्] निरासेति । यदि च घटादावपि पाकजरूपादिः तदा सत्यन्तेनैव तद्वारणम्; तद्रूपाद्याश्रयघटसमवायिकपालभिन्नतेजः समवेत-पाकासमवायिकारणकत्वस्यैव तत्र सत्त्वेनात्यन्ताभावादिति बोध्यम् ॥

अकारणगुणपूर्वकत्वं यदि निरुक्तकारणगुणपूर्वकत्वाभावः तदा गौरवम्; अतः तदन्यथा निर्वक्ति – तच्च विभु इति ।

---

1 °विशेष्यगुणत्वम् इ.
2 'तूल' नास्ति आ. इ.
3 °परिमाण संयोग° आ. इ.
4 विभागजन्ये आ.
5 अपरसंयोगः आ.
'अवयवसंयोगः' नास्ति इ.
6 जश्च .... .... पिण्डसंयोगः' इत्यन्तस्त्रुटितः । तत्स्थाने – पाकजे रूपोपपादौ तेजस्संयोगोऽसमवायिकारणम्' इत्यस्ति आ.

लीलावतीकारस्तु — भस्मीभावदशायां गुरुत्वापकर्ष दर्शनात् तदन्यथानुपपत्त्या गुरुत्वमपि पाकजं मेने ।

आचार्यास्तु — कारणगुणपूर्वकमध्ये गुरुत्वेऽपाकजत्वविशेषणं प्रवेशयन्तो गुरुत्वं पाकजं ने[1]त्युपश्चक्रुः ।

युक्तं चैतत् । केषांचिदवयवानां [2]निर्गमादेव गुरुत्वापकर्षसंभवे परमाणावुत्कृष्ट — [3]गुरुत्वनाशेऽपकृष्टगुरुत्वस्य पाकजस्य स्वीकारे मानाभावात् । परिमाणसाम्यं तु प्रचयादिति ।

## बुद्ध्यपेक्षगुणनिरूपणम्



परत्वापरत्वद्वित्वद्विपृथक्त्वादीनां बुद्ध्यपेक्षत्वम् । देशकालाभ्यां विप्रकृष्टत्वसन्निकृष्टत्वबुद्धिः परत्वापरत्वे । एकद्व्यादिधीः द्वित्वादौ, एकपृथक्त्वद्व्यादिधीः द्विपृथक्त्वादौ [4]निमित्तम् ।

## सजातीयारम्भकगुणनिरूपणम्



रूपरसगन्धस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहानां सजातीयारम्भकत्वम् । [5]अवयवगताः रूपादयोऽवयविनि रूपादिकं शब्दः स्वाश्रये शब्दं जनयति ॥

---

1 स्वीचक्रुः अ. इ.
2 निर्गमनादेव अ.
3 °गुणत्व° इ.
4 अनिमित्तम् आ.
5 अवयवागतरूपा° इ.

## असमानजातीयारम्भकगुणनिरूपणम्

सुखदुःखेच्छाद्वेषप्रयत्नास्त्वसमानजात्यारम्भकाः । सुखमिच्छां, दुःखं द्वेषं, तौ प्रयत्नं, प्रयत्नश्चेष्टमिति सुखदुःखयोः विद्यमानयोरपि ज्ञानमेवेच्छादिजनकं, [1]अनागते दुःखादेः जनकत्वासम्भवात् । तज्ज्ञानस्यैव तत्त्वात् द्वेषोऽपि प्रवृत्तिविरोध्येव; निवृत्तिस्तु प्रवृत्यभाव एवेति तु नव्याः ॥

सुषुप्तिदशायां 'अयमितो निवृत्त' [2]इत्याद्यव्यवहारेण तन्निवृत्त्याख्ययत्नसिद्धिर्दुर्वारेत्यन्ये ॥

## समानासमानजातीयारम्भकगुणनिरूपणम्

संयोगविभागसंख्यागुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराणां समाना — [3]समानजात्यारम्भकत्वम् । संयोगात् विजातीयं द्रव्यादि, विभागात् [4]शब्दसंख्यातः परिमाणं, गुरुत्वात् पतनं, द्रवत्वात् स्पन्दनं, उष्णस्पर्शात् पाकजाः, ज्ञानादिच्छादि, धर्मात् सुखं, अधर्मात् दुःखं, संस्कारात् क्रियास्मृती इति विजातीयवर्गाः सजातीयाः प्रसिद्धाः । अत्र स्नेहात् संग्रह इति सोऽपि लक्ष्य इत्याचार्याः । स्नेहस्य संग्रहे साक्षात् न कारणत्वं, सक्तुजलयोरिव सक्तोरपि संग्रहोदयात्; किन्तु परम्परया वाच्यम् । तथा जलसंयोगत्वेनैव कारणत्वमुचितम् । [5]स्नेहस्य तु दण्डरूपवदन्यथासिद्धत्वम् । आस्तां वा

---

1 अनागतसुखादेरजनकत्व° आ.
2 इत्यव्यव° आ.
3 'दस्पर्श' इत्यधिकः आ.
4 'शब्द' नास्ति आ.
5 स्नेहस्तु आ.

स्वाभाविक[1]द्रवत्ववत्संयोगत्वेनैव । तेनाद्भुतकरकादिसंयोगव्यवच्छेदः विलक्षण-तेजस्संयोग एव च पाकजहेतुः; नतूष्णस्पर्शोऽपि । तथा संस्कारो भावनेतर एव ग्राह्यः भावनायाः सजातीयजनकत्वात् ।

ननु भावनायाः [2]पटुतरभावनाजनकत्वम् । [3]पटुतरत्वं च दार्ढ्यापरनामको जातिविशेषः; झटितिस्मृतिरूपकार्यप्रयोजकः । तत्र संस्कारद्वारा पूर्वस्मृतिः, द्वितीयस्मृतिः साक्षादेव हेतुः ।

तदुक्तम् –

"जायते हि पुनः पुनः स्मरणात् दृढतरसंस्कार" इति । तत्र स्मृतित्वेनैव हेतुत्वं, स्वजन्यसंस्कारसमवायश्च संबन्ध इत्येके ।

[4]नैतद्युक्तम् । आद्यस्मृत्या नाशक्षणे तादृशसंस्कारोत्पत्त्यापत्तेः । किं तु स्वजन्यसंस्कारजन्यस्मृतिसंबन्धेन स्मृतित्वेनैव हेतुतेत्यन्ये ।

---

**भावनाया अपि सजातीयभावनाजनकत्वमस्त्येवेति शङ्कते – नन्विति ।** तत्र – **पटुतरभावनायाम् ।** तदुक्तमिति । "अनुमानदीधिताविति" **शेषः ।** अत्र [तत्र] – [5]**दृष्ट [दृढ] भावनायाम् ।** स्मृतित्वे नैवेति । **समवायेन दृढभावनां प्रति स्वजन्यसंस्कारसमवायोभयसंबन्धेन स्मृतित्वेन हेतुत्वमित्यर्थः ।**

---

1 'द्रवत्व .... .... विलक्षणतेजः' इत्यन्तस्त्रुटितः । तत्स्थाने – 'द्रवद्रव्य-संयोगत्वेन तत्त्वम् । एवं चाद्भुतहिमकरकासंयोग' इत्यस्ति अ.

2 यदुत्तरभाव° इ.

3 ततुत्तरत्वं इ.

4 नैवैत° आ.

5 दृष्टभावनां ग.

नेदमपि सम्यक्। [1]स्वस्वद्वितीयक्षणोत्पन्नस्मृतिभ्यां दण्डविशिष्टचैत्रस्मृत्या तदुत्तरकुण्डलविशिष्टचैत्रानुभव[2]जन्यस्मृतिसहितया चैत्रांशे दृढतरसंस्कारानुत्पत्त्यापत्तेः। तस्मात् स्वप्रयोज्यस्मृतिसंबन्धेन हेतुता दण्डविशिष्टचैत्रस्मृतिजन्यसंस्कारस्यान्तत कालस्यापि कुण्डलविशिष्टस्मृतिहेतुत्वात् नानुपपत्तिरिति चेत् – न, झटित्युद्बोधकप्रतिसन्धानविषयान्तरासञ्चारादिनैव झटिति स्मृत्युत्पत्तौ वैजात्यन्तरे माना – [3]भावादि – [4]त्यर्वाञ्चः ।

---

आद्यस्मृत्येति । [5]स्वद्वितीयक्षणे जनितसंस्कारया आद्यस्मृत्या स्वनाशक्षणे दृढसंस्कारोत्पत्तिः स्यात्, तदुभयसंबन्धेन तत्स्मृतेरेव सत्त्वादिति भावः। [6]स्वस्वद्वितीय इति। स्वमाद्यस्मृतिः। स्वद्वितीयक्षणोत्पन्नापरस्मृतिरुभाभ्यामेकसंस्कारजन्याभ्यामित्यर्थः। [7]इच्छाविशेषसहकृतादेकस्मादपि संस्कारात् क्रमेण स्मृतिद्वयसंभवादिति[8] । नन्वेकसंस्कारात् स्मृतिद्वयं वादिनो नाभिमतम्; अतः प्रकारान्तरेण दूषणमाह–दण्डविशिष्ट इति। दृढ [तर] संस्कार इति। स्वस्वद्वितीयक्षणोत्पन्नस्मृतिस्थले दण्डविशिष्टचैत्रस्मृतेः कुण्डलविशिष्टचैत्रस्मृतिसाहित्यस्थले च स्वजन्यसंस्कारजन्यस्मृतिसंबन्धेन स्मृतेरसत्त्वात् [9]दृढसंस्कारानुत्पत्त्यापत्तिरिति भावः । शङ्कितमुपसंहरति – तस्मादिति । स्वप्रयोज्य इति । स्वमाद्यादिस्मृतिः [10]तत्प्रयोज्यस्मृति – [11]संबन्धेन स्मृतेः दृढभावनां प्रति हेतुतेत्यर्थः। एकसंस्कारजन्यस्मृतिद्वयस्थले चाद्यस्मृतेः द्वितीयक्षणोत्पन्नस्मृतिं प्रति विशेषणज्ञानत्वेन कालतया [12]वा प्रयोजकत्वमस्त्येवेति नानुपपत्तिरिति भावः। शङ्कां परिहरति – न [13]झटितीति। वैजात्यन्तरे – भावनानिष्ठदार्ढ्यनामकवैजात्ये।

---

1 'स्वस्वद्वितीयक्षणोत्पन्नस्मृतिभ्यां' त्रुटितः आ. इ.
2 'जन्य' नास्ति अ.
3 °'भावादत एव दृढसंस्कारादपि तादृशस्मृतिरि' इत्यधिकः अ.
4 °त्यलम् आ.
5 'स्व' नास्ति क.
6 'स्व' नास्ति ग.
7 'इच्छाविशेषसहकृतात्' नास्ति ग.
8 'क्वचित्' इत्यधिकः ग.
9 दृष्टसं° ग.
10 तत्प्रयोजनस्मृति° ग.
11 °संबन्धे स्मृतेः क.
12 ना क.
13 'च' इत्यधिकः क.

स्मरणेच्छाधीना स्वल्पचिन्तासहकारिणी दृढसंस्कारस्य रोगकालानाश्यस्य [1]तन्नाश्यस्य परस्य तु तादृशबहुचिन्ता [2]इत्यप्याहुः ॥

## स्वाश्रयसमवेतविशेषगुणारम्भकनिरूपणम्

बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतविशेषगुणारम्भकाः । [3]बुद्धिरिच्छादिकं, सुखदुःखे इच्छाद्वेषा[4]विति प्राञ्चः । इच्छा इच्छादिकं, द्वेषो द्वेषादिकं, भावना स्मृत्यादिकं, शब्दः शब्दमिति ॥

## परत्रारम्भकगुणनिरूपणम्

रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भकाः । अवयवरूपादय; स्नेहान्ता अवयविरूपादिकमारभन्ते । प्रयत्न आत्मनिष्ठः शरीरचेष्टाम् ।

## उभयत्रारम्भकगुणनिरूपणम्

संयोगविभागसङ्ख्यैकपृथक्त्वगुरुत्वद्रवत्ववेगस्नेहप्रयत्नधर्माधर्मास्तूभय-त्रारम्भकाः। संयोगो द्रव्यं, स्वाश्रये भेरीदण्डादिसंयोगः नभसि शब्दं,

---

मतान्तरमाह – स्मरणेच्छेति । अत्र मते [5]भावनायां रोगकालनाश्यत्वमेव दृढत्वं तन्नाश्यत्वमेव चादृढत्वं, चिन्ता च मननमिति विवेकः ॥

---

1 तन्नाशस्य आ.
2 'इति' नास्ति आ.
3 बुद्धिः बुद्धिं, सुखमिच्छां, दुःखं द्वेषं अ.
4 'इति प्राञ्चः' नास्ति अ.
5 भावना .... विवेकः इत्यन्तस्त्रुटितः । तत्स्थाने – भावनेच्छेच्छादिकमिति । फलेच्छा तदुपायेच्छा । फलद्वेषः तदुपायद्वेषं जनयतीत्यर्थः ' इत्यस्ति क.

वंशदलयोर्विभागो विभागं, स्वाश्रये शब्दमन्यत्र सङ्ख्या, स्वाश्रये द्वित्वादिकं, अवयवगताः अवयविनि संख्यां परिमाणं च एकपृथक्त्वं स्वाश्रये द्विपृथक्त्वादि, अन्यत्रैकपृथक्त्वमेव । एकग्रहणं द्विपृथक्त्वादीनामकारणत्वप्रतिपादनाय । गुरुत्वं स्वाश्रयेपतनं, [1]अन्यत्रा[2]वयवगतमवयविनि गुरुत्वमेव। द्रवत्वं स्वाश्रये स्यन्दनं, [3]अन्यत्रावयवगतमवयविनि द्रवत्वमेव । वेगः स्वाश्रये गमनं, अन्यत्रावयवगतोऽवयविनि वेगम्। धर्मः स्वाश्रये सुखं, [4]अन्यत्र ज्वलनादौ क्रियाम्। अधर्मः स्वाश्रये दुःखं अन्यत्र पवनादौ क्रियाम्। स्नेहः स्वाश्रये संग्रहं, अन्यत्रावयवगतोऽवयविनि स्नेहमेव । प्रयत्नो विहितनिषिद्धरूपः स्वाश्रये धर्माधर्मौ चेष्टामिति ॥

## क्रियाहेतुगुणनिरूपणम्



गुरुत्वद्रवत्ववेगस्थितिस्थापकप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः । गुरुत्वात् पतनं, द्रवत्वात् स्यन्दनं, वेगात् गमनं, प्रयत्नात् चेष्टा, धर्माधर्माभ्यां भूकम्पादि, संयोगविशेषात् नोदनाभिघातलक्षणात् घटादिकर्म, स्थितिस्थापकात् नमनोन्नमनादिकमिति ।

---

भूकम्पादीति। आदिना पर्वतादिचलनसङ्ग्रहः । भूकम्पादे – [5]रिष्टानिष्टसूचकतया द्वैविध्येन धर्माधर्महेतुकत्वं नानुपपन्नमिति भावः।

---

1 'अन्यत्रावयवगमवयविनि' नास्ति आ
2 'अवयवगतं' नास्ति अ.
3 'अवयवगतमवयविनि' नास्ति अ. आ.
4 'अन्यत्र' नास्ति अ. आ.
5 °रित्यनिष्ट° क.

## असमवायिनो गुणनिरूपणम्

रूपरसगन्धानुष्णस्पर्शसङ्ख्यापरिमाणैकपृथक्त्वस्नेहशब्दानामसमवायित्वम्। अवयवरूपादिकमवयविरूपादेरसमवायिकारणम्। शब्दः शब्दस्य द्वित्वादिसङ्ख्यापरिमाणस्य। अत्रासमवायित्वमिति साधारणम्। तेन निमित्तकारणान्यत्वे सत्यसमवायिकारणत्वं लब्धम्। तेनोष्णस्पर्शादिव्युदासः। नन्विदमन्त्यावयविरूपादावतिव्याप्तम्; तेषामसमवायि कारणत्वाभावादिति।

किं च रूपादीनां धर्माधर्मोत्पत्तौ स्वध्वंसप्रत्यक्षयोश्च निमित्तत्वादव्याप्तिः। न चात्र मानाभावः; 'अरुणया' इत्यादिश्रुतेरारुण्यादेर्विशेषणत्वे संभवत्युपलक्षणत्वायोगात्। एवं रसस्य जीवनपुष्टिबलारोग्यनिमित्तत्वादव्याप्तिः। तथा स्पर्शवेगसापेक्षैव क्रियाऽभिघातहेतुरिति, स्पर्शस्याभिघाते स्नेहस्य च संग्रहे निमित्तत्वादव्याप्तिः। अतिव्याप्तिश्च कपालाकाशसंयोगादाविति चेत् - न। आत्मधर्मेतरजीवपुष्ट्यादिभिन्नैकाश्रितनिमित्तकारणावृत्त्यसमवायिकारणवृत्ति – पृथक्त्वान्यप्रत्यक्षजातिमद्गुणत्वस्य विवक्षितत्वात्। अवृत्त्यन्तेन संयोगविभागादिनिरासः संयोगविभागयोः शब्दनिमित्तत्वात्। [1]वेगस्याभिघातजक्रियानिमित्तत्वात्।

---

तेनेति। निमित्तकारणान्यत्वनिवेशेन पाकजरूपादौ निमित्तभूतस्योष्णस्पर्शसंयोगादेर्व्युदासः उचित इत्यर्थः। अन्यथा तत्रासमवायिकारणत्वसत्त्वेन लक्षणस्यानुष्णस्पर्शकरणमनुचितमेव स्यादिति भावः।

ननु निमित्तकारणान्यत्वे सत्यसमवायिकारणवृत्तिगुणत्वव्याप्यजातिमत्वं तत्त्वं वाच्यम्; तेनान्त्यावयविरूपादौ नाव्याप्तिरित्यस्वरसादाह – किं चेति। [2]आत्मधर्म इति।

---

1 'वेगस्या ... ... निमित्तत्वात्' इत्यन्तस्त्रुटितः अ. इ.

2 'आत्म .... ... बोध्यं' इत्यन्तस्त्रुटितः ग.

गुरुत्वस्येव वेगत्वस्याप्युत्कर्षेणा[1]भिघातक्रियोत्कर्षात् । [2]नौकागमनविशेषो द्रव द्रव्य [3]एव जायत इति द्रवत्वस्य नौकागमन[4]निमित्तकारणत्वात् नातिव्याप्तिः। यदि कठिनद्रव्यसंयोगस्यैव नौकागमनप्रतिरोधित्वम् । अत एव सत्यपि द्रवद्रव्यसंयोगे पाषाणादि – [5]प्रतिबन्धात् न गमनमित्युच्यते, तदा द्रवत्वान्येति-विशेषणात् नातिव्याप्तिः। [6]वृत्त्यन्तेन परत्वादिनिरासः। [7]द्विपृथक्त्वादि – वारणाय पृथक्त्वान्येति जातिविशेषणम्। एकपृथक्त्वे तु तत्त्वमादाय लक्षण-सङ्गतिः। उष्णस्पर्शस्य पाकजनिमित्तत्वात् वारणेऽप्यनुद्भूतोष्णस्य स्थितिस्थापकस्य च वारणाय प्रत्यक्षेति । उष्णत्वव्याप्यमनुद्भूतत्वं स्थितिस्थापकत्वं च न प्रत्यक्षमिति न दोषः। कार्यवारणाय गुणत्वम्।

## असमवायिकारणलक्षणनिरूपणम्

अथ किं – [8]मत्रासमवायिकारणत्वम् ? न कार्यैकार्थप्रत्यासत्त्या हेतुत्वं तन्तुरूपादौ घटरूपादेस्तदसंभवात् । नापि कारणैकार्थप्रत्यासत्त्या [9]तत्त्वं शब्दे शब्दस्य तदसंभवात्। नापि कार्यकारणान्यतरैकप्रत्यासत्त्या तत्त्वं संयोगादेः

---

आत्मधर्मोऽदृष्टज्ञानादिः, तदितरत् जीवनपुष्ट्यादिभिन्नं, एकाश्रितं यत्कार्यं शब्दादि तन्निमित्तकारणसंयोगाद्यवृत्तिरसमवायिकारणवृत्तिः; पृथक्त्वान्यप्रत्यक्षजातिरूपत्वरसत्वादिः तद् गुणत्वस्येत्यर्थः । रूपादिसंग्रहायात्मधर्मेतरत् रससंख्योपजीवनपुष्ट्यादिभिन्नं स्नेहादिसंग्रहायैकाश्रितं चात्र कार्यमुपात्तम्। अन्यत्सर्वं मूल एव सुव्यक्तमिति बोध्यम् ॥

---

1 °भिघातजक्रियो° आ.
2 नैकागमनमविशेषो आ.
3 'एव' नास्ति आ.
4 °निमित्तत्वात् आ.
5 संयोगात् नमनमित्यु° इ.
6 इत्यनेनापरत्वादि° आ.
7 'द्वि' नास्ति आ.
8 °मत्रासमप्रासमवायि° आ.
9 'तत्त्वं' नास्ति अ. इ.

[1]विभागादिकं प्रति तन्तुतुरीयसंयोगादेश्च पटादिकं प्रत्यसमवायिकारणत्वापत्तेः। न च संयोगादि – [2]कमपि किंचित् कार्यासमवायि – [3]कारणं भवत्येव। कार्यविशेषासमवायिकारणलक्षणे तु तत्कारणान्यत्वमपि निवेश्यमिति वाच्यम्। निमित्तपवनाकाशसंयोगमनोगगनसंयोगादेः कार्यमात्रासमवायिकारणभिन्नस्य शब्द-विभागाद्येकार्थसमवायप्रत्यासत्त्या हेतोरसमवायि – [4]कारणतापत्तेः।

---

प्रसङ्गादसमवायिकारणत्वविवेचनायाह – अथ किमत्रेति न कार्यैकार्थ इति। तन्तु-संयोगादेः पटादिकं प्रति पटादि लक्षणकार्येण सहैकार्थे तन्तौ प्रत्यासत्तिसत्त्वात् हेतुत्वमित्यर्थः। तन्त्विति। तन्तुरूपादेः पटरूपादिकं प्रति [5]कार्यैकार्थप्रत्यासत्त्यभावादित्यर्थः। नापि कारण इति। तन्तु रूपादेः पटरूपादिकं प्रति तत्कारणेन पटेन सहैहार्थे तन्तौ प्रत्यासत्ति – [6]सत्त्वाद्धेतुत्वमित्यर्थः। तन्तु [तुरीय] संयोगादि[दे]श्चेति।

अत्रेदमवधेयम् – तन्तुसंयोगस्य पटासमवायिकारणत्वं न संयोगत्वेन तन्तुसंयोगत्वेन वाऽतिप्रसङ्गात् किन्तु वैजात्येन। तथा च तुरी – तन्तु – [7]संयोगस्य पटासमवायिकारणत्वं न संयोगत्वेन वाऽतिप्रसङ्गात्; किं तु वैजात्येन। तथापि तेनैव पटहेतुत्वं, न तु तद्विरुद्ध-वैजात्येन तुरीतन्तुसंयोगत्वेन वा गौरवात्। एवं च तस्याप्यसमवायित्वे दोषाभावात् कथमतिव्याप्तिः। न च तस्य तत्त्वे तन्नाशात् पटनाशापत्तिरसमवायिनाशस्य द्रव्यनाश-हेतुताया अभ्युपगमात्। न चैवं कारणतावच्छेदकगौरवम्; अवयवद्वयसंयोगनाशस्य तद्व्यक्तित्वेनाखण्डस्वरूपेण वा हेतुत्वे गौरवाभावात्, [8]तत्राप्यसमवायिसंयोगनाशत्वेन

---

1 विभागं प्रति अ. इ.
2 °कं प्रति इ.
3 °कारणत्वं भव° अ. इ.
4 °कारणापत्तेः अ. इ.
5 'कार्यै .... .... प्रति' इत्यन्तस्त्रुटितः क.
6 तत्त्वाद्धेतु° आ.
7 संयोगस्यापि तेनैव पटा° क.
8 'तत्रा .... .... गौरवाच्च' इत्यन्तस्त्रुटितः ग.

किं च ज्ञानादेरिच्छा[1]ऽसमवायिकारणत्वं स्यादिति चेत् — न । आत्मविशेषगुणान्यत्वे सति कार्यकारणान्यतरैकार्थप्रत्यासत्याकारणत्वस्य [2]तत्त्वात् । कारणं समवायित्वेन पाकजादिकारणतेजस्संयोगाद्येकार्थसमवेतस्योष्णस्पर्शादेः न पाकजादिकं प्रत्यसमवायित्वं यद्यत्कार्यस्य तादृशप्रत्यासत्या कारणे यत्र यत्र ना — समवायिकारणत्वव्यवहारः तत्कार्यप्रतियोगिकतत्तद्वृत्तिभिन्नत्वेन कारणत्व — [3]विशेषणात् न संयोगादावतिव्याप्तिः । विभागप्रतियोगिकसंयोगवृत्तिभिन्नत्वपटादिप्रतियोगिकतुरीसंयोगादिवृत्तिभिन्नत्वादिना विशेषात् न यत्त्वतत्त्वप्रवेशनादनुगमः । न च सामान्यतोऽसमवायिकारणत्वे निमित्तपवनसंयोगादिभिन्नत्वं विभागाद्यसमवायिकारणत्वे च संयोगादिभिन्नत्वं [4]निवेश्यतामिति वाच्यम् । [5]सामान्यलक्षणस्यैव तत्तत्कार्यविशेषितस्य विशेषलक्षणत्वाय कारणताविशेषं पुरस्कृत्यैवासमवायिकारणत्वव्यवहाराय निरुक्तकारणतात्वस्यासमवायिकारणतालक्षणत्वाय चोक्तप्रकाराश्रयणादात्मविशेषगुणानां तु [6]न किंचित् कार्यं प्रत्यसमवायिकारणत्वम्; अतः [7]तदन्यत्वमेवोक्तम् ।

---

हेतुतायां गौरवाच्च । तस्मात् तुरीतन्तुसंयोगस्य घटं प्रति निमित्तत्वमेव नासमवायिहेतुत्वमित्यापातत इति । न च संयोग इति । हस्त — [8]तरुसंयोगादेः काय — [9]तरुसंयोगादिकं (अपि) [प्रति] तुरीतन्तुसंयोगादेश्च तुरीपटसंयोगादिकं प्रत्यसमवायित्वसत्त्वात् सामान्यलक्षणातिव्याप्तिर्नैव दोषाय । विभागाद्यसमवायिकारणत्वलक्षणे तु संयोगादिभिन्नत्वमेव [10]पटाद्यसमवायिकारणत्वलक्षणेऽपि तुरीतन्तुसंयोगादिभिन्नत्वं देयमिति विशेष[लक्ष]णातिव्याप्तिः [11]नास्ती[12]त्यर्थः ।

---

1 'असम .... तत्त्वात् । कारणं' इत्यन्तस्त्रुटितः आ.
2 सत्त्वात् आ.
3 °विशेषात् आ.
4 निवेश्यमिति अ. आ.
5 सामान्य.... .... विशेषलक्षणत्वाय' इत्यन्तस्त्रुटितः अ.
6 'न' नास्ति आ.
7 तदन्यमेव अ. इ.
8 °तन्तुसं° क.
9 °तन्तुसं° क.
10 घटाद्य° क.
11 'अपि' इत्याधिकः क.
12 'इत्यर्थः' नास्ति क.

यत्तु – आत्मविशेषगुणान्यत्वे सति तादृशप्रत्या[1]सत्तिगर्भकारणत्वाभाव-व्याप्यजात्यसमानाधिकरणधर्मसमवायित्वं, तादृशकारणत्वाभावव्याप्यं च [2]परत्वा-परत्वद्विपृथक्त्वादिकं तदसमानाधिकरणरूपत्वैक – [3]पृथक्त्वादिकं तत्समवायित्वं रूपादेः मनोगगनसंयोगादयस्तु सामान्यतो[4]ऽवयवा असमवायिकारणानि, विशेषे तु पूर्वोक्तैव गतिरिति —

तन्न । निमित्तपवनसंयोगादिवदणुपरममहत्वयोरपि सामान्य[तः] तद्व्यवहारभाजनयोरव्याप्तेः, असमवायि[5]कारणत्वव्यवहारस्य कारणताविशेष-पुरस्कारनिर्वाहाच्चेति दिक् ॥

---

दूषणान्तरमाह – किं च ज्ञानादेरिति । आत्मविशेष इति । अत्र सत्यन्तं ज्ञानादेरिच्छाद्य-समवायिकारणत्ववारणाय ।

यत्त्विति । तादृश इति । कार्यकारणान्यतरैकार्थ इत्यर्थः । तादृश – प्रत्यासत्तिगर्भ-कारणत्वाभावव्याप्यधर्मो घटत्वादिः तत्समानाधिकरणमेव रूपत्वादीति रूपादावसंभवः स्यात्, अतस्तादृशप्रत्यासत्तिगर्भकारणत्वाभावव्याप्यजातीत्युक्तम्[6] । तादृशकारणत्व इति । कार्य-कारणान्यतरैकार्थप्रत्यासत्तिगर्भकारणत्व इत्यर्थः । सामान्यतः – संयोगत्वादिना । विशेषेत्विति । विभागाद्यसमवायिकारणत्वलक्षणे तु संयोगादिभिन्नत्वं देयमित्यर्थः ।

सामान्यतः – [7]परिमाणत्वेन । अव्याप्तेरिति । तादृशप्रत्यासत्तिगर्भ – [8]कारणत्वा-भावव्याप्यजातिः परत्वत्वादि – [9]वदणुत्वत्वादिकमपि तत्समानाधिकरणमेव परिमाणत्वं

---

1 °सत्तिमत्कारण° अ. इ.
2 परत्वत्वापरत्वत्व-द्विपृथक्त्वत्वादिकं आ.
3 पृथक्त्वत्वादिकं आ.
4 भवत्येव, असम° आ.
5 °कारणत्वस्य अ. इ.
6 'कार्यकारणान्यतरैकार्थ' इत्यधिकः क.
7 'परिमाणत्वेन । अव्याप्तेः' नास्ति क.
8 °कारणत्वेऽभाव° क.
9 'वदणुत्वत्वादि' नास्ति क.

## निमित्तकारणगुणनिरूपणम्

बुद्धिसुखदुःखेच्छा – [1]द्वेषप्रयत्नधर्माधर्मभावनानां निमित्तत्वम् ।

## उभयकारणताश्रयगुणनिरूपणम्

संयोगविभागोष्ण स्पर्शगुरुत्वद्रवत्ववेगानामुभयथाकारणत्वम् ।

## अकारनगुणनिरूपणम्

परत्वापरत्वद्विपृथक्त्वादीनामकारणत्वम् ।

---

[2]इत्यणुत्वपरममहत्त्वयोर – [3]व्याप्तेरित्यर्थः [4][यदि च] तादृशकारणत्वाभावव्याप्यजात्यसमानाधिकरणधर्मसमवायित्वरूपपारिभाषिकाद्यसमवायिकारणत्वं तदाऽसमवायिकारणत्वव्यवहारस्याभिलापात्मकस्यान्वर्थस्यानुपपत्तिरित्यनुगतकारणताविशेषेण मदुक्ते नैव स उपपाद्यः, तथासति स एवास्तु, किं पारिभाषिकेणेत्याह – असमवायि इति ।

अकारणत्वम् – प्रत्यक्षातिरिक्तं प्रत्यकारणत्वम् । परत्वादेरपि विषयतया प्रत्यक्षहेतुत्वादिति भावः ।

---

1 'द्वेष' नास्ति इ.

2 'न च सामानाधिकरणमिति सामान्यतः परिमाणत्वेनासमवायिकारणत्वव्यवहारविषययोरपि अणुत्व° इत्यधिकः क.

3 संव्याप्तिरिति क.

4 'न च तादृशपरमाणुत्वमादायाप्रकृष्टमहत्वादावव्याप्तिः । तादृशकारणत्वाभावव्याप्याणुत्वत्वादिजात्यसामानाधिकरणाप्रकृष्टमहत्त्वत्वादिकमादाय तत्र लक्षणसंभवादित्याशयात्' इत्यधिकः क.

## प्रदेशवृत्तिगुणनिरूपणम्

संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वम् ।

### संयोगादेरव्याप्यवृत्तित्वनिरूपणम्

ननु संयोगादेः प्रदेशवृत्तित्वमयुक्तम्; अत्यन्ताभावत्वावच्छेदेन प्रतियोगिविरोधकल्पनादिति चेत् – न। 'मूले वृक्षे न कपिसंयोग' इत्यबाधितप्रतीत्या मूलावच्छेदेन [1]तदत्यन्ताभावसिध्या उक्तविरोधासिद्धेः। घटाद्यत्यन्ताभावस्य पटादिना [2]विरोधित्वाभावेन स्वस्वप्रतियोग्यसामानाधिकरण्यरूपविरोधस्य विशेषविश्रान्ततया संयोगाद्यत्यन्ताभावे तदकल्पनाच्च। न चाग्राद्यवच्छिन्नकपिसंयोगवदवृत्तित्वस्याग्राद्यवच्छिन्न – तत्तद्धर्मिककपिसंयोगादिनिश्चयत्वावच्छिन्नप्रतिबध्यज्ञानविषयत्वस्य च कपिसंयोगाद्यत्यन्ताभावे कल्पनामपेक्ष्यावच्छिन्नान्तमपहाय [3]तद्द्वयकल्पनैव लघीयासीति वाच्यम्। प्रामाणिकत्वेन तथैव कल्पनात्। अन्यथा विरोधकल्पन एव लाघवात्; भावाभावकल्पनैव न स्यात्।

---

उक्तविरोध इति। अत्यन्ताभावत्वावच्छेदेन प्रति – [4]योगिनो विरोधासिद्धेरित्यर्थः। ननूक्तविरोध – [5]बलात् मूले वृक्षे इति प्रतीतिबाधक एव किं न स्यादत आह – घटा[द्य]त्यन्ताभावस्येति। तदकल्पनात् – सामान्यतोऽत्यन्ताभावत्वावच्छेदेन प्रतियोगिविरोधि [त्व] कल्पनात्। तथा च मूले वृक्ष इति प्रतीतिर्निराबाधैवेति भावः। अवच्छिन्नान्तम् – अग्राद्यव[6]च्छिन्नान्तम्। तद्द्वयकल्पनैव – [7]कपिसंयोगाद्यत्यन्ताभावे कपिसंयोगवदवृत्तित्व – कपि-

---

1 तद्भाव° इ.
2 विरोधाभावेन आ.
3 तत्कल्पनैव इ.
4 योगिना क.
5 'बलात् .... .... कल्पनात्' इत्यन्तस्त्रुटितः ग.
6 °च्छिन्नत्वम् ग.
7 'कपिसंयोगाद्यत्यन्ताभावे' नास्ति ग.

किं चाद्यस्यापि क्लृप्तत्वात् प्रतीते[1]र्नियतोपस्थितिककपिसंयोगाद्यत्यन्ताभावविषयतयैवोपपत्तेः न तत्कल्पने गौरवम्। व्याप्यवृत्तावप्यव्याप्यवृत्तित्वभ्रमसंभवात् द्वितीयस्यापि तथा। न चैवं कपिसंयोगिभेदो व्याप्यवृत्तिः स्यादिति वाच्यम्। 'मूले वृक्षो न कपिसंयोगी'ति प्रतीते[2]र्नियतोपस्थितिकपि – [3]संयोगाद्यवच्छिन्नात्यन्ताभावविषयकत्वेनैवोपपत्तौ भेदाव्याप्यवृत्तित्वाकल्पनादिति प्राञ्चः॥

---

संयोगवद्धर्मिकसंयोगादिनिश्चयत्वावच्छिन्नप्रतिबध्यज्ञानविषयत्वोभयकल्पनैव रूपाद्यत्यन्ताभावसाधारणी लघीयसीति भावः। प्रामाणिक इति। मूले वृक्षः कपिसंयोगवान् नाग्र इति प्रतीतिसिद्धत्वेन कपिसंयोगात्यन्ताभावेऽग्राद्यवच्छिन्नकपिसंयोगवदवृत्तित्वादिद्वयस्यैवकल्पनादित्यर्थः। अन्यथा – कथंचित् लाघवमात्रस्यैवादरणीयत्वे। भावाभाव इति। [4]द्रव्यादिषट्कान्यतमत्वं विधिमुखप्रत्ययवेद्यत्वं वा भावत्वं तद्विरोधित्वमभावत्वम्। यदि च लाघवात् विरोधो न कल्प्यते तदोक्तभावाभावकल्पनैव स्यादिति भावः।

ननु यद्येतद् द्वयं प्रामाणिकं तदा तस्य न कल्पनीयत्वं क्लृप्तत्वादित्यत [5]आह – किं चेति। आद्यस्यापि – अग्राद्यवच्छिन्न – कपिसंयोगवदवृत्तित्वस्य [6]कपिसंयोगवदवृत्तित्वस्य कपिसंयोगवदवृत्तित्वेन त्वदभिमतेऽपि तत्राभावे क्लृप्तत्वात् न तत्कल्पने गौरवमित्यर्थः। व्याप्यवृत्ताविति। वृक्षादिरूपादौ व्याप्यवृत्तावप्यग्राद्यवच्छिन्नवृक्षादि – [7]धर्मिकतत्तन्निश्चयत्वावच्छिन्नप्रतिबध्यज्ञानविषयत्वस्य व्याप्यवृत्ति – [8]रूपाद्यत्यन्ताभाव इव कपिसंयोगात्यन्ताभावेऽपि क्लृप्तत्वात् तत्कल्पनेऽपि न गौरवमित्यर्थः। एवम् – कपिसंयोगाद्यत्यन्ताभावस्याव्याप्यवृत्तित्वे।

---

1 'प्रतीते ... ... तत्कल्पने' इत्यन्तस्त्रुटितः आ.
2 'नियतोपस्थिति' नास्ति इ.
3 °संयोगात्यन्ता भाव° इ.
4 'द्रव्यादिषट्कान्यतमत्वं' नास्ति ग.
5 'तथैव' इत्यधिकः क
6 'कपि .... ... गौरवमित्यर्थः' इत्यन्तस्त्रुटितः ग.
7 'वृत्तित्वभ्रमसंभवादग्राद्यवच्छिन्नतत्तद्धर्मिक' इत्यधिकः ग.
8 तत्तदत्यन्ता° ग.

 

नव्यास्तु – कपिसंयोग्यादिभेदोऽप्यव्याप्यवृत्तिः; [1]न कपिसंयोगी[2]ति भेदत्वप्रकारिकाया प्रत्यक्षप्रतीतेः शाब्दप्रतीतेश्चात्यन्ताभावत्वप्रकारकत्वस्य वक्तुमशक्यत्वात्। सहस्रेणापि बाधकैः 'इदं रजतमि'ति प्रतीतेः रङ्गत्व-प्रकारकत्वस्य समर्थयितुमशक्यत्वात्। अनुयोगिनि सप्तमीं [3]विना शाब्दप्रतीतेः [4]निपातातिरिक्तनामार्थात्यन्ताभावत्वप्रकारकत्वायोगाच्च। अन्यथा 'घटो न घट' इत्यादिवाक्यस्य [5]योग्यत्वापत्तिः। न च 'वृक्षो न कपिसंयोगवान्' इत्यत्र मतुप्समभिव्याहृत[नञर्थे]मतुप् प्रकृत्यर्थता[प्रकृत्यर्था]न्वयः; परेषां 'न कलञ्जं भक्षयेत्' इत्यादाविव मतुप् [6]प्रकृत्यर्थातिरिक्तनामार्थात्यन्ताभावबोधे

---

प्राचामभिमतं कपिसंयोगादिभेदाव्याप्यवृत्तित्वं दूषयितुं नव्यमतमाह – नव्यास्त्विति। भेद-मात्रस्य व्याप्यवृत्तित्वनियमरूप बाधकसत्त्वात् 'कपिसंयोगी'ति प्रतीतेः तदत्यन्ताभावत्वप्रकारकत्वं समर्थ्यतेत्यत [असमर्थ्यमिति] आह – सहस्रेणेति। [7]सहस्रबाधक – सद्भावेऽप्यन्याकार-प्रतीतेरन्याकारत्वेन समर्थनमयुक्तम्। भ्रममात्रोच्छेदापत्तेरिति भावः। [8]अनुयोगिनि – अधिकरणवाचक – [9]शब्दे। सप्तमीं विनापि 'मुखं न चन्द्र इवे'त्यादौ मुखे चन्द्रसादृश्या-त्यन्ताभावबोधोदयादाह – निपातातिरिक्तेति। अन्यथेति। अनुयोगिनि सप्तम्यनपेक्षणे 'घटो न घट' इत्यादिवाक्यस्यापि घटे घटात्यन्ताभावबोधमादाय योग्यत्वापत्तेरित्यर्थः। मतुप्प्रकृत्यर्थ इति। तथा चानुयोगिनि सप्तमीं विनापि कपिसंयोगात्यन्ताभावसंबन्धी वृक्ष इत्यन्वयबोधः। मतुपोपस्थितसंबन्धिनः तादात्म्येनैव वृक्षेऽन्वयादिति भावः। परेषामिति।

---

1 'न' नास्ति अ. इ.
2 'इति' नास्ति अ. इ.
3 विनाशाय प्रतीतेः आ.
4 निपातार्थातिरिक्त° इ.
5 योग्यतापत्तेः अ. इ.
6 'आदि' इत्यधिकः आ.
7 'सहस्र .... .... भावः' इत्यन्तस्त्रुटितः ग.
8 'अनु .... .... बोधोदयादाह' इत्यन्तस्त्रुटितः क.
9 'शब्दे' नास्ति क.

एवानुयोगिनि [1]सप्तम्यपेक्षेति वाच्यम्। तादृशकल्पनायां गौरवात्। 'पाकरक्तो न श्याम' इत्यादौ श्यामत्वादेरितरविशेषणस्य नञर्थेऽन्वयासंभवाच्च। युक्तं [2]च भेदाव्याप्यवृत्तित्वं कपि[3]संयोगाद्यत्यन्ताभावस्यैव कपि – [4]संयोग्यादि भेदत्वे लाघवात्। न चैवं 'कपिसंयोगो न कपिसंयोग' इत्यपि वाक्यं योग्यं स्यात्; कपिसंयोगात्यन्ताभावस्यैव भेदरूपस्य कपिसंयोगे सत्त्वादिति वाच्यम्। अनुयोगि-प्रतियोगिवाचकपदयोः समानविभक्तिकत्वे तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकत्वस्य संसर्गत्वात् कपि[5]संयोगभेदत्वविशिष्टस्य कपिसंयोगेऽसत्त्वाच्च इत्याहुः॥

---

यथा प्राभाकराणां मते 'न कलञ्जं भक्षयेत्' इत्यत्र विधिप्रत्ययसमभिव्याहृतप्रकृत्यर्थस्य भक्षणस्य नञर्थेऽन्वयात्, नञर्थस्य च विध्यर्थे [6]कार्येऽन्वयात् कलञ्जभक्षणाभावविषयकं कार्यमिति बोधः तथा प्रकृतेऽपि प्रागुक्तबोधः दृष्टान्तता चास्य नञर्थे प्रत्यय प्रकृत्यर्थान्वय-मात्रांशे इति भावः। तादृश इति। मतुप्समभिव्याहृतनञर्थे मतुप्प्रकृत्यर्थान्वयः। मतुबादि-प्रकृत्यर्थातिरिक्तनामार्थात्यन्ताभावबोध एवानुयोगिनि सप्तम्यपेक्षेति [7]क्लिष्टकल्पनायां गौरवादित्यर्थः। ननु [8]प्रामाणिकं गौरवं न दोषायेत्यतो भेदाव्याप्यवृत्तित्वे दोषान्तरमाह – [9]पाकरक्त इति। नञर्थे – अत्यन्ताभावे। अन्वयासंभवादिति। इतरविशेषणत्वेनोपस्थित-स्यान्यत्रानन्वयो निराकाङ्क्षत्वादिति भावः। [10]लाघवादिति। कपिसंयोग्यादिभेदस्याव्याप्य-वृत्तित्वे कपिसंयोगात्यन्ताभावसमनियततया तादात्म्य[तदात्म]कत्वेन धर्मिभेदाकल्पनात् लाघवम्॥

---

1 सप्तम्यपेक्षणादिति आ.
2 'च' नास्ति इ
3 °संयोगात्यन्ता° इ.
4 °संयोगिभेदत्वे इ.
5 °संयोगिभेद° इ.
6 'कार्ये' नास्ति क.
7 'क्लिष्ट' नास्ति ग.
8 'कृत्य' इत्यधिकः क.
9 पाकरक्तवदिति क.
10 लाघवात् .... .... लाघवम्' इत्यन्तस्त्रुटितः ग.

'श्यामात् रक्तो न विधर्मा' 'न पृथक्' इति प्रतीतेः पृथक्त्वमन्योन्याभावरूपं व्याप्यवृत्ति सिध्यतीत्येके ॥

एतावता तत्तद्व्यक्तित्वावच्छिन्नान्योन्याभावस्य पृथक्त्वरूपता अस्तु, श्यामाद्यवच्छिन्नान्योन्याभावस्याव्याप्यवृत्तित्वं [1]तु दुर्वारं इत्यन्ये ॥

### आश्रयव्यापिगुणनिरूपणम्

रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगस्थितिस्थापकपरत्वापरत्वानामाश्रयव्यापित्वम् ॥

### यावद्द्रव्यभाविगुणनिरूपणम्

अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वपृथक्त्व सांसिद्धिकद्रवत्वस्नेहानां यावद्द्रव्यभावित्वम् ॥

### अयावद्द्रव्यभाविगुणनिरूपणम्

[2]शेषाणामयावद्द्रव्यभावित्वम् ।

---

आचार्यमतमाह – श्यामादिति । तथा – [3]चैतत्प्रतीत्यविरोधाय 'पाकरक्तो न श्याम' इत्यादौ पाकरक्ते श्यामरूपवतो वैधर्म्यमेव भासत [4]इति वाच्यम्; न तु भेद इति न तस्याव्याप्यवृत्तित्वमिति भावः ।

---

1 'तु' नास्ति अ. इ.
2 'शेषाणामयावद्द्रव्यभावित्वम्' नास्ति आ.
3 'चैतत्प्रतीत्यविरोधाय' नास्ति ग.
4 'इति वाच्यं' नास्ति ग.

## मूर्तविशेषगुणनिरूपणम्

सांसिद्धिकद्रवत्वरूपरसगन्धस्पर्शस्नेहानां मूर्तविशेषगुणत्वम् ।

## स्पर्शव्याप्यगुणनिरूपणम्

रूपरसगन्धस्नेहगुरुत्वद्रवत्वस्थितिस्थापकानां स्पर्शव्याप्यत्वम् ।

## जलमात्रवृत्तिगुणनिरूपणम्

स्नेहशैत्यसांसिद्धिकद्रवत्वानां जलमात्रवृत्तित्वम् ।

## तेजोमात्रवृत्तिगुणनिरूपणम्

उष्णस्पर्शभास्वररूपयोः तेजोमात्रवृत्तित्वम् ।

## पृथिवीमात्रवृत्तिगुणनिरूपणम्

गन्धमाधुर्येतररसशुक्लेतररूपाणां पृथिवीमात्रवृत्तित्वम् ।

---

[1]अवयवि [अयावद्द्रव्य] इति । अवयवि पृथिव्यादिनैमित्तिकद्रवत्वस्यापि वैशेषिकमते अयावद्द्रव्यभावित्वेन लक्ष्यत्वादित्यर्थः ।

---

1 'अव .... .... द्रव्यभावित्वेन' इत्यन्तस्त्रुटितः ग.

## आत्मविशेषगुणनिरूपणम्



बुद्ध्यादिभावनान्तानामात्मविशेषगुणत्वम् ।

## सविषयकगुणनिरूपणम्



बुद्धीच्छाद्वेषप्रयत्नभावनानामेव सविषयकत्वम् ।

इच्छादीनां जनकज्ञानविषयत्वेनैव विषयत्वव्यवहार इति तु प्राञ्चः ।

कार्यकारणभावावच्छेदकत्वेन व्यवहारबलेन च ज्ञानवदिच्छादेरपि साक्षादेव विषयितेति नव्याः ॥

## भावनायाः सविषयकत्वस्थापनम्



अथ भावनाया अदृष्टवन्निर्विषयत्वमेव युक्तम् । तत्तद्विशेष्यकतत्तत्प्रकारकस्मृतिं प्रति तत्तद्विशेष्यकतत्तत्प्रकारकनिश्चयस्य स्वजन्यभावनासंबन्धेन हेतुत्वात् नातिप्रसङ्गः ।

---

सांसिद्धिकद्रवत्व इति । पाठस्योपादेयत्वेऽवयवि – [1]पृथिव्यादिनैमित्तिकद्रवत्वस्य लक्ष्यबहिर्भावलाभात् यावद्द्रव्यभावित्वं लभ्यते । तच्च वैशेषिकनये परमाणावेव [2]पाकेन गुणनाशस्वीकारादयुक्तमिति भावः ।

प्राञ्चः – वाचस्पतिमिश्रादयः ।

---

1 पृथिवीद्रवत्वस्य ग.  2 पाकस्वीकारात् ग.

यत्तु – एवं सति घटांशे [1]उपेक्षात्मकात् भूतलं घटवत् पटवच्चेति निश्चयात् घटांशेऽपि स्मृतिप्रसङ्गः। स्वजन्यभावनायाः च [2]पटांशे स्मृत्यनुरोधेन स्वीकारात्। न चोपेक्षान्यत्वस्य स्मृतिजनकतावच्छेदके निवेशात् नायं दोषः। सर्वांशोपेक्षाजन्यानन्तभावनाकल्पनाभयेनोपेक्षान्यत्वेन भावनांप्रत्येव हेतुत्वादिति[3] –

तत्तुच्छम्। आंशिकोपेक्षाभेदानां स्मृतिहेतुतावच्छेदके सर्वांशोपेक्षाभेदानां भावनाहेतुतावच्छेदके प्रवेशेनैव सामञ्जस्यात्। न च मम तदंशे उपेक्षा – [4]मात्रस्यान्ततोऽन्यतमत्वादिरूपेणैको भेद एक एव भावना हेतुतावच्छेदके प्रविष्टः; तव तु द्वेधा तद्भेदप्रवेशे गौरवमिति वाच्यम्। मम भावनात्वावच्छिन्नं प्रति

---

कार्यकारण इति। घटविशेष्यकघटत्वप्रकारकेच्छादिकं प्रति घटविशेष्यकघटत्वप्रकारकज्ञानं कारणमित्यत्र कार्यकारणतयोरवच्छेदकत्वेनेत्यर्थः। व्यवहार इति। घटविषयकज्ञानमितिवत् घटविषयकमिच्छादीति व्यवहारबलेनेत्यर्थः।

नातिप्रसङ्गः इति। भावनानिर्विषयकत्वे घटानुभवजन्यभावनातः पटस्मृतिः स्यादित्येवं रूपो नातिप्रसङ्ग इत्यर्थः।

प्रागुक्तस्मृतिनिश्चयकार्यकारणभावस्य भावनासविषयकत्ववाद्युक्तखण्डनं दूषयितुमुपन्यस्यति – यत्त्विति।

न च ममेति। भावनासविषयकत्ववादिनो ममांशिकोपेक्षामात्रस्यांशिकोपेक्षात्वेनान्यतमत्वादिना वा रूपेण भेद एक एव भावना हेतुतावच्छेदके प्रविष्टः; सर्वांशोपेक्षास्थले च तद्विषयकभावना विरहादेव तद्विषयकस्मरणं भवतीति न तद्भेदस्यापि तत्र [5]प्रवेश इति लाघवं

---

1 उपेक्षात्मकस्मृतिभूतलं अ.
2 'यः' इत्यधिकः इ.
3 'तु' इत्यधिकः इ.
4 °मात्रस्य तदंशेऽनुपेक्षात्वेनान्ततो अ.
°मात्रस्य तदंशेउपेक्षात्वेनान्ततो आ.
5 प्रवेशस्यापीति क.

सर्वांशे उपेक्षामात्रस्य भेदविशिष्टसप्रकारकज्ञानत्वेन स्मृतित्वावच्छिन्नं प्रति च भावनात्वेनैक एव हेतुहेतुमद्भावः। तदंशे आंशिकोपेक्षाभेदविशिष्ट – [1]तत्तद्विशेष्यकतत्तत्प्रकारकनिश्चयत्वेन तादृशस्मृतित्वेनेत्यनुभवस्मृत्योरेव नानाहेतुहेतुमद्भावः। तवत्वनुभवसंस्कारयोः स्मृतिसंस्कारयोश्च नानाहेतुहेतुमद्भाव इति गौरवादित्यकिञ्चिदेतत् ॥

अत्र नव्याः — समानाकारफलस्य भावनानाशकत्वात् भावनायाः सविषयकत्वसिद्धिः। न च स्मृति – [2]द्वितीयक्षणोत्पन्नसंस्कारस्य क्षणिकत्ववारणाय [3]स्वस्य फलं वाच्यम्। तथा च तत्तद्व्यक्तित्वेनैव [4]भावनानाशकत्वं युक्तमिति तद्भावनाजन्यचरमफलस्यैव तद्भावनाशकत्वमस्त्विति वाच्यम्। जनकतया तद्विशेष्यकतत्प्रकारकस्मृतेः प्रतियोगितया तादृशभावनाशे हेतुत्वस्यानुगतत्वत्।

---

बोध्यम्। उपेक्षात्वस्यानुगतस्याभावादाह – ततोऽन्यतमत्व इति। तव त्विति। निर्विषयकत्ववादिनस्तु। द्वेधा – इति। आंशिकोपेक्षाभेदानां स्मृतिहेतुतावच्छेदके सर्वांशोपेक्षाभेदानां भावनाहेतुतावच्छेदके प्रवेशे गौरवमित्यर्थः। मम – निर्विषयकत्ववादिनः। तादृशस्मृतित्वेन – तत्तद्विशेष्यकतत्तत्प्रकारकस्मृतित्वेन। तव त्विति। [5]सविषयकत्ववादिनस्तु। आंशिकोपेक्षा – [6]ज्ञानस्थलेऽनुभवस्यापि संस्कारस्यापि च तत्तदांशिकोपेक्षाभेदविशिष्टतत्तद्विशेष्यकतत्तत्प्रकारकनिश्चयत्वेन तथाविधसंस्कारत्वेन च तथाविधस्मृतिं प्रति हेतुत्वमिति नानाकार्यकारण – [7]भावाः। [8]अन्यथा [9]उपेक्षांऽशेऽपि समूहालंबनानुभवतज्जन्यभावनाभ्यां स्मृत्युत्पत्तिप्रसङ्गादित्यतिगौरवमित्यर्थः ॥

---

1 'कारणताज्ञानत्वेन' इत्यधिकः अ.
2 'द्वितीय' नास्ति आ.
3 फलत्वस्य वाच्यं आ.
4 'भावना' नास्ति आ.
5 निर्विषयकत्व° ग.
6 'ज्ञान .... ... तत्तदांशिकोपेक्षा' इत्यन्तस्त्रुटितः क.
7 भावः क.
8 अन्वयोपेक्षांशेऽपि ग.
9 उपेक्षणायांशेऽपि क.

न च तत्पुरुषीयभावनानाशं प्रति भावना सामान्यनाशं प्रत्येव वा तत्पुरुषीयचरम-स्मृतिव्यक्तेः तत्त्वेन चरमस्मृतिमात्रस्य वा वैजात्येन हेतुत्वमिति वाच्यम् । [1]एवं सति जनितोपेक्षात्मकचरम – [2]स्मृतिकाना – [3]मपि भावनानां सत्त्वोपगमे ताभ्यः स्मृत्युत्पत्तिप्रसङ्गात् । न चोद्बाधकाभावात् न तथा । सदृशसंबन्धात्मकयद्व्यक्ति-ज्ञानादेव यद्यत्पुरुषस्य सति संस्कारेऽवश्यं यद्यदर्थस्मृतिः तत्पुरुषीयतत्तदर्थस्मृतौ

---

समानाकार इति । सामान्यतः फलस्य भावनानाशकत्वे घटपटाविति समूहालंबना भावनातो 'घटवत् भूतलम्' इति विशिष्टानुभवजभावनातश्च कदाचित् घटस्मरणानन्तरं कालान्तरे पटस्मरणानुपपत्तिः, आद्यस्मरणेनैव तन्नाशसंभवादिति तद्विशेष्यकतत्प्रकारक – [4]फलस्य तद्विशेष्यकतत्प्रकारक भावनानाशं प्रति हेतुत्वात् कार्यतावच्छेदकघटकतया भावनायाः सविषयकत्व – [5]सिद्धिरित्यर्थः । चरमफलस्यैवेति । समूहालम्बनादिजभावनायाः चरमफलेनैव नाशात् ततः क्रमिकस्मरणानुपपत्तिरिति भावः । जनकताया इति । तथा च स्मृतिक्षणोत्पन्नसंस्कारस्य तत्स्मृत्या न नाशः । जनकतासंबन्धेन तत्स्मृतेः तत्रासत्त्वादिति भावः । तत्त्वेन – तत्पुरुषीयचरमस्मृतिव्यक्तित्वेन । वैजात्येनेति । न चात्र वैजात्ये मानाभावः । चरमस्मृतिमात्रे भावनासामान्यनाश – [6]जनकतावच्छेदकतया तत्सिद्धेः । इत्थं च स्मृतिभावनयोः नाश्यनाशकत्वोपपत्तौ ना [न] भावनायाः सविषयकत्वोपगम इति भावः । एवं सति – भावनासामान्यनाशं प्रति विजातीयचरमस्मृतेर्हेतुत्वे सति । [7]अनु [अन]

---

1 'एवं सति' नास्ति अ. इ.
2 प्रतीकाना° आ.
3 'अपि' नास्ति अ. इ.
4 'फलस्य .... .... तत्प्रकारक' इत्यन्तस्त्रुटितः ग.
5 विधिरित्यर्थः अ.
6 °जनकतया क.
7 'अनु ... .... बोध्यम्' इत्यन्तस्त्रुटितः । तत्स्थाने — 'निखिलतत्तद्भावनां विजातीय-चरमस्मृतिपर्यन्तं सत्त्वमावश्यकम् । तथा च यद्भावनाभिः दशपञ्चस्मरणानि जातानि, अग्रे च जन्यते । वस्तुतस्तु जनितोपेक्षात्मकचरमस्मृतिकाभ्य तद्भावनाभ्योऽपि स्मृत्युत्पत्तिप्रसङ्गः । समानाकारमात्रस्य तन्नाशके तु तत्र स्थले उपेक्षात्मकचरमस्मृत्या पूर्वभावनानाशात् भावनान्तरानुत्पादान स्मृत्युत्पत्तिरिति भावः' इत्यस्ति क.

 

तत्तद्व्यक्तिज्ञानत्वेनोद्बोधकत्वेन तत्सत्त्वात् । अन्यथोद्बोधकस्यैव स्मृतिहेतुत्वेनानतिप्रसङ्गेऽनुभवस्यापि तद्धेतुत्वं न स्यात् ।

एतेन ध्वंस एव व्यापारोऽस्त्वित्यपास्तम् । रोगादि नापि भावनाया अविनाशप्रसङ्गाच्च ।

किं च विशिष्टवैशिष्ट्य – [1]विषयत्वावच्छिन्नं प्रति विशेषण[2]तावच्छेदकाभावाप्रकारकविशेषणतावच्छेदकप्रकारकत्वेनैव हेतुत्वात् विशिष्टवैशिष्ट्यस्मृत्यर्थं विशेषणतावच्छेदकप्रकारकभावनासिद्धिः । न च तादृश – [3]प्रत्यक्षं प्रत्येव तथा

---

पेक्षात्मकचरमस्मृतिजनने ततो भावनान्तरोत्पादात् ततश्च स्मृत्युत्पत्तौ बाधकाभाव इत्यतः जनितोपेक्षात्मक इति । अत्र चरमस्मृतिः न भावनानाश – जनकतावच्छेदकवैजात्यावच्छिन्ना, तदनन्तरभावनामात्रस्यासत्त्वात् स्मृत्युत्पादनासम्भवात्; किं तु तत्पूर्ववर्तिनी अवान्तरचरमस्मृतिरेवेति बोध्यम् ।

एतेन – भावनाया विनाशित्ववर्णनेन । भावनायाः – ध्वंसात्मकभावनायाः।

ननु वस्तुतः तद्भावनाजन्य तत्तच्चरमफलं तत्तद्भावनानाशं प्रत्येव हेतुः; न तु समानाकारं फलं [4]घटानुभवजन्यभावनायाः तज्जन्यघटस्मृत्यानाशेन तत्स्मृतिजन्यभावना [स्वी]करणीया; अन्यथाऽग्रे घटस्मृत्यनुपपत्तिरिति स्मृतिजन्यानन्तभावना-प्रसक्ततो[प्रसक्तेरतो] न तत्सविषयकत्वसिद्धिरित्यस्वरसादाह – किं च विशिष्ट इति । अत्र कार्यतावच्छेदकहेतुतावच्छेदकयोः संस्कारेच्छादिसाधारण्याय न तत्र ज्ञानत्वनिवेशः। दण्डो रक्तो न वेति संशयादपि

---

1 °विषयित्वा° आ.

2 'तावच्छे .... .... विशेषण' इत्यन्तस्त्रुटितः आ.

3 °प्रत्यक्षत्वावच्छिन्नं प्रत्येव अ.

4 'घट .... .... नुपपत्तिरिति' इत्यन्तस्त्रुटितः ग.

हेतुता प्रत्यक्षत्वनिवेशे गौरवात्। 'रक्तेतरदण्डाभाववान् पुरुष' इति ज्ञाने सति 'दण्डव्याप्यवान् पुरुष' इति परामर्शात् 'दण्डो रक्तो न वे'ति संशयकालेऽपि 'रक्तदण्डवान् पुरुष' इत्यनुमित्यापत्तेश्च। न च तादृशविशेषणतावच्छेदक-प्रकारकत्वेन हेतुत्वे उक्तसंशयेऽपि रक्तदण्डः [दण्डो रक्तः] इत्यनुद्बुद्ध – [1]भावनातः उक्तानुमिते[2]रुपनीतभानस्य [3]वाऽऽपत्ति[4]रिति वाच्यम्। विशेषणतावच्छेदका-भावप्रकारकज्ञाना – [5]भावविशिष्टविशेषणतावच्छेदकप्रकारकत्वेन हेतुत्वात्

---

रक्तदण्डवानिति विशिष्टवैशिष्ट्य [6]विषयित्वावच्छिन्नस्योत्पादवारणाय हेतुतावच्छेदके विशेषण-तावच्छेदकाभावाप्रकारकेति। तथा च "विशिष्टस्य वैशिष्ट्यं" इति न्यायेन विशिष्टवैशिष्ट्य विषयित्वावच्छिन्नमत्राभिमतम्। "विशेष्ये विशेषणं" इत्यादि न्यायेन तादृशबोधस्य संशया – [7]दप्युपपत्तेरिति बोध्यम्। ननु प्रत्यक्षत्वस्य जातितया लघुत्वेन तन्निवेशेऽपि न गौरवमत आह – रक्तेतर इति। उक्तसंशयेऽपि – दण्डो रक्तो न वेति संशयेऽपि। दण्डो रक्त इत्यनुद्बुद्ध इति। अनेन विशेषणतावच्छेदकाभावाप्रकारक – विशेषणतावच्छेदकप्रकारकत्वावच्छिन्नस्य हेतोः सत्त्वं दर्शितम्। उक्तानुमितेः – रक्तदण्डवानित्यनुमितेः। उपनीतभानस्य – रक्तदण्डवा-नित्युपनीतभानस्य। लौकिकसंनिकर्षाभावादनुमित्युपनीतभानयोरेवापादनम्। रक्तेतर-दण्डाभाववान् पुरुष इति ज्ञानसहकृतस्य दण्डव्याप्यवान् पुरुष इति परामर्श [स्य] सत्त्वाच्च नानुमित्यापादनविरोध इति भावः। [8]विशेषणतावच्छेदकप्रकार[क]त्वेन हेतुत्वे विशेषण-विशेष्यभावप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यविषयत्वावच्छिन्ने पृथक्प्रतिबन्धकत्वकल्पनमेव

---

1 °भावनादुक्ता° अ. इ.
2 °रुपमानस्य अ. इ.
3 च आ.
4 'दुर्वारा' इत्यधिकः आ.
5 °भावभावविशिष्ट इ.
6 'विषयित्वा .... विशिष्टवैशिष्ट्यं' इत्यन्तस्त्रुटितः क.
7 °दनुपपत्ते° क.
8 'विशेषण .... .... विशेषणतेति' इत्यन्तस्त्रुटितः ग.

नोपादेयमेव वा विशिष्टान्तं विशेषणतावच्छेदकाभावप्रकारकज्ञानस्य "विशेष्ये विशेषणमि" ति विषयित्वावच्छिन्ने प्रतिबन्धकत्वेनैवानतिप्रसङ्गात् संशयनाश एव संशयकालीनविशेषणतावच्छेदकप्रकारकनिश्चयात् फलोत्पत्तेः । एतन्निश्चय-विरहविशिष्टस्य वा विशेषणतावच्छेदकाभाव प्रकारकज्ञानस्य प्रतिबन्धकत्वम् । किं च तत्तदुद्बोधकाभावविशिष्टभावनात्वाभावस्यनिवेशात् नानुद्भूतभावनात उक्तानुमित्याद्यापत्तिः । न चैतन्निवेशे गौरवम्; कार्यतावच्छेदके प्रत्यक्षत्वा-निवेशात् । एतावतैव भावनायाः [1]स्मृतिहेतुत्वनिर्वाहादुद्बोधकानां स्मृतौ

---

वरमित्यभिप्रायेणाह—नोपादेयमेवेति । ननु विशेषणतावच्छेदकाभावप्रकारकसंशयेऽपि "विशेष्ये विशेषणमि"ति न्यायेन रक्तदण्डवानिति बोधाय तस्य तत्र प्रतिबन्धकत्वमिति न्यायेन तादृशबोधेऽपि प्रतिबन्धकत्वमभ्युपेत्य प्रागुक्तातिप्रसङ्गं निराकरोति – विशेषणतेति । विषयित्वावच्छिन्नेपीत्यपि "विशिष्टस्य वैशिष्ट्यमि"ति न्यायेन विषयित्वावच्छिन्नस्य संग्रहः। ननु विशिष्टवैशिष्ट्यविषयित्वावच्छिन्ने विशेषणतावच्छेदकाभावप्रकारकज्ञानस्य प्रतिबन्धकत्वे [2]यत्र दण्डो रक्तो न वेति संशयानन्तरद्वितीयक्षणे दण्डो रक्त इति निश्चयः [3]तदनन्तरं तत्र तादृशफलोत्पत्तिः कथमित्यत आह – संशयनाश एवेति । ननु संशयनाश एव तन्निश्चयात् फलोत्पत्त्युपगमेऽनुभवविरोधः तन्निश्चयद्वितीयक्षणे फलस्यानुभविकत्वादित्यरुचेराह – [4]एतन्निश्चय इति । लाघवादाह – किं चेति । निवेशादिति । तथा च तत्तदुद्बोधकाभाव-विशिष्टभावनात्वाभावविशिष्टं यत् विशेषणतावच्छेदकाभावप्रकारक विशेषणतावच्छेदकप्रकारकं तत्त्वेनैव हेतुत्वमित्यर्थः । [5][ए]तावतैव – विशिष्टवैशिष्ट्यविषयत्वावच्छिन्ने हेतुतावच्छेदके उद्बोधकाभावविशिष्टभावनात्वाभावस्य निवेशेनैव । उद्बोधकानाम् – विशेषणतावच्छेदकमात्र-

---

1 स्मृतिहेतु॰ अ. इ.
2 'यत्र' नास्ति ग.
3 'तदनन्तरं तत्र' नास्ति ग.
4 एवं निश्चय क.
5 'एता .... .... वैशिष्ट्य स्मृतौ' इत्यन्तस्त्रुटितः ग.

हेतुत्वानङ्गीकारा — [1]च्चातिलाघवात् तत्तद्विषयकोपेक्षाज्ञानस्य तत्संशयस्य च तत्तद्विषयकभावनाप्रतिबन्धकत्वादपि भावनायाः सविषयकत्वमित्यप्याहुः ॥

यदि च समूहालंबनात् विशिष्टवैशिष्ट्यानुभवाच्च नानासंस्कारोपगमात् भावनानाशकत्वे समानाकारत्वं [2]न तन्त्रम् । न च [3]निर्विषयकत्वे नानासंस्कारोऽकिञ्चित्करः । [4]घटपटाविति समूहालम्बन [5]जन्यनानासंस्कारस्या — [6]प्यविशेषेण घटादिस्मृतिहेतुतया [7]तव स्मृतिनाश्यत्वादिति वाच्यम् । घटादि [8]स्मृतिं प्रति

---

प्रकारकभावनोद्बोधकानाम् । स्मृतौ — विशिष्टवैशिष्ट्यस्मृतौ । मतान्तरमाह — तत्तद्विषयक इति । [9]घटविषयकोपेक्षाज्ञानानन्तरं घटविषयकस्मरणाभावोपपत्तये तादृशघटज्ञानस्य घटविषयकभावनाप्रतिबन्धकत्वमवश्यं वाच्यम् । अन्यथा भावनानिर्विषयकत्वे सामान्यतो भावनां प्रति तदुपेक्षाज्ञानस्य प्रतिबन्धकत्वानुपपत्तिः । तदुपेक्षाज्ञानकालीनतदुपेक्षात्मक-पटज्ञानभावनानुत्पत्तिप्रसङ्गादिति भावः । इत्यप्याहु — रित्यस्वरसोद्भावनम् । तद्बीजं तु तत्तद्विषयकोपेक्षाज्ञानादेः तत्तद्विशेष्यकस्मृतियोग्यभावनाप्रतिबन्धकत्वेनाप्युपपत्तेः न तत्स-विषयकत्वसिद्धिरिति ।

नव्यनयोक्तभावनासविषयकत्वसाधने प्रकारान्तरेण दूषणमुद्भावयन्नाह — यदि चेति । अस्य च "इति विभाव्यत" इत्यग्रिमेणान्वयः । नव्यैः समूहालंबनादिस्थले [10]एकं संस्कार-मभ्युपेत्य तत्सविषयकत्वं साधितम् । नानासंस्कारमभ्युपेत्य तु दूषणमुद्भाव्यत इत्यतो यदि चेत्युक्तम् । [11]अकिञ्चित्कर इति । समूहालंबनादिस्थले घटपटादिक्रमिकस्मरणानुपपादक इत्यर्थः ।

---

1 °च्चेतिलाघवं तत्त°  आ.
2 'न' नास्ति  अ. इ.
3 निर्विषयत्वे  अ. इ.
4 'घटपटाविति' नास्ति  अ. इ.
5 'जन्य' नास्ति  अ. इ.
6 'अपि' नास्ति  अ. इ.
7 'तव' नास्ति  आ. इ.
8 'पटादि' इत्यधिकः  अ.
'घटवदादि' इत्यधिकः  इ.
9 'घट .... .... भावः' इत्यन्तस्त्रुटितः  ग.
10 एवं  क.
11 'अकिं .... .... इत्यर्थः' इत्यन्तस्त्रुटितः  ग.

संस्कारस्य [व्याप्यव्यापकभावापन्न] विभिन्नवैजात्येन मिथो विरुद्धेन वा तत्तद्वैजात्यवच्छिन्ने च घटादि[1]ज्ञानत्वेन तज्जातीय संस्कारनाशं प्रति [2]च घटादि-[3]स्मृतित्वेन हेतुत्वात् । पटादिस्मृतिहेतुसंस्कारस्य [4]न घटादिस्मृत्या नाश इत्यदोषात् । [5]विशिष्टवैशिष्ट्यस्मृतिश्च विशेषणतावच्छेदकप्रकारकस्मृतिसाध्या [6]विशिष्टजन्य प्रत्यक्ष एव वा विशेषणज्ञानादिकं हेतुः । जन्यप्रत्यक्षस्य जातित्वात् संशयकाले निरुक्तानुमितिस्त्विष्यते । भावनाया उद्बोधकस्य च विशिष्टवैशिष्ट्यांशे

---

व्याप्यव्यापक इति । यत्र संस्कारे घटपटोभयघटादिस्मृतिहेतुतावच्छेदकवैजात्यं तत्र केवलघटादिस्मृतिहेतुतावच्छेदक – वैजात्यमिति व्याप्यव्यापकभावापन्न इत्यर्थः । यदि संस्कारस्य व्याप्यव्यापकभावापन्ने विभिन्नवैजात्ये तद् घटादि [7]स्मृतिंप्रति हेतुत्वं तदा घटपटोभयादिस्मृत्युत्पत्तौ केवलघटादिस्मृत्युत्पत्तिरपि स्यादत आह – मिथो विरुद्धेन वेति । विभिन्नवैजात्येनेत्यनुवर्तते । ननु भावनाया निर्विषयकत्वे विशिष्टवैशिष्ट्यानुभवजभाव[ना]तो विशिष्टवैशिष्ट्यस्मृतिः न स्यात् । तदव्यवहितपूर्वं विशेषणतावच्छेदकप्रकारकस्य तद्धेतोरसत्त्वादत आह – विशिष्टवैशिष्ट्य इति । तथा च विशिष्टवैशिष्ट्यानुभवजभावनातो भावनान्तराद्वा, प्रथमं विशेषणतावच्छेदकरक्तत्वादिप्रकारक – दण्डादिस्मृतिः, तदनन्तरमेव सः रक्तदण्डवानिति स्मृतिः, नान्यथेति न क्वापि क्षतिरिति भावः । प्रथमं विशेषणतावच्छेदकरक्तत्वादि प्रकारक-स्मृतिकल्पनायां गौरवादनुभवविरोधादाह – विशिष्ट इति । तथा च विशिष्टवैशिष्ट्यावगाहि-प्रत्यक्ष एव विशेषणतावच्छेदकप्रकारकं हेतुः ; न तु तादृशस्मृतावपीति नानुपपत्तिः । आदिभ्या[8]मेतत्कार्यकारणभावस्यापि संग्रहादिति भावः । ननु विशिष्टवैशिष्ट्यप्रत्यक्ष एव

---

1 'घटवदादि' इत्यधिकः इ.
2 'च' नास्ति इ.
3 'घटवदादि' इत्यधिकः इ.
4 'न' नास्ति अ.
5 'विशिष्ट .... .... उद्बोधकस्य च' इत्यन्तस्त्रुटितः आ.
6 'विशिष्ट .... .... उद्बोधकस्य च' इत्यन्तस्त्रुटितः अ.
7 'घटवदादि' इत्यधिकः ग.
8 मेव तत्कार्य क.

पृथक्स्मृतिहेतुत्वमावश्यकम्। अन्यथा 'दण्डो रक्त' इत्यनुद्बुद्धभावनातो 'दण्डो रक्त' इति निश्चयकालीनरक्तदण्डवानित्यनुद्बुद्धभावनातश्च 'रक्तदण्डवानि'ति स्मृतिप्रसङ्गात्। उपेक्षान्यसंशयान्यज्ञानत्वेन च स्मृति हेतुत्वम्। अवच्छेदकताया व्यासज्यवृत्ति – [1]नानाकार्यकारणभाव [इति] [2]विभाव्यते, तदा भावनायाः सविषयकत्वे [3]किं मानमिति चेत् —

---

यदि विशेषणतावच्छेदकप्रकारकस्य हेतुत्वं तदा 'रक्तेतरदण्डत्वभाववान् दण्डव्याप्यवांश्च पुरुष' इति परामर्शात् 'रक्तो दण्डो न वे'ति संशयकालेऽपि रक्तदण्डवानित्यनुमितिः स्यादित्येतद्विष्टापत्त्या परिहरति – संशयकालेति। यदुक्तं 'किं च' इति पक्षे 'एतावतैव' इत्यादिना भावनाया उद्बोधकानां च न पृथक् – [4]विशिष्टवैशिष्ट्यस्मृतिहेतुत्वमिति तद्दूषयति–भावनाया [5]इति। [6]रक्तदण्डवानित्यादि विशिष्टवैशिष्ट्यविषयकस्मृतिं प्रति[7]विशिष्टवैशिष्ट्यांशे भावना[याः] उद्बोधकस्य च पृथग्धेतुत्वमावश्यकम्। ननूद्बोधकाभावविशिष्टभावनात्वाभावविशिष्टविशेषणतावच्छेदकमात्रप्रकारकमात्रेणभावनानिर्वाह इत्यर्थः। अन्यथा – विशिष्टवैशिष्ट्यांशे भावनाया उद्बोधकस्य च [8]पृथक्तादृशस्मृति हेतुत्वाभावे। दण्डो रक्त इत्यनुद्बुद्धभावनात इति। इदं चोद्बोधकाभावविशिष्टभावनात्वाभावविशिष्टविशेषणतावच्छेदकमात्रप्रकारकस्य सत्त्वदर्शनाय। दण्डो रक्त इति निश्चय इति। इदं च तादृशभावनात्वाभावविशिष्टविशेषणतावच्छेदकमात्रप्रकारकनिश्चयत्वेन यदि हेतुत्वं तदाऽप्युपपत्तिदर्शनाय। तत्तद्विषयकोपेक्षे'ति मतान्तरोक्तं

---

1 'त्वात् न' इत्यधिकः अ.

2 'विभाव्यते' नास्ति अ. इ.

3 'किं .... .... सविषयकत्वे' इत्यन्तस्त्रुटितः आ.

4 ०'विशिष्टवैशिष्ट्य'० नास्ति ग.

5 इत्यादि ग.

6 'रक्त .... .... इत्यर्थः इत्यन्तस्त्रुटितः ग

7 'विशिष्टवैशिष्ट्यांशे' नास्ति ग.

8 'पृथक् .... .... प्युपपत्तिदर्शनाय' इत्यन्तस्त्रुटितः। तत्स्थाने – 'रक्तदण्डवानिति विशिष्टवैशिष्ट्यांशे स्मृतिं प्रति पृथगहेतुत्वे' इत्यस्ति ग.

न। समूहालम्बनादितो नानासंस्कारतन्निष्ठवैजात्यकल्पनातो भावनायाः सविषयकत्वे लाघवात् ज्ञानादिगतविषयिताया एव तत्कल्पनात्। कालावच्छिन्न-स्वरूपसंबन्धेन विशिष्टवैशिष्ट्यविषयता, नित्यज्ञानव्यावृत्तैव वा सा जन्य-तावच्छेदिका, यत्र [च] विशिष्टवैशिष्ट्यांशे संस्कारोद्बोधकयोरैक्यान्नोक्तातिप्रसङ्गः, तत्र [1]स्थलविशेषे संस्कारादेः पृथगहेतुत्वेन लाघवमपीति दिक् ॥

रूपद्रवत्वयोः पृथिव्यप्तेजोमात्रवृत्तित्वम्; सङ्ख्याप्रचयपरिमाणानामेव परिमाणासमवायि – [2]हेतुत्वम्; [3]संयोगविभागशब्दानमेव शब्दासमवायिहेतुत्वम्;

---

भावनायाः सविषयकत्वसाधनं दूषयति - उपेक्षान्य इति। ननु विशेषणविशेष्यभावे विनिगमकाभावादुपेक्षान्यत्वादिना च स्मृतिहेतुत्वे नानाविधकार्यकारणभावापत्त्या गौरवमत आह – अवच्छेदकताया इति। स्मृतिकारणतावच्छेदकताया उपेक्षान्यत्वसंशयान्यत्वज्ञानत्वेति त्रितयवृतित्वेनोपेक्षान्यसंशयान्यज्ञानस्य स्मृतिं प्रति नानाकार्यकारणभावा इत्यर्थः।

ननु नानाविधभावनायां नानाविधविषयिताकल्पनापेक्षया समूहालम्बनादितो नानासंस्कारादिकल्पनमेव लघु इत्यत आह ज्ञानादिगत इति। भावनाजनकज्ञानादिगत इत्यर्थः। ननु [4]ज्ञानसाधारणज्ञानादिगतविषयिताया एव भावनायां कल्पने तस्या 'रक्तदण्डवानि' ति विशिष्टवैशिष्ट्यानुभवजन्यतावच्छेदकत्वं न स्यात्; नित्यवृत्तिधर्मस्य कार्यतानवच्छेदकत्वादित्यत आह [5]कालावच्छिन्न इति। [6]अनित्यस्वरूपस्यैव कालाव-च्छिन्नत्वात्तु कालावच्छिन्नस्वरूपसंबन्धेन जन्यज्ञानविशिष्टस्यैव नित्यज्ञानव्यावृ – त्यै[त्तै]व वा विषयिता भावनायां कल्प्यते। तस्यास्तु जन्यतावच्छेदकत्वे न किंचित् बाधकमिति

---

1 स्थलाविशेष्ये सं आ.
2 कारणत्वं आ. इ.
3 'संयोग .... .... भिघातहेतुत्वं इत्यन्तस्त्रुटितः आ. इ.
4 'ज्ञानसाधारण' नास्ति ग.
5 कालिकावच्छिन्न ग.
6 'अनित्य ... ... भावः' इत्यन्तस्त्रुटितः ग.

स्पर्शगुरुत्वप्रयत्नवेगानामेवाभिघातहेतुत्वम्; एकत्वैकपृथक्त्वसंयोगविभागानामेव [1]नैकाश्रितगुणारम्भकत्वम्; परत्वापरत्वयोरेव दिक्काल – पिण्डसंयोगजत्वम्; परत्वापरत्वचरमज्ञानद्विपृथक्त्वादीनामेव निमित्तनाशनाश्यत्वम्; एतदन्येषामेव [2]गुणान्तरविनाश्यत्वम्; कार्यगुणानामेवाश्रयनाशनाश्यत्वम्; अपार्थिवपरमाणु-रूपरसस्पर्शसांसिद्धिकद्रवत्वस्नेहगुरुत्वस्थितिस्थापकनित्यद्रव्यै – [3]कत्वैकपृथक्त्व परिमाणेश्वरबुद्धीच्छाप्रयत्नानां नित्यत्वाकार्यत्वे; इतरेषां गुणानां अनित्यत्व-कार्यत्वे; उत्क्षेपणादीनां सर्वेषामेकद्रव्यवृत्तित्वम्, सजातीयविरोधित्वं, व्याप्य-वृत्तित्वं, मूर्तवृत्तित्वं, अगुणत्वं, गुरुत्वद्रवत्वसंस्कारप्रयत्नादृष्टसंयोगजत्वं, स्वकार्यसंयोगनाश्यत्वं, वेगारम्भे नोदनादिसापेक्ष[4]त्वमसमवायिकारणद्विष्ठकार्यहेतुत्वं,

---

भावः। भावनाया उद्बोधकस्य चेत्यादिनोक्तं रक्तदण्डवानिति विशिष्टवैशिष्ट्यांशे स्मृतिं प्रति भावनोद्बोधकयोः पृथग्घेतुत्वावश्यकत्वं तत्राह – यत्र चेति। यत्र स्थलविशेषे रक्त दण्डवानिति विशिष्टवैशिष्ट्यस्मृतौ विशेषणांशे वैशिष्ट्यांशे च संस्कारोद्बोधकं चैकमेव, तदैक्ये च सति अन्यथा दण्डो रक्त इत्यादिना प्रागुक्तातिप्रसङ्गो नास्ति, तत्र स्थलविशेषे रक्तदण्डवानिति विशिष्टवैशिष्ट्यस्मृतिं प्रत्युद्बोधकाभावविशिष्ट – [5]भावनात्वाभावविशिष्ट-विशेषणतावच्छेदकप्रकारकत्वेन भावनाया एव हेतुत्वनिर्वाहात् उद्बोधकस्य तादृशज्ञानस्यापि च पृथगहेतुत्वे मम लाघवमपि। तत् निर्विषयकत्ववादिनो तत्र त्वीदृशस्थलेऽपि

---

1 अनेका° आ.

2 गुणान्तरनाशत्वं इ.

3 कत्वपृथक्त्व° इ.

4 °त्वं सम° आ.

5 'भानात्वाभावविशिष्ट' नास्ति ग.

सजातीयानारम्भकत्वं, [1]आशु[2]तरविनाशित्वं [3]च; सामान्यानां द्रव्यगुणकर्ममात्र-वृत्तित्वम्; [4]विशेषाणां नित्यद्रव्यमात्रवृत्तित्वम्, समवायस्य द्रव्यगुणकर्म-मात्रानुयोगिकत्वम्; अभावानां प्रतियोगिनिरूपणाधीननिरूपणत्वमित्याद्यूह्यम् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां पदार्थमालायां
साधर्म्यवैधर्म्यनिरूपणे गुणसाधर्म्य निरूपणं
समाप्तम् ॥

---

तादृशस्मृतिं प्रति विशेषणतावच्छेदकप्रकारकज्ञानस्य भावनाया उद्बोधकस्यापि च हेतुत्वमिति कार्यकारणभावत्रयकल्पनायामतिगौरवमिति समुदितार्थः ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसम्भूत-
श्रीमद्दुर्गकवीन्द्रतनूजमुद्गलविदुषसूनुना
भास्करेण कृतपदार्थमालाप्रकाशे
साधर्म्यवैधर्म्यनिरूपणे गुण-
साधर्म्यनिरूपणं
समाप्तम् ॥

---

1 'द्रव्यं नारम्भकत्वं' इत्यधिकः आ.
2 °'तरं' नास्ति इ.
3 'च' नास्ति
4 'विशे .... .... मात्रवृत्तित्वं' इत्यन्तस्त्रुटितः इ.

## अथ पृथिवीप्रकरणम्.



अथ द्रव्याणि विशिष्य निरूप्यन्ते । पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्, यन्नेतरेभ्यो भिद्यते तत्पृथिवीत्वाभाववत्, इतरभेदाभाव व्यापक-पृथिवीत्वाभावाभाववती इयं, तस्मात् इतरेभ्यो भिद्यत इति व्यतिरेकिणि प्रयोगः ।

ननु पृथिवीत्वे मानाभावः । न च पृथिवी [1]पृथिवीत्यनुगतप्रत्यक्षात् तत्सिद्धिः; [2]तावतापि परमाण्वादिसाधारण्यासिद्धेरिति चेत् — न । घटादौ प्रत्यक्षसिद्धेन पृथिवीत्वेनैव गन्ध[3]नीलादिसमवायिकारणत्वात् परमाणावपि तत्सिद्धिरिति प्राञ्चः ॥

## पृथिवीत्वजातिसाधनम्



नव्यास्तु — पाकजे पाकस्यापाकजे सुरभ्यसुरभिनीलतरनीलतमादाववयवगत-सुरभ्यादे नियामक — [4]त्वावश्यकत्वादतिप्रसङ्गाभावे पृथिवीत्वेन [5]न गन्धादि-

---

पदार्थानां साधर्म्यवैधर्म्यं निरूप्य शिष्यावधानाय विशिष्य द्रव्यनिरूपणं प्रतिजानीते— अथ द्रव्याणीति । विशिष्य — पृथिवीत्वजलत्वादिना । यद्यपि पृथिवीत्ववती पृथिवीत्येव लक्षणाभिधानं [6]कर्तुमुचितम्; तथापि [7]प्रयोजनाभिधानपुरस्सरं लक्षणमाह — पृथिवी इति ।

---

1 'पृथिवी' नास्ति इ.

2 तवापि आ.

3 °नीलसम° इ.

4 °त्वाच्चाति° आ.

5 'न' नास्ति इ.

6 'कर्तुमुचितम्' नास्ति ग.

7 'लाघव' इत्यधिकः ग.

समवायिकारणत्वम्; किं तु समवायेन जन्यत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन । तावतैव स्वसमवायिसमवेतत्वेनावयवगन्धादिमत्यवयवरूपादौ गन्धादिविरहोपपत्तेः। न च [1]गन्धादिजनकविजातीयतेजस्संयोगस्य तेजस्यपि सत्त्वात् तत्र पाकजगन्धाद्यापत्तिः । तेजःप्रतियोगिकत्वविशिष्टविजातीय – [2]संयोगत्वेन [3]हेतुतयैवातिप्रसङ्गभङ्गे पृथिवीत्वेन हेतुत्वे [4]मानाभावात् । न च तेजःप्रतियोगिकत्वविजातीयसंयोगत्वयोः विशेष्यविशेषणभावे विनिगमकाभावात् गुरुरूपाभ्यां कारण – [5]द्रव्यत्वमपेक्ष्य पृथिवीत्वविजातीयसंयोगत्वाभ्यां तत्त्व एव लाघवमिति वाच्यम् । गन्धप्रागभावस्य विजातीयसंयोगसंबन्धेन तेजसो वा कारणत्वात् तत्र गन्धाद्यनुत्पत्तेः। न च पाकजनकविजातीयतेजःप्रतियोगिक-संयोगसमवायिकारणतावच्छेदकतया पृथिवीत्वसिद्धिः। अन्यथा [6]तत्तत्तेजःक्रियया जलादौ तेजान्तरे च तादृशसंयोगजननापत्तेरिति वाच्यम् । [7]तत्तत्तेजःक्रियया तदुत्तरदेशरूपविशेषसामग्रीसहकृतसामान्यसामग्रीत एव विजातीयतेजस्संयोगोत्पत्तेर-नतिप्रसङ्गात् । अन्यथा [8]तत्तत्क्रियातूलके विजातीय[9]संयोगेन पाषाणेक्वचित् नीलजनक [10]संयोग इत्यत्र नियामकानुपपत्तेरित्याहुः ॥

---

गुरुरूपाभ्याम् – विजातीयतेजस्संयोगत्व – विशिष्टतेजः प्रतियोगिकत्वतेजःप्रतियोगि-कत्वविशिष्टविजातीयतेजस्संयोगत्वाभ्याम् । हेतुत्वे [तत्त्वे] एव – गन्धनीलादिहेतुत्व एव । तत्र – तेजसि ॥

---

1 गन्धजनक° इ.
2 'तेजः' इत्यधिकः आ.
3 'हेतु .... .... पृथिवीत्वेन' इत्यन्तस्त्रुटितः अ. आ.
4 'माना .... .... संयोगत्वयोः' इत्यन्तस्त्रुटितः अ. आ.
5 °'द्रव्य' नास्ति आ.
6 तत्तेजः इ.
7 तत्तत्क्रिया तदु° अ. इ.
8 तत्तत्तेजःक्रियया तुल्यके आ.
9 संयोगो न पाषाणादिः क्व° आ.
10 'संयोगः' नास्ति अ.

परे तु – चित्ररूपस्वीकारे वैशेषिकनये पाकादवयविनि रूपादेः नाशमात्रम्; उत्पत्तिस्तु कारणगुणादेवेति। [1]न्यायनये च नीलादिकं प्रति [2]नीलाभावादेः स्वाश्रयसमवेतत्वेनाभाव एव नियामक इति गगन – [3]मनोवायुपरमाण्वादौ नीलापत्तिवारणाय पृथिवीत्वेन च नीलहेतुत्वं वाच्यम्। न चैवं पार्थिवपरमाणौ पीतरूपाद्युत्पत्तिकाले नीलापत्तिः; नीलेतररूपनियततेजस्संयोगाभावस्यापि तद्धेतुत्वात्। न चैवं गौरवं, पाकावयवनील[4]हेतुत्वस्य तज्जन्यतावच्छेदकजात्य-

---

पृथिवीत्वजातिसाधकं मतमादर्शयति – [5]परे त्विति। [6]अव्याप्यवृत्तिसमानाधिकरण-विजातीयनानारूपैरेव चित्रप्रत्ययव्यवहारोपपत्त्या अतिरिक्तचित्ररूप – [7]स्वीकारो [8]व्यर्थ एवेति मते व्यभिचाराभावात् लाघवाच्च। अवयवनीलत्वेनावयविनीलत्वे – नेत्यादिरेव कार्य-कारणभावः; [9]न तु नीलादौ स्वाश्रयसमवेतत्वसंबन्धेन नीलाभावस्य विरोधित्वं तत्संबन्धावच्छिन्नतदभावस्य च हेतुत्वे गौरवात्। पाकजनीलादौ तु पाकजन्य [पाकःतज्जन्य] पूर्वरूपध्वंसश्च कारणम्। एतावतैव गगनमनोवायुपरमाण्वादौ नीलाद्यापादनासम्भवात् न नीलादिकं प्रति पृथिवीत्वेन हेतुत्वकल्पनं स्यादित्यतः चित्ररूपस्वीकारे इत्युक्तम्। [10]इदं च वैशेषिकनये न्यायनये चेत्युभयत्राप्यन्वेति। चित्ररूपास्वीकारे रक्तानुपपत्तेरुभयमतेऽपि समानत्वादिति बोध्यम्। पाकादावयवि-[11]न्यपि पूर्वरूपादेर्नाशः [12]उत्तरनीलाद्युत्पत्तिश्चेति

---

1 'न्यायनये च' नास्ति इ.
2 नीलादेः आ.
3 ०'मनो' नास्ति इ.
4 ०हेतुत्वतज्जन्य० इ.
5 'परे त्विति' नास्ति ग.
6 'अव्याप्य .... .... अतिरिक्त' इत्यन्तस्त्रुटितः क.
7 ०स्वीकारे क.
8 'व्यर्थ .... .... अवयवनीलत्वेन' इत्यन्तस्त्रुटितः क.
9 'न तु .... .... गौरवात्, इत्यन्तस्त्रुटितः ग.
10 'इदं .... .... बोध्यम्' इत्यन्तस्त्रुटितः ग.
11 'अपि' नास्ति ग.
12 'उत्तर' नास्ति

कल्पनेन लाघवात्। एवं सौरभादीतरगन्धे सौरभादेरेव विरोधित्वात्, गन्धहेतुतावच्छेदकतया तत्सिद्धिः। अत एव मण्यादावपि गन्धः।

---

न्यायनयेऽपि पूर्वोक्तरीत्या [1]कार्यकारणभावादेव गगन – [2]मनोवायुपरमाण्वादौ नीलाद्युपादनासंभवात् न नीलादिकं प्रति पृथिवीत्वेन [3]हेतुत्वं स्यादत आह – पाकादिति। स्वाश्रय इति। स्वं नीलप्रतिबन्धकत्वेनाभिमतो नीलाभावः, तदाश्रयपीतकपालादिसमवेतत्वेन संबन्धेन नीलाभावः पीतघटादावेव प्रसिद्धः, [4]तेनैव संबन्धेन तदभावो नीलादिनियामकः; स च नीलघटादाविव गगनवायुपरमाण्वादावप्यवयवसमवेतत्वशून्येऽ[5]स्तीति तत्र नीलाद्युत्पत्तिवारणाय [6]पृथिवीत्वेन नीलादिहेतुत्वं वाच्यमित्यर्थः। न चैवमिति। स्वाश्रयसमवेतत्वेन नीलाभावाभावस्यैव नीलहेतुत्वे इत्यर्थः। न चैवं गौरवमिति। नीलं प्रति स्वाश्रयसमवेत [त्व] संबन्धावच्छिन्न नीलाभावाभावत्वेन नीलेतररूपनियततेजस्संयोगाभावत्वेन पृथिवीत्वेन च हेतुत्वत्रयकल्पने गौरवमित्यर्थः। पाक इति। पाकावयवनीलयोः तत्तन्नीलहेतुतावच्छेदकजातिद्वयस्य पाकावयवनीलजन्यनीलयोः तदुभयजन्यजन्यतावच्छेदकजातिद्वयस्य चाकल्पनेन लाघवादित्यर्थः।

---

1 'कार्यकारणभावादेव' नास्ति ग.

2 ०'मनो' नास्ति ग.

3 हेतुत्वकल्पनं स्यादत क.

4 'तेनैव .... .... स च' इत्यन्तस्त्रुटितः। तत्स्थाने – 'तस्य तत्संबन्धावच्छिन्नाभावोदयादिनीलाद्यात्मकः तदा नीलत्वादिनैव हेतुता अस्तु, लाघवादिति वाच्यम्। पृथिवीत्वसाधनान्यथानुपपत्त्याऽतिरिक्तस्यैव तदस्य स्वीकारात्। न चैवमप्यवयविनीलादौ नीलत्वादिना समवायिकारणमावश्यकमिति तथैव हेतुत्वमस्त्विति वाच्यम्। एतन्मते भावकार्यमात्रस्यासमवायिकारणजन्यत्वनियमाभावादिति भावः। इत्थं चेति। अवयविनीलादौ नीलभावादेरभावस्यैव नियामकत्वे चावयविचित्ररूपेऽपि नीलपीतादिनियामकतत्तदभावसमाजस्यैव नियामकत्वसंभवात्। निरुक्तन्यायनयेन पाकजचित्रकल्पनागौरवमित्यर्थः। गगन इति। अवयविनीलादिनियामकः स्वाश्रयसमवेतत्वसंबन्धेन नीलाभावादिरभावः' इत्यस्ति ग.

5 ०स्त्विति ग.

6 'पृथि ...... एकभाण्डे जलेन' इत्यन्तस्त्रुटितः ग.

अस्तु वा विजातीयगन्धवद्भ्यां परमाणुभ्यां मण्यादिप्रयोजकद्व्यणुकारम्भः। न चैवं तन्मणित्र्यणुकादौ गन्धापत्तिः; निर्गन्धसमवेतत्वाभावस्य गन्धत्वावच्छिन्ने हेतुत्वात्। अस्तु वा सौरभादौ सौरभाभावादेरेव विरोधित्वं सामग्र्यन्तराकल्पनाच्च न [1]चित्रगन्धः। इत्थं च [2]घ्राणादेः गन्धनीलादिशून्यत्वं गन्धनीलादिशून्य-परमाण्वारब्धत्वात्। [3]कुतो गन्धनीलादिशून्यत्वं परमाणोरिति चेत् फलबलात् प्रतिबन्धकतेजस्संयोगकथनात्।

अपि च जलक्रियाजन्यसंयोगस्य व्यञ्जनादिरसं प्रत्येकयैव जात्या हेतुत्वात् जले रसविशेषादिवारणाय पृथिवीत्वेन[4]तद्धेतुत्वसिद्धिः। न च मधुरादिनानारसं [5]प्रत्येकया जात्या हेतुत्वेऽतिप्रसङ्गः। रसविशेषे द्रव्यविशेषस्यापि नियामकत्वात्। अत एवैके[6]नैव वह्निना सह [7]पक्वानां नानाविधरसवत्वम्। न चैवं जलादौ विशेषाभावादेव न रसविशेषः। जलादिसंयोगात्मक[8]द्रव्यान्तर-

---

नव्यमतेऽनुद्भूतगन्धासत्त्वादत आह – अस्तुवेति। विजातीयगन्ध इति। तथा च परस्परप्रतिबन्धात् न तत्र कोऽपि गन्ध इति भावः। ननु विजातीयगन्धवत्परमाणुभ्यामारब्धे मण्यादिप्रयोजकद्व्यणुके चित्र एव गन्धोऽस्तु। विजातीय नानागन्धत्वेन तदसमवायित्व कल्पनादित्यत आह – अस्तुवेति।

ननु गन्धरसविशेषादिकं प्रति न पृथिवीत्वेन हेतुत्वम्। तद्धेतुविजातीयतेजस्संयोग-विरहादेवान्यत्र तदनुत्पत्तेरत आह – अपि चेति। एकभाण्डे जलेन पच्यमानव्यञ्जनादि-

---

1 विचित्र  आ.
2 प्राणादेः  इ.
3 'कुतो .... .... कथनात्' इत्यन्तस्त्रुटितः  इ.
4 तत्सिद्धिः  आ.
तद्धेतुत्वं न सिद्धिः  इ.
5 प्रत्येकजात्या  इ.
6 'एव' नास्ति  इ.
7 पक्तानां  आ.
8 ०'द्रव्यान्तरयोगकृत'० नास्ति  आ.

योगकृतविशेषस्य जलादावपि सत्त्वात् । एवं नीलपीतादिनानारूपहेतुत्वमप्येकया [1]जात्या रूपविशेषे द्रव्यविशेषः तन्त्रम् । परमाणौ [2]जातिकृतविशेषाभावेऽपि द्रव्यान्तरयोगकृतो विशेषः । तुल्येऽपि [3]घृतगुडादौ [4]पाकतारतम्यात् रूपरस-तारतम्यं जलादियोगात् । अत एव बहुपाकाज्जलापगमे दाहादौ गुडादौ तिक्तो[5]ऽपि रस इत्याहुः ॥

वस्तुतः नीलाभावादेः [6]नीलत्वा[7]द्यवच्छिन्नविरोधित्वं न्यायनये युगपदेवा-वयवावयविनोः पाकान्नीलाद्युत्पत्तेः । न च [8]पाकाजन्य – [9]नीलत्वाद्यवच्छिन्ने तस्य विरोधित्वं जन्यपृथिवीत्वेन च हेतुत्वमिति वाच्यम् । जन्यपृथिवीत्व

---

स्थलेऽभिघातात्मकतेजस्संयोगस्य जलक्रियाव्यञ्जनादिरसविशेषं प्रति चैकयैव [10]जात्या लाघवेन हेतुत्वात् जलेऽपि [11]विजातीयतेजस्संयोगसत्त्वात् रसविशेषादिवारणाय पृथिवीत्वे[न] रसादिहेतुत्वमवश्यं वाच्यमिति पृथिवीत्वसिद्धिरित्यर्थः । एकया – पृथिवीत्वजात्या ॥

परे तु मतं दूषयति – वस्तुत इति । [12]न्यायनयेति । पाकेन युगपदेवावयवावयविनोः पूर्वरूपनाशनानन्तरं नीलोत्पादोऽनुभवसिद्धोऽस्ति ; तन्नाश्यात् [तन्नस्यात्], स्वाश्रय-समवेतत्वसंबन्धेन नीलाभावस्य त्वदभिमतनीलादिविरोधिनः तत्रावयविनि सत्त्वादिति भावः । ननु स्वाश्रयसमवेतत्वेन नीलाभावस्य [13]नीलादिविरोधिनः [14]पार्थिवपरमाणावप्य – वयव-

---

1 'जात्या' नास्ति आ.
2 जात्याकृत° इ.
3 मृद्घटादौ अ. आ.
4 पाक .... .... गुडादौ' इत्यन्तस्त्रुटितः अ.
5 'अपि' नास्ति इ.
6 'न' इत्यधिकः अ.
7 'द्य' नास्ति इ.
8 पाकजन्य° आ.
9 नीलाद्य° इ.
10 वैजात्या क.
11 'विजातीयतेजस्संयोगसत्त्वात्' नास्ति ग.
12 'न्याय .... सत्त्वादिति भावः' इत्यन्तस्त्रुटितः ग.
13 'नीलादिविरोधिनः' नास्ति ग.
14 पृथिवीपरमाणावप्यसत्त्वात् ग.

पृथिवीत्वकल्पनातः क्लृप्तनीलत्वादिना हेतुत्वस्यैव युक्तत्वात्। [1]न च नीलेतररूपादेः नीलत्वाद्यवच्छिन्न एव विरोधित्वम्; अनुद्भूतरूपासत्त्वे घ्राणादौ नीलापत्तेः।

किं च द्रव्यविशेषस्य संयोग – विशेषोपक्षयात्। [2]जलादौ क्रियाजनकतावच्छेदकव्याप्यजात्यैव मधुरादिरसहेतुत्वात् न [3]जलादौ रसाद्यापत्तिः।

तस्मात् मनसि द्रव्यारम्भकसंयोगवत् जलादौ गन्धादिजनकसंयोगस्यापि संभवादेव पृथिवीत्वसिद्धिरिति दिक् ॥

---

समवेतत्वशून्ये सत्त्वात् तत्र [4]पाकजन्यनीलोत्पत्तिः स्यादत आह – जन्यपृथिवीत्वेन चेति। [5]युक्तत्वादिति। तथा चावयवनीलादेः गगनादावसत्त्वेनैवनीलाद्युत्पत्तिवारणसंभावत् न तद्धेतुतावच्छेदकतया पृथिवीत्वजातिसिद्धिरिति भावः। न च नीलेतरेति। स्वाश्रयसमवेतत्वसंबन्धेन नीलेतररूपादेरेव नीलत्वाद्यवच्छिन्ने विरोधित्वम्; न तु नीलाभावादेरित्यर्थः। तथा च युगपदेवावयवावयविनोः पाकेन (पाकनाशेतर) [पूर्वरूपनाशे] नीलाद्युत्पत्तौ न बाधकम्; विरोधिनो नीलेतररूपादेस्तत्रासत्त्वादिति भावः॥

'अपि च' इत्यादिनोक्तं [6]पृथिवीत्वसाधनं दूषयति – किं चेति। द्रव्यविशेपस्य व्यञ्जनादेः रसगन्धादिविशेषे जनयितव्ये तेजस्संयोगविशेपापेक्षणादन्ययोगस्य च जलादौ च या क्रिया तज्जनकतावच्छेदकव्याप्यजात्यैव मधुरादिरसहेतुत्वम्; न तु जलादिक्रियाजनकतावच्छेदकजात्यैवे–[7]ति न जलादौ रसविशेषाद्यापत्तिरिति तज्जनकतावच्छेदकतया पृथिवीत्व–जात्या[जाति] सिद्धिरित्यर्थः।

---

1 किं च

2 जलादि क्रियाजन्यता° अ. इ.

3 जले रसा अ. इ.

4 पाकाजन्य° ग.

5 'युक्त ... .... तत्रासत्त्वादिति-भावः' इत्यन्तस्त्रुटितः ग.

6 पृथिवीत्वसाधनं नास्ति ग.

7 'इति ... सिद्धिः' इत्यन्तस्त्रुटितः। तत्स्थाने – 'यत्किंचित् संयोगादावपि मधुराद्युत्पत्त्यापत्तेः' इत्यस्ति क.

सा च रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व-द्रवत्वगुरुत्वसंस्कारात्मकचतुर्दशगुणवती । द्रवत्वान्ताः प्रत्यक्षसिद्धाः । न च घृताद्यात्मकपृथिव्यां क्षीरादाविव जलद्रवत्वमेव परम्परया प्रतीयत इति वाच्यम् । तेजस्संयोगान्वयव्यतिरेकानुविधायिद्रवत्वस्य जलेऽनुपपत्तेः ।

गुरुत्वं पतनानुमेयम् । अधोवच्छेदेन संयुक्तसमवायात् गुरुत्वं प्रत्यक्ष-[1]सिद्धमेवेति पुनः वल्लभाचार्याः ॥

## धूमस्य जलत्वसाधनम्

अथ [2]धूमो न जलं, स्नेहाद्यभावात्, नीलादिमत्वाच्च । अत एव न तेजः, पराप्रकाशकत्वाच्च, किं तु पृथिवी, तत्र गुरुत्वं नास्ति ; अन्यथोर्ध्वगति-संभवादिति चेत् – न । *अलं [जलं] धूमतादशायां गुरुत्वोपलम्भेन तत्र गुरुत्वावश्यकत्वात्, ऊर्ध्वगतिस्तु वायुनोदनात् [3]दुकूलादेरिव वह्न्यादिनोदनादे-वेति दिक् ॥

---

स्वयं पृथिवीत्वं साधयितुमाह – तस्मादिति । यथा मनसि द्रव्यारम्भकसंयोगः सम्भवति, अत एव तद्व्यावर्तनाय प्राचीनैः स्पर्शवत्वेन, नव्यैः मनोन्यमूर्तत्वादिना द्रव्यारम्भकत्वमुपेयते तथा जलादावपि रसगन्धादिजनकतेजस्संयोगस्यापि संभवात् तत्र रसविशेषादिवारणाय तज्जनकतावच्छेदकतया पृथिवीत्वसिद्धिरित्यर्थः ।

---

1 °सिद्धमेव' नास्ति अ. आ. 2 धूमे आ. 3 तृणादेरेव आ.

---

* अस्याः पङ्क्तेः यथावदर्थो न ज्ञायते । किरणावल्यामपि (पु. ८५) एतत्समानार्थकं "अलं धूमदशायां तत्रापि गरिमविशेष हेतोरवनतिविशेषस्य प्रतीतेः" इति वाक्यं दृश्यते । परन्तु तस्यापि भावो नावगम्यते ॥

संस्कारो वेगस्थितिस्थापकौ । तत्राद्यो 'वेगेन [1]गच्छति' इत्यादि प्रत्यक्ष-[2]सिद्धः । स्थितिस्थापकस्तु शाखादीनां नमनोत्तरं त्यागे यथास्थाननियत संयोग-जनककर्मजनकतया सिद्धः । न हि नोदनाभिघातवेगगुरुत्वद्रवत्वप्रयत्नेभ्य उत्पन्नस्य कर्मणो नियतदेशसंयोगजनकत्वं सम्भवति ।

## वेगनिरूपणम्

मीमांसकास्तु – निरन्तरगतिसन्तान एव वेग इति – तन्न । प्रथम – इषुक्रियायाः स्वजन्योत्तरसंयोगात् निवृत्तावुत्तरक्रियाया वेगं विनाऽनुत्पत्तेः । न च [3]प्राथमिकोत्कृष्टक्रियैव क्रियान्तरजनिका नोदनादीनां गुणानामेव गुणत्व-व्याप्यैकजात्या क्रियात्वावच्छिन्नजनकत्वात् कर्मवति कर्मान्तरोत्पत्तेरसम्भवाच्च । न चोत्कृष्टायां [4]तस्यामेव विरोधिता गौरवात् । [5]न चास्त्वेकैवोत्कृष्टक्रिया तावत् संयोगजनिका चरमसंयोगस्यैव नाशकत्वादिति वाच्यम् । नाशकतावच्छे-[6]दके चरमत्वनिवेशे गौरवात् । न च वेगक्रिया [वेगात् क्रिया] क्रियातो वेग

---

तस्याः द्रव्यत्वव्यवस्थितये गुणानाह – सा च रूपेति ।

गुरुत्वमिति । फलादाद्याद्यपतनं समानाधिकरणाद्विष्ठगुणासमवायिकारणकं पतनत्वात् गर्जित (?) द्वितीयादिपतनवदित्यनुमानादितरबाधसहकृताद् गुरुत्वसिद्धिरित्यर्थः ।

नाशकतेति । चरमसंयोगत्वरूपनाशकतावच्छेदके । तत्क्रियाजन्यत्वे सति तत्क्रिया-जन्यसंयोगापूर्वत्वं, न तु जातिः । संयोगत्वादिना संकरादिति । तन्निवेशे गौरवमित्यर्थः ।

---

1 चलति आ.
2 °सिद्धिः
3 प्रथमोत्कृष्ट° इ.
4 तस्या विरो° आ.
5 नव्यास्त्वे° आ.
6 °दकत्वे आ.

इति वेगविरामे द्रव्यादिपातो न स्यादिति वाच्यम्। उत्तरोत्तरं वेगक्रियापकर्षेणा-[1]त्यन्तापकृष्टक्रियाया वेगाजनकत्वेन तत्पातसंभवादिति। तथा च पारसर्षसूत्रम् —

"नोदना [द्रा] द्यमिषोः कर्म तत्कर्मकारिताच्च
संस्कारा [दुत्तरं] तथोत्तरमुत्तरं (एव) च" (वै.सू.५-१-१७) इति।

इदं तु बोध्यम् – स्वजन्यक्रियाजन्यसंयोगस्यवेगनाशकत्वे प्राथमिकवेग-द्वितीयकर्मणोर्युगपदेव नाशात् द्वितीयवेगः कुतः, वेगवति वेगानुपपत्तेः प्राक् तदसम्भवात्। स्वजन्यकर्मणो वेगनाशकत्वे तु वेगः [2]स्पर्शवद्द्रव्यसंयोग-विरोधीति भाष्यविरोधः (प्र. भा. पृ. ६४७)। किं च कर्ममात्रं न वेगजनकम्; मन्दकर्मणोऽपि वेगाप – त्तिः [त्तेः]। किं तु [3]नोदनाद्य – भिघाताद [भिघाता] पेक्षमिति [4]भाष्यम् (प्र. भा. पृ. ६४६)। इत्थं च द्वितीयादिकर्मणो कथं वेगः, तस्माददृष्टादिवत् नोदनासापेक्ष – अद्य – इषुकर्मजादेकस्मादेव वेगादुत्तरकर्मसन्तानः इत्थमेव स्पर्शवत्संयोगविरोधीति भाष्ये (प्र.भा.पृ. ६४७) चरमसंयोगोपलक्षकं स्पर्शवत्पदमिति [5]युक्तमिति मते यथावेगस्य प्रकर्षानुसारेण फलबाहुल्यकल्पना तथा क्रियाया अप्यस्त्विति किं वेगाख्यगुणेन॥

---

**वेगं खण्डयितुमाह** – इदं तु बोध्यमिति। स्पर्शवदिति। **स्पर्शवद्द्रव्यसंयोगो विरोधी नाशको यस्य तादृशोवेगः। अत्र स्पर्शवत्पदं स्वजन्यक्रियाजन्योत्तरसंयोगिपरिचायकम्। स्वपदं वेगपरमिति** भाष्यार्थः। चरमसंयोगोपलक्षकमिति। **अत्र चरमत्वं तद्वेगजन्यचरमकार्यजन्यत्वम्। एतन्निवेशात् नाशकतावच्छेदके गौरवमनन्यगत्या सोढव्यमिति भावः॥**

---

1 त्यन्ताभावाष्ट क्रि° इ.
2 स्पर्शवतः द्रव्य° आ.
3 नोदनाभि° आ.
4 'अपि' इत्यधिकः आ.
5 उक्त° अ. इ.

यदि च [1]वेगतार – [2]तम्यप्रत्ययात् नानावेग[3]पक्षः स्वजन्यकर्मणो वेगनाशकत्वात् [4]न द्वितीयवेगा – [5]नुपपत्तिः तदा वेगः सिध्यतीत्यन्ये ।

वेगस्य क्रियायां तन्नाशकत्वजनकत्वयोः [6]कल्पनातः प्रकृष्टक्रियाया अपकृष्टक्रियाहेतुत्व – [7]मेव युक्तमित्यपरे ॥

## स्थितिस्थापकसाधनम्

स्थितिस्थापके च मानाभावः । अवयवानां परस्परसंग्राहक – [8]संयोगवशादेव स्थानस्थितेः । न हि तत्स्थानावच्छिन्नसंस्कारः तत्स्थानसंयोगानुकूलक्रियाजनक इति नियमस्संभवति; नमनवशात् नष्टसंग्राहकसंयोगवत्या अपि शाखायाः प्राक्तनस्थानस्थित्यापत्तेरिति दिक् ॥

तथा क्षितावेव गन्धः । रूपमनेकप्रकारं शुक्लादि । रसः षड्विधो मधुरादिः । स्पर्शोऽस्या अनुष्णाशीतत्वे सति पाकजः । अनुष्णाशीतत्वं जातिविशेषः पृथिवीवायुस्पर्शसाधारण इति प्राञ्चः ॥

---

वेगसाधकं [9]मतमाह – यदि चेति ॥

---

1 'वेग' नास्ति आ.
2 °तम्यात् इ.
3 °पक्षे आ.
4 'न' नास्ति आ.
5 °नुत्पत्तिः अ. इ.
6 कल्पनां तत्प्रकर्षक्रियाहेतुत्व° अ.
7 'एव' नास्ति अ.
8 '°संयोग°' नास्ति अ. इ.
9 'मतं' नास्ति ग.

यत्तु – पृथिव्यां स्पर्शो नास्ति उष्णशीतेतरस्पर्शाननुभवादिति – तन्न। तादृशस्य कठिनस्पर्शस्यानुभवात् तत्रोष्मत्वाद्यवभासस्त्वौपाधिकः। जातिविशेषे मानाभावः, उष्णशीतभिन्नस्पर्शत्वेनैव तद्व्यवहारादित्येके ॥

नैतद्युक्तम् - उष्णशीतप्रतिसन्धाने[1]ऽप्यनुष्णाशीतत्वावच्छिन्नप्रत्ययादित्यपरे॥

उभयथाप्यनुष्णाशीतस्पर्शवत्वं वायोरपीति पाकज इत्युक्तम्। न [2]च पृथिव्यां रूपादिकं पाकजमस्तु, शुक्लनीलादिस्फुटविशेषात् स्पर्शस्तु न तथेति वाच्यम्। कठिनादि द्रव्ये पाकेन सुकुमारादिस्पर्शदर्शनात्। दृश्यते हि काष्ठमृदाद्यारम्भ[3]काणूनां मृत्पाषाणाद्यारम्भकत्वं स्पर्शविशेषसहकारादिति।

एतेन पार्थिवपरमाणौ सर्गाद्यकार्यद्रव्यरूपादिजातीयं रूपादिकं नित्यं पाकाच्च द्व्यणुकाद्यन्त्यावयविपर्यन्ते पूर्वरूपादिनाशे पररूपहेतुपाकावयवरूपादिभ्यां यदा द्व्यणुके चित्रं पूर्वरूपजातीयमेव [4]वा तत्रोत्पादकपाकानङ्गीकारादवयवरूपादिजन्यमेव वा [5]रूपादि जायते तदा त्र्यणुकादौ पररूपादिकं [तु] पाकादावेव जायत इत्यपास्तम्। परमाणौ रूपादिविशेषाभावे [6]तृणदुग्धादावयवरूपाद्यधीन

---

उभयथापीति। अनुष्णाशीतत्वस्य जातित्वमते उष्णशीतेतरस्पर्शवत्वमतेऽपीत्यर्थः।

एतेन – वक्ष्यमाणेन। ननु द्व्यणुकादौपाकेन रूपान्तरोत्पादसमये परमाणावपि रूपान्तरं स्यादेवेति कथं तस्य नित्यत्वमत आह – पाकाच्चेति। तत्र – पार्थिवपरमाणौ। ननु तत्तद्व्यणुकादिकार्यस्य रूपादिविशेषरहितपरमाण्वारब्धत्वात् वैलक्षण्यं न स्यादत आह –

---

1 'अपि' नास्ति अ. इ.
2 'च' नास्ति अ. इ.
3 °कानां आ.
4 'वा' नास्ति आ. इ.
5 रूपेऽपि अ
6 गुणत्वग्राह्योत्पत्तिनियमा° आ.

रूपाद्युत्पत्तिनियमानुपपत्तेः। [1]तत्र दुग्धद्व्यणुक - [2]त्र्यणुकादेः क्रमेणोत्पत्त्या युगपत्पाकेन तत्र रूपोत्पत्तेरसम्भवाच्च ।

किं च श्यामपरमाण्वारब्धेषु द्व्यणुकेषु श्याममेव, त्र्यणुकादावेव रक्तमित्युक्तौ यत्र किंचिद्व्यणुकावच्छेदेन पुनः [3]पुनः श्यामजनकतेजस्संयोगात् त्र्यणुकेऽपि चित्रं जायते, तत्रापि श्याममेव स्यादिति न किंचिदेतत् ॥

आचार्यास्तु - (कि. पृ. ४९) स्पर्शस्यापाकजत्वे सङ्ख्यापरिमाणादिवदविशेषप्रसङ्गः । तथा चाहिवृश्चिकदंशे शुक [शूक] शिबिवृश्चिकपत्रिकादिस्पर्शे च दुःखविशेषो न स्यात्; न स्याच्च मण्योषधिस्पर्शे तदुपरमः; गवादिचाण्डालादिस्पर्शे विधिनिषेधौ च न स्याताम् । न च द्रव्यमात्रे तौ; दर्शनस्पर्शन घ्राणस्वादनभेदेन मातङ्गमदिरादिषु प्रायश्चित्तभेदाभावापत्तेरित्याहुः ॥

---

पररूपादिकं त्विति । 'एतेन' इत्यस्यार्थं विवृणोति - परमा-ण्वि[णावि]ति । पार्थिवपरमाणौ पाकजरूपरसादिविशेषाभावे तृणादेः दुग्धाद्युत्पत्तिनियमानुपपत्तिः । न [4]हि तृणादिकं साक्षात् दुग्धाद्युत्पादयति । [5]गवादितृणादिभक्षणे तस्यापरमाण्वन्तं भङ्गात् । किं तु तृणाद्यारम्भकपरमाणवः पाकजरूपरसादिविशेषसांनिध्यात् दुग्धाद्युत्पादयन्ति । स च विशेषः तत्र तव मते नास्तीति तन्नियमानुपपत्तिः सुदृढा । न च परमाणौ पाकतः रूपादिविशेषाभावेऽपि जातिकृतविशेषवशादेव तृणादेः दुग्धाद्युत्पत्तिनियमोपपत्तिः । पृथिवीत्वादीतरद्रव्यत्वव्याप्य-[6]जातेः परमाणावसत्त्वात् । अन्यथा तृणादौ दुग्धत्वादेः [7]दुग्धादौ च तृणादेरुपलम्भापत्तेः । परमाणुवृत्तिजातेः द्व्यणुकाद्यन्त्यावयविपर्यन्तेषु सत्त्वादिति भावः । ननु निर्विशेषैरपि

---

1 'तत्र' नास्ति आ.
'तत्र दुग्ध' नास्ति इ.
2 'त्र्यणु' नास्ति अ.
3 'पुनः' नास्ति अ. इ.
4 तु क.
5 'गवादि.... .... द्युत्पादयन्ति' इत्यन्तस्त्रुटितः ग.
6 °जातिः पर° क.
7 'दुग्धादौ' नास्ति क.

तन्न । [1]तत्तत्स्पर्शविशेषग्रहस्य [2]तत्तत्कार्यहेतुत्वे सुषुप्त्यादौ तत् न स्यात् । [3]तत्त – [4]त्स्पर्शसंयोगस्य [5]तद्धेतुतत्तत्संयोगस्यैव तत्त्वं स्पर्शविशेषस्यानुभवबाधितत्वात् योग्यगतजातेः योग्यत्वनियमादिति [6]दिक् ॥

## पृथिव्यामेव गन्ध इति स्थापनम्

नन्वेतावता गन्धवद्वृत्तिद्रव्यवत्व्याप्यजातिमत्वं शुक्लेतररूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्व – [7]मित्यादिलक्षणं प्राप्तम् । न चैतद्युक्तम् – सुगन्धि सलिलं सुरभिः समीरणः [8]कालिन्दीयं जलं नीलमित्यादिप्रतीत्या जलादावपि गन्धादिसिद्धेरिति चेत् – न । सलिलादौ गन्धादिमत्त्वोपाध्यन्वयव्यतिरेक – [9]प्रयुक्तान्वयव्यतिरेक प्रतियोगित्वेनौपाधिकत्वात् । प्रतीयते हि चन्दनसंयुक्ते जले चन्दनगन्धः, कुङ्कुमसंयुक्ते कुङ्कुमगन्ध [10]इति ।

---

तृणाद्यारम्भकपरमाणुभिः द्व्यणुकादिक्रमेण दुग्धाद्यारभ्यते । ततो द्व्यणुकाद्यन्त्यावयविपर्यन्तेष्वेव [11]लाघवात् युगपदेव [12]पाकात् रूपरसादिविशेषो भवतीति तन्नियमोपपत्तिरत आह – दुग्धद्व्यणुक इति ।

ननु दुग्धद्व्यणुकादिषु [13]चरमद्रव्य एव पाकेन रूपरसादिविशेषः, नत्वन्तरालिकद्रव्ये । एवं च द्व्यणुत्र्यणुकादिषु युगपद्रूपाद्युत्पत्तेरसम्भवेपि न क्षतिरित्यस्वरसादाह – किं चेति ।

---

1 'तत्तत्' नास्ति अ. इ.
2 तत्कार्य° अ. इ.
3 'तत्तत्स्पर्शसंयोगस्य' नास्ति इ.
4 °त्स्पर्शवत्संयो° आ.
5 तद्धेतुत्वे तत्त° आ.
6 बोध्यम् अ.
7 'इत्यादि' नास्ति आ. इ.
8 कालिन्दीजलं आ. इ.
9 '°प्रयुक्तान्वयव्यतिरेक' नास्ति अ.
10 'इति' नास्ति आ. इ.
11 'लाघवात् युगपदेव' नास्ति ग.
12 पाकादय रसा° ग.
13 'चरम .... ... द्व्यणुकत्र्यणुकादिषु' इत्यन्तस्त्रुटितः क.

किं चोक्तयुक्त्या गन्धाद्यवच्छिन्ने पृथिवीत्वेन हेतुत्वात् न जलादौ तत्सम्भवः। न चास्तु जलत्वादिनैव गन्धहेतुत्वमननुभूयमानजलादिसंबन्धकेऽपि [1]गन्धादिप्रत्ययात्, अन्यादृशगन्धस्य वस्तुनः पाकेनान्यादृशगन्धवत्वात् जलादौ [2]पाकगन्धवत्वानुपपत्तेश्च। एतेन नीलरूपमपि व्याख्यातम्। वियति विक्षिप्ते कालिन्दीजलेऽपि [3]शुक्लत्व प्रतीतेः बाधकं विना यथार्थत्वात् जन्यस्वच्छशुक्लत्वावच्छेदेन जलजन्यत्वकल्पनाच्च।

एकदेशिनस्तु – रसगुरुत्वसमवायिकारणतावच्छेदकजात्यैव गन्धसमवायिहेतुत्वं पृथिवी – मात्र[4]वृत्त्या जातौ [मात्रवृत्तिजातौ] तु मानाभावः। जले पाकात् गन्धरसविशेषो भवत्येवेत्याहुः। तच्चिन्त्यम्।

---

तत्रापि श्याममेवेति। पाकोऽपि श्यामजनकोऽवयवरूपमपि श्याममेवेति हेतु – [5]वैजात्याभावादिति भावः।

वृश्चिकदंश इत्यादि। "शुकशिविकाकवचकुहिरावृश्चिकपत्री च आग्या" इति महाराष्ट्रभाषायां प्रसिद्धम्॥

ननु चन्दनादिसंयुक्तजलादौ पाकत एव गन्धविशेषोऽस्त्वित्यतिव्याप्तिः वज्रलेपायितैवेत्यस्वरसादाह – किंतु [किं च] इति। उक्तयुक्त्या – जलादौ गन्धादिजनकतेजस्संयोगस्यापि संभवादित्याद्युक्तयुक्त्या। तत्सम्भवः – गन्धसंभवः। ननु वियति विक्षिप्ते कालिन्दीजलादौ प्रतीयमानं शुक्लरूपमालोकीय – [6]मेवास्त्वित्यत्राह – जन्यस्वच्छ इति। तथा च तज्जलादौ प्रतीयमानशुक्लं स्वच्छत्वात् नालोकीयमिति भावः।

---

1 गन्धप्रत्य° इ.
2 'पाक' नास्ति इ.
3 शुक्लत्वत्वप्रतीतेः आ.
4 जातिवृत्तिः अ. जातिवृत्तौ इ.
5 वैजात्यादिति ग.
6 'एवास्तु .... .... नालोकीयं' इत्यन्तस्त्रुटितः क.

यत्तु – गन्धादिकमेव लक्षणमिति – तन्न – मण्यादौ गन्धाद्यभावेनाव्याप्तेः। न च [1]मण्याद्यारम्भकाः [2]नीलपरमाणवो गन्धवन्तः पाकजरूपवत्वादित्य – [3]नुमानेन तेषु गन्धसिद्धौ द्व्यणुकाद्यन्त्यावयविन्यपि गन्धजगन्धसिद्धिः ॥

जलादिकं गन्ध [वत्] द्रव्यत्वादित्यनुमानात् जलादावपि तत्सिद्ध्यापत्तेरप्रयोजनकत्वात् न तत्सिद्धिरिति चेत् – तुल्यम्। न च पाकजगन्धरूपयोरेकसामग्रीत्वात् नाप्रयोजकमिति वाच्यम्। रूपपरावृत्तावपि गन्धस्यापरावृत्तेर्नीलपीतादिसुरभ्यसुरभ्यादिनियमानुपपत्तेश्च विजातीयतेजस्संयोगत्वेनैव रूपगन्धहेतुत्वेन सामग्रीभेदात्। इत्थं च पाकविशेषात् नष्टगन्धैरणुभिः [4]मण्यारम्भात् निर्गन्धता मण्यादेः गन्धवद्भिरारम्भात् तद्भस्मनो गन्धवत्त्वमिति वाऽनुद्भूतगन्धसिद्धिः ॥

एतेन घ्राणं [5]गन्धवत् पृथिवीत्वादित्यादिकमप्यपास्तम्। आकाशं रूपवत् द्रव्यत्वादित्यादेराकाशादावप्यनुद्भूतरूपापत्तेः।

---

रसगुरुत्व इति। रसगुरुत्वसमवायिकारणतावच्छेदिका जातिः [6]भूजलोभयसाधारण्येकैव *कुकत्वं कल्प्यते तमेव [तेनैव] गन्धसमवायिकारणत्वमित्यर्थः। भवत्येवेति। अन्यथा "उष्णावशेषं जलं पाययेत्" इति वैद्यकासङ्गतिरिति भावः। तच्चिन्त्यमिति। चिन्ताबीजं तु [7]शतधा

---

1 मण्यारंभका अ.
2 नीलाः तदारंभक पर° अ. इ.
3 °नुमानात् इ.
4 मरणारंभात् अ.
5 गन्धपृतिवी° अ.
6 भूतांभय° क.
7 शतधा ध्यायमानेऽपि' नास्ति ग.

---

*कुकत्वं – पृथिवीजलत्वमित्यर्थः

[1]यत्तु – रसनादौ योग्य[2]जलाद्यारम्भप्रयोजक – [3]परमाण्वारब्धे रूपादिक-मावश्यकम् । न हि तत्रापि पाकेन परमाणौ रूपादिध्वंससंभव इति – तन्न – रसना[दा]वुद्भूतरूपादिप्रसङ्गात् । अदृष्टविशेषो रसनादिभेदः तत्तत्समवायि-कारणमेव वोद्भूतरूपादिप्रयोजकमिति चेत् – तर्हि रूपादिकमप्रयोजकमेवास्तु ।

यत्तु – जन्यस्वच्छत्वावच्छिन्नं प्रत्येव स्वच्छत्वेन हेतुत्वात् नोद्भूतत्वं जन्यतावच्छेदकम्; नाप्यनुद्भूतत्वं, प्रतिबन्धकतावच्छेदकतया सिद्धस्य तस्य परमाणुरूपनिष्ठतया नित्यवृत्तित्वात् । इत्थं च महत्वा – [4]हेतुत्वेनापि लाघव-मिति —

तन्न – महत्वरूपयोः चाक्षुषहेतुत्वेनोपपत्तावनुद्भूतरूपप्रतिबन्धक – त्वा-[त्व]कल्पनाया अन्याय्यत्वात् । जन्यस्वच्छत्ववत् जन्यानुद्भूतत्वस्य जन्यताव-च्छेदकत्वावश्यकत्वात् । रसनाद्यारम्भकाः परमाणवो भिन्ना एवेत्याहुः ॥

वस्तुतस्तु – जलादिपरमाणवः सरूपनीरूपभेदात् द्वेधा । तथाच रसनादि-द्व्यणुकं नीरूप – मात्रा[मात्रा]रब्धम् । योग्यजलादिद्व्यणुकं तु नीरूप-सरूपाभ्यामित्यनियतारम्भे एकस्य रूपादेरनारम्भकत्वं न यौक्तिकम् । अस्तु वा

---

ध्यायमानेऽपि जले पाकात् गन्धरसविशेषोऽनुभवबाधित एव भूतलोभय – साधारण – [5]कुकत्वजातिकल्पने गौरवं च । अन्यथा स्पर्शसमवायिकारणतावच्छेदकतया पृथिव्यादि-चतुष्टय – साधारण्यपि जातिः सिध्येदिति [6]बोध्यम् ॥

[7]भिन्ना एवेति । योग्यजलारम्भकपरमाणुभिन्ना एव । अनुद्भूतरूपवत्त्वादिति भावः ।

---

1 'यत्तु' नास्ति अ.
2 °जलारम्भ° आ.
3 परमाण्वादिरसे रूपादिक° अ.
4 °हेतुत्वेनानेनापि अ.
5 °'कुकत्व'° नास्ति क.
6 'बोध्यम्' नास्ति ग.
7 'भिन्ना .... .... भिन्ना एव' इत्यन्तस्त्रुटितः क.

योग्यजलादित्र्यणुकं सरूपद्व्यणुकद्वयनीरूपैकद्व्यणुकारब्धमित्यदोषः। 'वायौ रूपं नास्ती'ति लौकिकप्रतीतिरप्यनुद्भूतरूपासत्त्वसाधिका। [1]तत्सत्त्वे योग्याप्रतियोगिकत्वेन तल्लौकिकप्रत्यक्षायोगादिति दिक् ॥

एवं शुक्लेतरशुक्लतमादिस्वसमानाधिकरणद्रव्य[त्व]व्याप्यजातिमत्त्वमपि पृथिव्यामेव जलतेजसोः शुक्लेष्ववान्तरतारतम्यभावात्। पार्थिवद्रव्यसंयोगेनैव तथा प्रतिभासादेवावान्तरानेकसामान्यविशेषवान् रसः पृथिव्यामेव, जलस्य तु स्वभावतोऽव्यक्तमधुर एव रसः। नारिकेलादिजलरसगताः विशेषास्तु संसर्गिपार्थिवौ[2]पाधि – कि[का] इत्याचार्याः (कि. पृ. ४८)

---

नव्यमतमाह – वस्तुतस्त्विति। अनियतारम्भ इति। योग्यजलादिद्व्यणुकं [3]सरूपाभ्यामेवारभ्यत इति नियतारम्भो नास्ति मानाभावादिति भावः। नन्वेकस्य [4]रूपादेरनारम्भकत्वमेव [5]नियतारम्भे मानमत आह – एकस्य रूपादेरिति। [6]नन्वेकस्य रूपादेरारम्भकत्वे पार्थिवा[प्य] परमाणुभ्यामपि द्रव्यारम्भापत्तिः। तथा च तद्द्रव्यस्य गन्धवत्वात् स्नेहवत्वाच्च। पृथिवीत्वजलत्ववत्वे द्रव्य-संस्कारः [सङ्करः] स्यादित्यरुचेराह – अस्तुवेति। [7]तथा च सरूपद्व्यणुकं सरूपाभ्यामेवारभ्यत इति तत्र नियतारम्भः। त्र्यणुकं त्वनियतारम्भमेव सरूपद्वयविरूपैः द्व्यणुकैरपि तदारम्भोपगमादिति भावः।

---

1 तत्त्वे आ.

2 °पाधिकमेव, जलस्य तु स्वोक्तमधुर एवेत्याचार्याः अ.

3 स्वरूपाभ्या° क.

4 'रूपादेः' नास्ति ग.

5 निपातारम्भे ग.

6 'ननु .... .... त्यरुचेः' इत्यन्तस्त्रुटितः। तत्स्थाने – 'एकस्यानारम्भकत्वप्रवादमाश्रित्य' इत्यस्ति ग.

7 'तथाच .... .... भावः' इत्यन्तस्त्रुटितः ग.

## परमाणुसाधनम्

सा पृथिवी द्विविधा, नित्यानित्या च। नित्या परमाणु[1]लक्षणा; कार्यलक्षणात्वनित्या। अथ परमाणौ मानाभावः। न च स्थूलद्रव्यस्य लोष्ठादेर्भज्यमा-न्य [न] स्याल्पतरतमादिभावात् यतो नाल्पीयः सःपरमाणुरिति वाच्यम्। तन्नित्यत्वे मानाभावस्य शङ्कितत्वादिति चेत् — न। निखिलद्रव्याव-यवानां सावयवत्वेऽनवस्थाप्रसङ्गात्, प्रलयेनान्तराविच्छेदेनासंभवात्। मेरुसर्ष-पादीनामनन्तावयव — कल्पा [कल्पना] विशेषात् परिमाणतारतम्यानुपपत्तेश्च। न च प्रचयाद्विशेषः तूलपिण्डे मेरौ च तदविशेषतादवस्थ्यात्। तूलपिण्डे च प्रचयस्यापि सत्त्वादिति कस्यचित् निरवयवत्वं वाच्यम्। निरवयवस्य चाकार्यत्वेन नित्यत्वम्।

## द्व्यणुकसाधनम्

नन्वेवमस्तु [2]नित्यपरमाणुद्व्यणुके तु मानाभाव इति चेत् — न। त्र्यणुकस्य लौकिकप्रत्यक्षविषयद्रव्यस्य महत्वं वाच्यम्। तच्च महत्वं प्रचयाजन्यम[3]वयव-बहुत्वसङ्ख्याजन्यमिति परमाणुद्वये समवेतं न [4]त्र्यणुकं, किन्तु द्व्यणुकं,

---

लक्षितां पृथिवीं विभजते — सा पृथिवी इति। एकस्या एव नित्यत्वमनित्यत्वं च विरुद्धमत आह — नित्याः परमाणु इति। ननु निखिलद्रव्यावयवानां सावयवत्वेऽनवस्थाऽनादि-त्वात् न दोष इत्यरुचेराह — प्रलयेनेति। परमाणोरनित्यत्वे प्रलयेन तस्येतरा [तस्यान्तरा] विच्छेदे उत्तरसर्गे द्व्यणुकादिकार्य [5]परम्पराया असम्भवादित्यर्थः।

---

1 रूपाः, अनित्याः कार्यरूपाः आ.

2 'नित्य .... .... प्रचयाजन्यं' इत्यन्तस्त्रुटितः अ.

3 निरवयव° अ.

4 त्र्यणुके किंचिद्द्व्यणुकं तदारंभ त्र्यणुकमिति अ.

5 परम्परया ग.

तदारब्धं त्र्यणुकमिति सिद्धम् । परमाणौ महत्वाभावेऽपि प्रचयः संभवतीति तज्जन्यमस्तु; तन्महत्व [1]मिति चेत् – किंचिदवयवावच्छेदेनासंयोगित्वे सति [2]किञ्चिदवयवावच्छेदेन संयोगित्वलक्षणं प्रचयस्य निरवयवे परमाणावयोगात् । तदयं प्रयोगः – त्र्यणुकावयवाः [सावयवाः] महदारम्भकत्वात् कपालवत् त्र्यणुका [द्व्यणुका] वयवाः [3]निरवयवाः सावयवत्वे मानाभावादिति । न च ते सावयवाः रूपित्वादिति सत्प्रतिपक्षः; अनवस्थालक्षणप्रतिकूलतर्कपराहतत्वात् । न च त्रिभिः परमाणुभिरेव [4]त्र्यणुकमारभ्यतां, अलं द्व्यणुकेनेति वाच्यम् । तत्र परमाणुद्वयारब्धस्य द्व्यणुकत्वानपायात् ॥

यत्तु – इदं मतमयुक्तम्; त्र्यणुकोत्पत्तिकाले द्व्यणुकोत्पत्त्यापत्तेः । तस्मात् द्व्यणुकं [प्रति] परमाणुत्वेन त्र्यणुकं प्रति द्व्यणुकत्वेन समवायिकारणत्वं वाच्यम् । न च परमाणुत्रयादावपि द्व्यणुकापत्तिः; अदृष्टविशेषप्रयोज्यस्यातीन्द्रियस्य विजातीयसंयोगस्य युगपत् त्रिषु परमाणुष्वस्वीकारादिति —

तन्न – द्व्यणुकत्वस्य [5]कार्यतानवच्छेदकत्वेन [6]त्र्यणुककाले तदापादनायोगात् । अणुत्वानु – [7]त्पत्तिस्तु [त्र्यणुकानुत्पत्तिस्तु] अप्रकृष्ट [अपकृष्ट] परिमाणसामग्र्याः प्रतिबन्धकत्वात्, द्वित्वस्य व्याप्यत्वसंबन्धेन जन्याणुत्वहेतुत्वात् । तत्तद्व्यणुकात्मकसमवायिविरहाच्चेति ।

---

इदं मतम् – "त्रिभिः परमाणुभिरेव त्र्यणुकमारभ्यतामिति मतम् ।

---

1 'इति चेत्' नास्ति अ.
2 'किंचिदवयवावच्छेदेन' नास्ति अ.
3 'अवयविनि' इत्यधिकः अ.
4 'त्र्यणुक .... .... द्व्यणुकापत्तिः' इत्यन्तस्त्रुटितः । तत्स्थाने – त्र्यणुकोत्पत्तिकालो द्व्यणुकादावपि द्व्यणुकमिति' इत्यस्ति अ.
5 कार्यताव° अ.
6 'त्र्यणुकत्वस्य कार्यतावच्छेदकत्वेन' इत्यधिकः अ.
7 °त्पत्तिकस्तु अ.

अथैवं कपालतन्त्वादिघटपटादिहेतुत्वे मानाभावः । युक्तं चैतत् — क्वचिद्द्वितन्तुकपटादेः तन्त्वन्तरसंयोगे पटाद्युत्पादकत्वात् । एकैकतन्तुसंयोगे द्वितन्तुकादिनाशः त्रितन्तुकाद्युत्पत्तिः, पुनरेकैकतन्तुवियोगे त्रितन्तुकादिनाशे द्वितन्तुकाद्युत्पत्तिरिति कल्पनायां गौरवप्रासादिति चेत् — न । त्रितन्तुकादावनन्यथासिद्धान्वयव्यतिरेकानुविधायिना तथैव हेतुत्वसिद्धेः । त्रितन्तुकपटादेरपि तन्तावेवोत्पत्तिः; युगपत् तन्तुत्रयादिसंयोगे तन्तावेव तदुत्पत्त्यापत्तेर्दर्शनात् ।

---

द्व्यणुकत्वस्येति । परमाणुद्वयसंयोगे जायमानं द्रव्यं द्व्यणुकं भवतीति [1]द्व्यणुकत्वस्यार्थसमाजतयोत्पन्नस्य कार्यतानवच्छेदकत्वेन त्रिभिः परमाणुभिः त्र्यणुककाले द्व्यणुकापादनायोगादित्यर्थः । ननु तर्हि मा ऽस्तु परमाणुत्रये द्व्य[त्र्य]णुकोत्पत्तिकाले द्व्यणुकापादनम्; परमाणुद्वये द्व्यणुकोत्पत्ति[2]काले तु त्र्यणुकोत्पत्तिः कुतो नेत्यत आह — त्र्यणुकानुत्पत्तिस्त्विति अपकृष्टपरिमाणसामग्रीमेव दर्शयति — द्वित्वस्येति । यत्र समवायेन जन्याणुत्वावच्छिन्नं द्रव्यं तत्र समवायेन द्वित्वमिति व्याप्तिसत्वात् द्वित्वस्य व्याप्यत्वसंबन्धेन जन्याणुत्वं प्रति हेतुत्वादित्यर्थः । न च स्वाश्रयसमवेतत्वेनैव द्वित्वस्य हेतुत्वमस्त्विति वाच्यम् । [3]द्विकपालकघटादावपि जन्याणुत्वापत्तेः । द्वित्वस्य व्याप्यत्वसंबन्धेन तु घटत्वावच्छिन्ने सत्त्वात् नातिप्रसङ्ग इति । नन्वस्तु परमाणुद्वये त्र्यणुकानुत्पत्तिः अपकृष्टपरिमाणसामग्र्या प्रतिबन्धात् । परमाणुत्रये तु कुतस्तदनुत्पत्तिरत आह—तत्तद्व्यणुकात्मक इति ॥

अथेत्यादि । एवं — परमाणुत्वादिना द्व्यणुकादिहेतुत्वे ऽपि । तथा [तथैव] हेतुत्व इति । तुन्तुत्वादिना पटादिहेतुत्वसिद्धेरित्यर्थः । [4]तन्त्वन्तरसंयुक्तद्वितन्तुकपटादेरपि त्रितन्तुकपटादिसमवायित्ववादिनः तवापि मते तन्तुद्वयसंयोगादेः द्वितन्तुकादिक्रमेणोत्पन्नस्य

---

1 द्व्यणुकस्या° क.
2 'काले तु त्र्यणुकोत्पत्तिः' नास्ति क.
3 द्विकपालघटा° क.
4 'तन्त्व .... ... साम्यमित्यर्थः' इत्यन्तस्त्रुटितः ग.

द्वितन्तुकादिक्रमेणोत्पन्नचतुरादितन्तुकपटस्य द्वितन्तुकासमवायिकारणसंयोगनाशात् द्वितन्तुकादिनाशक्रमेण नाशान्तरः [नाशानन्तरं] पुनः द्वितन्तुकादिक्रमेणोत्पत्तिरिति तत्रापि गौरवं [गौरव] साम्यम्। तन्तौ पट इदि प्रतीतेः भ्रमत्वायोगाच्च। न हि 'पटे पट' इति कश्चित् प्रत्येति । अत एव तन्त्वाकाशादिसंयुक्तेन पटाकाशादिविजातीयसंयोगत्वेनेत्यादिकार्यकारणभावोऽपि सूपपादः। पटादिजनक-विजातीयसंयोगं प्रति तन्तुत्वादिना हेतुत्वात् तन्तावेव पटोत्पत्तिरित्याहुः।

एतेन तन्तुभ्यां तदारब्धद्वितन्तुकपटेन च तन्त्वन्तरसंयोगे त्रितन्तुकोत्पत्तिः; एवं चतुस्तन्तुकादेरपीत्यारभ्यारम्भकवाद एवमुक्तं [एव युक्त] इत्यपास्तम्।

---

त्रिचतुरादितन्तुकपटस्याद्यतन्त्वपकर्षजनितद्वितन्तुकासमवायिसंयोगनाशद्वितन्तुकनाशोत्पत्ति – तत्समवेतत्रितन्तुकादिनाशक्रमेणावश्यकः। समवायिनाशस्य च द्रव्य नाशकतायाः सर्व-सिद्धत्वात्। (अथ) तत्रैवान्तरापुनरुपलभ्यमानद्वितन्तुकत्रितन्तुकादीनामुत्पत्तिरपि वाच्येति कल्पनागौरवमस्तीति साम्यमित्यर्थः। ननु तन्तुत्वेनैव पटहेतुत्ववादिनो दशतन्तुकादिपटस्थले [1]प्राथमिकतन्तुद्वयसंयोगात् द्वितन्तुकपटोत्पत्त्यनन्तरमेकैकतन्तुसंयोगात् द्वितन्तुकादेर्नाशात् त्रितन्तुकाद्युत्पत्तिः, पुनरेकैकतन्तुवियोगे त्रितन्तुकादिनाशो द्वितन्तुकाद्युत्पत्तिरिति कल्पना-गौरवं स्यादत आह – द्वितन्तुकादिक्रमेणेति। किं च तव मते 'तन्तौ पट' इति प्रतीतेर्भ्रमत्वं वाच्यम्। तच्चायुक्तम्; 'पटे पट' इति प्रतीत्यसत्त्वादित्यत आह – तन्ताविति। अत एव – तन्तुत्वेन पटत्वेन कार्यकारणभावादेव।

पटादिकं तज्जनकसंयोगं प्रति च तन्तुत्वादिनैव हेतुत्वं व्यवस्थाप्यारभ्यारम्भकवादमपि दूषयति – एतेनेति। पटादिजनकविजातीयसंयोगस्य तन्तुष्वेव [2]सम्भवेनेत्यर्थः।

---

1 एकैकतन्तुसंयोगे द्वितन्तुक° ग.

2 'सम्भवात्, द्वितन्तुकपटो त्रितन्तुकपटाद्युत्पत्त्य°' इत्यधिकः क.

नन्वेवमपि द्वितन्तुकपटादिमतोरेव तन्त्वाद्योः तन्त्वन्तरादियोगात् त्रितन्तुकपटाद्युत्पत्तिरस्तु। न च द्रव्यवति द्रव्योत्पत्तिस्वीकारे उत्पन्नद्वितन्तुकस्य तत्रैव पुनरुत्पत्तिः स्यादिति वाच्यम्। तत्प्रागभावस्य नष्टत्वात् तयोः संयोगान्तराभावात् द्वितन्तुकपटस्तु तदा नोत्पद्यते; तत्र संयोगान्तरस्य पूर्वपटध्वंसस्य वा हेतुत्वात्। अन्यथा प्रथमं तत्रापि कथं नाग्रिमद्वितन्तुकोत्पत्तिः। एवं च दशतन्तुकादेः चरमतन्तुसंयोगवियोगक्रमेण नाशे नवतन्तुकाद्युपलब्धिर्निराबाधा। प्रथमं तु संयोग – [1]वियोगक्रमेण नाशे तन्तावेव दशतन्तुकनाशानन्तरं नवतन्तुकोत्पत्तिः।

अस्तु वा दशतन्तुकोत्पत्तिकाल एव चरमतन्तुपर्यन्ते द्वितीयतन्तुमादाय नवतन्तुकोत्पत्तिः। न चै[2]वं तव प्रतिलोमक्रमेणानन्तपटकल्पनापत्तिः; द्वितीयमादाय नवतन्तुकस्येव, तृतीयमादायाष्टतन्तुकस्यापि स्वीकर्तव्यत्वादिति वाच्यम्।

---

पुनः स एव शङ्कते – नन्विति। एवमपि – तन्तुत्वेन पटत्वेनैव कार्यकारणभावेऽपि। निराबाध इति। नवतन्तुकादीनां [3]द्वितन्तुकपर्यन्तानां [4]पूर्वोत्पन्नानामेव सत्त्वादुपलब्धिर्निराबाधेत्यर्थः। ननु दशतन्तुकादिस्थल एव प्रथमादितन्तुसंयोग[5]वियोगक्रमेण नवतन्तुकाद्युपलब्धिर्न स्यात्। तेषामनुत्पन्नतया सत्त्वस्य वक्तुमशक्यत्वादत आह – प्रथमादि [प्रथमं] इति।

अनुलोमक्रमोत्पन्नद्वितन्तुकादिन्यायसाम्यादाह – अस्तु वेति। अग्रे इति प्रथमादितन्तुसंयोगवियोगक्रमेण दशतन्तुकादिनाशान्तरमित्यर्थः।

---

1 'वियोग' नास्ति अ.
2 'एवं' नास्ति आ.
3 'द्वितन्तुकपर्यन्तानां' नास्ति ग.
4 सर्वोत्पन्नाना° क.
5 'वियोग' नास्ति क.

[1]यः त्वयाऽग्रे स्वीक्रियते तस्यैव मया प्रथमतः स्वीकारात्। नवतन्तुकादौ दशतन्तुकादिध्वंसस्य हेतुत्वे [2]मानाभावत्। अन्यत्र प्रागभावाभावेन तद्विरहोपपत्तेः।

अथ व्यक्तिस्थानीयापत्तिविरहात् द्रव्यत्वावच्छिन्ना [3]भावस्य कारणत्वेनानतिप्रसङ्गे किमनन्तकार्यकारणकल्पनेनेति चेत् - न। दशाद्यवच्छेदेन पटादिमत्यपि तदुत्पत्त्यापत्तेः; दीर्घतन्त्वादौ वस्त्रयुगाद्यनुत्पत्त्यापत्तेश्च।

अस्तु वा द्रव्यत्वावच्छिन्नाभावस्य जन्यद्रव्यत्वावच्छिन्ने हेतुत्वं कर्मणः संयोग इव तथापि द्वितन्तुकादिमति त्रितन्तुकाद्युत्पत्तिर्निराबाधा। युक्तं चैतत् — अन्यथा द्वितन्तुकपटादिमति तन्त्वन्तरादिसंयोगादेकतन्तुपटोत्पत्तेर्दुर्वारत्वापत्तेः।

---

पुनः शङ्कते – अथेति। व्यक्तिस्थानीय इति। सामग्र्याः कार्यतावच्छेदकावच्छिन्नोत्पत्तिं [4]प्रति व्याप्यत्वस्यैवोपगमात् व्यक्तिस्थानीयापत्तेर– [5]दूषणत्वात् तत्पटादेरन्यत्र तन्तूत्पत्त्यापादनं न संभवत्येव। द्रव्यवति द्रव्योत्पत्तिस्तु द्रव्यत्वावच्छिन्नाभावहेतुत्वेनैव निरस्यते [निरस्ये] – त्यनन्तविध प्रागभावादिकल्पनमनुचितमिति [6]समुदितार्थः। दशादि इति। पटादिमत्यपि तन्त्वादौ दशाद्यवच्छेदेन द्रव्यत्वावच्छिन्नाभावसत्त्वात् पटोत्पत्त्यापत्तिरित्यर्थः। ननु निरवच्छिन्नविशेषणतया द्रव्यत्वावच्छिन्ना – भावो [7]हेतुरिति नोक्तदोष इत्यत आह – दीर्घतन्त्वादाविति।

ननु दीर्घतन्त्वादावपि वस्त्रयुगं नोत्पद्यते; कि न्त्वेकमेवेत्यस्वरसादाह – अस्तु वेति। तथापीति। द्वितन्तुकादिमति तन्तुद्वये तृतीयतन्तुसंयोगात् त्रितन्तुकपटोत्पत्तिः स्यादेव।

---

1 यतः अ.
2 भाना° आ.
3 '°भावस्य .... ... दशाद्यवच्छेदेन' इत्यन्तस्त्रुटितः अ.
4 'प्रति' नास्ति क.
5 °दूषणत्वाय क.
6 समुचितार्थः क.
7 °भावहेतु° ग.

अत्रोच्यते – ‘एकः पट’ इति प्रतीतेः लोके स्मृत्यादौ तथा व्यवहाराच्च [1]पटस्यैक्यसिद्धिः। न हि नानापटाः प्रतीयन्ते, व्यवह्रियन्ते वेति। अङ्गुली-भूतलसंयोगावच्छेदेन पाण्याद्यनन्तसंयोगानुपलब्ध्यादिवत् भविष्यतीति चेत् – न। तत्र युक्त्या तन्नानात्वे तदनुपलब्ध्यादेः सादृश्यादिवशादुपपत्तेः। न चात्रापि तथा, महापटकाले द्वितन्तुकादेः स्वीकारे तन्त्वाकाशादिसंयोगादितोऽनन्त-द्वितन्तुकाकाशसंयोगादेः द्वितन्तुकत्रितन्तुकादेः कर्मजसंयोगद्वित्वत्रित्वादेः बाह्याद्यनन्तसंयोगादेः कल्पनामपेक्ष्य तेषां नाशस्य क्वचिदन्येषां कल्पनस्यैव लाघवेनौचित्यात्। समवायेन जन्यद्रव्यस्य द्रव्यप्रतिबध्यत्वे लाघवाच्च। [2]निरवच्छिन्नविशेषणतया तदभावस्य कारणत्वाददोषः। वस्त्र – पुष्पादि [युग्मादि] व्यवहारस्तु भाविपरतयोपपाद्यः। एकतन्तुकादिविरहस्तु निर्द्रव्यस्य विजातीय-संयोगसंबन्धेन जन्यद्रव्यहेतुत्वात्।

---

निरवच्छिन्न विशेषणतयाऽपि द्रव्यत्वावच्छिन्नाभावस्य तृतीयतन्तौ सत्त्वादिति भावः। अन्यथा – द्रव्यवति सर्वथा द्रव्यानुत्पत्तौ।

अत्रोच्यत इति। शततन्तुकादिमहापटस्थले पूर्वोत्पन्नद्वितन्तुकाद्यवस्थितिरस्त्येवेति पूर्वपक्षे सिद्धान्तो उच्यत इत्यर्थः। एक इति। अत्र शततन्तु – [3]कादाविन्यादिः। लौकिकव्यवहारस्य भ्रातृ[भ्रान्त] व्यवहारत्वशङ्कया साधकत्वासम्भवादाह – स्मृत्यादाविति। तथा चैकः पट इति लौकिकशास्त्रीयप्रतीतिव्यवहाराभ्यां पटैक्यसिद्धिः। अन्यथा शततन्तुकदानेऽनेकपटदानफलं स्यादिति भावः। पटस्यैक्यप्रतीतिव्यवहारौ दर्शयित्वा तन्नानात्वे तदसत्त्वं दर्शयति – न हीति। सदृष्टान्तं तन्नानात्वं शङ्कते – अङ्गुलीति। न चात्रेति। शततन्तुकादावपि द्वितन्तुकाद्यनुपलब्धेः सादृश्यादिवशादुपपत्तिः न चेत्यर्थः।

---

1 पटस्यैव सिद्धिः  अ.
2 देशावच्छिन्न°  अ.
3 °कावि  ग.

एतेनैकस्यैव तन्तोः ऋजुकुटिलाभावात् यः पटो जायते तदसमवायिकारणं न तन्तुसंयोगस्य तत्तन्तोः स्वस्मिन् स्वावयवे वा संयोगासम्भवात्। किं तु तत्तन्तोरवयवानामंशूनां संयोग इति तच्छाल्यंशुष्वेव स पटो जायते। एकतन्तुकव्यवहारस्त्वेकतन्तोरवयवेष्वेव जातत्वात्।

अस्तु वा शिरसि शरीरसंयुक्तः पाणिरिति प्रत्ययादन्यावयवावच्छेदेनावयवसंयोगोऽप्यवयवे; तथा चांशु[1]तन्तुसंयोग एव तत्पटस्यासमवायी। समवायी त तन्तुरेव, [2]परिमाणप्रकर्षस्त्वसमवायिसंयोगाश्रयबहुत्वादिति मतमप्यपास्तम्। निर्द्रव्यसंयोगस्य तत्रासम्भवात्। वेगाद्यभिघाताभावे महातन्तौ खण्डतन्तुच्छेदे तत्पटोत्पत्तेः। अन्यथा संस्थानसारूप्यात् भ्रान्त एव पटप्रत्यय इत्यलमप्रकृतेन॥

---

तेषां — द्वितन्तुकादीनाम्। क्वचित् — चरमतन्तुसंयोगवियोगादौ। अन्येषां — नवतन्तुकादीनाम्। ननु महापटस्थले द्वितन्तुकादिनाशकल्पने क्वचिदन्येषां कल्पने गौरवमत आह— समवायेनेति। तथा च द्वितन्तुकादिनाश एव महापटोत्पत्तिः, नान्यथेति भावः॥ ननु जन्यद्रव्यं प्रति द्रव्याभावस्य हेतुत्वेऽपि पटवति तन्तु — [3]पुञ्जे दशाद्यवच्छेदेन द्रव्याभावसत्त्वात् पटान्तरोत्पत्तिः स्यादत आह — निरवच्छिन्न इति। ननु निरवच्छिन्नविशेषणतया द्रव्याभावस्य हेतुत्वे दीर्घतन्त्वादौ वस्त्रयुगं न स्यादत आह — वस्त्रयुग्मादीति। तादृशविशेषणतया द्रव्याभाव — [4]हेतुत्वपक्षेऽपि द्वितन्तुकादिमतितन्त्वन्तरसंयोगादेकतन्तुकपटोत्पत्तिं निरस्यति — एकतन्तुकादीति।

[5]पटं प्रति तन्तुत्वेनैव समवायित्वं, तन्तुसंयोगत्वेनैव चासमवायित्वमिति नियममभ्युपगन्तॄणामेव युक्तिविशेषणं प्रागुक्तमद्युक्त्यैव दूषयितुमुपन्यस्यति — एतेनेत्यादि॥

---

1 '°तन्तु' नास्ति अ.
2 अपरि° अ.
3 °पुञ्जवशाद्य° क.
4 °हेतुउभयपक्षेऽपि क.
5 'पटं .... .... एतेनेत्यादि' इत्यन्तस्त्रुटितः ग.

अत्राचार्याः – (कि. पृ. ६४) परमाणुभिरेव बहुत्वोपेतैः महद्‌व्यारम्भो[म्भे] गोघटादिरप्यारभ्यताम्; तथा चान्तरालिकाल्पाल्पतरकार्योपलम्भविरोधः। त्र्यणुकवच्च गोघटादिरप्यनुपलब्ध – [1]रेखोपरे कवः[ख कः] स्यात्। इत्थं च संस्थानभेदानुपपत्तौ तन्नियतघटत्वाद्यपि न स्यात्।

अथ द्व्यणुकैः महदारम्भेऽपि समानोऽयमनुयोगः। द्व्यणुकैः बहुत्वोपेतैः त्र्यणुकमेवारभ्यत इति चेत् – परमाणुभिरपि बहुत्वोपेतैः त्र्यणुकमारभ्यत इत्यपि तुल्यम्।

[2]अत्रोच्यते – [3]यथाऽवयवावयविभावः परमाणुषु विश्राम्यति तथाऽवयवसङ्ख्याप्रकर्षोऽपि द्वित्वे विश्राम्यति। एकमात्रस्यारम्भकसंयोगाभावे नानारम्भकत्वात्। तथा च द्वाभ्यां परमाणुभ्यामारब्धं द्व्यणुकं, त्रिभिर्द्व्यणुकैः त्र्यणुकं, द्व्यणुकाभ्यां तु नारम्भः, प्रयोजनाभावात्। तदारब्धे महत्वायोगादित्याहुः। द्व्यणुकाभ्यामारब्धेऽपि द्विकपालघट इव महत्वे[महत्वं] – [4]सम्भवतीत्यनुसन्धेयम्।

---

[5]द्वितन्तुकव्यवहारं मुख्यत्वे – [6]नैवोपपादयितुं कल्पान्तरमाह – अस्तु वा शिरसीति। [7]शिरोवच्छेदेनेत्यर्थः। 'एतेने' त्यस्यार्थं विवृणोति – निर्द्रव्य इति। तत्र–तन्त्ववयवेषु॥

अत्राचार्या इति। "त्रिभिः परमाणुभिरेव त्र्यणुकमारभ्यतामि"ति पूर्वपक्षे उदयनाचार्याः समादधत इत्यर्थः। [8]प्रयोजनाभावादिति। यत्साक्षात्कारात् सुखाद्युत्पत्तिस्तत्प्रयोजनम्,

---

1 श्रोपरसः स्यात् अ.
2 'अत्रोच्यते' नास्ति आ.
3 'यथा .... .... द्वित्वे विश्राम्यति' इत्यन्तस्त्रुटितः अ.
4 °तीति ध्येयम् अ.
5 एकतन्तुकव्यवहारस्य ग.
6 'एव' नास्ति ग.
7 'शिरोवच्छेदेनेत्यर्थः' नास्ति ग.
8 'प्रयो .... .... द्व्यणुकाभ्यामिति' इत्यन्तस्त्रुटितः ग.

 

इदं तु चिन्त्यम् – [1]परमाणुद्वाभ्यामारब्धेऽप्यस्तु महत्त्वम्; परिमाणत्वेनैव महत्त्वासमवायिकारणत्वौचित्यात्। अस्तु वा द्विकपालकघटमहत्त्व इव द्वित्वमेव त्र्यणुकमहत्त्वासमवायिकारणम्। न च साक्षात्परम्परावयवगतमहत्त्वमेव तद्दृष्टान्तस्य हेतुः गौरवात्। अस्तु वा त्रिभिः परमाणुभिरेव त्र्यणुकं, परमाणुभ्यामनारम्भस्तु सिद्धान्तिनां द्व्यणुकाभ्यामनारम्भ इव मानाभावात्। अवान्तराणुपरिमाणभेद-कल्पने गौरवात्। फलबलेन त्रयाणामेव युगपद्द्विजातीयसंयोगकल्पनादिति।

वस्तुतो गवाक्षरन्ध्रे दृश्यमानानामेव द्व्यणुकत्वमेव युक्तम्। [2]अणु-द्वयार–ब्धे [ब्धत्वे] लाघवादिति। [3]मीमांसकास्तु त्रुटावेव विश्रामात् त्रुटिमहत्त्वं नित्यमिति न तत्कारणचिन्तनम्। न च गगनमहत्त्वावधि – कोत्क [कापक]र्षस्य जन्यतावच्छेदकत्वे कथं तन्नित्यत्वम्। त्रुटिमहत्त्वावधिको[4]त्कर्षेण साङ्कर्यापत्त्या तस्यानुगतस्याभावात् त्रुटिमहत्त्वावधिकोत्कर्षस्य तज्जन्यतावच्छेदकत्वात् गगन-महत्त्वादेरपि जन्यत्वापाताच्चेत्याहुः।

---

द्व्यणुकाभ्यामारब्धस्य तु महत्त्वाभावेन साक्षात्कारासम्भवात् न सुखाद्युत्पादकत्वमिति निष्प्रयोजनत्वम्। गगनादेरपि सप्रयोजनशब्दादिनिष्पादकत्वात् तत्त्वमक्षतमेवेति भावः। द्व्यणुकाभ्यामप्यारम्भं व्यवस्थापयति – द्व्यणुकाभ्यामिति।

युक्तिबलादाह – इदं तु चिन्त्यमिति। ननु परिमाणत्वेनैव महत्त्वासमवायिकारणत्वे तूलपिण्डे घटादौ च तुल्यपरिमाणापत्तिरित्यत आह – अस्तु वा द्विकपालकेति। गौरवादिति।

---

1 परमाणुभ्यामनारब्धे अ.
2 अस्तुद्वया° अ.
3 'मीमांसकास्तु त्रुटावेव विश्रामात्' नास्ति आ.
4 °त्कर्षस्य सा° इ.

इन्धनादावपि वह्न्यारम्भकपरमाणुसत्त्वं कथं, अन्यथा स्वल्पवह्नियोगात् तूलराश्यादौ महावह्न्युत्पादः, कथं वा पाषाणेन्धनादिसङ्घर्षेण वह्न्युत्पादः। तथा च परमाणोरतीन्द्रियत्वमुचितम्। योग्यानामुष्णस्पर्शभास्वररूपवत्तेजस्त्र्यणुकानां तत्र [1]सत्त्वे महान्धकारे तत्संसर्गं [तत्संसृष्ट] इन्धनानां तेषां च प्रत्यक्षतापत्तेः त्र्यणुकं न व्यञ्जकमिति चेत्—तदेव परमाणुः महतो व्यञ्जकत्वनियमादित्यनुभवावलम्बी नूतनः पन्थाः।

अतितप्ततैलादाविवानुद्भूतरूप—वह्नि [वह्ने] रभिभूतवह्नेरेव वा तत्र महावह्न्युत्पाद इत्यप्याहुः॥

## अवयविसाधनम्

अवयविनि मानाभावइति बौद्धाः। तथा हि—विलक्षणसंस्थान-विशिष्टैरणुभिरेव घटादिव्यवहारोपपत्तौ किमतिरिक्तावयविना, न चाणवो योग्याः,

---

कपालद्वयगतैकद्वित्वापेक्षया महत्त्व—(द्रव्य)स्य हेतुत्वे गौरवादित्यर्थः। [2]परमाणुभिरेव-त्र्यणुकोपपत्तौ मध्ये निष्प्रयोजनद्व्यणुककल्पनायां गौरवादाह अस्तु वा त्रिभिरिति।

[3]अतिलाघवादाह—वस्तुत इति। [4]साङ्कर्यापत्त्येति। गगनमहत्वावधिकापकर्षत्रुटि-महत्वावधिकोत्कर्षयोः त्रुटौ गगने च परस्परपरिहारेण वर्तमानयोरुभयोरपि घटादिमहत्त्वे वर्तमानत्वात् साङ्कर्यापत्त्येत्यर्थः। तज्जन्यतावच्छेदकत्वात्—महत्वजन्यतावच्छेदकत्वात्।

मीमांसकमतं दूषयति—इन्धनादावपीति।

प्राचां मतमाह—अतितप्तेति।

---

1 'सत्त्वे' नास्ति इ.
2 परमाणुभिरेव .... मध्ये' नास्ति ग.
3 'अति .... .... वस्तुत इति' नास्ति ग.
4 साङ्कर्यापत्तेरिति क.

घटादयस्तु योग्या इति विशेषः । दूरादयोग्यानामपि केशादीनां सजातीय-संच[व]लने योग्यत्ववत्तद्योग्यत्वोपपत्तेरिति चेत् - न । अणूनां स्वभावतोऽयोग्यानां सजातीय – [1]संवलनेन योग्यत्वासम्भवात् । केशादीनां तु न स्वभावतोऽयोग्यत्वम्; किं तु दूरत्वेनेति । न च परेषां क्षणभङ्गवादिनामयोग्यादपि योग्य परमाणोरु[2]त्पत्तिरस्तु, द्व्यणुकात् त्र्यणुकवदिति वाच्यम् । क्षणभङ्गनिरासात् परमाणूनां नित्यत्वात् महत्त्वोद्भूतरूपवत्त्वेनैव द्रव्यस्य योग्यत्वात्; अन्यथा पिशाचादेरपि प्रत्यक्षतापाताच्च । तथा च पारमर्षं सूत्रम् —

"नातीन्द्रियत्वादणूनामिति" इति संप्रदायः ।

अत्र नव्यनास्तिकाः – सन्त्वणवो नित्याः, तथापि संयुक्ताणुद्वयं द्व्यणुकं, संयुक्तानुषट्कं त्र्यणुकं, संयुक्ताणुचतुर्विंशतिकं चतुरणुकमित्यादयस्तु लौकिक-विषयतया द्रव्यसाक्षात्कारत्वावच्छिन्ने त्र्यणुकत्वादिघटकसंयोगानां पिशाचादि-घटकसंयोगभिन्नानां वैजात्येन कारणत्वात् न केवलाणुद्व्यणुकादेः प्रत्यक्षता । न च वैजात्यकल्पने गौरवं, त्वया द्रव्यारम्भकतावच्छेदकत्वेनाभिमतस्य वैजात्यस्यैव मया द्व्यणुकपिशाचारम्भकत्वेन त्वदभिमतसंयोगव्यावृत्तिस्वीकारात्, तव

---

नित्यां पृथिवीं साधयित्वा अनित्यां साधयितुं पूर्वपक्षमाह – अवयविनीति । क्षणभङ्ग इति । 'स एवायमि'ति प्रत्यभिज्ञानान्यथानुपपत्त्या क्षणभङ्गस्य शास्त्रे निरासादित्यर्थः । पारमर्षं सूत्रम् – अक्षपादप्रणीतं सूत्रम् । विजातीयसंयोगविशिष्टपरमाणुपुञ्ज एव [3]घटादिरिति पूर्वपक्षितं न संभवति; परमाणूनामतीन्द्रियत्वात् घटादेश्च प्रत्यक्षत्वादिति सूत्रार्थः ॥

---

1 चलनेन अ. 3 घटादिभिरिति क.

2 °त्पत्तिस्त्ववत् द्व्यणु° इ.

तूद्भूतरूपादिकल्पने गौरवाच्च । न च विजातीयसंयोगस्य द्रव्यत्वमेव जन्यतावच्छेदकं, लाघवात्; न तु द्रव्यसाक्षात्कारत्वमनन्तावयवि – तत्प्रागभावध्वंसादिकल्पनागौरवं तु फलमुखत्वात् न दोष [1]इति वाच्यम् । फलमुखगौरवस्यापि क्वचिद्दोषत्वात् जन्यद्रव्यमपेक्ष्य द्रव्यलौकिकसाक्षात्कारत्वस्यैव लघुत्वात्, त्वयोद्भूतरूपमहत्त्वयोः तदवच्छिन्नहेतुत्वस्य कल्प्यत्वाच्च । तादृशसंयोगविशिष्टवृत्तित्वादिकं तु गुणादिप्रत्यक्षे तन्त्रमिति केवलाणुद्व्यणुकादिगुणाप्रत्यक्षत्वेऽपि न त्र्यणुकादिगुणाप्रत्यक्षत्वम् ।

एतेन योग्यानां रूपादीनां [2]कर्मणां [3]चाणुसमवेतत्वादप्रत्यक्षापत्तिरित्यपास्तम् । अणुगुणानामपि केषांचित् योग्यत्वात् । न च तन्तूनामेव पटत्वे

---

[4]'फलमुखगौरवस्यापीति । यथाऽवयवरूपत्वेनावयविरूपत्वेन च कार्यकारणभावग्रहेऽप्रामाणिकानन्तरूपधाराप्रसक्तौ तद्वारणाय रूपं प्रति रूपत्वेन प्रतिबन्धकत्वमपि कल्प्यत इति फलमुखगौरवस्यापि क्वचिद्दोषत्वमित्यर्थः । तादृशसंयोग इति ।

*(त्र्यणुकत्वादिघटकसंयोगविशिष्टपरमाणुवृत्तित्वं त्र्यणुकादिगुणकर्मादिप्रत्यक्षे तादृशसंयोगविशिष्टपरमाणुवृत्ति कुतो नेत्यत आह – अणुकानुत्पत्तिस्त्विति । अपकृष्टपरिमाणसामग्रीमेव दर्शयति – द्वित्वस्येति । यत्र समवायेन जन्याणुत्वावच्छिन्नद्रव्यं तत्र समवायेन द्वित्वमिति व्याप्तिसत्त्वात् । द्वित्वस्य व्याप्यत्वसंबन्धे जन्याणुत्वं प्रति हेतुत्वादित्यर्थः ।

---

1 'इति वाच्यम्' नास्ति इ.

2 'गुणानां' इत्यधिकः आ.

3 चाणु° आ.

4 'फल .... .... प्रतीति विषयोऽस्त्वित्यर्थः' इत्यन्तस्त्रुटितः ग.

---

*कुण्डलितग्रन्थानुसारमूलपाठो उपलब्धमातृकासु कुत्रापि नोपलभ्यते ।

तन्तुषु पट इत्यादिधीर्न स्यात्; स्याद्वा तन्तुरित्यादिकमपीति वाच्यम्। फलबलेन विलक्षणसंयोगवत्वरूपतन्तुत्वादेरिव विलक्षणसंयोगवत्वादिरूपपटत्वादिविशिष्टाधारतावच्छेदकत्वस्वीकारात् 'पट उत्पन्नः' 'पटो विनष्ट' इत्यादिप्रत्ययस्तु 'शिखी विनष्ट' इत्यादिप्रत्ययवत् विशेषणस्य पटत्वादिघटकसंयोगस्योत्पादविनाशविषयकः ।

एतेनोत्पादादिप्रतीतेः परमाणुपुञ्जोत्पादादिस्वीकारे एकस्य पटस्योत्पादादिकल्पनैव युक्ता। परम्परया संयोगनशः [1]तत्प्रतीतिविषय इति चेत् — पटादिनाशदशायां विद्यमानस्यापि तन्तुत्वादेः नाशप्रत्ययापत्तिः। परम्परया संयोगनाशस्य तन्त्वादावपि सत्त्वादित्यपास्तम्। 'तन्तुः नष्ट' इति प्रतीतेर्विशेषणीभूततन्तुत्वघटकसंयोगनाशविषयकत्वात्। अन्यथा 'शिखी विनष्ट' इतिवत् शिखाविनाशकाले [2]विद्यमान दण्डशालिनि 'दण्डी नष्ट' इति प्रत्ययापत्तेः तत्रापि दुर्वारत्वात्। 'एकः पट' इति प्रतीतिस्तु 'एकं वनमि'तिवत् समूहैकत्वविषया ।

एतेन 'पटो महानि'ति प्रतीत्यनुपपत्तिः; अणूनां महत्वासम्भवादिति परास्तम्। संयोगविशेषस्यैव महत्वरूपत्वात् महत्वत्वस्य संयोगत्वव्याप्यत्वादिति

---

न च स्वाश्रयसमवेतत्वेनैव द्वित्वस्य हेतुत्वमस्त्विति वाच्यम्। द्विकपालघटादावपि जन्याणुत्वापत्तेर्द्वित्वस्य व्याप्यत्वेन संबन्धेन वृत्तित्वं गुणत्वादिप्रत्यक्षे तन्त्रमित्यर्थः ।।)

केषांचित् — त्र्यणुकत्वादिघटसंयोगसमानाधिकरणानाम् ।

---

1 'तत्प्रतीति .... .... संयोगनाशस्य' इत्यन्तस्त्रुटितः आ

2 'विद्यमान' नास्ति इ.

'महान् धान्यराशिरि' ति प्रतीतिरित्थमेव सूपपादा। त्रुटावेव विश्रामे त्रुटिपुञ्ज एव घटादिरिति नानुपपत्तिलेशोऽपि ।

अथ ममांशुक्रिययांऽशुनाशात् तन्तुनाशात्पट नाश इति संभवति; न तु तवापीति चेत् – न। विलक्षणसंयोगवत् तावदणुपुञ्जात्मकस्य पटस्य यत्किंचित्संयोगनाशेऽपि नाशादित्याहुः ॥

[1]तदसत्। विलक्षणसंयोगवत्तावदणुत्वस्य पटत्वादिरूपे तावत्वस्य लक्षत्वादिरूपस्य प्रतिसन्धानं विना पटादिप्रत्ययो न स्यात्; विलक्षण – [2]संयोगवत्त्वमेव [3]पटत्वतन्तुत्वादिकमिति चेत् – न । [4]घटपटाद्यारम्भकतन्तुकपालादेरारम्भकस्यांशुकपालादेः विनाशेऽपि तव मते [5]घटपटाद्यारम्भकविजातीयसंयोगसत्त्वे पटादिप्रतीत्यापत्तेः। न च तदा तद्विजातीयसंयोगनाशः तदवच्छेदकावच्छेदेन तन्तुकपालादि क्रियाभावात्। किं च तन्तुसंयोगात् 'पट उत्पन्न' इत्यादिप्रतीतिव्यवहारा याथार्थ्यापत्तिः। अपि च तन्त्वादिभेदग्रहं विना तत्संयोगग्रहाभावेऽपि पटत्वदिप्रतीतेर्न विलक्षणसंयोगवत्वं पटत्वादिकम ॥

अथैवं [अपि] घटत्वादेर्जातित्वानुपपत्तिः । मृत्सुवर्णरजतपाषाणादिघटेषु मृत्सुवर्णत्वादिसांकर्यादिति चेत् – न । मृत्सुवर्णत्वादिव्याप्यनानाघटत्वादे-

---

परम्परयेति। स्वप्रतियोगिसंयोगाश्रयत्वसंबन्धेन पटत्वघटकसंयोगनाश एव 'पटो नष्ट' इति प्रतीतिविषयोऽस्त्वित्यर्थः।

---

1 'तदसत्' नास्ति  इ.
2 °संयोगवत्तावदणुत्वस्य  अ.
3 'पटत्व .... .... चेत् न' इत्यन्तस्त्रुटितः  अ.
4 पटघटाद्या°  अ.
5 संयोगवत्वादिकमेव पटतन्तुत्वादिकमेवेति चेन्न। पटघटा° इत्यधिकः  अ.

स्वीकारात्। न च घटत्वादिव्याप्यं मृत्त्वमेव नानाऽस्तु – तर्हि नानामृत्सुवर्णत्वादेः कल्पनापत्तेः; कुलालादिस्वर्णकारादिजन्यतावच्छेदकमृत्सुवर्णत्वादिव्याप्यनानाघटत्वादेरावश्यकत्वात्। न हि सुवर्णघटादौ [1]चक्रादिकं, मृद्घटादौ लौहवर्तुलादिकं हेतुः। अनुगतधीस्तु कथंचित् सौसादृश्यात्, घटपदं तु नानार्थम्॥

यत्तु – घटत्वादिकमेकत्ववृत्ति कार्यकारणतावच्छेदकं मृत्वादिकमेव वा; एकत्ववृत्तिघटत्वादिकं तु [वा] सौवर्णादावप्युपष्टम्भक पृथिवीवृत्तिकार्यकारणभावानां

---

प्राचीननवीनबौद्धमतनिरासेनातिरिक्तावयविनं व्यवस्थाप्य शङ्कते – अथेति। एवमपि – अवयविनोऽतिरिक्तत्वेऽपि। ननु घटत्वादेर्नानात्वे सर्वत्र घटे घटोऽयमित्यनुगतधीर्न स्यात्; न स्याच्च घटादिपदस्यै – [2]कार्यत्वम्। प्रवृत्तिनिमित्तभेदादित्यत आह – अनुगतधीस्त्विति॥

घटत्वादेः मृत्सुवर्णत्वादिना सङ्करपरिहाराय कस्यचित् मतं दर्शयति – यत्त्विति। एकत्ववृत्ति इति। तथा च मृत्त्वादिना न सङ्कर इति भावः। अवच्छेदकमिति। स्वाश्रयैकत्वसमवायित्वेन दण्डवृत्तिदण्डत्वादि घटकारणतावच्छेदकं तादृशसंबन्धेन घटवृत्तिघटत्वादि, दण्डकार्यतावच्छेदकमित्यर्थः। विनिगमनाविरहादाह – मृत्वादिकमेव वेति। साक्षात्संबन्धेन कार्यकारणवृत्तिधर्मस्यैव कार्यकारणतावच्छेदकत्वमुचितम्; अन्यथा अतिप्रसङ्गात्। स्वाश्रयैकत्वसमवायसंयुक्तत्वेन [स्वाश्रयसंयुक्तत्वेन] घटत्वादेः पटादिवृत्तितया (तद्वृत्तितया तद्वृत्ति) तन्त्वादिकार्यतावच्छेदकत्वापत्तिरित्याशयेनाह – घटत्वादिकं वेति। [3]उपष्टम्भक इति। तथा च घटत्वादिकं पृथिवीत्वव्याप्यमेवेति न सुवर्णत्वादिना सङ्करः। पाषाणत्वं च मृद्विशेषप्रभवद्रव्यत्वं, न तु जातिरिति न तेनापि पाषाणघटे सङ्कर इति भावः। कार्यकारण इति।

---

1 चक्रादिकं मृद्घटादौ' नास्ति ग.

2 °कान्र्यत्वम् ग.

3 'उप ... .... इति भावः' इत्यन्तस्त्रुटितः ग.

बहूनां साक्षात्समानाधिकरणैरवच्छेदौचित्यात् कुलाल [कुम्भकार] स्वर्णकारादेः विजातीय – [1]कृतिमत्त्वेन च चक्रादिलौहवर्तुलादेश्च कथञ्चित् विजातीय-संयोगव्यापारकत्वेन हेतुत्वम्। अन्यथा चक्रादिकं विना क्वचित् मृदादिघटादे-रुत्पत्तेर्व्यभिचारो दुर्वारः [2]स्यात्।

[3]अथ घटत्वादिकं रूपादिवृत्त्येव किं न स्यादिति चेत् – न स्यात्; [4]रूपादौ नीलत्वतिक्तत्वसुरभित्वकठिनत्वादिना साङ्कर्यात्। द्वित्वद्विपृथक्त्वयोर-नन्तत्वात्। आश्रयभेदाद्यग्रहे ग्रहाच्चैकपृथक्त्वस्यावधिज्ञानव्यङ्ग्यत्वेन विलम्बि-तोपस्थितिकत्वात् नव्यमते गुणत्वाभावाच्च। अत एव न परत्वादावपीति – तन्न – [5]दोषादेकत्वाग्रहेऽपि घटादिग्रहादेकत्वस्यैक्याच्च। न च चक्षुस्संयुक्ते स्वाश्रय-

---

घटत्वाद्यवच्छिन्नं प्रति दण्डचक्रत्वादिना बहुविधकार्यकारणभावानां साक्षात्कार्यत्वादि-समानाधिकरणधर्मैरवच्छेदौचित्यादित्यर्थः। ननु घटत्वस्यैकत्वे तदवच्छिन्नं प्रति कुम्भकार-त्वादिना हेतुत्वं न स्यात्; तेन विनापि स्वर्णकारादेः सुवर्णघटोत्पत्तेरत आह – कुम्भकार इति।

[6]एकत्ववृत्तित्वे विनिगमनाभावात् शङ्कते – अथेति। [7]रूपादाविति। घटत्वादेः घटत्वादि-रूपादिवृत्तित्वे घटगतशुक्लपटगतनीले च परस्परस्य परिहारेण वर्तमानयोः घटत्वनीलत्वयोर्घट गतनीले साङ्कर्यम्। एवं घटगतमधुरे घटगततिक्ते च परस्परपरिहारेण वर्तमानयोः घटत्वतिक्त-

---

1 °जातिमत्त्वेन इ.
2 'स्यात्' नास्ति इ.
3 अद्य ख.
4 'रूपादौ' नास्ति इ.
5 [a] 'एकत्वस्यादोषादेकत्वादिग्रहेऽपि घटत्वादि ग्रहाच्च। न च' इत्यस्ति इ. [a]एकत्वस्यैकत्वादेक° आ.
6 एकवृत्तित्व ग.
7 'रूपादौ .... ... सांकर्यमित्यर्थः' इत्यन्तस्त्रुटितः ग.

संबन्धेन वृत्तित्वमपि सन्निकर्षः, गौरवात्। घटत्वादिवदेकत्वत्वादिग्रहापत्तेश्चेति पृथिवीत्वादिव्याप्यं न घटत्वम्; अनुगतधीस्तु कथंचित् सौसादृश्यादिति ॥

एकदेशिनस्तु – परस्पराभावसमानाधिकरणोपाध्योरेकाधिकरणवृत्तित्ववत् तादृशजात्योः तथात्वमपि प्रामाणिकं चेत् – न दोषाय इति घटत्वादिकं जातिरनुगतैवेत्याहुः ॥

तस्मात् विलक्षणसंस्थानावच्छेदेन संनिकर्षात् द्रव्यगतघटत्वादिग्रहः तद्व्यक्तेरुत्पादविनाशभेदादिप्रत्ययानुपपत्त्या चावयवी पृथगेवेति सिद्धम् ॥

अथ [1]आवृत्तानावृत्तत्व [अवृत्तित्ववृत्तित्व] विरुद्धधर्माध्यासादेवावयवी भिद्यताम्। न चावच्छेदक[2]भेदादविरोधः। तद्यूर्ध्वावृतेऽप्यवयविनीन्द्रिय-

---

त्वयोः घटगततिक्ते घटगतसौरभे पटगतसौरभे च परस्परपरिहारेण वर्तमानयोः घटत्वसौरभत्वयोः घटगतसौरभे साङ्कर्यम्। एवं घटगतसुकुमारे पटगतकठिने च परस्परपरिहारेण वर्तमानयोः घटत्वकठिनत्वयोः घटगतकठिने साङ्कर्यमित्यर्थः। ननु गगनाद्यग्रहेऽपि (न) तद्गत शब्दादिग्रहवदेकत्वाग्रहेऽपि तद्वृत्तिघटत्वादिग्रहे बाधकाभाव इत्यतो नव्यमतमाश्रित्य दूषणमाह – एकत्वस्येति। सकलैक – [3]व्यक्तिष्वेकत्वस्यैकत्वात् तद्वृत्तिघटत्वादेः नित्यानेक-[4]समवेतत्वेन [5]जातित्वाद्युपपत्तिरिति भावः। संनिकर्षः – घटत्वादिग्राहकसन्निकर्षः। तथा चैकत्वाग्रहेऽपि तद्वृत्तिघटत्वादिग्रहो नानुपपन्न इति 'न चे'त्याशङ्काग्रन्थार्थः। नन्वन्यथानुपपत्त्या सन्निकर्षगौरवं सोढव्यमत आह – घटादिवदिति। तेनैव सन्निकर्षेणेति शेषः।

---

1 वृत्तिनावृत्तित्व° आ.

2 भेदादविरोधः आ.

3 °व्यक्तिनिष्ठस्यैक° ग.

4 '°समवेत' नास्ति ग.

5 जातित्वाद्यनुप° क.

सन्निकर्षसत्त्वे परिमाणादिग्रहप्रसङ्गादिति चेत् – न। परिमाणादिमात्रग्रहस्येष्टत्वात्। तद्गतहस्तवितस्त्यादिजातिग्रहे तु यावदवयवावच्छेदेन सन्निकर्षो हेतुः।

अस्तु तथापि सकम्पत्वनिष्कम्पत्वाभ्यां भेदः, दृश्यते हि पाणौ शरीरं सकम्पं निष्कम्पं चरणे। न च कम्पतदभावावेकत्र; विरोधात् कर्मणः व्याप्य-वृत्तित्वादिति। शरीरं भिन्नमिति चेत् – न; पाणावेव तत्र कम्पस्वीकारात् कम्पहेत्वभिघातादेः फलबलात्पाणावेव कल्पनात्। पाणौ शरीरं चलतीतिधीस्तु पाणिवृत्तिकम्पपरम्परासंबन्धविषया साक्षात्संबन्धविषयत्वे भ्रम एव। न च साक्षात्सम्बन्धे बाधकाभावात्; परम्पराविषयकत्वं भ्रमत्वं चासिद्धम्; अन्यथा सकम्पमेवशरीरं, निष्कम्प[1]धीस्तु चरणवृत्तिकम्पाभाव परम्परासंबन्धविषयिणीत्येव किं न स्यादिति वाच्यम्। पाणिकर्मणैव प्रत्यक्षानुपपत्तावतिरिक्तशरीरकर्मकल्पनाया एव बाधकत्वात्। कम्पाभावस्त्वन्यत्र क्लृप्त एव शरीरे कल्प्यत इति न गौरवम्। न चैवं कर्मणोऽणुमात्रगतत्वं त्रुटिमात्रगतत्वं वा स्यात्; तत्कर्मणैवा[2]न्यत्र प्रत्ययोपपत्तेरिति वाच्यम्। सर्वावच्छेदेनोपलभ्यमानकर्मवति शरीरादौ कर्माभावो-पलम्भप्रसङ्गात्।

---

अतिरिक्तावयविसाधनमुपसंहरति – तस्मादिति। सन्निकर्षात् – संयुक्तसमवायात्।

यद्युत्पत्तिविनाशरूपवैधर्म्यप्रत्ययादवयवेभ्योभिद्यतेऽ[3]वयवी, [4]तद्दर्यवृत्तित्वादि-विरुद्धधर्मप्रत्ययात् स्वस्मादपि भिद्यतामित्याशङ्क्य निराकरोति – अथेत्यादिना, ‘[5]इदमप्यत्र विचार्यते’ इत्यन्तेन॥

---

1 प्रत्ययस्तु आ.
2 °न्यत्रोपपत्ते° इ.
3 °वयवित्वात्
4 तद्व्याप्यवृत्तित्वादि° क.
5 इदमपीति पर्यन्तेन ग.

एतेनास्तु शरीरादावन्त्यावयविन्येव क्रिया; सैव हि पाण्यादिनानावयव प्रतीयते; नानावयवे क्रियाकल्पने गौरवमित्यपास्तम्। पाण्यादौ कर्माभावोपलम्भापत्तेः; परम्परासंबन्धस्य दोषत्वे चरणादावपि तदनापत्तेः, दोषत्वकल्पनागौरवाच्च। किं च पाण्याद्यवयवक्रिययैव परम्परयाऽवयविनि शरीरादौ संयोगः संभवति; न तु शरीरादिक्रियया पाण्यादौ। न चैवं शरीरस्य निष्कम्पत्वे चरणे 'शरीरं न चलतीतिवत् 'पाणौ न चलती'ति स्यादिति वाच्यम्। शरीरत्वादेरिव पाणेरपि [1]चलनाभावानवच्छेदकत्वात् ॥

अथैवमुक्तयुक्त्याअग्रादिनिष्ठसंयोगादेरेव वृक्षादौ प्रतीतिसंभवे संयोगाद्यपि [2]व्याप्यवृत्त्येवास्त्विति चेत् — न। अंशववच्छेदेन [3]तन्तुद्वयसंयोगादपि पटोत्पत्तेः। न चांशुसंयोगाद्दशास्वेव पटोत्पत्तिः; तन्तुत्वेन पटासमवायित्वादिति प्राचीनवर्त्मपरिष्कारः ॥

---

परम्परासम्बन्ध — विषयकः [विषया] — स्वाश्रयपाणिसमवेतत्व — विषयकः [विषया]। कम्पाभावस्त्विति। अन्यत्र चरणादौ क्लृप्त एव कम्पाभावो शरीरे कल्प्यत इति न तत्कल्पने गौरवम्। "अधिकरणभेदेनाभावभेदानभ्युपगमादिति भावः। अणुमात्रगतत्वे कर्मणः प्रत्यक्षत्वे [त्वं] न स्यादत आह — त्रुटिमात्र इति। अन्यत्र — पाणिशरीरादौ।

परम्परासम्बन्धस्य — स्वाश्रयसमवायित्वादिसम्बन्धस्य। स्वमन्त्यावयविक्रिया। दोषत्वे — प्रमाप्रतिबन्धकत्वरूपे। तदनापत्तेः — [4]कर्माभावोपलम्भानापत्तेः। [5]अस्तु शरीरादावन्त्या[6]वयविन्येवेति युक्तिसाम्यादाह — किं चेति। [7]परम्परया — स्वाश्रयसमवेतत्वेन।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | कर्माभावा° | आ. | 5 | 'अस्तु शरीरादौ' नास्ति | ग. |
| 2 | व्यावृत्त्ये° | इ. | 6 | °वयवि तुल्ययुक्त्या आह-किंचेति | ग. |
| 3 | 'तन्तु .... .... मूलावच्छेदेन' इत्यन्तस्त्रुटितः | इ. | 7 | 'पर .... .... समवेतत्वेन' इत्यन्तस्त्रुटितः | ग. |
| 4 | कर्मभावोपलम्भनापत्तेः | ग. | | | |

नव्यास्तु – चलति शाखासमूहे निश्चलेऽपि मूले 'वृक्षश्चलती' त्यबाधितप्रतीतेः कर्माऽव्याप्यवृत्त्याऽपि सत्रिषयावृत्ति व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वाभावनियमस्त्वप्रयोजकत्वादसिद्धः। इत्थमेव साक्षात्संबन्धेन वृक्षादौ मूलावच्छेदेन चलनाभावव्यवहारप्रामाण्यमित्याहुरिति ॥

## असत्कार्यवादः

इदमप्यत्र विचार्यते – किमसत्क्रियते, सदेव वा। सत्क्रियत इति साङ्ख्याः। [तदाहुः] —

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकारणात् कारणभावाच्च [1]सत्कार्यम् ॥

असतः शशविषाणादेः, सत्त्वस्य कर्तुमशक्यत्वात् सत एव सत्कारणं, तद्धर्मत्वात्। इष्टं च तिलेषु सत एव तैलस्य निष्पीडनेन [2]करणम्। असतस्तु

---

तुल्ययुक्त्या शङ्कते – अथेति। एवमुक्त इति। पाणावेव कम्पः, स एव शरीरे परम्परया प्रतीयते; न तु तत्राव्याप्यवृत्तिकर्म इत्याद्युक्तयुक्त्येत्यर्थः। [3]अंशवच्छेदेनेति। अवयवसंयोग एव परम्परयाऽवयविनि किंचिदवच्छेदेन प्रतीयते, नत्वतिरिक्तः; तदा अंशवच्छेदेन तन्तुद्वयसंयोगात् [4]पटोत्पत्तिः तन्तौ न स्यात्, स्याच्चांशुष्वेवेत्यर्थः। असमवायि विजातीयसंयोगपटयोः सामानाधिकरण्येनैव कार्यकारणभावात्। अत एव मूले न वांशुसंयोगादिवशावेव पटोत्पत्तिरित्युक्तमिति भावः ॥

---

1 स तु कार्यम् अ.
2 कारणम् आ.
3 'अंशु' नास्ति ग.
4 'पटो .... .... असमवायि' इत्यन्तस्त्रुटितः। तत्स्थाने – 'अपि, वस्तुतोंऽशुसमवेतं घटोत्पत्त्यापत्तेरित्यर्थः' इत्यस्ति ग.

[1]करणे न निदर्शनम्; उपादानेन ग्रहणात् सम्बन्धादपि सत्कार्यम्। न ह्यसतः सम्बन्धोऽस्ति। [2]असम्बद्धमेव [3]कार्यं कारणैः क्रियत इति चेत् – न; सर्व[4]सम्भवाभावात्। असम्बन्धाविशेषे सर्वं सर्वस्मात् स्यात् न चैवम्। तस्मात् कार्यं प्रागुत्पत्तेः कारणेन [5]सह सम्बद्धम्। यथाहुः —

असत्त्वात् नास्ति सम्बन्धः [6]कारणैः सत्त्वसङ्गिभिः।
असम्बद्धेषु चोत्पत्तिं इच्छतो न व्यवस्थितिः॥

किं चाशक्तस्य जनकत्वेऽतिप्रसङ्गात् शक्तस्य [7]जनकत्वं वाच्यम्। [8]शक्तिश्चास्य न सर्वत्र तथैवातिप्रसङ्गात्; किं तु क्वचिदेवेति [9]कथमसति [10]कार्ये कारणस्य शक्तिर्नियता स्यात्। [11]असतो विषयत्वायोगात्। तस्मात् शक्तस्य शक्त

---

[12]सविषय इति। व्याप्यवृत्तिभगवज्ज्ञानादिवृत्तिज्ञानत्वादिजातावव्याप्यवृत्ति जीवज्ञानादिवृत्तित्वस्यैव सत्त्वात् व्यभिचार इति तद्वारणाय सविषयावृत्तीति जातिविशेषणम्। सविषया वृत्तिसंयोगत्वादावव्याप्यवृत्तिवृत्तित्वस्यैव सत्त्वात् व्यभिचार इति तद्वारणाय व्याप्यवृत्तीति विशेषणमिति बोध्यम्॥

दण्डकपालादिभिरसन्नेव घटादिः क्रियत इति स्वसिद्धान्तं व्यवस्थापयितुमाह – इदमपीति। तदाहुरिति। साङ्ख्यतत्त्वकौमुदीकृतेति शेषः॥

---

1 कारणे आ.
2 सम्बद्ध० आ.
3 'कार्यं' नास्ति इ.
4 ०सम्भवात् आ.
5 सिद्धम् इ.
6 करणैः इ.
7 तत्त्वं इ.
8 'शक्ति .... .... क्वचिदेवेति' इत्यन्तस्त्रुटितः इ.
9 'तस्मात्' इत्यधिकः इ.
10 कार्यकर० इ.
11 सत्त्वे विषयत्वाभावात् अ. इ.
12 'सविषय .... .... बोध्यम्' इत्यन्तस्त्रुटितः ग.

शक्तिविषयो यः [1]तत्करणात् प्रागपि शक्यं [2]सदेव, किं च कारणभावात् [3]कारणतादात्म्यादपि सत्कार्यम्। न ह्यवयवी अवयवेभ्योऽन्यः, तथाप्रतीत्यभावात्; 'कपालं घटीभूतं' 'तन्तुः पटीभूतः' 'सुवर्णं कुण्डलीभूतमि'त्यादि प्रतीतेः।

अत्रोच्यते – यदि कारणव्यापारात् प्रागपि पटः तन्तुषु सन्नेव, किमित्युपलब्धिकारणेषु सत्सु, सत्यामपि जिज्ञासायां नोपलभ्यते। अनाविर्भूतत्वादिति चेत् – कोऽयमनाविर्भावः। उपलब्धेरभावश्चेत् स एव कथमित्याक्षेपे स एवोत्तरितव्य इति *घट्टकुट्यां प्रभातः[म्]।

अथोपलब्धि योग्यार्थक्रियाकारिरूपविरहोऽनाविर्भाव इति चेत् – असत्कार्यवादः [4]ईदृग्रूपस्य प्रागसतः पश्चाद्भावात्। न च पटादेः प्राथमिकोप [5]लब्धावुपलब्धिमात्र एव वा [6]चक्षुरादिकुविन्दादिकारणसमुदायो विजातीयावयव – संयोगो [7]वा व्यञ्जकः विजातीयावयवसंयोगावच्छेदेन सन्निकर्ष एव वा तथेति व्यञ्जकाभावात् सतोऽनुपलब्धिरिति वाच्यम्। कारणसमुदायादेः प्रागसत्त्वेऽसत्कार्य – वादः

---

स्वोक्तार्थे साङ्ख्यवृद्धोक्तिमुपष्टम्भकत्वेन दर्शयति – [9]यथाहुरिति।

---

1 तत्कारणात् इ.
2 तदेव आ.
3 कारणताबलात् सत्कार्यम् इ.
4 तादृग्रूपस्य आ.
5 °लब्ध्योप° आ.
6 चक्षुरादिवत् कुवि° आ.
7 'वा व्यञ्जकः' नास्ति अ.
'वा .... .... असत्कार्यवादः स्यात्' इत्यन्तस्त्रुटितः इ.
8 प्रागस°
9 तथाहुरिति क.

---

*'घट्टकुटी नाम शौल्किकशाला। यथा हि शौल्किकेभ्यो बिभ्यतो रात्रावेव शुल्कशालातिक्रमितव्येति गच्छतः पान्थस्य तस्यामेव प्रभाता शर्वरी'ति बोधिनीकाराः।

स्यात्। सत्त्वे तु प्रागुपलब्ध्यापत्तिः। [8]प्राक्सन्नेवाविर्भूतः व्यञ्जक इति चेत् – [1]आविर्भावस्यापि सदसद्विकल्पग्रासात्। [2]विद्यमान – प्रागभावप्रतियोगित्वस्यासत्त्वस्य [3]विद्यमानत्वरूपस्य सत्त्वस्य [4]वा न मिथो [5]विरोधः। कालभेदेनैकत्र समावेशा – [6]दुपादानेन सह समवयरूप सम्बन्धोऽपि [7]नित्यत्वात् नानुपपन्नः। शक्तिः कारणता; सा [8]चासतोऽपि [9]पटादेः तन्त्वादाविव स्वभावात्। शक्तिनियमेऽपि स्वभावभेदस्यैवाश्रयणीयत्वात् कार्यकारणयोश्च मिथो भेद एव। अन्यथा कार्यकारणभावस्यैव [10]मिथोऽनुपपत्तेः।

अथैवं शतमाषकेभ्यः शतमाषकारब्धेऽवयविनि गुरुत्वाधिक्यात् गुरुत्वावनति विशेषः स्यादिति चेत् – न। गुरुतरद्रव्ययोः समयोरुत्तोलनैकत्र संलग्नतृणादिगुरुत्वाधिक्यादनवनतिवदुपपत्तेः। अवयविन्यत्यन्तापकृष्टगुरुत्वस्वीकारात्।

---

[11]कारणगुणेभ्यः कार्यगुणेषूत्कर्षो जायते; परिमाणादौ तथादर्शनादित्यभिप्रायेण शङ्कते – अथेति। एवं – अवयविनोऽवयवातिरिक्तत्वे। नन्वेकत्र संलग्नतृणादावत्यन्तापकृष्टगुरुत्वसत्त्वात् तत्प्रयुक्तावनतिविशेषस्य [12]सतोऽप्यनुपलम्भो युक्तः। शतमाषकारब्धे तु

---

1 'आविर्भावस्यापि सत्' नास्ति। तत्स्थाने 'न, असद्वि॰' इत्यस्ति इ.
2 'विद्य .... स्यासत्त्वस्य' इत्यन्तस्त्रुटितः अ.
3 विद्यमानस्य अ.
4 च अ.
5 विरोधम् अ.
6 ॰दादानेन समं आ.
7 'नित्यत्वात्' नास्ति इ.
8 'च' नास्ति इ.
9 घटादेः आ.
10 'मिथोऽनुपपत्तेः' नास्ति। तत्स्थाने 'उपलम्भः' इत्यस्ति अ.
11 'न च पटादेरिति। व्यञ्जक इति। कारणमिति तथाश्रुते पटाद्युपलब्धिव्यञ्जककपालभेदसङ्गतिरिति बोध्यम्। ननु विजातीयावयवसंयोगस्य पटादिव्यञ्जकत्वे दीपादेरिव तत्कारणत्वानुपपत्तेरत आह – विजातीय इति। तथा व्यञ्जक' इत्यधिकः क.
12 'सतो ... .... वनतिविशेषस्य' इत्यन्तस्त्रुटितः क.

अस्तु वा परमाणावेव गुरुत्वम्। द्व्यणुकादेरधस्संयोगस्तु गुरुत्व – [1]सापेक्षया, तज्जन्यावयव – वेगाधीनक्रियया [2]पातव्यवहारस्तु वर्तिस्थदीपपातव्यवहारवत् गौणः। न च नोदनाभिघातसापेक्षाया एव पातक्रियाया [3]वेगजनकत्वम्; न तु गुरुत्वसापेक्षाया गुरुत्वादेवोत्तरकर्मसन्तानसंभवादिति वाच्यम्। अधस्संयोगस्य [4]क्वचिदभि – [5]घातात्मकस्य विना वेगमसम्भवात्; वेगेन पततीत्यादिव्यवहारात्। न चैवं महावयविपाते महाविलम्बो मिथो [6]विष्टब्धावयवानां मिथो विष्टम्भाधीनक्रियाजन्यवेगेनान्त्यावयविनि द्रुतं वेगसम्भवात्।

अस्तु वा परम्पर[या] संबन्धविशेषेण वा परमाणुगुरुत्वमेव [7]पतननियामकम्। गुरुत्व एव मानाभावः। वायुतेजसोः तिर्यगूर्ध्वगमनवत् पातः पृथिव्योरधोगमनस्या – [8]सति प्रतिबन्धेकेऽदृष्टवदात्मसंयोगादिनैवोपपत्तेः [9]पातस्य समवायित्वे

---

शतमापकगुरुत्वमपेक्ष्योत्कृष्टगुरुत्वसत्त्वात् तत्प्रयुक्तावनतिविशेषस्योपलम्भः कथं नेत्यत आह – अवयविनीति। तथा च कार्यगुणेपूत्कर्ष इति नियमो गुरुत्वातिरिक्त गुण एवेति भावः।

लाघवात् कल्पान्तरमाह – अस्तु वेति। ननु गुरुत्व सापेक्षक्रियाया वेगाजनकत्वे वृन्तविश्लिष्टपदादेरधस्संयोगजनकोत्तरकर्मसन्तानः कथं स्यादत आह – गुरुत्वादेवेति। न चैवमिति। परमाणुगुरुत्वजनितक्रियाजन्यवेगेनैव द्व्यणुकादौ वेगारम्भ इत्यर्थः।

परमाणुगुरुत्वाधीनपातजवेगात् द्व्यणुकत्र्यणुकादावनन्तवेगस्वीकारे गौरवादाह – अस्तु वेति। परम्परया – स्वाश्रयसमवेतत्वादिपरम्परया। संबन्धविशेषेणेति। गुरुत्वस्य

---

1 °सापेक्षणात् जन्यावयववेगजवेगा° आ.
2 'न' इत्यधिकः आ.
3 वेगजमनेकत्वम् आ.
4 'क्वचित्' नास्ति आ.
5 °घातस्य इ.
6 विषम्यावयवानां आ.
7 'पदन' नास्ति इ.
8 'असति प्रतिबन्धके' नास्ति इ.
9 'पात .... .... मानाभावात्' इत्यन्तस्त्रुटितः इ.

 

मानाभावात् । पतनप्रकर्षस्त्ववयवाधिक्यादवयविनि गुरुत्वापकर्षेत्वयाऽपि तथैव वाच्यत्वात् ।

अथावयवावयविनोः गुणगुण्यादेश्च भेदेऽप्य – [1]भेदोऽस्तु; समवायस्थानीयस्य तादात्म्यस्य भेदेऽपि संभवादिति चेत् – न । [2]आत्माकाशादेः ज्ञानशब्दादिना तादात्म्याभावात् 'घटो नीलिमा' इत्यादि[3]प्रत्ययापत्तेश्चेत्यन्यत्र विस्तरः ॥

## कार्यपृथिवीविभागः

कार्यं त्रिविधम् – शरीरेन्द्रियविषयसंज्ञकम् । तत्र शरीरं द्विविधम् – योनिजमयोनिजं च । योनिजं शुक्रशोणित[4]सन्निपातजं, जरायुजमण्डजं च । मानुषपशूनां जरायुजम्; पक्षि सरीसृपाणामण्डजम् । अयोनिजं देवर्षीणां [5]शरीरं, धर्मविशेषसहितेभ्योऽणुभ्यो जायते । क्षुद्रजन्तूनां यातना[6]शरीरमधर्मविशेष सहितेभ्यः तेभ्यः इति ।

ननु योनेः शरीरहेतुत्वात् कथं तां विना शरीरमिति चेत् – न । शरीरत्वस्योष्मकृमिमक्षिकाद्ययोनिजसाधारण्येन व्यभिचारात् शरीरत्वावच्छिन्ने हेतुत्वा-

---

परमाणावेव समवेतत्वेऽपि द्व्यणुकत्र्यणुकादौ सर्वत्र पतननियामकस्वरूपसंबन्ध विशेषणातिरिक्तेन वेत्यर्थः ।

भेदाभेदनिराकरणाय तमाशङ्कते – अथेति ॥ योनिजशब्दार्थमाह – शुक्र इति ।

---

1 °भेदस्तु इ.
2 'आत्मा' नास्ति इ.
3 °प्रतीत्यापत्ते° आ.
4 संपातजं इ.
5 'शरीरं' नास्ति इ.
6 शरीरं धर्मविशेषेभ्यः आ. इ.

भावात्; शरीरविशेषे तद्धेतुत्वे च न बाधकम्। श्रूयते [हि] ब्रह्मणो मानसा मन्वादयः पुत्रा इति।

किं च स्वर्गिणां गर्भवासादिवेदनावत्वं, नारकिणां चानुषङ्गिकयोनिस्पर्श-सुखवत्वं विरुद्धमिति न तत्र योनिजत्वम्। न च तेषां गर्भवासादिकं न वेदना हेतुः दृष्टविपरीतकल्पनापत्तेरिति कर्मैव स्वसम्पाद्यभोगनिर्वाहकं शरीरमर्जयति, [1]न कर्मणा गर्भवासादिदुःखमपि भोजयितव्यं तेन योनिमुत्पाद्यत इति विशेषः।

अथ तथापि शरीरं न पृथिवी, [2]निदाघोष्मणा द्रवीभावेन जलारब्धत्वात् हिमवत्। न जलं गन्धवत्वेन पृथिव्यारब्धत्वात्। अत एव च न तेजः-[3]प्रभृत्यपि; किं तु पृथिव्यादिविजातीयं भूतचतुष्कप्रकृतिकत्वात्। तत्त्वं [च] गन्ध-द्रवीभावकरादिस्थकुसुमरूपादिपरावृत्तिहेतूष्णस्पर्शवत्व[4]कम्पकारित्वेभ्यः सिद्धम्। यद्यप्याकाशविषयत्वादाकाशप्रकृतित्वमप्युक्तं, अत एव शरीरं पाञ्चभौतिकमिति प्रसिद्धिः, तथाप्याकाशस्य निस्पर्शत्वेन विभोरेकस्य पूर्वद्रव्यवत्वेन [5]चापरद्रव्यारम्भकत्वानुपपत्त्या नाकाश सत्य [आकाशस्त्यक्त] इति चेत्—न।

---

शरीरविशेषे—मनुष्यादिशरीरे। अयोनिजसत्त्वे प्रत्यक्षाभावात् शब्दं प्रमाणयति—श्रूयते हीति। [6]मन्वादिशरीरस्य योनिजत्वे बाधकमाह—किं चेति।

तत्त्वं च—भूतचतुष्कप्रकृतिकत्वं च। तथापीत्यादि। प्राचां मते [7]स्पर्शवत्वेन द्रव्यारम्भकत्वादाकाशस्य निस्पर्शत्वेन द्रव्यारम्भकत्वानुपपत्तिः। नव्यमते तु द्रव्योत्पादं

---

1 एतेन   आ.
2 'निदाघोष्मणा द्रवीभावेन' नास्ति। तत्स्थाने—'भावजनकः इत्यस्ति   इ.
3 [a]प्रकृत्यपि   इ.
4 °कल्पकारि°   आ.
5 वापर°   आ.
6 मन्दादि°   ग.
7 स्पर्श .... .... नव्यमते तु' इत्यन्तस्त्रुटितः   ग.

कृष्णादि[1]पृथिवीरूपादिकं प्रति तदितररूपादेः प्रतिबन्धकत्वात् शरीरस्य [2]नीरूपत्वादित्वापत्तेः। न च नीलपीत[3]कपालारब्ध[4]चित्ररूपवत् भविष्यति, तथापि रसाद्यनुपपत्तेः। [5]नीलरूपादिवत् पृथिवी – [6]जलादिरूपाणां चित्ररूपजनकत्वस्यादृष्टत्वाच्च।

यत्तु – निर्गन्धेन गन्धोत्पादनं नीलवदुक्तं विरुद्धम्; अवयवगन्धेनावयविगन्धोत्पादस्यावयवान्तरवर्तिना गन्धा – [7]भावेन वारयितुमशक्यत्वादिति दीधितिकृतोक्तम् – तच्चिन्त्यम् – सौरभादेस्तदितर – [8]गन्धस्याप्रतिबन्धकत्वे विरुद्धगन्ध – [9]वदाद्यारब्धे निर्गन्धसुगन्धाभ्यामारब्धे व्याप्यवृत्तिगन्धापत्तेः। सौरभाद्यभावस्यैव तत्त्वादिति।

---

प्रति द्रव्यसामान्याभावस्य हेतुत्वादाकाशेनैकशरीरे जनिते तस्य तद्द्रव्यवत्वेनापरशरीरारम्भकत्वानुपपत्तिरित्याकाशस्त्यक्त इति भावः। आगमप्रसिद्ध्या पृथिव्याः आद्यरूपं कृष्णमेव; रक्तादिकं तु पाकादेवेत्यभिप्रायेणाह – कृष्णादीति। आदिना शुक्लादेः परिग्रहः। रसाद्यनुपपत्तेरिति। रसस्य द्रव्यप्रत्यक्षेऽहेतुतया [10]तिक्तमधुरारब्धस्य नीरसत्वेऽपि क्षतिविरहेण तादृशद्रव्ये रसप्रत्यक्षस्य त्ववयवरसमादायोपपत्तिसम्भवेन च चित्ररसानभ्युपगमात् पृथिवीजलाद्यारब्धे रसानुपपत्तिः। एवं गन्धानुपपत्तिरपीत्यर्थः।

अशक्यत्वादिति। इदं च निर्गन्धसगन्धाभ्यामारब्धस्थले। तत्त्वात् – सौरभादौ प्रतिबन्धकत्वात्।

---

1 'पृथिवी' नास्ति इ.
2 नीरूपत्वादित्यापत्तेः आ.
3 कपालारब्धवच्चित्र॰ आ.
कपालस्थचित्र॰ इ.
4 चित्र... .... जलत्वादिरूपाणां' इत्यन्तस्त्रुटितः अ.
5 नीलपीतादिवत् आ.
6 ॰जलत्वादि॰ आ.
7 ॰भासादेव न आ.
8 ॰गन्धप्रति॰ इ.
9 ॰वदारब्धे इ.
10 अतिरिक्त॰ क.

किं च पृथिवीजलादेः पृथिवीजलादिकं प्रत्येव जनकत्वम्; न हि नीलपीतादेः चित्रजनकत्ववत् विजातीयजनकत्वे [1]प्रमाणं, येन पृथिव्यादेः पृथिव्याद्यनारम्भो विजातीयारम्भकश्च कथंचित् कल्प्यत इति [2]न किंचिदेतत्। पाञ्चभौतिकत्वप्रसिद्धिस्तु चतुर्णां निमित्तत्वेनैकस्य समवायित्वेन बोध्या। पार्थिवे शरीरे जलादि धर्मस्त्वौपाधिक इति।

[3]शरीरत्वं [4]च [5]चेष्टावद्वृत्त्यन्त्यावयविमात्रसमवेतजातिमत्वम्। घटत्वादिवारणाय वृत्त्यन्तम्। हस्तत्वसत्ताद्रव्यत्वादिवारणाय समवेतान्तम्। घटशरीरसंयोगादिवारणाय जातीति नित्यार्थकम्।

अथ [6]चेष्टाशून्ये वृक्षादिशरीरेऽव्याप्तिः। न च चेष्टावति नरादिशरीरे वर्तमानानां शरीरत्वव्याप्यजातिमादाय तत्र सङ्गतिः। [7]जलत्वाद्यसङ्कीर्णायाः

---

ननु नीलपीतादिभिः यथा विजातीयं चित्रं जन्यते तथा पृथिवीजलादिभिः विजातीयचित्रद्रव्यं; तद्रूपादिभिश्च तत्र चित्ररूपादिर्जन्यताम्। इत्थं च पृथिव्यादेस्तदितरद्रव्यप्रतिबन्धकत्वमपि न कल्प्यत इति न गौरवमित्यरुचेराह – किं च पृथिवी इति।

शरीरलक्षणमाह–शरीरत्वे[त्वं] चेति। चेष्टावदिति। चेष्टावद्वृत्ति – [8]रन्त्यावयविमात्र समवेता जातिर्मनुष्यत्वादि; तद्वत्वं सर्वत्र शरीरेऽस्तीति लक्षणसमन्वयः। अत्र चेष्टा हिताहितप्राप्तिपरिहारार्थक्रिया, न तु क्रियामात्रम्; घटत्वमादाय घटेऽतिव्याप्तितादवस्थ्यापत्तेरिति। सत्ताद्रव्यत्व इति। अत्र हस्तत्वादिवारणमन्त्यावयविपदेनैव, सत्ताद्रव्यत्वादिवारणं च मात्रपदेनेति विवेकः।

---

1 प्रकृते प्रामाणिकं आ.
2 'न किंचिदेतत्' नास्ति इ.
3 शरीरजे च अ.
4 'च' नास्ति इ.
5 चेष्टाद्यन्तावयवि° अ. चेष्टावृत्त्य° आ.
6 चेष्टादिशून्ये आ.
7 जलत्वादि संकी° आ.
8 °रत्यन्तावयवि° क.

पृथिवीमात्रवृत्तेः नरवानरादिसकलमांसलशरीरेष्वनुगतमिति सिद्धाया ज्ञाने [जातेः] वृक्षलतादिनिष्ठत्वे मानाभावादिति चेत् – न। वृक्षलतादेरपि चेष्टास्वीकारात्। कथमन्यथा सत्यावरणे वक्रगत्यादिकम्। यदि च जलादेरिव वक्रगत्यादिकं प्रकृते चाध्यात्मिकवायोरपि तत्सम्भवति। वृक्षादौ सुख – [1]दुःखसाक्षात्कारमात्रसत्त्वे तत्साधनता[2]ज्ञाने मानाभावात्। इच्छाद्यसम्भवेन चेष्टाया असम्भवादिति सूक्ष्ममीक्ष्यते। तदा भोगायतनवृत्त्यन्त्यावयविमात्र – [3]समवेत जातिमत्त्वं तत्। न चेश्वरशरीरेऽव्याप्तिः; कृष्णादेः शरीरे नरत्वादेः सत्त्वेन, नरसिंहशरीरे नरत्वादेः साङ्कर्यापत्तेरसत्त्वेऽपि सकलमांसलवृत्त्युक्तजातेः सत्त्वेनाव्याप्त्ययोगादिति दिक्॥

---

जलत्वाद्यसङ्कीर्णाया इति। तथा च [4]जलाद्यारब्धसकलमांसल – [5]शरीरेष्वेकैका जातिः कल्प्यते। अन्यथा तत्राप्यनुगतमतेरनुपपत्तेः। न च तथापि पृथिवीजलादिमांसल – [6]शरीरेष्वनुगतमतेरनुपपत्तिः, तत्साधारणजातेरसत्त्वात्; अन्यथा [7]जलत्वादिना साङ्कर्यापरिहारादिति वाच्यम्। पृथिव्यादि – [8]मांसलादिशरीरेषु अस्मदादेः देवादीनां वा युगपदिन्द्रियसन्निकर्षासम्भवेन तादृशानुगतमत्यसिद्धेरिति दिक्। तदाभोग इति। भोगः सुखदुःखान्यतरसाक्षात्कारः। तस्यायतनमवच्छेदकम्; तद्वृत्तिरन्त्यावयविमात्रवृत्तिः जातिः नरत्ववृक्षत्वपनसत्वादिः, तद्वत्त्वं तत्र तत्रास्तीति लक्षणसङ्गतिः। घटत्वादिवारणाय प्राथमिकवृत्त्यन्तम्। हस्तत्वादिवारणाय द्वितीयवृत्त्यन्तम्। तत्रापि सत्ताद्रव्यत्वादिवारणाय मात्रपदम्। तदपि तदितरावृत्तित्वपरम्; न तु सकलतद्वृत्तित्वगर्भमपि। नरत्वादेः सकलान्त्यावयविवृत्तित्वाभावेनासम्भवापत्तेरिति॥

---

1 °दुःखादिरूपेष्टसाक्षा° आ.
2 'ज्ञाने' नास्ति इ.
3 'समवेत' नास्ति आ.
4 तत्र जला° ग.
5 °शरीरेष्वेकैका ग.
6 °शरीरेष्वनुगत° ग.
7 जलत्वादिसाङ्कर्यपरिहारा° ग.
8 °मांसलशरीरेषु ग.

## पार्थिवेन्द्रियनिरूपणम्

इन्द्रियं घ्राणम्; तच्च गन्धव्यञ्जकं सर्वप्राणिनां जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं, श्लेष्मादिजलाभिभवे गन्धाग्रहात् जलानभिभूतैरिति। एव मग्रेऽपि। इन्द्रियत्वं च स्मृत्यजनकज्ञानजनकमनस्संयोगाश्रयत्वम्। स्मृत्यजनकः स्मृतिस्वरूपायोग्यः। मनस्संयोगो मनोवृत्तिसंयोगः। नातः [1]स्मृत्यनुपधायकप्रत्यक्षाद्युपधायकमनोयोगवदात्मादावतिव्याप्तिः। न वा मनःप्रतियोगिकसंयोगवत्त्वविरहिणि मनस्यव्याप्तिः।

ननु त्वगिन्द्रियाव्याप्तिः। त्वङ्मनोयोगमात्रस्य स्मृतिस्वरूपयोग्यत्वात् तस्य जन्यज्ञानमात्रहेतुत्वात्। अन्यथा सुषुप्तिकाले ज्ञानोत्पत्त्यापत्तेः। न च सर्वदा सर्वाङ्गीणकुष्ठिनः त्वचि मानाभावात् व्यभिचारः। तादृशपुरुषे मानाभावात्।

---

घ्राणादौ पृथिवीत्वादिना सङ्करादिन्द्रियत्वं न जातिः, अतः अन्यथा तल्लक्षणमाह — इन्द्रियत्वं चेति। अत्र ज्ञानजनकमनस्संयोगस्यात्मनि सत्त्वादतिव्याप्तिवारणाय स्मृत्यजनक इति। तथा चात्ममनस्संयोगस्य स्मृतिजनकत्वादतिव्याप्तिनिरासः। इत्थं च घ्राणमनस्संयोगादिकमादाय घ्राणादौ लक्षणसङ्गतिः। तस्य द्विष्ठत्वान्मनस्यपि चेत्यर्थः। स्मृतिस्वरूप[पा]योग्यः — स्मृतिजनकतावच्छेदकशून्यः। तच्च संस्कारादिज्ञानसामान्यजनकविजातीयात्ममनोयोगत्वमपी[2]ति प्रत्यक्षजनकात्ममनोयोगमादायापि नात्मन्यतिव्याप्तिरिति भावः। न चैवं प्रत्यक्षजनकात्ममनस्संयोगात् स्मृत्युत्पादापत्तिरिति वाच्यम्। संस्कारोद्बोधकादिसाचिव्याभावेन ततः तदनुत्पत्तेरिति [3]बोध्यम्।

---

1 स्मृत्युप° आ. 3 भावः ग.
2 'इति .... .... रिति भावः' इत्यन्तस्त्रुटितः ग.

अथ तत्काले चाक्षुषादिज्ञानानुत्पादः चक्षुरादेः विषयेण मनसा च संयोगाभावादनुमित्याद्यनुत्पत्तिः; [1]व्याप्तिज्ञानाद्यभावात् । न च [एवं] सुषुप्त्यनुकूलमनःक्रियाजन्यात्ममनस्संयोगनाशकालोत्पत्तिकपरामर्शेन सुषुप्ति-[2]समकालोत्पत्तिकमनस्संयोगसहकृतेन सुषुप्तिद्वितीयक्षणेऽनुमितिरुत्पद्यतामिति वाच्यम् । असमवायिनः कार्यसहभावेन हेतुत्वात् । मनोयोगनाशकाले परामर्शोत्पादासम्भवात् । तत्काले परामर्शोत्पत्तौ मानाभावः । तत्सामग्रीभूत-व्याप्तिस्मृत्यादेः फलैकैककल्प्यत्वादित्यन्य इति चेत् - न । तत्काले आत्मादिमान-सोत्पत्तेः विनात्वङ्मनोयोगहेतुतां दुर्वारत्वादिति ।

मैवम् । आत्मनो विशेषगुणोपधानेनैव भावेन तदा विशेषगुणा – [3]भावेन तत्प्रत्यक्षाभावात् तत्तद्गुणानां विषयतया तद्धेतुत्वात् विशेषगुणप्रकारकात्म-मानसस्यैव मनोयोगकार्यतावच्छे – [4]दकत्वाद्वा ।

---

[5]सुषुप्तौ कारणान्तरविरहादेव ज्ञानानुत्पत्तिसम्भवे त्वङ्मनस्संयोगस्य न जन्यज्ञान-त्वावच्छिन्नहेतुत्वं वाच्यमित्याशयेनाशङ्कते – अथेति । त्वङ्मनस्संयोगस्य जन्यज्ञान-हेतुत्वसिद्ध्यर्थं सुषुप्तावनुमित्युत्पत्तिमाशङ्क्य निषेधति – न चैवमिति । अत्रात्ममनस्संयोग-नाशकाले परामर्शोत्पत्तिवर्णनं विनश्यदवस्थ तत्संयोग एव तत्र परामर्शे समवायीति सूचनाय । सुषुप्तिसमकालमात्ममनोयोगोत्पत्तिवर्णनमनुमित्यसमवायिसंयोगत्वसूचनायेति बोध्यम् । मतान्तरमाह – तत्काले इति । विजातीयात्ममनस्संयोगनाशकाले इत्यर्थः । अथेत्यादिना कृतं जन्यज्ञानत्वावच्छिन्ने त्वङ्मनस्संयोगहेतुत्वखण्डनं निरस्यति – तत्काले इति – सुषुप्तिकाले इत्यर्थः ।

---

1 'व्याप्ति' नास्ति आ.
2 'सम' नास्ति आ.
3 °भावात् इ.
4 °दकाद्वा इ.
5 'सुषुप्तौ ... .... बोध्यम्' इत्यन्तस्त्रुटितः ग.

## त्वङ्मनोयोगस्य ज्ञानहेतुत्वस्थापनम्

यद्वा चर्ममनोयोग एव जन्यज्ञानमात्रे हेतुः; त्वङ्मनोयोगस्य रासनादि – [1]कालेऽनुपगमात्। चर्मत्वं तैजसचर्मादिसाधारणं जातिरिति चेत् – न। तथापि मानसत्वा(द्य)वच्छिन्ने एव त्वङ्मनोयोगो हेतुः; न तु जन्यज्ञानत्वावच्छिन्ने। न चैवं त्वाचत्वाद्यवच्छिन्ने पृथक्कारणत्वे गौरवम्; प्रामाणिकत्वेन तस्यादोषत्वात्। अन्यथा रासनाद्युत्पत्तिकाले ज्ञानमात्रहेतोः त्वङ्मनोयोगस्य सत्त्वे कथं न त्वाचोत्पत्तिरिति वाच्यमायुष्मता ॥

रसनमनोयोगादेः त्वाचप्रतिबन्धकत्वे [2]त्वतिगौरवम्। जन्यज्ञान – [3]त्वावच्छिन्ने हेतुत्वेऽपि [4]तत्त्वस्य [तस्य] नानात्वात् नानाकार्यकारणभाव-ध्रौव्याच्च [5]जन्यप्रत्यक्षत्वावच्छिन्ने तस्य हेतुत्वमित्यन्ये।

---

विशेषगुणोपधानेनैव – [6]तत्संबन्धेनैव। आत्ममानसे तद्गुणकारणत्वकल्पने गौरवादाह – विशेषगुण इति।

ननु त्वङ्मनोयोगो न जन्यज्ञानमात्रे हेतुः, रसनादिकाले गुडादेस्त्वाचप्रत्यक्षापातादित्यरुचेराह – यद्वेति। त्वगिन्द्रियाधिष्ठानत्वं चर्मत्वम्; न तु जातिः, तेजस्त्वादिना सङ्करात्। अतः तद्घटितचर्ममनोयोगत्वेन जन्यज्ञान कारणत्वे गौरवमित्यभिप्रायवान् शङ्कते – चर्मत्वमिति। मानसत्वावच्छिन्ने एवेति। तावतैव सुषुप्तावात्ममानसस्यैव वारणादिति भावः। न तु जन्य इति। प्रयोजनविरहादिति भावः। आयुष्मतेति निन्दार्थे मतुप्॥

---

1 °कालेऽपगमाच्च आ.
2 तु सति गौ° आ.
3 'हेतु' इत्यधिकः आ.
4 न त्वस्य आ.
5 जलप्रत्यक्ष° आ.
6 तद्विशिष्टस्यैव क.

वस्तुतस्तु – परमात्मादेः [परात्मादेः] परस्याप्रत्यक्षत्वाय विजातीयात्म-मनोयोगत्वेनात्म – [1]मानसे हेतुता वाच्या। तदेव च वैजात्यं जन्यज्ञान[2]सामान्या-समवायिकारणतावच्छेदकमपीति तादृशसंयोगाभावादेव न सुषुप्तौ ज्ञानोत्पादः, तदा तादृशसंयोगे मानाभावात्। इत्थं च त्वक्छून्यपुरुषसत्त्वेऽपि न क्षतिः। जीवनयत्नस्तु नास्ति। तद्धेतुजीवनादृष्टादेरेव श्वासप्रश्वाससम्भवात्। [3]सत्त्वे-ऽपि [4]तददृष्टसहकृतात्म[5]मनस्संयोगमात्रादेवेति तदनुरोधेन तदा न तत्कल्पनम्। न च यत्र त्वक्क्रियया त्वङ्मनस्संयोगनाशे पुरीतति क्रियया पुरीतति मनोयोगश्च सुषुप्तिः [6]समुत्पद्यते, तत्रा[7]त्ममनोयोगोऽस्तीति वाच्यम्। सर्वत्रैव मनःक्रिययैव सुषुप्तिस्वीकारात्। तदुक्तं – "यदा मनः त्वचं परिहृत्य" इत्यादि – [8]चैत्रीयात्म-मानसं प्रति चैत्रीयज्ञानवत्वेनैव हेतुत्वमित्यपि ब्रूमः। इदं तु वस्तुगति[9]मनुरुध्य

---

मतान्तरमाह – रसनेति। जन्यज्ञानत्वावच्छिन्ने त्वङ्मनोयोगस्य हेतुत्वमभ्युपेत्य रसनाद्युत्पत्ति – कालाच्चोत्पत्ति [काले त्वाचोत्पत्ति] वारणाय रसनमनोयोगादेः त्वाच-प्रतिबन्धकत्वकल्पने तु महागौरवमित्यर्थः। जन्यज्ञानत्व इति। तस्य – जन्यज्ञानत्वस्य। नानात्वात् – अनन्यथासिद्धनियतपश्चाद्भावित्वरूपजन्यत्वघटितत्वेन नानात्वात्। जन्यप्रत्यक्षत्व इति। इन्द्रियजन्यतावच्छेदकतया सिद्धजन्य – प्रत्यक्षत्वस्य जातितया तत्त्वावच्छिन्ने त्वङ्मनोयोगस्य हेतुत्वे न गौरवं, न वा कार्यकारणभावा इति भावः। अन्ये इत्यस्वरसबीजं तु सुषुप्तावात्ममानसवारणाय मानसत्वावच्छिन्न एव त्वङ्मनोयोगस्य हेतुत्वकल्पनमुचितं; न तु जन्यप्रत्यक्षत्वावच्छिन्ने। चाक्षुषादावपि तस्य हेतुत्वप्रसक्त्या गौरवादिति।

---

1 मनो इ.
2 'समान्य' नास्ति इ.
3 सन्नपि आ.
4 'तददृष्टसहकृत' नास्ति आ.
5 '°मनः' नास्ति आ.
6 सम्पद्यते आ.
7 'प्राक्तन' इत्यधिकः आ.
8 'चैत्रीय .... .... ब्रूमः' इत्यन्तस्त्रुटितः इ.
9 सन्धाय आ.

त्वङ्मनोयोगस्य । जन्यज्ञानमात्रहेतुत्वेऽपि ज्ञाना – [1]समानाधिकरणज्ञानकारण-मनस्संयोगाश्रयत्वस्य [2]तल्लक्षणस्य [3]वाच्यत्वात् त्वक्त्वस्य जातित्वात् । त्वङ्मनो-योग एव ज्ञानहेतुः; न तु शरीरमनोयोगः । शरीरत्वस्योपाधित्वात् सुषुप्तिकाले तत्सत्त्वाच्चेति शरीरे नातिव्याप्तिः ।

यदि च समवायेन [4]चैत्रमनोयोग[5]स्य शरीरनिष्ठस्यावच्छेदकतया चैत्रीयज्ञाने हेतुत्वं, तदा ज्ञानसमानाधिकरणज्ञानकारणसंयोगाना – श्रयवृत्ति – [6]मनोवृत्तिज्ञान-कारण – [7]संयोगाश्रयत्वं तत् । शरीरात्ममनसां ज्ञानसमानाधिकरणज्ञानकारण-

---

त्वङ्मनोयस्य जन्यज्ञानत्वावच्छिन्नं मानसत्वावच्छिन्नं वा प्रति हेतुत्वं खण्डयति – वस्तुतस्त्विति । ननु सुषुप्तौ विजातीयात्ममनोयोगासत्त्वे श्वासप्रश्वासहेतु – जीवेन यत्नो [जीवनयत्नो]त्पादो न स्यादत आह – जीवनयत्नस्त्विति । यदेति । यदा मनः त्वचं परिहृत्य त्यक्त्वा पुरीतति तिष्ठति तदा सुषुप्तिरित्यर्थः । [8]ज्ञानादाविव जीव[न] योनियत्नेऽपि विजातीयात्ममनो – [9]योगत्वेन हेतुत्वपक्षे सुषुप्तावात्ममानसवारणाय कल्पान्तरमाह – चैत्रीयेति । [10]तथा च सुषुप्तौ चैत्रीयज्ञानाभावात् न ततः चैत्रस्य स्वात्ममानसं, न वा जागरे परात्ममानसं परात्मनि चैत्रीयज्ञानाभावादिति भावः । इदं तु – जन्यज्ञानत्वावच्छिन्ने त्वङ्मनोयोगहेतुत्वखण्डनं तु । ज्ञान इति । मनस्संयोगवत्यात्म[11]न्यतिव्याप्तिवारणाय ज्ञानासमानाधिकरणे[ति] मनस्संयोगविशेषणम् । [12]तादृशमनस्संयोगवति घटादावतिव्याप्ति-

---

1 °समवायिकारण° आ.
2 तल्लक्षणत्वस्य आ.
3 संभवात् आ.
4 चैत्रीयमनो° आ.
5 'स्य .... .... संयोगाना' इत्यन्तस्त्रुटितः । तत्स्थाने – 'स्त्वगा' इत्यस्ति आ.
6 'मनोवृत्ति' नास्ति आ.
7 'मनः' इत्यधिकः आ.
8 'ज्ञाना .... .... यत्नेऽपि' इत्यन्तस्त्रुटितः । तत्स्थाने – 'सुषुप्तौ' इत्यस्ति ग.
9 °योगं स्वीकृत्याप्यात्ममानस° ग.
10 'तथा .... .... भावः' इत्यन्तस्त्रुटितः ग.
11 °न्यव्याप्ति क.
12 'तादृश .... .... संयोग-विशेषणम्' इत्यन्तस्त्रुटितः क.

संयोगाश्रयत्वात् शरीरमनोयोगात्ममनोयोगयोः न तदनाश्रयवृत्तित्वमित्यात्मशरीरयोस्संयोगविशेषणेन प्राथमिकवृत्त्यन्तेन व्युदासः। शरीरतदवयवनाड्यादिनाऽऽत्मसंयोग एव चेष्टावदात्मयोगत्वेन हेतुः, अतो न स्वप्नवन्नाडीमनोयोगमादाय तन्नाड्यामतिव्याप्तिः। चक्षुर्घटादिसंयोगमादाय घटादावतिव्याप्तिवारणार्थं मनोवृत्तीति। मनोघटसंयोगादिकमादाय तदर्थं ज्ञानकारण इति। शरीरावच्छेदेन प्राणमनस्संयोगत्वेन न हेतुत्वम्; किं तु शरीरप्राणसंयोगत्वेनैवेति प्राणव्युदास [1]इति [2]समासः ॥

---

वारणाय ज्ञानकारण इति संयोगविशेषणम्। तादृशचक्षुर्घटसंयोगमादाय घटेऽतिव्याप्तिवारणाय मनःपदमिति। शरीरमनोयोगस्य ज्ञानकारणत्वमाशङ्क्य शरीरेऽतिव्याप्तिवारणायाह – त्वक्त्वस्येति।

[3]ननु समवायेन शरीरमनो – योग्य[योग]स्यावच्छेदकतया जन्यज्ञानत्वावच्छिन्नहेतुत्वमवश्यं वाच्यम्। अन्यथा त्वङ्मनस्संयोगादिकाले सकलकारणसत्वे घटावच्छेदेनाप्यात्मनि ज्ञानोत्पत्त्यापत्तिः। तथा च शरीरमनोयोगमादाय ज्ञान – सामानाधिकरण्य [समानाधिकरण] – ज्ञानकारणमनस्संयोगाश्रयत्वस्य शरीरे सत्त्वादतिव्याप्तिः दुर्निवारेत्यत आह – यदि चेति। तथा च शरीरमनोयोगमादाय ज्ञानसमानाधिकरणज्ञानकारणं शरीरमनोयोगमपीति तदाश्रये शरीरेऽतिव्याप्तिर्निष्प्रत्यूहेति भावः। तदा ज्ञान इति। ज्ञानसमानाधिकरणज्ञानकारणमनः – [4]संयोगानाश्रयवृत्तिर्मनोवृत्तिश्च ज्ञानकारणसंयोगो घ्राणमनस्संयोगादिरेव तदा – [5]श्रयत्वस्य घ्राणादौ सत्त्वात् सङ्गतिः ॥

---

1 'इति समासः' नास्ति इ.
2 प्रयासः आ.
3 'ननु ... .... इत्यत आह' इत्यन्तस्त्रुटितः ग.
4 °संयोगाश्रय° ग.
5 °श्रयस्य ग.

## पार्थिवविषयनिरूपणम्

विषयस्तु द्व्यणुकादिक्रमेणारब्धस्त्रिविधः — मृत्पाषाणस्थावरलक्षणः। तत्र मृत्प्रकारेष्विष्टिकादिः; पाषाणो मणिउपलवज्रादिः; स्थावरो वृक्षतृणौषध्यादिः। मृत्त्वं पाषाणत्वं [1]स्थावरत्वं च सामान्यविशेषः। [2]अत्र यद्यपि शरीरमपि विषय इति तत्त्वेनैव वक्तुमुचितं, तथापि शरीरत्वेन पृथक्पुरुषार्थसाधन-तेति [तां] द्योतयितुं पृथगुक्तिः ॥

नन्वेवं वृक्षादयः स्थावरा अपि शरीरभेदतया तत्रैव वक्तुमुचिताः। न चासिद्धिः; वृक्षादयः [3]प्रतिनियतभोक्त्राधिष्ठिताः जीवनमरणस्वप्नजागररोगभेषज-प्रयोगबीजसजातीयानुबन्धानुकूलोपगमप्रतिकूलापगमादिभ्यः प्रसिद्धशरीरवत्।

---

तृतीयां विधमाह — विषयस्त्विति। अत्र विषयत्वं लौकिकसाक्षात्क्रियमाणतया भोगसाधनत्वं मुख्यम्। इदञ्च घटपटादीनाम्। द्व्यणुकाद्यतीन्द्रियस्य तु निरुक्तविषयो-पादानत्वेन गौणम्। नभसोऽपि तादृशशब्दोपादानत्वेन गौणविषयत्वमिष्टमेव। यद्वाऽनित्यत्वे सति साक्षात्परम्परया वा भोगसाधनत्वं विषयत्वमिति न कापि क्षतिरिति। [4]अत्र यद्यपीत्यादि। कामुकशरीरयोः परस्परं भोगसाधनत्वात् शरीरस्याविषयत्वमिति भावः। शरीरत्वेनेति। चन्दनादिविषयसत्त्वेऽपि शरीरं विना भोगानुत्पत्तेः। तस्य शरीरत्वेनापि पृथक्पुरुषार्थसाधनत्वमस्तीति तेन रूपेण पृथङ्निरूपणम्। एवमिन्द्रियस्यापि पृथङ्निरूपण-मिति भावः। [5]पृथक्पुरुषार्थसाधनतां — अवच्छेदकतासंबन्धेन भोगसाधनतां भोगावच्छेदक-तामिति यावत् ॥

---

1 'उद्भिन्त्वात्मकं' इत्यधिकः आ.
2 अथ इ.
3 प्रतीतिनियत° आ.
4 'अत्र .... .... निरूपणमिति भावः' इत्यन्तस्त्रुटितः ग.
5 'पृथ .... .... यावत्' इत्यन्तस्त्रुटितः क.

न चैते सन्दिग्धासिद्धाः; आध्यात्मिकवायुसम्बन्धात्। सोऽपि मूले [1]सिक्तानामपामौषधस्य चाभ्यादानात्। तदपि वृद्ध्या, क्षत – [2]भग्नसंरोहणेन च। अन्यथा सर्वमिदमनुपपन्नं स्यात्; न तु वृद्ध्यादिकं गिरिपाषाणादावपीति चेत् – तथापि —

नर्मदातीरसंलग्नाः [3]सरलार्जुनपादपाः।
नर्मदातोयसंस्पर्शात् [4]ते यान्ति परमां गतिम् ॥

स्मशाने जायते वृक्षः कङ्कगृध्रोप – [5]सेविनः ॥

इत्याद्यागमानामप्यत्रार्थे मानत्वादिति —

सत्यम्। नरादिगत – [6]प्रकृष्टचैतन्यावच्छेदकत्वस्य तेषामभावेन प्रायशः जंगमोपकारकत्वेन [7]तदधीनत्वेन चापि ज्ञानविषयेष्वन्तर्भाव्य व्युत्पादितमिति।

अत्र शरीरपदेन तदवयवानां [तदवयवाः] सास्नादयः, तद्विकाराः, क्षीरघृतादयश्च। इन्द्रियपदेन तदवयवाः, विषयपदेन द्व्यणुकादयः, पाषाणपदेन हरितालादयः, स्थावरपदेन पत्रपुष्पादयः, वृक्षपदेन काष्ठादयः, तृणशब्देन तालादयः, ओषधिपदेन तद्विकाराः तिलतण्डुलादयो गृह्यन्ते।

---

ननु शरीरादौ विरूपितेऽपि तदवयवमांसास्थ्यादीनां [अ] निरूपणात् न्यूनत्वमत आह – अत्र शरीरेति।

---

1 निषिक्तानां आ.
2 °भङ्ग प्ररो° आ.
3 सुरभार्जुन° आ.
4 तेषां हि परमां अ. तोयानि परमां इ.
5 °शोभिनः इ.
6 °प्रकृतचैतन्य° इ.
7 तदधीनत्वे च तान् आ.

नन्वेतेषु गन्धवतामस्तु पृथिवीत्वम्; गन्धवत्त्वस्य व्यञ्जकत्वेन प्रत्यक्षसंभवात्। निर्गन्धे मण्यादौ तत्कुत इति चेत् – [1]भस्मनि गन्धोपलब्धेः [2]कठिनस्पर्शात् पाकजवत्वाच्चेति गृहाण। वज्रं पार्थिवं चेत् – लोहलेख्यं [3]स्यात्। न स्यादेव, अप्रयोजकत्वात्; अतिकठिन – [4]स्पर्शशून्यस्य [5]तत्प्रयोजकत्वात्।

स्यादेतत् – तैलघृतरसादिकं न पृथिवी, स्नेहवत्वात्। नापि जलादिकं, भस्मीभावात्; किन्त्वतिरिक्तमेवेति चेत् – न; भस्मीभावादेव तेषां पार्थिवत्वात्। स्नेहोपलब्धिस्तूपष्टम्भक – [6]जलौपाधिकी; तत्र तैलत्वादिकं पाकजविलक्षणरूपरसगन्धादि – [7]नियम्यो जातिविशेषः प्रत्यक्षसिद्धः।

यत्तु – बीजक्षीरमांसप्रभवस्नेहवत्वं तन्नारिकेलादिस्नेहवतोऽपि तैलत्वं, रसादिसारूप्यात् घृतव्यपदेशस्तु गौण इति – तन्न – [8]बीजद्रवादावपि तैलत्वापत्तेः; बीजप्रभवत्वादिप्रतिसन्धानं विनापि तैलमित्यादिप्रतीतेः ॥

---

वज्रस्य पार्थिवत्वं व्यवस्थापयितुं आक्षिपति – [9]वज्रमिति। आक्षेपं निरस्यति – न स्यादेवेति। तत्प्रयोजकत्वात्।

घृतादेरपि पार्थिवत्वं व्यवस्थापयितुमाक्षिपति – घृत इति। आक्षेपं निरस्यति – न भस्मीभावादिति। तत्र – तैलादिषु। तैलत्वमित्यादिना घृतत्ववसात्वयोः सङ्ग्रहः।

---

1 तस्मिन्निर्गन्धोप° अ.
2 कनकस्य पाकज° इ.
3 'स्यात्' नास्ति इ.
4 °स्पर्शवत्वस्य इ.
5 तत्तत्प्रयोज° इ.
6 °जलौपाधिकी आ.
7 °नियमो आ.
8 बीजादावपि अ.
9 'वज्रं .... .... माक्षिपति' इत्यन्तस्त्रुटितः ग.

अत्र वाचस्पतिमिश्राः — [1]तैलपदं सार्षपादौ भाक्तं; योगरूढिभ्यां तिलप्रभवस्नेहवत्येव मुख्यत्वादित्याहुरित्यलं [2]पल्लवितेन ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितपदार्थमालायां
पृथिवीप्रकरणं समाप्तम् ॥

---

आचार्यमतमाह – यत्त्विति । बीज इति । बीजं तिलादि; तत्प्रभवस्नेहवत्त्वं [3]तैलत्वम् । क्षीरप्रभवस्नेहवत्त्वं घृतत्वं; मांसप्रभवस्नेहवत्त्वं वसात्वं; न तु जातिविशेष इत्यर्थः । ननु बीजद्रवादेः तैलत्वादीष्टमेवेत्यत आह – प्रभवत्वादीति ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसंभूत श्रीमद्रुद्रकवीन्द्रतनूजमुद्गल-
विदुषस्सूनुना भास्करेण विरचितपदार्थमालाप्रकाशे पृथिवीप्रकरणं
समाप्तम् ॥

---

1 तैलमिदं आ.
2 पल्लवेन इ.
3 तैल .... .... घृतत्वं' इत्यन्तस्त्रुटितः क.

## अथ जलप्रकरणम्

जलमितरेभ्यो भिद्यते जलत्वात् । तच्च गन्ध [1]स्थाने [2]स्नेहनिवेशेन प्रागुक्तचतुर्दशगुणवत् । तत्र रूपं शुक्लमेव । कालिन्दीजलादौ नीलिमाद्युपलम्भस्तु संसर्गि पार्थिवौपाधिकः । कथमन्यथा वियति विक्षिप्ते [3]तत्र धावल्योपलभ्यः ।

## जले मधुर एव रस इति निरूपणम्

रसो [4]मधुर एव । न [5]चासिद्धिः; हरीतकी भक्षणोत्तरं प्रत्यक्षेण माधुर्योपलम्भात् । अथ हरीतकी माधुर्यमेव जलेन व्यज्यते । यदि च चित्ररूपवत् चित्ररसे मानाभावात् गुणविरोधेन नीरसैव हरीतकी । षड्रसेति व्यवहारस्तु षड्रसकार्यकारित्वात् परम्परयाऽवयवगतषड्रसत्वात् वेति विभाव्यते तदा तदवयव-

---

पृथिवीं निरूप्य क्रमप्राप्ता अपः निरूपयति — जलमित्यादि ।

गुणविरोधेनेति । मधुरेण मधुर एवारभ्यते; न तु तिक्तादिः । एवं तिक्तेन [6]तिक्त एव, न मधुरादिः । अन्यथा मधुराद्यारब्धे तिक्ताद्यापत्तेरिति । गुण[7]विरोधेन तिक्तमधुरारब्धहरीतकी नीरसैव । चित्ररसे मानाभावस्तु प्रागुक्तः स्मर्तव्य इत्यर्थः । षड्रसेति । मधुरतिक्तादिषट्रसकार्यं पुष्टिपित्तनाशादि तत्कारित्वादित्यर्थः । परम्परया — स्वसमवायि-

---

1 '०स्थाने' नास्ति अ.
2 स्नेहं निवेश्य आ. इ.
3 'तत्र' नास्ति आ. इ.
4 मधुरादिः इ.
5 वा अ.
7 तिक्ताद्येव क.
8 विरुद्धे

माधुर्यमेव व्यज्यतामिति चेत् — न। तर्हि तदीय — [1]कषायादिरसानामपि तदोपलम्भापत्तेः। जलसंयोगेन हरीतक्यां माधुर्यमुत्पाद्यत इति तु न युक्तम्। अवयवरसाजन्यस्य पृथिवीरसस्याग्निसंयोगैकसाध्यत्वात्। [2]कर्कटीभक्षणोत्तरं जले तिक्तरसोपलब्धिस्तु कर्कट्युपाधिका। कर्कट्यां जलपानात् पूर्वमपि तिक्तरसोपलब्धेः; तस्याः तद्रसावश्यकत्वात्।

एतेन जम्बीरकरवीरनीरधिनीरादावाम्लतिक्तलवणरसाद्युपलब्धिर्व्याख्याता। शुष्केऽपि जम्बीरादावाम्लरसा — [3]द्युपलम्भेन तेषां तदीयत्वा — [4]दिति। कर्कटीभक्षणेन रसनाग्रवर्तिपित्तक्षोभे तदीयतिक्तरसोपलब्धिरिति तु वैद्यकसिद्धम्।

किं च निदाघे निःपीतनिर्मलजलमाधुर्यानुभवः सर्वानुभवसिद्धतया दुरपह्नवः। एतेन हरीतक्यादिमाधुर्यमेव जल[5]व्यङ्ग्यम्। [6]फलबलेन तथैव कल्पनादित्युक्तावपि न क्षतिः। न चैवं पृथिव्यां मधुररसप्रतीतिर्जलोपाधिकी स्यादिति वाच्यम्। अतिशुष्के शर्करादौ विलक्षणमाधुर्यस्य जलासम्भवित्वादिति समासः॥

---

**समवेतत्वेन**। तदा — **हरीतकीभक्षणोत्तरं जले माधुर्योपलम्भकाले**। ननु जले यदि हरीतकीभक्षणव्यङ्ग्यो मधुरः स्वीक्रियते तर्हि कर्कटीभक्षणव्यङ्ग्यः तिक्तोऽपि स्वीक्रियतामत आह — **कर्कटी इति**।

'एतेने'त्यादिवक्ष्यमाणास्वरसादाह — **किं च निदाघ इति**। न क्षतिः — **न जले माधुर्यक्षतिः**। अपि शुक्ल [अतिशुष्क] **इति**। न च वह्न्यादौ शुष्कशर्करादियोगे धूमोत्पत्तेः

---

1 °काषाय° इ.
2 कर्करी इ.
3 °द्यनुभवेन आ.
4 'इति' नास्ति इ.
5 °व्यञ्जकफल° इ.
6 'नान्यरसः' इत्यधिकः आ.

## जले शीत एव स्पर्श इति निरूपणम्

शीत एव स्पर्शो जले, क्वचिदुष्ण – [1]तोपलब्धिस्त्वौपाधिकी तथा शीतस्पर्शो जल एव। न च श्रीखण्डेऽपि शैत्यमस्ति; घर्षकजलशैत्यादितोऽतिशयितशैत्यप्रतीतेरिति वाच्यम्। श्रीखण्डसंयोगेन घर्षकजलस्यैव शैत्यातिशयव्यक्तेः श्रीखण्डान्त – [2]र्वर्तिजलस्यैव वा बहिर्भूतस्य शैत्यातिशय[3]प्रतीतेरिति दिक् ॥

## जल एव स्नेह इति निरूपणम्

स्नेहोऽम्भस्येव। अत्र केचित् – स्नेहो न जलधर्मः; तैलादाविव जलेऽनुपलब्धेः। नापि पृथिवी – [4]वृत्तिविशेषगुणः सर्वपृथिव्यव्यापकत्वात्। किं तु पृथिवी – विशिष्टे [विशेषे] घृततैलरसादावुपलभ्यमानो जातिविशेष इत्याहुः ॥

तदसत् — स्निग्धतरादिप्रतीतेः सातिशयत्वात्। न हि जातिः सातिशयिता। किं च तस्य जातित्वे क्षीरत्वादिवत् द्व्यणुकादिनिष्ठता वाच्या। पृथिवीत्वादिव्याप्यजातेः पर[5]माणुवृत्तित्वाभावात्। तथा च क्षीरत्वाद्यवच्छिन्ने

---

प्रत्यक्षसिद्धत्वात् तत्रार्द्रत्वमावश्यकम्; धूमस्यार्द्रेन्धन – प्रभवत्वनियमात्। तथा च पृथिव्यां जलोपाधिकमेव माधुर्यं, न तु स्वाभाविकमिति वाच्यम्। जलमाधुर्यस्याविशिष्टतया दुग्धशर्करादौ विलक्षणमाधुर्यस्यान्यथानुत्पत्तेः तत्र तज्जातीयमाधुर्यस्यावश्यकत्वादिति भावः।

श्रीखण्डादि पृथिव्यां शीतस्पर्शव्यवच्छेदाय नियमान्तरमाह – तथा शीतेति ॥

---

1 °'तोपलब्धि' नास्ति इ.
2 °र्वृत्ति° आ.
3 प्रतीयते आ.
4 °'वृत्ति' नास्ति आ.
5 °माण्ववृत्ति° अ. आ.

पाकजरूपरसादि – [1]विशेषवत् स्निग्धत्वाद्यवच्छिन्ने नियामको गुणविशेषो वाच्यः। स च [2]न सम्भवति; सम्भवे वा स एव स्नेहः। न च क्षीरत्वाद्यपि परमाणुवृत्त्यस्तु। तथासति तृणदध्यादेरपि क्षीरत्वाद्यापत्तेः। किं चैवं तृणत्वक्षीरत्वादीनां साङ्कर्यापत्तिः। तृणक्षीरादेरेकपरमाण्वारब्धत्वात्। न च रूपरसादेस्तन्नियामकस्य पाकेन [3]परावृत्त्या तृणत्वादेः परावृत्तिस्सम्भवति। अस्तु स्नेहाख्यो गुण एव तैलादाविति चेत् – न। तदा [तद] वृत्तेः गन्धादिवदुद्भवादिकल्पने द्रवत्ववत्पाकजत्वमात्रकल्पने [4]वा गौरवम्। तत्र तत्प्रतीतिस्तु संसृष्टजलौपाधिकीति दिक् ॥

---

**ननु जातिरूपस्य स्नेहस्य न वास्तवसाति – [5]शयितत्वं; किं तु तत्तदाश्रयोपाधिकमित्यरुचेराह** – किंच तस्येति [6]स्निग्धत्वेति । **स्निग्धत्वावच्छिन्ने तैलघृतवसादौ सर्वत्राप्येकजातीयो गुणविशेषो नियामको वाच्यः। स चानुभवबाधान्न संभवति। अथापि नियामकत्वेन यदि कल्प्यते तदा स एव स्नेहः। तत्र च पृथिवीविशेषगुणत्वासम्भवः पूर्वदर्शित इति भावः। तृणदध्यादेः क्षीरत्वादिकमिष्टमेव। न च तृणादौ क्षीरत्वाद्युपलम्भापत्तिः; तद्व्यञ्जकरूपरसादेस्तत्र विरहेण तदुपलम्भासम्भवादित्याशङ्क्याह**– किं चैवमिति। [7]साङ्कर्येति। **क्षीरानारम्भकतृणेऽपि पाकारब्धक्षीरे च मिथः परिहारेण वर्तमानयोः तृणत्वक्षीरत्वयोः क्षीरारम्भकतृण – तदवयवादौ [तदवयवादौ] साङ्कर्यापत्तिरित्यर्थः।** तृणेति। **तृणस्यापरमाण्वन्तं भङ्गे तैरेव परमाणुभिः द्व्यणुकादिक्रमेणक्षीरारम्भात् तृणक्षीरयोरेकपरमाण्वारब्धत्वमविरुद्धम्। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तद्द्रव्यं तद्द्रव्योपादानोपादेयम् महापटध्वंसजन्यखण्ड – पटत्वा [पटव] दिति। व्याप्तेरिति भावः।** तन्नियामकस्य – **क्षीरादिनियामकस्य।** पृथिवीमात्रेति।

---

1 'विशेष' नास्ति इ.
2 'न' नास्ति अ.
3 परावृत्ततृण° आ.
4 'वा' नास्ति इ.
5 °शयित्वं क.
6 'स्निग्ध ... .... साङ्कर्यापत्तिरित्यर्थः' इत्यन्तस्त्रुटितः ग.
7 'साङ्कर्येति' नास्ति क.

यत्तु — (कि. पृ. ६९) जलावसेकात् सक्तु — [1]सिकतादिषु [2]सङ्ग्रहाख्यः संयोगविशेषो धारणाकर्षणहेतुः जायते। स च न केवलाद्द्रवत्वात् स्नेहाद्वा। काचकाञ्चनादिभिर्द्रुतैरद्रुतैश्च हिमादिभि—श्च तदनुदयात्। किं तु स्नेहद्रवत्वाभ्यां मिलिताभ्यामेवेति [3]जले स्नेह - सिद्धिरिति — तन्न — उद्भूत सांसिद्धिकद्रवत्ववता जलेनैव सङ्ग्रहसम्भवात्। एवं सति स्नेह - सिद्धः [सिद्धिः] कुत इति चेदनुभवादिति दिक् ॥

## जलविभागः

तच्च द्विविधम् — नित्यानित्यभेदात्। नित्यं परमाणुलक्षणम्। नन्वस्तु गन्धादिसमवायिकारणतावच्छेदकं पृथिवीत्वं परमाणौ; [4]जलत्वादिकं तु कुतः। न चानित्यस्नेहसमवायिकारणतावच्छेदकत्वेन [5]आद्व्यणुकं सिद्धस्य जलत्वस्य स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वेनारम्भकपरमाणुवृत्तित्वमनुमेयम्। परमाणोः

---

पृथिवीविशेषगुणस्य यावत्पृथिवीवृत्तित्वनियमात् पृथिवीमात्रे स्नेहापत्तेरित्यर्थः। ननु जल एव यदि स्नेहः तदा तैलादौ तत्प्रतीतिः कथमित्यत आह तत्रेति। तैलादावित्यर्थः॥

जले स्नेहसाधकमाचार्यमतमाह — यत्त्विति।

लक्षितं जलं विभजते — तच्चेति। अनुमेयमिति। अनित्यस्नेहसमवायिकारणतावच्छेदकतया सिद्धजलत्वं परमाणुवृत्ति स्पर्शवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववदित्यनुमानं बोध्यमित्यर्थः। फलोपधानापत्तेः — अनित्यस्नेहोपधानापत्तेः।

---

1 °सिक्तादिषु आ.
2 संग्रहाख्यसंयोग° आ.
3 जले .... .... एवं सति' इत्यन्तस्त्रुटितः अ.
4 जलत्वं कुतः इ.
5 द्व्यणुके इ.

तज्जातिमत्त्वे नित्यस्य स्वरूपयोग्य [त्वे] फलोपधानापत्तेः। यदि चानित्यस्येव नित्यस्यापि सहकारिविरहात् फलानुपधानसम्भवः तदाऽनित्यस्पर्शसमवायिकारणतावच्छेदकतया भूतचतुष्टयवृत्तिरेकजातिरस्तु। सैव [1]च द्रव्यत्वसाक्षाद्व्याप्यतया परमाणुवृत्तिः जलादिपरमाणौ फलानुत्पादः [2]समवायिकारणाभावात्। पाकजस्पर्शं प्रति पृथिव्या एव समवायि कारणत्वात् सदा स्पर्शवत्वाच्च।

अथैवं द्रव्यत्वमेव तथाऽस्तु; किमुक्तजात्येति चेत् — किं जलत्वादिनेत्यपि तुल्यम्।

अत्र वदन्ति — जलत्वतेजस्त्वे तावत्प्रत्यक्षत एव सिद्धे। वायुत्वं च कीचकादिप्रभवविलक्षण — [3]शब्दादिकार्यजनकतावच्छेद — [4]कतया एतान्येव यथा-

---

फलानुत्पादः— अनित्यस्पर्शानुत्पादः। ननु जलादिपरमाणौ पाकादेव स्पर्शोत्पत्तिरस्त्वत आह — पाकजेति। सदा स्पर्श इति। जलादिपरमाणुस्पर्शस्य नित्यतया तत्र स्पर्शसामान्याभावस्य हेतोरसत्त्वात् नानित्यस्पर्शोत्पाद [5]इति भावः।

शङ्कते—अथेति। एवमिति। अनित्यस्पर्शसमवायिकारणतावच्छेदकजातेः जलपरमाणौ सत्त्वेऽपि फलानुत्पादस्यासमवायिकारणविरहप्रयुक्तत्वे द्रव्यत्वमेवानित्यस्पर्शसमवायि — [6]कारणतावच्छेदकमस्तु, जलादिपरपाणुगगनादौ स्पर्शानुत्पादस्यत्वसमवायिविरहादेवोपपत्तौ किं भूतचतुष्टयवृत्तिजात्येत्यर्थः। किं जलत्वादिनेति। आदिना तेजस्त्ववायुत्वयोः संग्रहः। तुल्यमिति। अनित्यस्नेहादिसमवायिकारणतावच्छेदकमपि द्रव्यत्वमेवास्तु; जलादिपरमाणुगगनादौ स्नेहाद्यनुत्पादस्य त्वसमवायिविराहादेवोपपत्तिरिति किं जलत्वादिजात्येति तुल्यत्वमित्यर्थः।

---

1 'च' नास्ति इ.
2 असम° इ.
3 °शब्दाकार्य इ.
4 °कत्वेन तान्येव इ.
5 'इति भावः' नास्ति क.
6 'कारण' नास्ति ग.

यथमनित्यानां स्नेहस्वच्छरूपशीतस्पर्शसांसिद्धिकद्रवत्वानामुष्णस्पर्शभास्वररूपयोः विजातीयानुष्णाशीतस्पर्शस्य समवायिकारणतावच्छेदकानीति नित्याणुव्यावृत्त-[1]माद्व्यणुकं जातित्रयं सिध्यति। तदवच्छिन्नसमवायिकारणतावच्छेदकतया तु तद्व्यापकं परं जातित्रयं परमाणुसाधारणम्। जात्योर्मिथो भेदाग्रहस्तु समनियत-योग्यव्यक्तिकत्वात् [2]व्यञ्जकाभेदाच्च ।

किं च जलत्वादिकं परमाणौ वर्तते चेत्-सिद्धमीहितम्। नो चेत्तदव-च्छिन्नसमवायिकारणतावच्छेदकतया परमाणुसाधारणजात्यन्तरसिद्धिश्च, तदेव जलादिपदप्रवृत्तिनिमित्तम् ।

---

प्रसङ्गादत्रैव लाघवेन जलत्वादिजातित्रयं साधयति - जलत्वतेजस्त्वेत्यादि। भिन्न-प्रयत्नेन तेजस्त्ववायुत्वयोः साधने गौरवं स्यादिति भावः। समनियतयोग्येति। न च नित्यस्नेहादिसमवायिकारणतावच्छेदकजलत्वाद्यवच्छिन्न-समवायिकारणतावच्छेदकतया सिद्ध-जातेः परमाणुसाधारणत्वेऽपि [3]अन्त्यावयविजलाद्यवृत्तित्वात् कथं तज्जात्योः समनियत-योग्यव्यक्तिकत्वमिति वाच्यम्। पार्थिवस्य घटादेरिव कस्यचित् जलादेरन्त्यावयवित्वाप्रसिद्धेः, अत एवास्वरसादाह - [4]व्यञ्जकाभेदाच्चेति।

न चानित्यस्नेहादिसमवायि, कारणतावच्छेदकजलत्वादेरेव जलादिपदप्रवृत्तिनिमित्त-त्वमभ्युपेत्य परमाणुवृत्तित्वमेव कल्प्यतां, किं तदवच्छिन्नसमवायिकारणतावच्छेदकजात्यन्तरस्य परमाणुसाधारणस्य कल्पनेनेत्यत आह - किं चेति। जलत्वादिकं - अनित्यस्नेहसमवायि-कारणतावच्छेदकजलत्वादिकम्। सिद्धमीहितमिति। तथा च जात्यनन्तरं न कल्प्यत इति भावः। तदेव - परमाणुसाधारणजात्यन्तरमेव।

---

1 °मापद्व्यणुकं आ.
2 व्यञ्जकावच्छेदाच्च आ.
3 'अन्त्या .... .... स्नेहादि समवायि' इत्यन्तस्त्रुटितः क.
4 व्यञ्जकाभावादिति ग.

कश्चित्तु – [1]जलत्वादिना जलत्वादिव्यापकजातित्वेन मूर्तत्व – [2]जात्यभावे स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वेन, तत्सत्त्वे [3]तत्साक्षाद्व्याप्यजातित्वेन च परमाणुवृत्तित्वसिद्धिः। तासामेव चानित्यत्वविशेषितानामनित्यस्नेहादिसमवायिकारणतावच्छेदकत्वमित्याह ॥

[4]केचित्तु – [आ] द्व्यणुकमेव पृथिवीत्वादिकं, [5]रूपादिकं च पृथिव्यादिकं प्रति पृथिव्यादिमत्त्वेन विजातीयसंयोगत्वेनैव वा हेतुत्व – [6]मित्याहुरित्यस्मत्कृत – वादमालायां विस्तरः ॥

---

[7]मूर्तत्वजातिसद्भावे स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वस्य जलत्वादौ पक्षे स्वरूपासिद्धिः स्यादत आह – मूर्तत्वजात्यभावेति। तथा च मूर्तत्वस्य जातित्वाभाव एवायं हेतुरिति न स्वरूपासिद्धिरिति भावः। तत्सत्त्वे – मूर्तत्वजातिसत्त्वे। क्रियासमवायिकारणतावच्छेदकतया तत्सिद्धेरिति सिद्धिरिति। जलत्वादिकं परमाणुवृत्ति जन्यजलत्वादिव्यापकजातित्वात् [8]द्रव्यत्ववत्, स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् मूर्तत्वव्याप्यजातित्वाद्वा पृथिवीत्ववदित्यनुमानेन परमाणुवृत्तित्वसिद्धिरित्यर्थः। [9]अत्र मध्यमहेतौ स्पर्शवद्वृत्तीति जातिविशेषणमात्मत्वे व्यभिचारवारणायेति बोध्यम्। कश्चित्त्वित्याहेत्यस्वरसोद्भावनम्। तद्बीजं तूक्तानुमानस्याप्रयोजकत्वमिति ॥

आ(घ)द्व्यणुकमेवेति। अत्र मते जलादिपरमाणाविव पृथिवीपरमाणावपि रूपरसादिकं नित्यं; तद्व्यणुकादौ विजातीयानेकरूपरसादिमत्त्वं तु पाकजम्। [10]फलबलेन तत्रैव

---

1 जलत्वादीनां आ.
2 'आदि' इत्यधिकः इ.
3 तादृश साक्षा° आ.
4 परे तु – आपद्व्यणुक° आ.
5 'रूपादिकं च' नास्ति इ.
6 °मिति क्रम अस° आ.
7 मूर्तत्व .... .... तत्सिद्धेरिति-भावः' इत्यन्तस्त्रुटितः ग.
8 'द्रव्यत्ववत्' नास्ति क.
9 'अत्र .... बोध्यम्' इत्यन्तस्त्रुटितः ग.
10 फलेन क.

## अनित्यजलस्य विभागः

अनित्यं [1]त्रिविधम् – शरीरेन्द्रियविषयलक्षणम् । शरीरमयोनिजमेव, वरुणलोके प्रसिद्धम् । पार्थिवभागोपष्टम्भादुपभोगसमर्थम् । अयोनिजमेवेति कुतः ? भूमण्डले योनिजबुद्बुदाकाशशरीरानुपलब्धेः । [2]नन्वेव नित्यमेवास्तु ; [3]तदपवर्गस्तु मनस इव तस्यापि सम्बन्धविशेषविगमात् । वरुणादिलोक – [4]प्राप्तिस्तु तत्तच्छरीरावच्छिन्नसुखप्राप्ति[5]रेवेति चेत् – न । नित्यताया निरवयवत्व [6]व्याप्यत्वात् हस्तपादाद्यवयवश्रुतिर्विरुध्येत । श्रूयते च पुराणादौ [7]वरुणलोकादौ शरीरोत्पत्तिः । एतेन तैजसादिशरीरमपि व्याख्यातम् ।

इन्द्रियं पृथिव्याद्यनभिभूतैर्जलावयवैरारब्धं रसग्राहकं रसनम् ।

---

पाककल्पनात् । अन्यथा गन्धनीलादिसमवायिकारणतावच्छेदकतया सिद्धपृथिवीत्वस्य परमाणु-वृत्ति – बोधका – [वृत्तित्वे बाधका] भावात् आ(द्य)द्व्यणुकमेव [8]पृथिवीत्वादिकमित्यादि मूलव्याघातापत्तेरिति भावः । केचित्त्वित्याहुरित्यस्वरसबीजं तु पृथिवीत्वजलत्वादेः परमाण्व-वृत्तित्वे तत्र पृथिवीजलादिव्यवहारानुपपत्तिरिति ॥

ननु जलीयशरीरस्य सर्वदा पोप्लूयमानकल्पं [कल्पस्य] कथमुपभोगक्षमत्वं; उपभोगसाधनस्यैव शरीरत्वादित्यत आह – पार्थिवभागेति । ननु जलीयशरीरस्य नित्यत्वे वरुणलोके तस्य सर्वदा सत्त्वात्, वारुणयागादौ वरुणलोकप्राप्तिफलकत्वश्रवणं विरुध्येतेत्यत

---

1 'इदं' इत्यधिकः आ.
2 न चैवं आ.
3 'तत्' नास्ति इ.
4 °प्रसिद्धस्तु इ.
5 'एव' नास्ति इ.
6 °व्याप्तत्वात् आ.
7 'वरुण लोकादौ' नास्ति आ.
8 'पृथिवी .... .... बीजं तु' इत्यन्तस्त्रुटितः क.

विषयः सरित्समुद्रहिमकरकादिरूपः। करका पृथिवी; कठिनस्पर्शवत्वादिति चेत् – न; असिद्धेः। प्रतिरुद्धसांसिद्धिकद्रवत्वाभावेनैव वा [1]तत्र काठिन्य-प्रतीतेः। अन्यथा करकानाशोत्तरं तदवयवारब्धे जले सांसिद्धिकद्रवत्वं विरुध्येत। करकायामेव घृतादाविव पाकात् द्रवत्वमिति तु न युक्तम्। द्रुते घृतत्वादिवत् करकात्वोपलम्भापत्तेः: नैमित्तिकद्रवत्वस्य निमित्तनाशनाश्यत्वेन घृतादिवत् पुनः पिण्डीभावापत्तेश्चेति दिक् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितपदार्थमालायां
जलप्रकरणं समाप्तम् ॥

---

**आह – वरुणादिलोकप्राप्तिरिति। एतेन – जलीय – शरीरनित्यत्वनिराकरणेन। व्याख्यातं – अनित्यतया साधितम्।**

**ननु रसनस्य रसग्राहकत्वे पिचाद्यभिभव दशायामपि तेन रसग्रहः स्यादत आह – पृथिव्याद्यनभिभूतैरिति ॥**

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोलसम्भूत श्रीमद्दुद्गकवीन्द्र-
तनूजमुद्गलविदुषसूनुना भास्करेण कृत पदार्थमाला-
प्रकाशे जलप्रकरणं समाप्तम्।

---

1 तत्काठिन्य° आ.

## अथ तेजःप्रकरणम्



तेज इतरेभ्यो भिद्यते तेजस्त्वात् । तच्च रूपस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारवत् । शुक्लभास्वररूपम् । उष्ण एव स्पर्शः । संस्कारो वेगस्थितिस्थापकौ ।

अथोष्णस्पर्शवत्वं न तेजसो लक्षणम्, ऊष्मणि गतत्वात् । न चोष्मा तेजः; तैजसोद्भूतस्पर्शस्योद्भूतरूपव्याप्तत्वादिति चेत् – न । पार्थिवोद्भूतस्पर्शे तथा व्याप्तावपि तैजसे मानाभावात् ।

### तेजोविभागः

तच्च द्विविधम् – नित्यानित्यभेदात् । नित्यं परमाणु[1]लक्षणम् । अनित्यं त्रिविधम् – शरीरेन्द्रियविषयलक्षणम् । शरीरमयोनिजमेव आदित्यलोके । पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् । इन्द्रियं पृथिव्याद्यनभिभूतैः तेजोभिरारब्धं रूपादिग्राहकं चक्षुः ।

---

क्रमप्राप्तं तेजो लक्षयति – तेज इति । ननु तैजसशरीरस्य सर्वदा जाज्वल्यमानत्वात् कथमुपभोगक्षमत्वमत आह – पार्थिवावयव इति । चक्षुषः काचाद्यभिभवदशायां रूपादिग्रहवारणायाह – पृथिव्याद्यनभिभूतैरिति ।

---

1 रूपम् इ.

## चक्षुषः प्राप्यकारित्वसमर्थनम्

[अत्र] केचित् – चक्षुः न प्राप्यकारि, अधिष्ठाना[1]सम्बद्धार्थग्राहकत्वात् । यत् प्राप्यकारि तत् नाधिष्ठानासम्बद्धार्थग्राहकम् । यथा रसनादिः । प्राप्यकारित्वे पृथुतरग्रहणानुपपत्तेश्च । न हि स्वल्पस्य चक्षुषः पृथुतरप्राप्तिसंभव; किं च शाखाचन्द्रमसोर्युगपत् [2]ग्रहणं न स्यात् । न च वेगातिशयात् समाधिरापरमाण्ववयवान्तं गतिमन्तरेणावयविनो गमनाभावात् । तेषां [3]च भूयोऽवच्छेदेन संयोगाभावात्; [4]अत्यतिशयवेगवतोऽपि सन्निकृष्टदेशसंयोगादिकं विना विप्रकृष्टदेशगमनासम्भवाच्च । अपि चैवं काचस्फटिकाद्यन्तरितोपलब्धिः न स्यात् । [5]तथात्वे भित्त्याद्यन्तरितोपलब्ध्यापत्तेः । तस्मादप्राप्यकारि चक्षुः, ततो न तैजसम् । किं तु गोलकमेव विशिष्टा–[6]दृष्टोपगृहीतं, तेन प्रसन्ना–[7]न्धव्यावृत्तिरित्याहुः ।

तन्न — दीपप्रभायामनैकान्तात् चक्षुषो गोलकमिव प्रभाया अपि दीपोऽधिष्ठानं तदसम्बद्धार्थग्राहकत्वं प्रभायाम् । न च तत्राप्राप्यकारित्व–[8]मस्ति ।

---

**चक्षुषस्तैजसत्वे पूर्वपक्षमाह** – अत्र [9]केचिदिति । न प्राप्यकारि – **न सम्बद्धार्थग्राहकम्** ।

**ननु चक्षुषः सम्बद्धार्थग्राहकत्वे शाखाचन्द्रमसोः ग्रहणयौगपद्याभिमानः कालसन्निकर्षादपि न संभवति, तयोरतिव्यवहितत्वेन तस्याप्यसम्भवादित्यत आह** – अचिन्त्यो हीति ।

---

1 °संबन्धार्थ° इ. 
2 'ग्रहणं न स्यात्' नास्ति आ. 
3 'च' नास्ति इ. 
4 अति° इ. 
5 तस्मात् इ. 
6 °दयोप° अ. 
7 °ध्यव्या इ. 
8 °मिति इ. 
9 किञ्चिदिति क.

शाखाचन्द्रमसोर्युगपद्ग्रहणे यौग – [1]पद्यभिमानस्तु कालसन्निकर्षात् शतपत्र-सूचि – [2]व्य [ व्या ]धवत् अचिन्त्यो हि तेजसो वेगातिशयः ।

केचित्तु – निस्सरन् [3]नायनं तेजो बाह्यालोकसहकारेण युगपदेव [4]ताव-दवच्छेदेन संसृष्टचक्षुरुत्पादयतीति शाखाचन्द्रमसोर्युगपद्ग्रहणम् । न चैवं पृष्ठभागस्थिताना – [5]मुपलम्भापत्तिः; आभिमुख्यं त्विन्द्रियव्याप्तावेवोपयुज्यत इति वाच्यम् । पृष्टदेशस्थबाह्यालोकैः चक्षुरुत्पादे मानाभावात् चक्षुषो मूलाव-च्छिन्नवत् पृष्ठावच्छिन्नस्य संयोगस्याग्राहकत्व - [6]सम्भवाच्चेत्याहुः ।

अनन्यगत्या वेगादिविशेष- [7]वशात् विनैव सन्निकृष्टदेशविशेषसंयोगं विप्रकृष्टदेशे संयोगान्तरावस्थित- [8]घनद्रव्यविशेषाणामेव तत्प्रतिबन्धकत्वादित्यन्ये । काचान्तरोपलब्धिस्तु काचादेरतिस्वच्छतया प्रभावन् नयन गतिविरोधित्वा -[9]भावात् ।

किं च चक्षुषोऽप्राप्यकारित्वे भित्त्यादिव्यवहितस्यापि ग्रहः स्यात् । भित्त्यादिकं हि प्राप्तिविघातकतयैव विरोधि, न तु स्वरूपसत्तया, तथात्वे तस्मिन्

---

**वेगातिशये** आचार्योक्तमुदाहरणं **यथा** – "यत्प्राचीनाचलचूडावलम्बिन्येव मयूखमालिनि भुवनो-दरेषु चालोक" (कि. पृ. ७४) इति ।

**चक्षुषः प्राप्यकारित्वं तत्तद्दूषणनिरासेन साधयित्वाऽप्राप्यकारित्वे बाधकमप्याह** – किं च चक्षुष इति । प्राप्तिविघातकतयैव – [10]सम्बन्धविघातकतयैव ।

---

1 °पद्यमान° इ.
2 वेधवत् आ.
3 नयनं आ.
4 °तावदर्थेन आ.
5 °मप्यनुपलंभापत्तेः आ.
6 °समवायाच्चे° अ.
7 °वशादिनैव अ.
8 'घन' नास्ति आ.
9 'भावा' नास्ति आ.
10 संबन्धयैव विघात° क.

सति क्वचिदपि कार्यं न स्यात् । न च [1]तत्तद्भित्तेः स्वस्वप्राच्यादिस्थपुरुषसाक्षात्कारे स्वस्वप्रतीच्यादिवर्तित्वसंबन्धेन प्रतिबन्धकत्वं गौरवात् ।

यत्तु – व्यवहितमयोग्यत्वादेव न गृह्यते; न तु व्यवहितत्वादिति - तन्न - अयोग्यत्वं हि न स्वरूपायोग्यत्वम्; स्थैर्यपक्षे [2]तस्यैव कालान्तरे ग्रहात्। क्षणिकत्वपक्षे प्रत्यासन्नानां सहकारिणामेव [3]तत्रातिशयजनकत्वं नाप्रत्यासन्नानाम्। प्रत्यासत्तिश्च बौद्धानां निरन्तरोत्पादः। अस्माकं तु द्रव्ययोस्संयोगः तदुभयमपि [4]कृष्णतारस्यार्थेन न संभवति; किं तु तदाश्रितस्यातीन्द्रियेन्द्रियस्य गतिक्रमेणेति ।

परे तु – [5]अनन्तचक्षुः क्रियासंयोगविभागतत्कार्यकारणभावादि - [6]कल्पनमपेक्ष्य तत्तद्गोलकादिक्रियादेः तत्तच्चाक्षुषहेतुत्वमेवोचितमिति किमतिरिक्तचक्षुषेत्याहुः ।

तच्चिन्त्यम् – चक्षुस्संयोगत्वादिना हेतुत्वस्य लाघवात्सिद्धौ फल - [7]मुखस्य गौरवस्यादोषत्वात् ।

---

बौद्धमतं खण्डयितुमाह–यत्त्विति । तत्र–[8]भित्त्यादिव्यवहितस्थले । अतिशयेति । प्रत्यक्षजननयोग्यत्वात्मकातिशयजनकत्वं तादृशातिशयविशिष्टद्रव्यजनकत्वमिति यावदित्यर्थः ।

तच्चिन्त्यमिति । चिन्ताबीजं स्वयमेव स्फुटयति – चक्षुस्संयोगत्वादिनेति । [9]चक्षुष्ट्वादेर्जातित्वेन तदवच्छिन्न – चक्षुस्संयोगत्वादिना चाक्षुषादिहेतुत्वे लाघवम्; गोलकत्वस्य

---

1 तद्भिन्नैः इ.
2 तथैव इ.
3 न तत्राविषय आ.
4 कनीनकासारस्यार्थेन आ.
5 'अनन्त' नास्ति इ.
6 °कमपेक्ष्य इ.
7 °मुख्यस्य इ.
8 भिन्नादि° ग.
9 'चक्षु .... गौरवमित्यर्थः' इत्यन्तस्त्रुटितः । तत्स्थाने – 'हेतुत्वस्य-चाक्षुषहेतुत्वस्य' इत्यस्ति ग.

यत्तु – भित्त्यादेः चक्षुस्संयोगप्रतिबन्धकत्वं त्वयापि वाच्यमिति चाक्षुषप्रतिबन्धकत्वमेव युक्तमिति – तन्न – [1]तत्तत्क्रिया [2]तत्तदुत्तरदेशानां [3]तत्तदुत्तरसंयोगहेतुत्वेनानतिप्रसङ्गे भित्त्यादेः संयोगप्रतिबन्धकत्वाभावात् ।

स्यादेतत् – घ्राणादिकं पृथिव्यादिभ्यो भिद्यत इन्द्रियत्वात्, मनोवत्; मनसो[4]ऽपि भिद्यते महत्वात् घटवत् । युक्तं चैतत् । महतः पृथिव्यादेः रूपरसगन्धस्पर्शेष्वन्यतमोद्भवनियमात् तादृशप्रत्यक्षबाधादिति चेत् – न । घ्राणं पृथिवी, परकीयरूपाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात्, कुङ्कुमगन्धव्यञ्जकघृतवत् । दृष्टान्तासिद्धिवारणाय परकीयेति; वायूपनीतसुरभिभागादेर्दृष्टान्तत्वसम्भवात् नोपादेयमेव वा तत् । एवं रसादिमात्रव्यञ्जकत्वेन रसादौ जलत्वाद्यनुमेयमिति सिद्धान्तिनः ।

एकदेशिनस्तु — अनुमानमिदमप्रयोजकं, घ्राणाद्योरेकजात्या व्यञ्जकत्वं न युक्तिसहम्; एकतरसत्त्वे फलापत्तेः । इत्थं चैकेनेन्द्रियत्वेन जात्या षोढा [5]सन्निकर्षा[6]न्यतमप्रत्यासत्या लौकिकप्रत्यक्षत्वावच्छिन्नहेतुत्वं निराबाधम् । न च जन्यपृथिवीत्वावच्छिन्न पृथिवीत्वादिना हेतुत्वस्य क्लृप्तत्वात् घ्राणादेः पृथिवीत्वादिकमेव युक्तम्; पृथिवीत्वं जलत्वादिकं वेत्यत्र विनिगमकाभावादित्याहुः ।

---

पार्थिवाप्यादिगोलकसाधारण्यस्य जलत्वादिना सङ्करेण जातित्वाभावात् तदवच्छिन्नसंयोगत्वादिना हेतुत्वे गौरवमित्यर्थः । फलमुखेति । फलं तादृशकार्यकारण भावग्रहो मुखमुपस्थितिबीजं यस्य तादृशगौरवस्यानन्तचक्षुरादिकल्पनागौरवस्येत्यर्थः ।

---

1 'तत्' नास्ति इ.
2 'तत्' नास्ति इ.
3 तत्तत्संयोग° आ.
4 'अपि' नास्ति इ.
5 °सन्निकर्ष' नास्ति आ.
6 प्रत्यासत्त्यान्यतमलौ° आ.

उक्तानुमानमेव विनिगमकं "अणुरपी"ति न्यायात् [1]युक्त्यनुग्रहोऽप्यत्रैवेति तु युक्तम् ॥

विषयाख्यतेजसो विभागः

विषयसंज्ञकं चतुर्विधम् – भौमं दिव्यमौदर्यमाकरजं च । भौमं भूमिभवं काष्ठादिप्रभवमूर्ध्वज्वलनस्वभावम् । दिव्यमबिन्धनं सौरभविद्युद्वडबानलरूपम् । औदर्यमुदसम्बन्धि भुक्ताहाररसादिपरिणामनिमित्तम् । आकरजं सुवर्णरजतकांस्याद्यष्टकम् । न च कनकादिकं न तेजः ; शुक्लभास्वररूपशून्यत्वादिति वाच्यम् । असिद्धेः । कनकादौ शुक्लभास्वररूपसत्त्वात् शुक्लभास्वर (त्व) योरग्रहस्त्वभिभवात्; [2]न तु रूपमभिभूतं कनकग्रहापत्तेः ।

यद्वा रूपमभिभूतमेव, कनकस्य ग्रहस्तु महारजतरक्त – पटस्येकपर [पटस्येव पट] रूपयोरग्रहात् । न चान्धकारे बलवत्सजातीयग्रहणाभावात् कनकरूपानभिभवे तद्ग्रहणापत्तिः ; अनभिभूतरूपवत्तेजोग्रहे तेजोन्तरानपेक्षणादिति

---

घ्राणादिपञ्चकं द्रव्यान्तरमेव, न तु पृथिव्याद्यारब्धमित्याक्षिपति – स्यादेतदिति ।

एकदेशिमतं दूषयति – उक्तानुमानमेवेति । घ्राणादेः पृथिवीत्वादिसाधकानुमानमेवेत्यर्थः । ननूक्तानुमानस्याप्रयोजकत्वात् कथं विनिगमकत्वमत आह – अणु इति । "अणुरपि विशेषोऽध्यवसायकर" इति न्यायादित्यर्थः । अत्र – घ्राणादेः पृथिवीत्वादौ ॥

---

1 श्रुत्यनु° आ.

2 'न तु .... रग्रहात्' इत्यन्तस्त्रुटितः इ.

वाच्यम् । बलवत्सजातीय सम्बन्धमात्रस्याभिभवस्यान्धकारेऽपि [1]कनकादिरूपे सत्त्वादिति [2]सिद्धम् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितपदार्थमालायां

तेजःप्रकरणं समाप्तम् ॥

---

[3]बलवत्सजातीयेति । अत्र मात्रपदेन बलवत्सजातीयग्रहण – [4]कृताग्रहणस्याभिभवत्व-व्यवच्छेदः ॥

इति श्रीमन्महामहोपाध्याय लौगाक्षिगोत्रसंभूतश्रीमद्रुद्रकवीन्द्रतनूज-

मुद्गलविदुषसूनुना कृतपदार्थमालाप्रकाशे तेजःप्रकरणं

समाप्तम् ॥

---

1 'कनकादिरूपे' नास्ति इ.

2 'सिद्धम्' नास्ति इ.

3 'बल .... .... मात्रपदेन' इत्यन्तस्त्रुटितः क.

4 °कृतघ्राणाग्रहणस्य क.

## अथ वायुप्रकरणम्

वायुः इतरेभ्यो भिद्यते वायुत्वात्। स च स्पर्शसङ्ख्यापरिमाणपृथक्त्व-संयोगविभागपरत्वापरत्वसंस्कारत्ववान्। स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजः प्रत्यक्षगम्यः। सङ्ख्यादिकं मूर्तत्वादित्यनुमेयम्।

स चायं द्विविधः – अणुकार्यभेदात्। तत्र कार्यलक्षणश्चतुर्विधः – शरीरमिन्द्रियं विषयः प्राणश्च। तत्र शरीरमयोनिजमेव मरुल्लोके। पार्थिवावयवोपष्टम्भादुपभोगसमर्थम्। इन्द्रियं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं सर्वशरीरव्यापि स्पर्शग्राहकम्। [1]विषयस्तूपलभ्यमानस्पर्शाश्रयः। स्पर्शशब्दः कम्पधृतिलिङ्गः तिर्यग्गमनस्वभावकः। यत्र पांसुमेघादिप्रेरणधारणादिसमर्थः। तथा हि – अनुभूयमानस्पर्शो द्रव्याश्रितः स्पर्शत्वात् घटस्पर्शवत्, कीचकादिध्वनिविशेषः स्पर्शवद्द्रव्याभिघा[2]तजः शब्दविभागाजन्यशब्दत्वात् भेरीशब्दवत्, शाखादिकम्पः तादृशद्रव्याभिघातजः वेगादिजन्यक्रियात्वात् घटादिक्रियाविशेषवत्,

---

क्रमप्राप्तवायुं लक्षयति – वायुरिति।

ननु वायवीयशरीरस्य सर्वदा कम्पशीलत्वात् कथमुपभोगक्षमत्वमत आह – पार्थिवावयव इति। त्वगिन्द्रियस्य कुष्ठाद्यभिभवदशायां स्पर्शादिग्रहवारणायाह – पृथिव्याद्यनभिभूतैरिति। वायोर्नीरूपत्वेन प्रत्यक्षासंभवादाह – स्पर्शशब्द इति। तस्यासाधारणं स्वभावमाह – तिर्यग्गमनेति। एतस्य तिर्यग्गमनस्वभावत्वं वायुत्वादेव जाति – [3]निबन्धन – धर्मस्यैव स्वभावत्वादिति

---

1 'त्वगात्मक' इत्यधिकः अ.

2 °ततेजः आ.

3 सम्बन्धन° क.

नभसि [1]तृणतूलस्तनयित्नु विमानादीनां धृतिः पतनाभावः [स्पर्शवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकादिधृतिवदित्यनुमानात्] स्पर्शाद्याश्रयसिद्धौ तत्र नीरूपत्वेन पृथिव्यादित्रिकभेदेन सिद्ध्या विलक्षणवायुसिद्धिः ॥

## वायोर्नीरूपत्वसाधनम्

अथ नीरूपत्वमसिद्धम्; अनुद्भूतरूपसम्भवात्। पार्थिवोद्भूतस्पर्शे उद्भूतरूपव्याप्तिरसिद्धा। अन्यथा पार्थिवोद्भूतगन्धादेरप्युद्भूतरूपव्याप्यतया वाय्वानीतसुरभिभागादेरपि द्रव्यान्तरतापत्तेः। [2]न च गुरुत्वाभावात् पृथिव्यादिभेदः, असिद्धेः। पतनाभावस्तु काण्डादाविव वेगवशात् वायोस्सदागतिमत्वेन वेगाविरामात्। अन्यथा वायूपनीतजला[3]जल [4]पृथिवीनामपि द्रव्यान्तरतापत्तेः।

---

भावः। एतस्यासाधारणं प्रयोजनमाह – यत्र पांसु इति। उक्तं स्पर्शादिलिंगकत्वं व्युत्पादयति – तथाहीत्यादि ॥

वायुः [5]पृथिव्येव, न तु द्रव्यान्तरमित्याक्षेपार्थं [6]मनसि धृत्वा [7]आशङ्कते – अथेति। असिद्धेः–गुरुत्वाभावसिद्धेः। ननु वायोर्गुरुत्वे पतनं स्यादत आह–पतनाभावस्त्विति। अन्यथावायोः पतनाभावादेव [8]द्रव्यान्तरत्वे। तुल्यमिति। "धर्मिकल्पनात" इति न्यायेन वायूपनीतजलादिभागानां द्रव्यान्तरत्वकल्पने गौरवात् जलत्वादिकमेव यदि तदा वायोरपि

---

1 तूण इ.
2 'नच .... .... द्रव्यान्तरतापत्तेः' इत्यन्तस्त्रुटितः आ.
3 नल आ.
4 'पृथिवी .... .... धृतिरपि' इत्यन्तस्त्रुटितः आ.
5 पृथिवीत्वेन, न तु क.
6 'मनसि धृत्वा' नास्ति ग.
7 आह
8 'द्रव्या .... .... भागानां' इत्यन्तस्त्रुटितः क.

"धर्मिकल्पनातो धर्मकल्पना लघीयसी" इति चेत् — तुल्यम्। प्रकृतेऽपि धृतिरपि पृथिवीविशेषसंयोगात् ब्रह्माण्डधृतिवदीश्वरप्रयत्नादेव वा स्यात्। कम्पोप्येतेन व्याख्यातः। तेजोविशेषस्य वह्नेरूर्ध्वगमनवत्पृथिवीविशेषस्य वायोरपि तिर्यग्गमनं नानुपपन्नम्। एतेन मेघादिप्रेरणं व्याख्यातम्। जठरानलवच्च पार्थिवः कश्चिदन्तश्शरीरसञ्चारी प्राणः। एवं त्वगपीति चेत् — न। वायोः पृथिवीत्वेऽनुद्भूतरूपकल्पनायां गौरवात्। किं च त्वचः पार्थिवत्वे गन्धग्राहकत्वापत्तिः पार्थिवेन्द्रियत्वेन तद्ग्राहकत्वात्। अपि च वायोर्गुरुत्वे वायुपूरितस्य चर्मपुटादेरपूर्णतादशातोऽवनमनमुन्नीयमानं स्यात्। न च धूमपूरितस्यैव तन्न स्यात्। अलं धूमेन [1]धूमत्वं धूमारब्धद्रव्यत्वेन तत्र तत्सिद्धेः। धूमत्वनियतस्य गन्धविशेषस्य चक्षुर्लौहित्यादिनियामकस्पर्शविशेषस्य सत्त्वाच्च। अत्यन्तं धूमेन पूरिते चर्मपुटेऽवनतिरस्त्येवेत्याहुः।

---

द्रव्यान्तरत्वकल्पने गौरवात् पृथिवीत्वमेव कल्प्यतामिति तुल्यत्वमित्यर्थः। धृतिरपि — नभसि तृणादीनां धृतिरपि। कम्पोपीति। शाखादिकम्पोऽपि पृथिवीविशेषसंयोगात् प्रयत्नवदीश्वरसंयोगादेव वा स्यादित्यर्थः। [2]जठरानलवदिति। यथा कश्चित् तेजोविशेषोऽन्तश्शरीरसञ्चारी जठरानल इत्युच्यते तथा पृथिवीविशेष एव कश्चिदन्तश्शरीरसञ्चारी प्राण इत्युच्यते। एवं पृथिवीविशेष एव कश्चित् त्वगित्युच्यते; न तु तदुभयारम्भकं किंचिद्विजातीयं द्रव्यमस्तीति भावः। पूर्वपक्षिणा [3]प्रागुक्तरीत्या वर्णितं [4]पृथिव्यन्तर्भावं निरस्यति — वायोरिति। मतान्तरमाह — अत्यन्त इति।

---

1 धूमपूरितस्यावनतिविशेषप्रतीतेः। न चालं धूमत्वेन धूमस्य' इत्यधिकः अ. आ.

2 'जठरा .... .... मस्तीति भावः' इत्यन्तस्त्रुटितः। तत्स्थाने — 'एवं त्वगिति। कश्चित् पृथिवीविशेष एव त्वगित्यर्थः' इत्यस्ति ग.

3 तत्तद्रीत्योक्तं ग.

4 पृथिवीत्वं

किं च पार्थिवोद्भूतस्पर्शयोरेकजातीयाग्निसंयोगसाध्यत्वात् तयोः समनैयत्यं प्रामाणिकम् । उद्भूतगन्धादिस्तु नैवं वज्रादौ स्पर्शोद्भवे गन्धानुभवादिति [1]सत्सम्प्रदायः ॥

अत्र नव्याः – अनुद्भूतरूपादौ मानाभावात् न तत्कल्पनाप्रयुक्तं गौरवम्; [2]घ्राणवत् पृथिवीत्वेऽपि रूपाद्यभावसम्भवात् । अत एव गुरुत्वकल्पनापि रूपाद्यभावस्येव गुरुत्वाभावस्यापि सम्भवात् । गन्धग्राहकत्वमपि घ्राणत्वेन जातिविशेषेणैव। न च तथापि साधकाभावादेव पृथिवीत्वाद्यभावसिद्धिः; अन्यथा जलत्वादेरप्यापत्तेः । अनुष्णाशीतस्पर्शत्वावच्छिन्नसमवायिकारणतावच्छेदकत्वेन तत्र पृथिवीत्वसिद्धेः गन्धसमवायिकारणतावच्छेदकमपि तदेव [3]वायौ गन्धाद्यनुत्पत्तिरसमवायिकारणविरहात् ।

नन्वेवं तिर्यग्गतिजनकतावच्छेदकमपि तदेवास्त्विति वायुत्वं पृथिव्या इत्येव किं न रोचये ? तिर्यग्गमनस्यासति प्रतिबन्धे तज्जातिम-न्मात्रे *[न्मात्रवृत्तित्वे]

---

प्रथमोक्तां युक्तिं दूषयति – किं च [4]पार्थिव इति । नैवं – नो द्भूतरूप [5]रसादिसमनैनंयत्यम् ॥

सम्प्रदायमतमुक्त्वा नव्यमतमाह – अत्र नव्या इत्यादि । तथापि – वायोः [6]पृथिवीत्वे उक्तदूषणानामुद्धारेऽपि । अन्यथा – साधकाभावेऽपि वायोः पृथिवीत्वस्वीकारे ।

---

1 'सत्' नास्ति इ.
2 घ्राणे च इ.
3 'वायौ .... .... तदेव' इत्यन्तस्त्रुटितः अ.
4 यथावेति ग.
5 'रसादि' नास्ति ग.
6 'पृथिवीत्वे .... .... वायोः' इत्यन्तस्त्रुटितः क.

---

* व्याख्यानानुसृतपाठः

स्वीकृते [1]तत्रासाधारणप्रयोजकान्तरकल्पनात् घटादावपि तदापत्तेः पृथिवीसंज्ञो वा वायुसंज्ञा वेत्येवाक्षेपतादवस्थ्यात् च । विभागाधिक्यस्यैवाक्षेप्यत्वात् । पार्थिवोद्भूतस्पर्शयोरेकाग्निसंयोगसाध्यत्वमित्यप्ययुक्तम् ; तयोर्नीलपीतादिकठिनसुकुमाररूपतया नानाजातीयतेजस्संयोगसाध्यत्वादित्याहुः ।

तदसत् — पृथिवीवायुस्पर्शसाधारणजातिविशेषस्यासिद्धेः । शीतोष्णतरस्पर्शत्वस्यैवानुष्णाशीतत्वात्मकत्वात् । तच्च न जन्यतावच्छेदकं, संशयत्व[2]वदार्थसमाजसिद्धत्वात् । न च तथापि कठिनत्वसुकुमारत्वगन्धत्वाद्यवच्छिन्न-

---

वैपरीत्यमाशङ्क्य निषेधति – न च [ननु]एवमिति । द्रव्यविशेषे तिर्यग्गतिसमवायितावच्छेदकं यत् वायुत्वं तदेव गन्धानुष्णाशीत स्पर्शसमवायितावच्छेदकं ; न तु पृथिवीत्वमिति वायुत्वमेव पृथिव्याः स्वीक्रियतामिति वैपरीत्यं किं न रोचते इत्याशङ्काग्रन्थार्थः । आशङ्कितार्थनिषेधे युक्तिमाह – तिर्यग्गमनस्येति । तज्जातिमन्मात्रवृत्तित्वे–वायुत्वजातिमद्द्रव्यविशेषवृत्तित्वे । तत्रेति । तिर्यग्गमने । वायुत्वावच्छिन्नातिरिक्तासाधारणप्रयोजकाकल्पनात् घटादिपृथिव्यां [3]वायुत्वस्वीकारे तिर्यग्गमनापत्तेरित्यर्थः । दूषणान्तरमाह – पृथिवीसंज्ञ इति । वायोः पृथिवीत्व इव पृथिव्याः वायुत्वेऽप्युभयोरभेदात् पृथिवीवायुसंज्ञाभेदः सम्भवत्येवेत्याक्षेपनिमित्ताभावात् कथमाक्षेप इत्यत आह – विभागाधिक्येति । नवधा द्रव्यविभागस्यैव तादृशाक्षेपनिमित्तत्वादिति भावः ।

[4]पृथिवीत्वस्य क्लृप्तत्वात् तेनैव विजातीयवायुस्पर्शहेतुत्वमिति वायोः पृथिवीत्वमेवाशङ्क्य निषेधति न चेति । तथापि – अनुष्णाशीतत्वस्य जाति[त्वा]भावेनार्थसमाज-

---

1 तत्र स्वसाधा° अ.

2 °पदार्थ° क.

3 'वायु .... .... इव पृथिव्याः' इत्यन्तस्त्रुटितः क.

4 'पृथिवीत्वस्य .... .... त्वादिति भावः' इत्यन्तस्त्रुटितः ग.

समवायिकारणतावच्छेदकेनैव वायुस्पर्शनिष्ठवैजात्यवच्छिन्ने हेतुत्वमस्तु लाघवादिति वाच्यम् । तर्हि स्नेहादिसमवायिकारणतावच्छेदकेनापि तद्धेतुत्वापत्तेः । तिर्यग्गति-शब्दविशेषादिहेतुतावच्छेदकत्वेन वायुत्वस्यापि क्लृप्तत्वात् ।

ननु तथापि तिर्यग्गमनस्वभाव इत्ययुक्तं, कस्यचिदूर्ध्वगमनसत्त्वात् । अन्यथा पत्रादे [पतन्यादे] रूर्ध्वगमनानुपपत्तेरिति चेत् - न । मेघसंघट्टशब्द-जातीयविलक्षणशब्दोन्नीतेन विरुद्धदिक्क्रिययोर्वाय्वोः संघट्टेन [1]क्वचिदूर्ध्वगमनेऽपि [2]स्वभावाप्रच्युतेः वाय्वादिवदुद्गच्छतीनामपामिव [3]निम्नागमनस्वभावानामिति दिक् ।

प्राणोऽन्तश्शरीरे रसमलधातुपित्तकफादिप्रेरणधारणादिहेतुः । स चैक [4]एव क्रियाभेदात् प्राणापानादिसंज्ञां भजते । मुखनासिकयोर्निष्क्रमणप्रवेशात् प्राणः ।

---

सिद्धत्वेऽपि । तर्हीति । यदि क्रृत्यत्व [क्लृप्तत्व] लाघवात् पृथिवीत्वेन विजातीयवायुस्पर्श-हेतुत्वं तर्हि जलत्वादिनापि तद्धेतुत्वापत्तिः । तस्यापि [5]क्लृप्तत्वादिति जलत्वादिकमेव वायोः स्यादिति भावः । ननु पृथिवीत्वस्य क्लृप्तत्वात् तदेव वायोः कल्प्यतां, नन्वतिरिक्त-द्रव्यत्वमत आह – तिर्यग्गति इति । तथा च वायुत्वमेव पृथिव्याः किं न स्यादिति वैपरीत्यं दुर्वारमिति भावः ।

यद्यपि शरीरे प्राणवदपानादिरपि वायुकार्यतया वक्तुमुचितः । अत एव शरीरे पञ्चावयवमिति प्रसिद्धिः; तथापि मूर्तयोः समानदेशताविरोधात् एकत्र वायुपञ्चकस्यासम्भवात् । अन्यथैव तां प्रसिद्धिमुपपादयति – स चैकएवेति । तथा चैकस्यैवपुंसः पाकादिक्रियाभेदात् पाचकपाठकादिसंज्ञाभेदवत् एकवायोरेव तत्तत्क्रियाभेदात् प्राणापानादिसंज्ञाभेद इति भावः ।

---

1 क्वचिद्दुन्दुभेनापि इ.
2 स्वभावात् प्रच्युतेः अ.
3 नित्यगमन॰ इ.
4 च इ.
5 'प्रत्यक्षेण' इत्यधिकः ग.

मलाद्यधोनयनादपानः । आहारेषु पाकार्थं वह्नेः समनयनात् समानः । ऊर्ध्वं नयनादुदानः । नाडीमुखेषु वितननात् व्यान इति ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां

पदर्थमलायां वायुप्रकरणं

समाप्तम् ॥

---

यद्यप्येकत्रैवावच्छेदकभेदेन नानावयवाः संभवन्त्येव । एकावच्छेदेनैव मूर्तयोः समानदेशताविरोधात् । अन्यथा एकतरौ नानाविहगवृत्तिर्न स्यात् । अत एव "हृदि प्राणो गुदेऽपान" इत्यादि'नामलिङ्गानुशासनम'पि सङ्गच्छते; तथाप्येकस्य तत्तत्स्थानसम्बन्धेनैवोपपत्तावेकशरीरे नानावायुकल्पने गौरवमेव बाधकमिति मन्तव्यम् ॥

इति श्रीमन्महामहोपाध्याय लौगाक्षिगोत्रसम्भूत श्रीमद्दुर्गकवीन्द्र-

तनूजमुद्गलविदुषसूनुना कृत पदार्थमाला प्रकाशे

वायु प्रकरणं समाप्तम्

## अथ आकाशप्रकरणम्

आकाश इतरेभ्यो भिद्यत आकाशत्वात् । आकाशत्वं शब्दवत्त्वमुपाधिरूपम् । एवं कालदिक्त्वे अपि इत्याकाशं कालो दिगिति तिस्रः संज्ञा औपाधिक्यः । तथाहि – त्रिविधाः [1]संज्ञाः । तत्राधुनिकसङ्केतशालिनी पारिभाषिकी; यथा पशुभूताकाशादिः । जातिप्रवृत्तिनिमित्तिका नैमित्तिकी; यथा पृथिवीजलादिः । प्रवृत्तिनिमित्तं शक्यतावच्छेदकम् । आधुनिकः चैत्रादिपदसङ्केतस्तु न शक्तिरिति चैत्रादित्वं न प्रवृत्तिनिमित्तम्; अतश्चैत्रादिसंज्ञया न नैमित्तिकत्वम् । यदि च नामकरणसंस्काराधीनः चैत्रादिपदसंकेतः शक्तिरेवेति मतं, तदा [2]तदनधीनाधुनिकसङ्केतशालिन्येव पारिभाषिकी । तदधीनसङ्केतशालिनी तु नैमित्तिक्येवेति बोध्यम् ।

भाष्यकृतस्तु — (प्र. भा. पृ. १४३) आकाशादिसंज्ञाः पारिभाषिक्य एवेत्याहुः । [3]एतन्मतेऽनुगतोपाधिप्रवृत्तिनिमित्तकसंज्ञा औपाधिकी; यथा पशुभूतादिः ।

---

**क्रमप्राप्तमाकाशं निरूपयति** – आकाश इति । आकाशत्वादिति । **अथ यन्नेतरेभ्यो भिद्यते न तदाकाशः; न चायं तथा; तस्मादितरेभ्यो भिद्यत इत्युदाहरणोपनयनिगमनानि बोद्धव्यानि ।** [4]यदि च नामेति । "द्वादशेऽहनि पिता नाम कुर्यात्" **इत्यादिशास्त्रप्रतिपादितनामकरणसंस्काराधीन इत्यर्थः ।** तदधीन इति । **नामकरणसंस्काराधीन इत्यर्थः ।** [5]एतन्मते–

---

1 'संज्ञाः' नास्ति इ.
2 तदधीना॰ अ.
3 तन्मते इ.
4 'यदि .... .... प्रतिपादित' इत्यन्तस्त्रुटितः । तत्स्थाने – 'तदनधीन इति ।' इत्यस्ति ग.
5 'एतन्मते .... .... पारिभाषिकत्वमित्यर्थः' इत्यन्तस्त्रुटितः ग.

[1]आकाशादिसंज्ञा तु न तथा। अनुगतप्रवृत्तिनिमित्तशून्या पारिभाषिकी; यथा चैत्रमैत्रादिराकाशादिश्चेति बोध्यम् ।

संज्ञा च सङ्केतवत्प्रातिपदिकम्; शतृशानजाद्यन्तेषु धातुप्रत्यययोश्च संज्ञाव्यवहाराभावात् । [2]करणाद्यधिकरणादिशब्दास्तु साङ्केतिका एव; पाठकपाचकादयस्तु सङ्केतशून्यत्वात् न संज्ञा। [3]तेषामपि संज्ञात्वेत्वनुगतप्रवृत्तिनिमित्तशून्यसङ्केतवती पारिभाषिकी। सङ्केतशून्यत्वे सति यौगिकी औपाधिकी। सत्यन्तं पङ्कजादिव्युदासाय । पङ्कजादेर्नैमित्तिकत्वेऽपि यौगिकत्वाविरोधात्।

---

भाष्यकृन्मते । तथा *[यथा] पशुभूतादिरिति । लोमवल्लाङ्गूलवत्त्वरूपपशुत्वस्य बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वरूपभूतत्वस्योपाधेरनुगतत्वादिति भावः। आकाशादीति। शब्दवत्त्वं शब्दसमवायिकारणत्वं अष्टद्रव्यातिरिक्त द्रव्यत्वं वा आकाशत्वम्। एवं कालत्वादीति। तदुपाधेरनुगतत्वादाकाशादिसंज्ञा न निरुक्तौपाधिकीत्यर्थः। †तथा [यथा] चैत्र इत्यादि। चैत्रशब्दवाच्येषु विलक्षणपिण्डेषु चैत्रत्वस्यैकस्यासम्भवात् । नानात्वमेवं मैत्रत्वादेरपि । एवमाकाशत्वादेरपि प्रोक्तरीत्या नानात्वमिति । चैत्रादिसंज्ञायामनुगतप्रवृत्तिनिमित्तशून्यसङ्केतवत्यां पारिभाषिकत्वमित्यर्थः ॥

संज्ञां लक्षयति – संज्ञा चेति । सङ्केतवदित्यस्य व्यावर्त्यमाह – शतृशान इति। 'कुर्वन्' 'कुर्वाण' इत्यादिषु यौगिकत्वेन सङ्केतवत्त्वाभावात् नातिव्याप्तिः। अन्यथा [4]तेषामपि सङ्केतवत्त्वे तस्य "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति निरुक्तप्रातिपदिकत्वस्य तत्र

---

1 'आकाशादि .... .... मैत्रादिः' इत्यन्तस्त्रुटितः अ.

2 कारणा° अ.

3 'तेषमपि' नास्ति आ. इ.

4 'तेषामपि सङ्केतवत्त्वे तस्य' नास्ति ग.

---

* मूलानुसृतपाठः

† मूलानुसृतपाठः

अनुपादेयमेव वा सत्यन्तम्। अनुगतप्रवृत्तिनिमित्तसङ्केतवती नैमित्तिकीति बोध्यम्।

यत्तु — प्रवृत्तिनिमित्तशून्यैव पारिभाषिकी; यथा गगनादिधर्मिमात्र एव गगनादिपदे शक्तिरिति — तन्न — तर्हि गवादिपदस्यापि धर्मिमात्रे शक्त्यापत्तेः।

अथ यद्यद्धर्मविशिष्टयोः [1]संबन्धो गृहीतः तदेकधर्मविशिष्टज्ञानादपरधर्मविशिष्टस्मृतिः; यथा हस्तिपकादौ। पदपदार्थयोरपीयं व्यवस्था। येन च रूपेण पदात्पदार्थस्मृतिः तेनैव रूपेण शाब्दबोधः। न हि स्मृतिः निर्विकल्पिका, अनुभवस्मृत्योः समानप्रकारकत्वेनैव कार्यकारणभावात्। न वा निर्विकल्पोपस्थितस्य शाब्दानु — [2]भवप्रवेशः आकाङ्क्षादिविरहात्। तथा [3]च गवादिपदस्य गोत्वादिविशिष्टे शक्तिग्रहं विना न गोत्वाद्युपस्थितिः। विशिष्टे च शक्तिग्रहे विशेषणेऽपि शक्तिसिद्धिरिति चेत् — तुल्यं प्रकृते *[अपि]। न ह्याकाशादिपदादाकाशादे-

---

सत्त्वादतिव्याप्तिः [4]स्यात्। न च 'कुर्वन्' 'कुर्वाण' इत्यादिषु सङ्केतवत्त्वाभावेऽर्थवत्त्वमेव कुत इति वाच्यम्। प्रातिपदिकत्वनिरुक्तावर्थवदित्यनेन शक्यलक्ष्यादिसाधारणार्थवत्त्वस्यैवाभिहितत्वात्। अन्यथा वाचकेषु द्विरेफादिपदेष्वर्थवत्त्वाभावे प्रातिपदिकलक्षणाव्याप्तिः स्यात्। न चैवं प्रातिपदिकलक्षणेऽर्थवदित्यस्य व्यावर्त्याभावः चादिनिपातव्यावर्तनायैव तदुपादानात्। अधातुरप्रत्यय इत्येतयोः क्रमेण व्यावृत्तिमाह — धातुप्रत्यययोश्चेति। [5]करण इति। 'साधकतमं करणम्' 'आधारोऽधिकरणम्' 'स्वतन्त्रः कर्ता' 'कर्तुरीप्सिततमं कर्म' 'कर्मणा यमभिप्रैति — स सम्प्रदानम्' 'ध्रुवमपायेऽपादानम्' इत्याद्यनुशासनात् करणाधिकरणादयः शब्दाः।

---

1 सङ्केतो    आ. इ.
2 'भव' नास्ति    आ. इ.
3 'च' नास्ति    आ. इ.
4 'स्थले प्रापितैव' इत्यधिकः    क.
5 'करण .... .... करणादयः शब्दाः' इत्यन्तस्त्रुटितः    ग.

---

* व्याख्यानुसृतपाठः

निर्विकल्पकं स्मरणं शाब्दबोधो वा। एतेन शक्यनानात्वे तदुपगमार्थं शक्यतावच्छेदकापेक्षा; प्रकृते तु तदैक्यमेवेत्यपास्तम्। विना लक्षणां तत्प्रकारकबोधाय तदवच्छिन्ने शक्तिसिद्धेः। न चाकाशादिपदात् कदाचिदष्टद्रव्यभिन्नद्रव्यत्वेन कदाचित् शब्दाश्रयत्वेनोपस्थितिरिति नियतानुपस्थितिकत्वात् शब्दाश्रयत्वादि [1]नाकाशपदप्रवृत्ति निमित्तं, गोगवयादिपदात् कदाचित् गवयः गोसादृश्येन कदाचित् गोत्वगवयत्वादिनेति गोत्वादेरप्यतथात्वापत्तेः। तत्त्वेऽपि लघुगोत्वमेव तथेति चेत् - प्रकृतेऽपि शब्द एव तथा; आश्रयत्वं [2]संसर्गः। शब्दः [3]को वा

---

[6]ननु पाचकादियौगिकशब्दानामपि संकेतशून्यत्वात् संज्ञात्वं न स्यादित्याशङ्कामिष्टापत्त्या परिहरति - पाचकेति। लौकिकप्रसिद्धिमनुसृत्याह - तेषामपीति। पाचकादिशब्दानामपीत्यर्थः। एतन्मते प्रातिपदिकमात्रं संज्ञा; न तु सङ्केतत्वगर्भता। अग्रे निरुच्यमानौपयिकसंज्ञायामव्याप्त्यापत्तेरिति।

तुल्यं प्रकृतेऽपीति। आकाशपदस्याप्याकाशत्वविशिष्टे शक्तिग्रहादाकाशत्वेऽपि शक्तिसिद्धिरिति भावः। एतदेवोपपादयितुमाह - न हीति। तत्त्वेऽपि। गोगवयादिपदात् कदाचित् गव्य [गवयस्य] गोसादृश्येनोपस्थितावपि सममेवेत्याकाशपदेऽपि लघु शब्दाश्रयत्वमेव शक्यतावच्छेदकमित्यर्थः। शक्त्यानन्त्येति। आकाशपदे यदि शब्दत्वं शक्यतावच्छेद - [7]कतावच्छेदकं तदा अनुगतशब्दत्वावच्छिन्नस्य शक्यतावच्छेदकतया तदवच्छिन्नशक्तिरप्येकैव स्यात्; शक्यतावच्छेदकभेदेनैव शक्तिभेदात्। यदि च कत्वखत्वादि

---

1. वाऽऽकाशादिपद° अ.
2. 'न' इत्यधिकः आ.
संबन्धः अ.
3. 'ककारो वा कारको' अ.
6. 'ननु पाचकादियौगिक' नास्ति। तत्स्थाने—'तत्कारक' इत्यस्ति क.
7. 'कतावच्छेद' नाति क.

खादिर्वेति [1]चेत्- [2]सर्व एव। अत एव शक्यतावच्छेदकतावच्छेदकं शब्दत्वमास्थीयते; न तु क खत्वादिकं शब्दमात्रासाधारण्यात् शक्त्यानन्त्यप्रसङ्गाच्च ।

अथ लक्ष्यतावच्छेदके यथा न लक्षणा, परन्तु स्वरूपसंबन्धरूपमवच्छे – [3]दकत्वं, तथा यद्धर्मविशिष्टे शक्यसंबन्धग्रहः, तेन रूपेणोपस्थितिः शाब्दबोधश्च। स एव च धर्मो लक्ष्यतावच्छेदक इत्युच्यते, तथा शक्यतावच्छेदकेऽप्यस्त्विति चेत् – न। तीरसंयोगरूपाया लक्षणायाः तीरत्वादावसम्भवात् विशिष्टे लक्ष्यत्वप्रतीतेरपि विशेषणांशे तत्त्यागः, विशिष्टे शक्यत्वप्रतीत्या तु विशेषणांशेऽपि तत्सिद्धौ बाधकाभावः ।

किं चास्तु लक्ष्यतावच्छेदकत्वस्यानियमात् तथा। शक्यतावच्छेदकत्वस्य तु नियतत्वमेवेत्यस्ति विशेषः। अपि च कोशादित एव [4]विशिष्टशक्ति – [5]सिद्धिः। अन्यथा शक्यैक्ये शक्यतावच्छेदकभेदेन पर्यायभेदानुपपत्तेः, [6]नानार्थत्वानुपपत्तेश्च। यथा [7]त्यजिगम्यादेः [8]शक्यताव[9]च्छेदकत्वं स्वरूप[10]सम्बन्धरूपं अस्तु, न तु तत्र शक्तिरिति चेत्–न। शक्तेः घटो घटपद – बोधः [ बोध्यः ] भवतु [ इति ] इच्छात्मिकाया विशेषणतया घटत्वादावपि वृत्तिः शक्तिविशेषणमेव शक्यतावच्छेदकमिति दिक्। स च शब्दसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागवान् ॥

---

तत्तदवच्छिन्नककारखकारादेः शक्यतावच्छेदकस्य नानात्वात् तदवच्छिन्नशक्तिरपि नानैव स्यादिति [11]शक्त्यानन्त्यप्रसङ्ग इत्यर्थः।

---

1 'चेत्' नास्ति अ.
2 स एव। तथैव शक्यता° अ.
3 °दकं, किं तु यद्धर्म ° अ.
4 विशिष्टे इ.
5 'सिद्धि' नास्ति इ.
6 'नानार्थत्वानुपपत्तेश्च' नास्ति आ. इ.
7 त्यज° अ.
8 'यथा अर्थादिपदस्य' इत्यधिकः अ.
9 °च्छेदकत्वस्वरूपम् अ.
10 'संबन्धरूपम्' नास्ति अ.
11 वाक्यानन्त्य° क.

## आकाशसद्भावे प्रमाणम्

अथाकाशे मानाभावः । [1]न चात्र प्रत्यक्षम्; अरूपि बहि[2]र्द्रव्यात् । न च शब्दो द्रव्याश्रितः गुणत्वात् [3]रूपादिवत् इत्यनुमानात् तत्सिद्धिः । वीणावेणुमृदङ्गादीनां शब्दनिमित्तत्वेनाभिमतानामेव शब्दसमवायित्वौचित्यात्; तदाश्रितत्वेनोपपत्तेरिति चेत् – न । शब्दो न स्पर्शवद्विशेषगुणः अयावद्द्रव्यभावित्वात् ज्ञानवत् । नात्मनः श्रोत्रग्राह्यत्वात् शब्दत्ववत्, न दिक्कालमनसां विशेषगुणत्वादिति परिशेषात् द्रव्या – [4]श्रितत्वेनाष्टद्रव्यातिरिक्ताश्रितत्वसिद्धेः । स चैकत्वेन नित्यत्वेन सिध्यति; निखिलशब्दानामेकाश्रितत्वे बाधकाभावात् लाघवाच्च । घटाकाश [5]पटाकाशादिभेदव्यवहारस्त्वौपाधिकः । स एव चादृष्टविशेषोपनिबद्धः कर्णशष्कुल्यवच्छिन्नः शब्दग्राहकः श्रोत्रत्वव्यपदेशभाक् । तस्य सत्त्वोऽप्युप – [6]निबन्धकादृष्टाभावा – द्वा दीर्घम् [ह्वाधिर्यम्] ।

---

ननु गोत्वादिविशिष्टे शक्यत्वप्रतीतावपि विशेषणेऽपि शक्तिसिद्धौ गौरवमेव बाधकं, अत आह -- किं चेति । ननु शक्यतावच्छेदकस्य गोत्वादेर्नियतत्वेऽपि तत्र शक्तिसिद्धौ गौरवबाधकं, न तु दुष्परिहारमत आह – अपि चेति । तथा च प्रामाणिकं गौरवं न तत्र बाधकमिति भावः । [7]अन्यथेति । अनुगतविशेषणविशिष्टे पदानां शक्यसिद्धौ विशेषणस्य शक्यतावच्छेदकत्वाभावे त्यजिगम्यादौ शक्तिविशेषस्य कर्ममात्रस्यैक्ये तुल्यत्वे शक्यतावच्छेदकभेदाद्यः पर्यायभेदो नास्त्रोऽस्ति तस्यानुपपत्तिरित्यर्थः । त्यजिगम्यादेः मिथः पर्यायतास्यादिति भावः ॥

---

1 तत्र न तावत्प्रत्यक्षं इ.
2 °र्द्रव्यत्वात् इ.
3 'रूपादिवत्' नास्ति इ.
4 °श्रित शब्देऽष्ट° इ.
5 पटाकाशभेदस्त्वौपाधिकः इ.
6 °निबद्धका° आ. इ.
7 'अन्यथेति .... .... स्यादिति भावः' इत्यन्तस्त्रुटितः ग

नन्वेवं सर्वेषां सर्वशब्दोपलब्धिः स्यात्; कर्णशष्कुल्यवच्छिन्ने नभसि शब्दमात्रस्यैव समवायादिति — तन्न — तत्पुरुषीयकर्णशष्कुल्यवच्छिन्नशब्दस्यैव तत्पुरुषेण ग्रहणात्। न चैवं वीणाद्यवच्छिन्नशब्दोपलब्धिः न स्यात्, इष्टत्वात्। वीणाकाशसंयोगादिना हि स्वावच्छेदकावच्छेदेन जनितेनाद्यशब्देन दशदिक्षु निमित्तपवनतारतम्ये 'कदम्बगोलकादिन्यायेन' तारमन्दादिरूपा दशशब्दा आरभ्यन्ते। निमित्तपवनसाम्ये तु दशदिक्षु 'वीचीतरङ्गन्यायेन' एक एव शब्दः आरभ्यते। एवं तैरपीति श्रोत्रप्राप्तिः सुघटा। [1]स्थानविशेषोद्भूतपवन एव च ककारादिनियामकत्वात् दूरत्वेन निमित्तपवनविरामे शब्दविश्रामः। ननु 'कदम्बगोलकन्यायेन' नानाशब्दोत्पत्तौ यः शब्दः त्वया श्रुतः स एव मयापीति प्रत्यभिज्ञा कुतः? तारमन्दादिभेदेन भेदे ध्रुवे साजात्यात्।

नव्यास्तु — असमवायिकारणप्रादेशिकत्वं न विभुकार्यप्रादेशिकत्वनियामकं, ज्ञानसुखादेरपि प्रादेशिकत्वापत्तेः। [2]किं तु निमित्तप्रादेशिकत्वमेवेति। यदवच्छेदेन निमित्तपवनसंयोगः (तदवच्छेदेन निमित्तपवनसंयोगः) तदवच्छेदेन वीणा-संयोगादिवत् शब्दोत्पत्तेः। शब्दस्य [3]शब्दासमवायित्वे मानाभाव इत्याहुः।

---

ननु यद्येक एवाकाशस्तर्हि तस्य श्रोत्रात्मकत्वं न स्यात्; श्रोत्रस्य पुरुषभेदेन नानात्वादित्यत आह — स एव चेति।

आद्यः शब्दः संयोगात् विभागात् वा, ततो 'वीचीतरङ्गन्यायेन' 'कदम्बमुकुलन्यायेन'वा शब्दपरम्परेति सम्प्रदायमतदूषणायाह — नव्यास्त्विति। असमवायीति। असमवायिकारणप्रादेशिकत्वं

---

1 'स्थान .... .... नियामकत्वात्' इत्यन्तस्त्रुटितः इ.

2 'किं तु .... .... शब्दोत्पत्तेः' इत्यन्तस्त्रुटितः इ.

3 'च' इत्यधिकः आ.

वीणादिसंयोगादिविरतावपि शब्दानुवृत्तेः [1]नैतद्युक्तमित्यन्ये ॥

आकाशो नेश्वरादतिरिच्यत इति मतम्

अत्रैकदेशिनः — आकाशः नेश्वरादतिरिच्यते; शब्दनिमित्तत्वेन क्लृप्तस्य तस्यैव शब्दसमवायित्वौचित्यात्। न च कार्यत्वावच्छिन्नं प्रति निमित्तकारणत्वं क्लृप्तं; न तु शब्दत्वावच्छिन्नं प्रति समवायिकारणत्वमिति कल्प्यते [तत्कल्पने] ध्रुवे जीवात्मस्वरूपत्वे विनिगमनाविरहात् [2]तत्कल्पनाप्रसक्त्या [3]गौरवात् शब्दसमवायित्वेनातिरिक्ताकाशसिद्धिरिति वाच्यम्। शब्दस्य जीवात्मगतत्वे ज्ञानादिवत् मानसापत्तेः। ज्ञानादेश्च शब्द [वत्] श्रावणत्वापत्तेश्च। न चादृष्टवत् शब्दादेः मानसयोग्यत्वं गुणश्रवणत्वावच्छिन्ने च शब्दत्वेन हेतुत्वात् न ज्ञानादेः श्रावणत्वमिति वाच्यम्। अयोग्यत्वस्य प्रतिबन्धकत्वे विश्रामात् गौरवात्।

---

यदि विभुकार्यप्रादेशिकत्वे नियामकं स्यात् तदा भेर्याकाशसंयोगादितो भेर्यादिदेश एव शब्दोत्पत्तिः स्यात्, न चैवम्; किं तु निमित्तकारणप्रादेशिकत्वम्। तथा च भेर्याकाशसंयोगादेः तावद्दूरदेशावच्छिन्ननिमित्तपवनसंयोगसहकृतात् तावद्दूरावच्छेदेन नभसि गजशुण्डदण्डवदेक एव शब्दः उत्पद्यते; तेन सन्निहित दूरस्थपुंसां तारतम्येन शब्दसाक्षात्कारोपपत्तिरिति भावः।

दीधितिकारमतमाह — अत्रैकदेशिन इति। सिद्धान्तविरुद्ध प्रतिपादनादेकदेशित्वं तस्येति भावः। जावात्मस्वपि *[जीवात्मस्वरूप] इति। ईश्वरे शब्दसमवायित्वकल्पने एकैकजीवमादाय विनिगमनाविरहात् सर्वजीवेषु तत्कल्पनाप्रसक्त्या गौरवादित्यर्थः।

---

1 'न' नास्ति अ. 2 तत्कल्पनापत्त्या इ. 3 'गौरवात्' नास्ति इ.

---

*मूलानुसृतपाठः

अस्तु वा [1]पवनानामेव शब्दसमवायित्वं, कर्णसंयुक्तनिमित्तपवनसमवायाच्च शब्दग्रहः निमित्तपवननाशात् शब्दनाशः ।

अथवा वीणावेणुमृदङ्गकर्णादीनां शब्दसमवायित्वं निमित्तपवनवीणादिसंयोगोऽसमवायिकारणं कर्णशष्कुली समवाय एव च तद्ग्राहकः । न चैवं सति वीणादौ शब्दनाशो न स्यादिति वाच्यम् । कालिकसम्बन्धेन वीणादिनाशवतो वीणादिसमवेतस्य नाश एव वीणादिनाशस्य हेतुत्वात्; शब्दस्य कार्यशब्दादिना निमित्तपवननाशसंयोगनाशाद्वा [2]नाशसम्भवादित्याहुः ।

---

निमित्तपवनानां शब्दत्वावच्छिन्नं प्रति निमित्तत्वं क्लृप्तमिति समवायित्वमेव कल्प्यतामित्याशयवानाह – अस्तुवेति ।

निमित्तपवने तुल्ययुक्त्याह – अन्यथेति ।

---

1 'पवनाना .... .... निमित्तपवनसंयोगविरामेऽपि' इत्यन्तस्त्रुटितः । तत्स्थाने – *निमित्तकारणत्वावृत्तितात्वघटादेशकालघटितसंबन्धेनैवेति पटादिं प्रत्यलिङ्गत्वं तानुपपन्नम् । अत्र नित्ये कालिकपरत्वसत्त्वे जन्यवत्वं न निवेश्यम्, तथापि नित्यात्मकालिकसंबन्धेनावृत्तित्वेन तत्र तत्परत्वमित्याहु । वर्तमानप्रागभावप्रतियोग्यवच्छिन्नकालो भविष्यत्कालः । वर्तमानध्वंसप्रतियोग्यवच्छिन्नोऽतीतवर्तमानध्वंसप्रागभावप्रतियोग्यवच्छिन्नो वर्तमानः कालस्य सम्बन्धमात्रत्वशतेऽवच्छिन्नेति न देयम् । एवं प्रारंभस्थितिसंहाररूपोपाधिवैशिष्ट्यात् सृष्टिस्थितिप्रलयव्यवहारः । सृष्ट्यादिक्रमश्च – अथ सकाशे वाग्मनापरिवसतचेतसो यतयस्तैर्हिरण्यार्कपक्षीमनुप्राप्या वा वृत्त्यसते इत्यनुगमात् ब्राह्मणो जीवभूतस्य ब्रह्मवर्षशत' इत्यस्ति । क.

2 नाशस्यानपवादादि॰ आ.

---

* एतानि वाक्यानि कालप्रकरणे दृश्यन्ते । कुतोऽत्र निवेशितानीति न ज्ञायते ।

 

यत्तु – भेर्याद्यभिघातजः शब्दः परमाणौ जायते; द्व्यणुकादौ तु कारणशब्दज इति – तदसत् – परमाणुगतातीन्द्रियशब्दानां निमित्तपवन-संयोगनाशाधीन तन्नाशस्य च कल्पनागौरवात्। अन्यथा निमित्तपवनसंयोग-विरामेऽपि शब्दविरामापत्तेः।

किं च निमित्तपवनस्य विजातीयस्यैव कारणत्वम्। न च परमाणौ वैजात्यसम्भव इति परमाणौ तदाश्रयत्वमयुक्तमिति।

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां
पदार्थमलायां आकाशप्रकरणं
समाप्तम् ॥

---

यत्त्विति। भेर्यादीति। **भेर्याद्यभिघातजः शब्दः भेर्याद्यारम्भकपरमाणावेव जायते[1]। भेर्यादौ दण्डाद्यभिघातसमये तदारम्भकपरमाणाव्प्यभिघातसम्भवादित्यर्थः।**

**ननु परमाणुसामान्ये शब्दसमवायित्वकल्पनाया गौरवात् लाघवेन निमित्तपवन परमाणावेव तत्कल्प्यताम्; शब्दमात्रं प्रति निमित्तपवनकारणतायाः सर्वसम्मतत्वादित्याशङ्कां परिहरति –** किं चेति। न च परमाणाविति। **पृथिवीत्वादीतरद्रव्यत्वव्याप्यजातेः परमाणवः [परमाणुष्व] – स्वीकारात् शब्दकारणतावच्छेदकवैजात्यस्य तत्रा [2]सम्भवादित्यर्थः ॥**

इति श्रीमन्महामहोपाध्याय लौगाक्षिगोत्रसम्भूत श्रीमद्रुद्रकवीन्द्र-
तनूजमुद्गलविदुषसूनुना भास्करेण कृतपदार्थमालाप्रकाशे
आकाशप्रकरणं समाप्तम् ॥

---

*1* **'इत्यर्थः' इत्यधिकः अ.**

*2* **°सम्भव इत्यर्थः क.**

## अथ कालप्रकरणम्

काल इतरेभ्यो भिद्यते कालत्वात् । कालत्वं च विभुत्वे सति कालिकपरत्वासमवायिकारणसंयोगाश्रयत्वाद्युपाधिरूपम् । स च सङ्ख्यापरिमाण-पृथक्त्वसंयोगविभागवान् । काललिङ्गस्याविशेषादेकत्वं नित्यत्वं च लाघवात् सिध्यति । एवं दिशोऽपि बोध्यम् ।

नन्वेवं क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रादिव्यवहारानुपपत्तिः । क्षणत्वं हि स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वं, स्ववृत्तियावद्ध्वंसविशिष्ट – [1]समयत्वं स्वस्वपूर्व-वर्तियावत्पदार्थविशिष्ट – [2]समयत्वम् ॥

---

क्रमप्राप्तं कालं निरूपयति – काल इति । कालत्वादिति । अत्र यन्नेतरेभ्यो भिद्यते तत्तत् [न तत्] कालः । न चायं न कालः, तस्मादितरेभ्यो भिद्यत इत्युदाहरणोपनय-निगमनानि बोद्धव्यानि । कालत्वं चेत्यादि । अत्र परत्वे कालिकत्वं दिक्कृतपरत्वविपरीतत्वं विलक्षणत्वमिति यावत्; न तु कालकृतत्वमात्माश्रयापत्ते–रिति । कालिकपरत्वासमवायि-कारणकालपिण्डसंयोगाश्रये पिण्डेऽतिव्याप्तिवारणाय विभुत्वे सतीत्युक्तम् । संयोगाश्रयत्वादि-यादिना कालिकापरत्वघटितनिर्वचन सङ्ग्रहः । काललिङ्गस्य – परापरव्यतिरेक इत्यादि-वक्ष्यमाणकाललिङ्गस्य ।

[3]कालस्य नानात्वं जन्यत्वं च शङ्कते – नन्विति । एवं – कालस्य नित्यैकत्वे । क्षणत्वं हीत्यादि । अत्र क्षणिकोऽतिरिक्त एव क्षण इत्यभिप्रायेण [4]आद्यं लक्षणम् । विनश्यदवस्थसूर्यक्रियादिरेव क्षण इत्यभिप्रायेण द्वितीयम् । उत्पद्यमानसूर्यक्रियादिरेव क्षण इत्यभिप्रायेण तृतीयम् । स्ववृत्तीति । स्ववृत्तिध्वंसस्य यः प्रतियोगी तदनाधारत्वं स्वस्वक्षण-त्वमित्यर्थः । स्वं लक्ष्यत्वेनाभिमतोऽतिरिक्तक्षणः । स्ववृत्तित्वं च कालिकसम्बन्धेनैव ।

---

1 समवायत्वं अ.
2 समवाय अ.
3 'कालस्य' नास्ति क.
4 इदं ग.

अन्यथा क्षणद्वयावस्थायिनि ध्वंसमात्रगोचरज्ञानादौ विषयितया वृत्तिध्वंसप्रतियोगि घटाद्यनाधारत्वादतिव्याप्तिः स्यात् । एवमनाधारत्वमपि तेनैव सम्बन्धेन । अन्यथा स्ववृत्तिध्वंसप्रतियोग्याधारत्वस्य स्वस्मिन्नेकविषयत्वादिना सत्त्वादसम्भवापत्तेः । इयमेव रीतिरुत्तरलक्षणद्वये बोध्या । स्ववृत्तियावदिति । स्ववृत्तयो ये यावन्तो ध्वंसाः तद्विशिष्टसमयत्वं स्वस्य क्षणत्वमित्यर्थः । स्वं [1]लक्षणत्वेनाभिमतं विनश्यदवस्थसूर्यक्रियादि, स्ववृत्तियत्किंचिद्ध्वंसवैशिष्ट्यं क्षणचतुष्टयावच्छिन्नक्रियायामप्यस्तीत्यतिव्याप्तिः, अतः यावदिति ध्वंसविशेषणम् । तथा च 'प्रतिक्षणं किंचित् नश्यती'ति न्यायात् स्ववृत्तियावद्ध्वंसवैशिष्ट्यं विनश्यदवस्थक्रियादावेवास्तीति न कापि क्षतिः ; तादृशध्वंसवैशिष्ट्यस्य महाप्रलयेऽपि सत्त्वादतिव्याप्तिः । न च सोऽपि क्षणएवेति वाच्यम् । तदानीं क्षणव्यवहाराभावेन तस्य क्षणत्वानभ्युपगमादतः [2]समयत्वमिति । जन्यत्वमित्यर्थः । महाप्रलयस्य कार्यमात्रानधिकरणस्य महाकालात्मकतया जन्यत्वाभावात् नातिव्याप्तिः । चरमध्वंसस्यैव महाप्रलयत्वपक्षे [3]समयपदं जन्यभावपरमिति न कोऽपि दोष इति । स्वस्वपूर्वेति । स्ववृत्तिस्सन् यः स्वपूर्ववृत्तिः [4]यावान् पदार्थः तद्विशिष्ट – [5]समयत्वं स्वस्य क्षणत्वमित्यर्थः । स्वं [6]क्षणत्वेनाभिमतमुत्पद्यमानसूर्यक्रियादि । स्वपूर्ववृत्तियावत्पदार्थवैशिष्ट्यस्य स्वस्मिन्नसत्त्वादसम्भवः । 'प्रतिक्षणंकिंचित् नश्यती'ति न्यायात् यावदन्तर्गतकिंचित्पदार्थस्य स्वपूर्वक्षण एव विनाशात्, अतः स्वपूर्ववर्तित्वमप्युपात्तम् । तथा च स्वस्वपूर्ववृत्तियावत्पदार्थवैशिष्ट्यस्योत्पद्यमानसूर्य – [7]क्रियादावपि सत्त्वात् नासम्भवः । स्वस्वपूर्ववृत्तियत्किंचित्पदार्थवैशिष्ट्यस्य क्षणचतुष्टयावच्छिन्नसूर्यक्रियाया अपि सत्त्वादतिव्याप्तिः ; अतो यावदिति पदार्थविशेषणम् तथा च स्वस्वपूर्ववृत्तियावत्पदार्थवैशिष्ट्यं न क्षणचतुष्टयावच्छिन्नसूर्यक्रियादावस्ति; किं तूत्पद्यमानक्रियादावेव । 'प्रतिक्षणं किंचिदुत्पद्यते, [8]किंचित् नश्यती'ति न्यायात् नातिव्याप्तिः । महाप्रलयकालीनचरमध्वंसेऽतिव्याप्तिवारणाय [9]समयपदम् । तदपिजन्यभावपरमिति समासः ॥

---

1 लक्ष्यत्वेना° ग.
2 समवायित्व° क.
3 समवाय क.
4 यावत् क.
5 समवायित्वं° क.
6 लक्षण° ग.
7 °क्रियादानेऽसत्त्वात् ग.
8 किं नश्यती° क.
9 समवाय° क.

लवत्वादिकं च क्षणद्वयत्वादिरूपम् । न चैतन्नित्ये एकस्मिन् संभवति, किंतु क्षणिके, अतिरिक्तपदार्थे विनश्यदवस्थे उत्पद्यमाने वा सूर्य[1]क्रियादा-विति स एव [2]काल इति चेत् - न, स्ववृत्तिध्वंसप्रतियोग्यनाधारादिविशिष्टमहाकालस्यैव क्षणादिरूपत्वात् ।

---

लवलक्षणमाह – लवत्वं *[लवत्वादिकं] चेति । क्षणद्वयत्वादीत्यादिना लवद्वयत्वादि-रूपनिमेषत्वादेः सङ्ग्रहः ।

तदुक्तम् – †"क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम् ।
अष्टादशनिमेषास्तु काष्ठाःत्रिंशत्तु ता कलाः ॥
त्रिंशत्कालो मुहूर्तः स्यात् त्रिंशद्रात्र्यहनी तु ते ।
अहोरात्राः पञ्चदश पक्षो मासस्तु तावुभौ ॥
ऋतुर्मासद्वयं प्रोक्तमयनं तु ऋतुत्रयम् ।
अयनं द्वितयं वर्षः मानुषोऽयमुदाहृतः
एष दैवस्त्वहोरात्रः तै पक्षादि च पूर्ववत् ।
दैवं वर्षसहस्राणि द्वादशैव चतुर्युगम् ॥
चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।
रात्रिश्चै तावती तस्य ताभ्यां पक्षादिकल्पना ॥"

इति । शङ्कां परिहरति – [3]न स्ववृत्तीति । स्ववृत्तिध्वंसप्रतियोग्यनाधारविशिष्टस्य स्ववृत्ति-यावद्ध्वंसविशिष्ट – [4]समयविशिष्टस्य वा स्वस्वपूर्ववृत्तियावत्पदार्थविशिष्ट – [5]समयविशिष्टस्य

---

1 क्रियादेरेव अ. इ.
2 'काल ... विशिष्टसूर्यादेरेव' इत्यन्तस्त्रुटितः अ. इ.
3 'न स्ववृत्ति' नास्ति ग.
4 °समवाय° क.
5 °समवाय° क.

---

* मूलानुसृतपाठः
† किरणावल्याम (पृ. ९०) प्येते श्लोका उद्धृताः

अस्तु वा विशिष्टसूर्यादेरेव क्षणत्वं तत्रैव घटादेः साक्षादसम्बन्धिनि सम्बन्धघटकतया कालसिद्धेः सूर्यक्रियादिसमवायिसंयुक्तकालसंयोगस्य घटादौ घटादिसंयुक्तकालसंयोगिसमवेतत्वस्य वा सूर्यक्रियादौ घटादेः सम्बन्धत्वात्। न [1]ह्यस्मिन् क्षणे घट इति विशिष्ट–[2]बुद्धिः सम्बन्धमन्तरेण सम्भवति; असम्बद्धयोस्तथात्वे सर्वत्र [3]सर्वप्रमित्यापत्तेः। एतेन विशिष्टस्याधारत्वे विशेषणस्याप्याधारत्वमवच्छेदकत्वं वा वाच्यमिति किं विशेष्येणेत्युक्तावपि न क्षतिः। एतेन कालस्य लिङ्गमुक्तम्। इदानीं घट इत्यादिप्रतीतेरेव तत्त्वात्। न च कालसिद्धौ तथा प्रतीतिः, तस्यां च सेत्यन्योन्याश्रयः। पूर्वपूर्वानुमितितत्प्रयोज्यस्मृतिरूपकाल – [4]सिद्धावुक्तप्रतीतेः सम्भवात्।

---

वा महाकालस्यैव क्षणत्वम्। एवं स्ववृत्तिध्वंसप्रतियोग्यनाधारद्वयविशिष्टमहाकालस्यैव लवत्वम्। एवमन्यदपि सुज्ञेना – [5]वसेयमिति। इत्थं चास्मिन् क्षणे घट इति प्रतीतौ व्यवहारे च स्ववृत्तिध्वंसप्रति – योग्यनाधारादिविशिष्टमहाकाल एव क्षणत्वेन भासत इति भावः।

'एतेन' इत्यादिवक्ष्यमाणास्वरसादाह – अस्तु वेति। विशिष्टेति। स्ववृत्तियावद्ध्वंसविशिष्टसूर्यक्रियादेः स्वस्वपूर्ववृत्तियावत्पदार्थविशिष्टसूर्यक्रियादेर्वेत्यर्थः। प्राचां मते सूर्यक्रियाया एव कालोपाधित्वात् सूर्यक्रियोपादानम्। आदिना नव्यमते जन्यमात्रस्य सङ्ग्रहः। [6]तन्मते जन्यमात्रस्यैव कालोपाधित्वात्। एतत्कल्पेऽस्मिन् क्षणे घट इति प्रतीतौ व्यवहारे च पूर्वोक्तविशिष्टसूर्यक्रियादिरेव [7]क्षणोपाधिकरणत्वेन [क्षणोपाधित्वेन] भासते। महाकालस्तु

---

1 चास्मिन् इ.
2 प्रमितिः आ.
3 सर्वप्रमित्यादेः आ.
4 सिद्धौ तत्प्रतीतेः इ.
5 °वधेय° क.
6 मन्मते क.
7 क्षणेऽधिकरणत्वेन ग.

कालसम्बन्धप्रतीतिस्तु न कालसिद्धिमपेक्षते; अनुपस्थितस्यापि सम्बन्धत्वात्। तथा स परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गः।

भवति हि युवानमवधीकृत्य स्थविरे परप्रत्ययः; स्थविरं [1]चावधीकृत्य यून्यपरप्रत्ययः। स च परत्वापरत्वलक्षणगुणविशेषाधीनः, परत्वापरत्वे चा[सा] समवायिकारणके अनित्यात् [अनित्यत्वात्], तदसमवायिकारणं च न विशेषगुणः, रूपादेः [रूपादिः] वायौ[2]च नित्येऽपि कालिकपरत्वोपगमे मनसि च व्यभिचारात्। अथ एव न गुरुत्वनैमित्तिकद्रवत्वे। नापि सङ्ख्यादिकं, कालसङ्ख्यादेः घटादिपरत्वाप्रत्यासन्नत्वात् विभु–[3]गुणेषु संयोगस्यैव विजातीयस्यासमवायिकारणत्वाच्च।

---

क्षणे घटसम्बन्धतयेति विवेकः। पूर्वेति। पूर्वपूर्वायततत्तल्लिङ्गेन महाकालानुमितिः [मितेः] संस्कारद्वारा तत्प्रयोज्यस्मृतिरूपकालसिद्धौ विशिष्टमहाकालाधिकरणिकाया इदानीं घट इत्याकारिकाया उक्तप्रतीतेः [4]सम्भवात् नान्योन्याश्रय इत्यर्थः।

'अस्तु वा' इति कल्पाभिप्रायेणाह – कालसम्बन्धेति। सः – कालः। परापरेति। अत्र भावप्रधानो निर्देशः। तथा च परत्वापरत्वयोर्व्यति-रेक[कर] [5]वैलक्षण्यं [6]विपरीतपरत्वा-परत्व इत्यर्थः। परापरव्यतिकरश्च यौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययाश्चेति समासः। तेषु लिङ्गानित्यस्य [लिङ्गानि यस्य सः] तथोक्तः। यौगपद्यं – एक – [7]कालता। अयौगपद्यं – अनेक – [8]कालता। चिरत्वं – दीर्घकालता। क्षिप्रत्वं – अल्पकालता। अत्र सर्वत्र कालः सूर्यक्रियादिरेव। युगपत् वर्तन्त इति यौगपद्यप्रत्ययाः। अयुगपत् वर्तन्त इत्ययौगपद्य-

---

1 वा आ.
2 'च नित्येऽपि' नास्ति अ. इ.
3 'विशेष' इत्यधिकः आ.
4 संभावना° क.
5 लक्षणं ग.
6 'दिक्' इत्यधिकः क.
7 °कालान्ता ग.
8 °कालन्ता ग.

प्रत्यया:। चिरं तिष्ठतीति चिरप्रत्ययः। क्षिप्रं तिष्ठतीति क्षिप्रप्रत्ययः। अत्र युगपदादिशब्द-प्रतिपाद्यस्तु सूर्यक्रियादौ घटाद्यास्तन्निर्वाहकसम्बन्धः सूर्यक्रियादिसमवायिसंयुक्तकालसंयोगादिः तद्घटकतया कालः सिद्ध्यतीति यौगपद्यादिप्रत्ययलिङ्गकत्वं बोध्यम्।

परापरप्रत्ययलिङ्गकत्वं 'भवति ही'त्यादिना मूल एव सुव्यक्तमिति नात्र प्रपञ्चित –[1]मिति। नित्येऽपीति। घटाद्यपेक्षया बहुतर –[2]नयन परिस्पन्दान्तरितत्वज्ञानस्य नित्येऽपि संभवात् तत्तत्कालिकपरत्वोपगम इत्यर्थः। अत एव – मनसि व्यभिचारादेव इत्यर्थः। तथा च सर्वत्र कालिकपरत्वापरत्वोपपत्तौ संयोग एवा-समवायिकारणम्। स च वस्तुतत्कालपिण्डसंयोग एवेत्यतिरिक्तकालसिद्धिरिति भावः। ननु पिण्डगतसङ्ख्यादेः कालसङ्ख्यादेर्वा तत्रासमवायित्वमस्तु, न तु तदुभयसंयोगस्य विनि-गमकाभावादित्यत आह – नापि सङ्ख्यादिकमिति। आदिना परिमाणपृथक्त्वविभागानां सङ्ग्रहः। घटपटादिगतसङ्ख्यादेः तद्गतपरत्वाद्यसमवायित्वे कार्यकारणभावाननुगमो स्फुट एवेति तदुपेक्ष्याह – कालसङ्ख्यादेरिति। घटादिपरत्वाप्रत्यासन्नस्यापि कालसङ्ख्यादेः तदसमवायित्वेऽतिप्रसङ्गः स्यादिति भावः। ननु कालसङ्ख्यादेः स्वसमवायिसंयुक्तसमवेतत्वमेव घटादिपरत्वादौ प्रत्यासत्तिः सम्भवतीति तस्यैव तत्रासमवायित्वमित्यत आह–विभु[3]गुणेष्विति। [4]अत्र संयोगस्यैवेति विभागस्याप्युपलक्षणम्। तथाच सङ्ख्यादिविभुगुणेषु मध्ये यत्र विजातीयकार्यसमवायिकारणत्वं तत्र तत्र संयोगविभागान्यतरत्वमिति नियमो मूले लभ्यते। तेन किंचिद्वंशदलद्वयाकाशविभागे स्वविजातीयशब्दसमवायिकारणसंयोगत्वासत्त्वेऽपि तदन्यतरत्वसत्त्वात् न व्यभिचारः। तन्नियमबलात् कालिकपरत्वादावपि कालपिण्डसंयोग एवासमवायी, न तु कालसङ्ख्यादिकमिति सिध्यति। न [5]चैवं विनिगमनाविरहात् कालपिण्डविभागस्यापि परत्वाद्यसमवायित्वं संभवतीति कथं तत्संयोगस्यैव तत्त्वमिति वाच्यम्। विभागस्य संयोगपूर्वकत्वेन प्रथमोपस्थितसंयोगस्यैव तत्त्वौचित्यादिति भावः।

---

1 'इति' नास्ति ग.
2 'तरणि' इत्यधिकः क.
3 °गुणेत्विति ग.
4 'अत्र .... .... सिध्यति' इत्यन्तस्त्रुटितः। तत्स्थाने – 'संख्यादीत्यर्थः' इत्यस्ति ग.
5 'एवं' नास्ति ग.

अथ विभुगुण एव परत्वाद्यसमवायीत्यत्र किं नियामकम्? निखिल-[1]परत्वाद्यसमवायिकारणाश्रयत्वाद्यवादैक्यनित्यत्वादिसिद्धिरिति; कालपिण्डसंयोग एव तथा।

किं च परत्वे विप्रकृष्टत्वधीरपरत्वे सन्निकृष्टत्वधीः निमित्तकारणम्। विप्रकृष्टत्वं च तदपेक्षया बहुतरतपनपरिस्पन्दान्तरितजन्यवत्वम्, तज्जन्य[2]वृत्ति-[3]ध्वंसप्रतियोगिस्पन्दवृत्तिजन्यवत्वं पर्यवसन्नम्। एवं सन्निकृष्टत्वमपि तदधिकरण-कालध्वंसाधिकरणवृत्तिजन्यवत्वम्। स्पन्दवृत्तिता च कालघटितसंबन्धेनैवेति परादिप्रत्ययलिङ्गत्वं नानुपपन्नम्।

[4]अथ नित्ये कालिकपरत्वसत्त्वे जन्यवत्वं न निवेश्यम्; तथापि नित्यानां कालिकसम्बन्धेनावृत्तित्वेन तत्र [5]तत्परत्वमित्यप्याहुः॥

---

ननु कालिकपरत्वादौ दिगादिपिण्डसंयोग एवासमवायी अस्तु 'तुल्यन्यायादि'त्यत आह– किं चेति। [6]स्पन्दवृत्तिताचेति। परत्वाद्याश्रयपिण्डस्य [7]विप्रकृष्टत्वाद्यन्तर्गतस्पन्दवृत्तिता स्पन्दसमवायिसूर्यसंयुक्तकालसंयोगात्मकेन कालघटितसंबन्धेनेत्यर्थः। यदि च दिगादि-पिण्डसंयोग एव कालिकपरत्वाद्यसमवायी तदा तादृश स्पन्दवृत्तिता दिगादिघटितसंबन्धेनैव वाच्येति कालिकपरत्वादेः दैशिकपरत्वाद्यपेक्षया वैलक्षण्यं न स्यादिति परापरप्रत्ययलिङ्गकत्वं कालस्य नानुपपन्नमिति भावः।

मतान्तरमाह – तथापीति। नित्यानामिति। नित्यपदार्थस्य कालिकसम्बन्धेना-वृत्तित्वात् [8]विप्रकृष्टत्वाद्यन्तर्गतस्पन्दवृत्तित्वाभावे विप्रकृष्टत्वज्ञानस्य परत्वहेतोस्तत्रासत्त्वात्

---

1 °परत्वासम° इ.
2 'क्षण' इत्यधिकः अ. आ.
3 'ध्वंसप्रतियोगिस्पन्दवृत्ति' नास्ति आ
4 'अथ' नास्ति आ.
5 'तत्' नास्ति इ.
6 'स्पन्दवृत्तिता चेति' नास्ति क.
7 'विप्रकृष्ट .... कालिकसंबन्धेनावृत्तित्वात्' इत्यन्तस्त्रुटितः क.
8 विप्रकृष्टान्तर्गत° ग.

वर्तमानप्रागभावप्रतियोग्यवच्छिन्नकालो भविष्यत्कालः। वर्तमानध्वंस-प्रतियोग्यवच्छिन्नोऽतीतः। वर्तमानध्वंसप्रागभावप्रति-योग्यनवच्छिन्नकालो वर्तमानः। कालस्य संबन्धत्वमात्रमतेऽवच्छिन्न इति प्रथमद्वितीययोः न देयम्। एवं प्रारम्भस्थितिसंहाररूपोपाधिवैशिष्ट्यात् सृष्टिस्थितिप्रलयकालव्यवहारः।

## सृष्ट्यादिक्रमनिरूपणम्

सृष्ट्यादिक्रमश्चेत्थम् — [1]अथ "साकारोपासनापरिवासितचेतसो यतयस्ते [यतयोऽतस्ते] हिरण्यगर्भपदवीमनुप्राप्यापवृज्यन्त" इत्यागमात् ब्राह्मणो [ब्रह्मणो] जीवभूतब्रह्म *[ब्राह्म] वर्षशतपर्याप्तस्यापवर्गकाले ईश्वर एव सृष्ट्यादिनिमित्तं गृहीतदेहो ब्रह्मादिना व्यपदिश्यत इति मते तु ब्रह्मणो देहत्यागकाले सञ्चारेण †[संसारे] खिन्नानां प्राणिनां निशि विश्रामार्थमीश्वर-

---

न परत्वोत्पाद इति भावः। आहुरित्यरुचिबीजन्तु नित्यानां कालिकेनावृत्तित्वे कालस्य जगदाधारत्वं [2]भज्यत इति।

कालस्य नित्यैकत्वे साधिते तत्र भविष्यद्वर्तमानादिव्यवहारः सोपाधिक एवेति दर्शयति — [3]वर्तमानेत्यादिना।

प्रसङ्गात् चतुर्णां पृथिव्यादिमहाभूतानां सृष्टिसंहारक्रमं व्युत्पादयति — सृष्ट्यादीति इत्थं — वक्ष्यमाणरीत्याऽवसेयमित्यर्थः। रीतिमेव दर्शयति — अथेत्यादि। ब्राह्म इति।

---

1 'अथ' नास्ति इ.
2 विभज्यते क.
3 'वर्तमान ...... व्युत्पादयति' इत्यन्तस्त्रुटितः क.

---

* व्याख्यानानुसृतपाठः
† व्याख्यानानुसृतपाठः

सञ्जिहीर्षासमकालं शरीरेन्द्रियनिमित्ताखिलकर्मणां प्रलयनिमित्तादृष्टप्रतिबन्धेन स्वभावतएव अवृत्तिविरोधे *[वृत्तिनिरोधे] अस्मादाद्यदृष्टवदात्मा[1]णु-[2]संयोगजैरीश्वरीयप्रयत्न-[3]वदात्मसंयोगजैर्वाऽणुकर्मभिः विभागद्वारा शरीरेन्द्रियारम्भकाणुसंयोगध्वंसे तेषां विनाशः; [4]न तु परमाणूनां नाशः। तथैव पृथिव्युदकज्वलनपवनानामप्युदके सति पृथिव्याः, तेजस्युदकस्य, पवने सति ज्वलनस्य, पश्चात्पवनस्य च विनाशः, ततः प्रविभक्ताः परमाणवो दोधूयमानाः धर्माधर्मभावनानुविद्धाः †[च] [5]आत्मानः आकाशादयश्चावतिष्ठन्ते, तावन्तमेव कालं, अयमेव खण्डप्रलयः[6] ।

---

"चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।
रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना" ॥

इति ब्राह्ममानेन वर्षशतं पर्याप्तं यस्येत्यर्थः। संसारे — जन्ममरण — [7]प्रबन्धे। निशीति। निशीव प्रलय इत्यर्थः। तदानीं रात्रिनियामकसूर्यादेरसत्त्वात्। निरस्ततद्विपरीतवर्तिरविरश्मिजालकालविशेषस्य रात्रिपदार्थस्य सूर्यादिनियम्यत्वादिति। [8]विश्रामार्थमित्यनेन प्रलयप्रयोजनमुक्तम्। दिनश्रान्तानां विश्रमार्थं रात्रिरेव[रात्रेरिव]सर्गश्रान्तानां विश्रामार्थं प्रलयस्योत्पादनात्। [9]ईश्वरसञ्जिहीर्षासमकालमिति। ईश्वरस्य [10]संहारेच्छानन्तरमित्यर्थः। तेन सञ्जिहीर्षायाः कर्मवृत्तिनिरोधादिकं प्रति प्रयोजकत्वोत्पत्तिः

---

1 'अणु' नास्ति आ.
2 °संयोगेनेश्वरीय° इ.
3 'वदात्माणुसंयोग' नास्ति इ.
4 'न तु परमाणूनां नाशः' नास्ति इ.
5 तथाऽऽकाशा° इ.
6 'एव' इत्यधिकः आ.
7 संबन्धे क.
8 विश्रमार्थ° क.
9 ईश्वरजिहीर्षा ग.
10 संसारेच्छा क.

---

* व्याख्यानानुसृतपाठः  † व्याख्यानुसृतपाठः

एतदुत्तरं पुनरुक्तक्रमेण सृष्टिः प्राणिनां भोगाय [1]पुनः ईश्वरसिसृक्षायां लब्धवृत्तिकादृष्टवदात्मसंयोगजपवनपरमाणुकर्मभिः तेषां परस्परसंयोगाद्द्व्यणुकादिक्रमेण महान् वायुरुत्पद्यते, दोधूयमानस्तिष्ठति। ततस्तस्मिन् [2]वायाव्येभ्योऽणुभ्यः तथैव महान् सलिलराशिरुत्पन्नः, दोधूयमानस्तिष्ठति। ततस्तस्मिन् महोदधौ

---

[प्रयोजकत्वोपपत्तिः]। यद्यपि भगवदिच्छाऽस्त्वित्येवमाकारा एकरूपैव, तथापि उपाधिभेदात् सञ्जिहीर्षा सिसृक्षेत्यादिरूच्यते। उत्पत्तिविनाशावपि तस्या उपाध्युत्पत्तिविनाशाय वा। उपाधिश्च तत्तत्कार्यसामग्रीसमवधानमिति। वृत्तिनिरोधे – फलजननसमयप्रतिबन्धे सति। धर्माधर्मभावनानुविद्धाश्चेति। प्रलये धर्माधर्मावस्थानमग्रिमसृष्ट्युपपत्त्यर्थम्। भावनावस्थानं च बालस्य स्तनपानादिप्रवृत्तिजनकेष्टसाधनतादिस्मरणोपपत्त्यर्थमिति। आकाशादयश्चेति। चकारेण पाकजरूपादयः समुच्चीयन्ते। तदसत्त्वे सर्गान्तरीयद्व्यणुकादौ रूपादिशून्यत्वापत्तेः। तावन्तमेव कालमिति। ब्राह्मवर्षशतात्मकं कालमित्यर्थः। संहारकालस्यापि सृष्टिकालतुल्यमानत्वादिति भावः। 'सृष्ट्यादिक्रमश्चेत्थमि' ति प्रतिज्ञाय प्रथमतः संहारक्रमस्य व्युत्पादनं सृष्टिप्रलयपरम्परायाः अनादितया नित्यवत् प्रथमतां द्योतयितुमिति बोध्यम्।

सृष्टिक्रमं दर्शयति – तदुत्तरं *[एतदुत्तरं]– प्रलयोत्तरमित्यर्थः। उक्तक्रमेण – द्व्यणुकादिक्रमेण। सृष्टिः – चतुर्णां महाभूतानां सृष्टिः; व्युत्पाद्यत इति शेषः। प्राणिनां प्राणिसम्बन्धयोग्यानाम्; तदानीं प्राणसम्बन्धाभावादिति भावः। भोगायेत्यनेन पुनः सृष्टेः प्रयोजनमुक्तम्। संहारक्रमाद्विपरीत एव सृष्टिक्रम इति वाय्वादिक्रमेण तं दर्शयति– लब्धवृत्तिकेत्यादिना। लब्धावृत्तिः फलजनसमयो यैस्तान्यदृष्टानि, तद्वदात्मसंयोगजैः पवनपरमाणुकर्मभिरित्यर्थः। तेषां परमाणूनाम्। ततस्तस्मिमिति। पृथिव्युत्पत्त्यनन्तरमा-

---

1 'पुनः' नास्ति इ. 2 जलीयेभ्योऽणुभ्यः इ.

---

* मूलानुसृतपाठः

पार्थिवेभ्यः तथैव महापृथिव्युत्पद्य संहता अवतिष्ठते। ततस्तस्यां तैजसेभ्यस्तथैवोत्पन्नो महान् तेजोराशिर्देदीप्यमानस्तिष्ठति।

एवं समुत्पन्नेषु महाभूतचतुष्केष्वीश्वराभिध्यानमात्रात् पार्थिवाणुसहिततैजसाणुभ्यो महदण्डं सौवर्णं जायते। तस्मिंश्चाण्डे चतुर्मुखं ब्रह्माणमुत्पाद्य प्रजासर्गे विनियुङ्क्ते। [1]स चेश्वरप्रयुक्तोऽतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मणां विपाकं ज्ञात्वा तदनुरूपज्ञानवैराग्यभोगायुषः सुतान् प्रजापतीन् मानसान्

---

धारभूतायां तस्यां तैजसपरमाणुभ्यो द्व्यणुकादिक्रमेणोत्पन्नो महान् तेजोराशिः केनाप्यनभिभवो देदीप्यमानस्तिष्ठतीत्यर्थः। यद्यपि सलिलोत्पत्त्यनन्तरमेव तेजस उत्पत्तिप्रदर्शनमुचितम्, तथापि सर्वार्थदर्शि – "भाष्यकारैः" तथोक्तत्वादत्रापि तथोक्तमिति।

महाभूतचतुष्केति। न च "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इति [2]श्रुतावाकाशस्य [अपि] व्युत्पत्ति [उत्पत्ति] प्रतिपादनात् तं विहाय पृथिव्यादि – चतुष्कस्यैव कथमुत्पत्तिप्रतिपादनमिति वाच्यम् [3]धर्मिग्राहकमानेन लाघवादाकाशस्य नित्यैकत्वे सिद्धे तच्छ्रुतौ 'सम्भूत' इत्यस्याकाशान्वयपक्षे ज्ञप्तिपरत्वात्। वाय्वाद्यन्वयपक्षे चोत्पत्तिपरत्वात्। वाय्वाद्युत्पत्तिविनाशयोः सर्वानुभवसिद्धत्वादिति। केचित्तु – अन्यथानुपपत्त्या तच्छ्रुतावाकाशपदं वाय्वादिसिसृक्षायां लाक्षणिकमिति न कापि क्षतिरित्याहुः। ईश्वरेति। ईश्वरस्याभिध्यानं सङ्कल्पः ब्रह्माण्डो भवतु' इत्याकारकः, तन्मात्रादित्यर्थः। विनियुङ्क्ते – 'त्वमेवं कुरु' इत्याज्ञापयति। यदा चेश्वर एव ब्रह्मत्वेन व्यपदिश्यत इति मतं तदाऽभेदेऽपि भेदोपचाराद्विनियोगो लोकशिक्षार्थमिति बोध्यम्। न च भगवति कर्तरि जागरूके किं ब्रह्मणेति वाच्यम्। शरीरान्वयव्यतिरेकानुविधायितत्तत्कार्यविशेषेण तस्याप्याक्षेप्यत्वात्। तस्य

---

1 सर्वेश्वर° आ.

2 श्रुत्याऽऽकाशस्य क.

3 'धर्मि .... .... इत्याज्ञापयति' इत्यन्तस्त्रुटितः क.

मनु-देव-ऋषिपितृगणान् मुखबाहूरुपादतः चतुरो [1]वर्णानन्यानि [2]चोच्चावचानि [3]भूतानि सृष्ट्वा कर्मानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः योजयती[4]ति ।

महाप्रलयानन्तरं तु न सृष्टिः, सर्वमुक्तौ सर्वोत्पत्तिमन्निमित्तस्यादृष्टस्यापायात् सर्वभोक्त्रप्रवृत्तौ [5]प्रयोजनाभावाच्च । न हि बीजप्रयोजनाभ्यां विना कार्योत्पत्तिः ।

अथ सर्वेषां मुक्तिरेव नेष्यते चेत्-तर्हि संसार्येकस्वभावा [6]एव केचिदात्मान इति स्थितेऽहमपि यदि तथा स्यां, तदा मम विफलं परिव्राजकत्वमिति [7]शङ्कया ब्रह्मचर्यादौ कस्यापि प्रवृत्तिः न स्यात् । नन्वेवमेकैकस्मिन् कल्पे यद्येकैको-

---

जीवत्वपक्षे तु तदीयकर्मविशेषणतादृशाधिकारसम्पत्तिभोगार्थं तस्यापि कल्पने क्षतिविरहाच्चेति । अतिशयज्ञानेति । यद्यज्ञः स्यात् तदा [8]समर्थोऽपि तत्तत्कार्यं न कुर्यात् । यदि च रागवान् स्यात् तदा न कर्माण्यनुरुन्ध्यात् । तथा च कृतहानमकृताभ्यागमश्च प्राणिनां स्यात् । यदि चैश्वर्यवान् न स्यात् तदा ज्ञानवानप्ययमपेक्षितं कार्यं न साधयेदिति त्रितयसम्पन्नत्वमस्योक्तम् । तदनुरूपेति । कर्मानुरूपं ज्ञानं वैराग्यं भोगः आयुश्च येषामिति तादृशानीत्यर्थः । अत्र [9]सुतान् मानसानिति सर्वत्र संबध्यते । प्रजापतीन् – दक्षादीन् । मनून् – स्वायम्भुवादीन् । देवान् – आदित्यादीन् । ऋषीन् – गौतमादीन् । पितॄन् – कव्यवाहादीन् । गणान् – कूष्माण्डादीन् । प्रजापतयः – तन्नियतप्रजास्रष्टारः । मनवः – राजधर्मप्रवर्तयितारः । देवाः – हविर्भोक्तारः । ऋषयः – प्रथमवेदाध्येतारः । अत एव यो यन्मन्त्रस्य प्रथममध्येता सः, तस्य ऋषिरिति प्रसिद्धिः । पितरः– स्वधाभागिनः । गणाः – बलिभोजिनः । मुखेति । मुखात् ब्राह्मणं बाहुभ्यां राजन्यं, ऊरुभ्यां

---

1 वर्णान्यन्यानि इ.
2 शेषोच्चा° आ.
3 'भूतानि' नास्ति इ.
4 'इति' नास्ति आ. इ.
5 प्रति योजना° आ.
6 'एव' नास्ति इ.
7 साङ्कर्यादौ कस्या° अ.
8 समयोऽपि ग.
9 'सुतान् .... .... देवान्' इत्यन्तस्त्रुटितः क.

ऽपवृज्यते तदाऽप्युच्छिन्नः संसारः स्यात् । कल्पानामनन्तत्वादिति चेत्-सत्यम् । अनन्ता एवापवृक्ताः, न तु सर्वे । सम्प्रति संसारस्यानुभविकत्वादिति दिक् ।

## प्रलयनिरूपणम्

खण्डप्रलयत्वं च जन्य–[1]द्रव्यानधिकरणद्रव्यप्रागभावा(न)धिकरण-कालत्वम् । सृष्टिकालवारणायानधिकरणान्तम् । महा-[2]प्रलयोपान्त्यक्षणाधि-वारणायाधिकरणान्तम् ।

ननु प्रलये ये दोधूयमानाः परमाणवः तिष्ठन्ति इति 'भाष्यं' विरुद्धम्; तत्र क्रियासद्भावे मानाभावात् क्षणादिव्यवहारस्य वर्षादिव्यवहारवत् [3]गौणत्वात् । अन्यथा प्रलयस्य ब्रह्मवर्षशतनियमाय सूर्यादिसत्त्वापत्तेः । कालव्यवहारस्तु ध्वंसादितः पूर्वसर्गस्यादृष्टवदात्मसंयोगादितश्चोपपद्यते । तत एव [4]चापरसर्गीयाणु-द्व्यणुकानुकूलपरमाणुक्रियापीति चेत्–न । अदृष्टवदात्मसंयोगस्य [5]सत्त्वे

---

वैश्यं पद्भ्यां शूद्रं अन्यानि चोच्चावचानि भूतानि – तिर्यङ्नरकप्रभृतीनि । सर्वद्वितीयान्तानां 'सृष्ट्वा' इत्यनेन सम्बन्धः । [6]धर्मज्ञानवैराग्यैश्वर्यैरित्युप – लक्षणम् अधर्मज्ञानावैराग्यनैश्वर्यैरपि योजयतीति बोध्यम् ।

अत्र च मुखबाह्वादिशब्दो ब्राह्मणत्वादिव्यञ्जकव्यक्तिविशेपहेतु तत्तद्द्विजातीयादृष्टविशेपो-पनिबद्धपरमाणुसमूहं प्रतिपादयति । तस्मादेव च ब्राह्मणत्वादिसृष्टिरित्याचार्याः (कि पृ. ९६) ।

---

1 'द्रव्य' इत्यधिकः इ.
2 'प्रलयो .... .... ननु' इत्यन्तस्त्रुटितः आ.
3 असत्त्वात् अ.
4 च द्वितीयसर्गस्याणु° इ.
5 सतः आ.
6 कर्मज्ञान° क.

प्रागपि क्रियोत्पत्तौ बाधाभावात्, द्वितीयसृष्टिप्राक्क्षणसहकारीति चेत्–क्षणस्य क्रियास्वीकार एव संभवात् ।

तदुक्तमाचार्यैः —

"क्रियासन्तानास्वीकारे कालावच्छेदानुपपत्तौ पुनस्सर्गानुपपत्तिः" इति । क्रियासन्तानस्वीकार एव यावद्भिः क्षणैः [1]ब्रह्म वर्षशतं तावत् क्षणसमाप्तावपरसृष्टि-सम्भव इति तदाशयः ।

किं च परमाणुगुरुत्वाधीनक्रियासन्तानो दुर्वार एव । एवं चाविद्यासहितं ब्रह्मैव प्रलयेऽपि तिष्ठति, न तु कार्यमात्रमिति वेदान्तिमतम् । तच्चिन्त्यम् । वस्तुतस्तैरपि तदा मायापरिणामाः स्वीक्रियन्त इति दिक् ।

प्रलये प्रमाणं च श्रुतिरेव; लाघवतर्कसहकृतेति सङ्क्षेपः ।

---

वस्तुतस्त्वाद्यब्राह्मणादेरेव ब्रह्ममुखादेः सकाशादुत्पत्तिरित्युक्तम् ।

चिन्त्यमिति । चिन्ताबीजं तु प्रलये कार्यमात्रस्यासत्त्वे ब्राह्मवर्षशतात्मकप्रलयकालस्य परिच्छेदकाभावेनापरसर्गे कालनियमासम्भव इति ।

स्वीक्रियन्त इति । तथा च तादृशमायापरिमाणैरेव परमाणुक्रियासमकक्षैः प्रलयकाल-परिच्छेद इति भावः ।

---

1 ब्रह्मचर्यशतं आ., 'ब्रह्म' नास्ति इ.

महाप्रलयत्वं च [1]गन्धाद्यनधिकरणकालत्वम्। तत्र महाप्रलयादौ निखिलपरमाणुक्रियाविभागसंयोगनाशतद्गुणानां त्र्यणुकानां च नाशः। एवं घटतद्गुणपर्यन्तानामिति नैयायिकीयः पन्थाः॥

अत्रेदं बोध्यम् — आश्रितनाशे आकाशादिनाशस्य विशिष्यैव हेतुत्वात् चरमभोगनाश्यादृष्ट – [2]नाशाद्युगपदेव तत्कालीननिखिलकार्यभावनाशोऽस्तु। इत्थं च [3]समदेशानां नाशस्यैक्यात् लाघवमपि। न च दिङ्नियमायाश्रयनाशो हेतुरावश्यकः; तत्प्रतियोगिनां कारणत्वेनापि तन्नियमोपपत्तेः। [4]भिन्नदिक्कालानामप्येक एव नाशः; न हि तया प्रतीत्यादिविरोधसम्भावना। यदि च प्राच्यानां प्राच्यामेव नाशो भविष्यति, प्रतीच्यानां प्रतीच्यामेवेत्यादिव्यवहारात् दिङ्नियमो नाशस्य तदा प्रतियोगिनो हेतुत्वेनैव कालवद्देशस्यापि नियम इति।

---

ननु न कदाप्यनीदृशं जगदिति स्वीकारात् प्रलय एव नास्ति; कस्येदं निरूपणमिति मीमांसकस्याशङ्कां परिहरति – प्रलये इति। "नासदासीन्नोसदासीत्" इत्यादिश्रुतिरेव लाघवतर्कसहकृता प्रलये प्रमाणमित्यर्थः। तदानीं प्रलयकालेऽसत् सूक्ष्मं द्व्यणुकादि नासीत्। सत् स्थूल महीमहीधरादि च नो आसीदिति श्रुत्यर्थः। न चेयं श्रुतिः सृष्टिकाल एव किंचिद्देशावच्छेदेन सदसतोरसत्त्वं प्रतिपादयतीति वाच्यम्; एतादृशक्लिष्टकल्पनायां गौरवात्, अत एवोक्तं लाघवतर्कसहकृतेति।

गन्धादीति। आदिना नीलतिक्तादेः परिग्रहः। महाप्रलये गन्धनीलादिसत्त्वे प्रमाणाभावात्। तदुत्तरं सृष्ट्यैवासत्त्वादिति॥

---

1 गन्धानधि° इ.

2 °नाश्य यद्युग° इ.

3 'समदेशानां' नास्ति इ.

4 'भिन्न .... .... व्यभिचाराच्च' इत्यन्तस्त्रुटितः। तत्स्थाने – 'वस्तुतः तदा दिङ्नियम एव नास्ति; तदोदयाचलाद्यभावेन प्राच्यादि दिशि एवाभावात्' इत्यस्ति अ. इ.

अस्तु वा तत्तद्दिग्वर्तिनामदृष्टनाश एव नाशकः। न चास्य प्रतियोगिसमवेतत्व-संबन्धेन नाशविशिष्टनाशत्वावच्छिन्ने नाशत्वेन हेतुत्वं स्वप्रतियोगिताकार्यस्य (?) स्वप्रतियोगिसमवेतेषु स्वाकालीनेष्वपि संभवेन व्यभिचाराच्च।

एतेन — सर्वेषां क्लृप्तनाशकादेव नाशः चरम — [1]द्व्यणुकनाशानु-गुणक्रियाया जन्यद्रव्यरूपोत्तरदेशसंयोगादस्य चाश्रयनाशान्नाशादित्यपास्तम्। [2]तत्क्रियाया गगनादिनापि परमाणुसंयोगजननसम्भवेन तत्संयोगनाशानुप — [3]पत्तेश्च।

वस्तुतस्तु — अस्मदाद्यदृष्टवदात्मसंयोगैः प्रयत्नवदीश्वरसंयोगैश्च युगपदेव देहेन्द्रियविषया — [4]वयवेषु क्रियाः, ताभिः विभागद्वारारम्भकसंयोगनाशाः, ततश्चरममुक्तिप्रतियोगिदुःखसाक्षात्कार — [5]काले युगपदेव देहेन्द्रियादिविनाशो द्रव्या[6]नाशेऽसमवायिकारण [नाश] स्य हेतुत्वात्, ततः तदाश्रितगुणादिनाशो-ऽदृष्टनाशश्च, ततोऽदृष्टनाशात् परमाण्वाकाशादिसंयोगचरमदुःखसाक्षात्कार

---

एतेन — चरमभोगनाश्यादृष्टनाशाद्युगपदेव [7]सर्वजन्यभावनाशोपगमेन। क्लृप्त-नाशकादेव — समवाय्यसमवायिनाशादेव। चरमद्व्यणुकेति। चरमत्वमत्र क्रियायां विशेषणत्व-[विशेषण] मित्यर्थः। दूषणान्तरमाह — तत्क्रियाया इति।

---

1 °त्र्यणुक° आ.
2 'तत्' इत्यधिकः अ.
3 °प्रत्त्यापत्तेच्च अ.
4 °वगमेषु इ.
5 'काले' नास्ति इ.
6 °नाशे सम° इ.
7 'सर्व .... .... नाशादेव' इत्यन्तस्त्रुटितः क.

तत्साक्षात्कारजनकात्ममनोयोगानां नाशः, चरमदुःखसाक्षात्कारस्योपेक्षात्वात् न तज्जन्यसंस्कारकल्पनं, स्वप्रतियोगिसमवेतत्वकालिकोभयसम्बन्धेन नाशविशिष्टनाशे नाशत्वेन हेतुत्वाच्च न विशिष्याश्रयनाशकल्पनाप्रयुक्तं गौरवमिति तत्त्वम् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां

पदार्थमलायां कालप्रकरणं

समाप्तम् ॥

---

समवाय्यसमवायिनाशस्यैव कार्यनाशं प्रति हेतुत्वमुचितं क्लृप्तत्वादित्यतस्तथैवोपपादयति – वस्तुतस्त्विति ॥

इति श्रीमन्महामहोपाध्याय लौगाक्षिगोत्रसम्भूत श्रीमद्रुद्रकवीन्द्र-

तनूजमुद्गलविदुषसूनुना भास्करेण कृतपदार्थमालाप्रकाशे

कालप्रकरणं समाप्तम् ॥

## अथ दिक्प्रकरणम्

दिगितरेभ्यो भिद्यते दिक्त्वात्। दिक्त्वं च [1]विभुत्वे सति दैशिकपरत्वा-[2]परत्वासमवायिकारणसंयोगाश्रयत्वाद्युपाधिरूपम्। सा च सङ्ख्यापरिमाण-पृथक्त्वसंयोगविभागवती।

ननु दिशि मानाभावः। अरूपि बहिर्द्रव्यत्वेनाप्रत्यक्षत्वात्। अनुमानादेश्चाप्रयोजकत्वादिति चेत्-न। 'प्राच्यां घट' इत्यादिव्यवहारबलादुदयाचल-[3]संयोगादिलक्षण[4]प्राच्यादेः घटादिना सम्बन्धघटकत्वेन दिक्सिद्धेः। कालस्तु नियतक्रियासम्बन्धघटक एवेति न तस्य प्राच्यादिसम्बन्धघटकता।

---

क्रमप्राप्तां दिशं निरूपयति – दिगिति। दिक्त्वादिति। अत्र यन्नेतरेभ्यो भिद्यते न सा दिक्, यथा पृथिव्यादिः; न चेयं तथा; तस्मादितरेभ्यो भिद्यत इत्युदाहरणोप-नयनिगमनानि बोद्धव्यानि।

अनुमानादेश्चेति। दूरस्थसन्निहितपिण्डयोरुत्पद्यमानपरत्वापरत्वे सासमवायिकारणके भावकार्यत्वात् रूपादिवदित्यनुमानात् सामान्यतः तदसमवायि सिध्यति। तच्च न रूपादि; वाय्वादावपि दैशिकपरत्वाद्युत्पत्तेर्व्यभिचारात्। नापि सङ्ख्यादि; तस्य परिमाणातिरिक्त-विजातीयं प्रत्यसमवायित्वाभावात्। तथा च परिशेषात् संयोग एव तथात्वेन परिच्छिद्यत इति तदाश्रयत्वेनातिरिक्तदिक्सिद्धिः। दिक्पिण्डसंयोगस्यैव तत्रासमवायित्वादित्युक्तानु-मानस्यापि (दिवसगृहीत) दिशः श्रोत्रमि'त्यादिशब्दस्य चानुकूलतर्कविरहेण साधकत्वासम्भवात्;

---

1 'विभुत्वे सति' नास्ति इ.
2 ०'परत्वा' नास्ति इ.
3 'तपन' इत्यधिकः आ.
4 प्राच्याम० इ.

नापि आकाशात्मानौ : तथा *[सति]अति प्रसङ्गात्। मूर्तानां तु न सम्बन्धघटकतासम्भवः, घटादिसंयुक्तमूर्तसंयोगिवृत्तित्वस्य नियमत उदयाचलसंयोगादावसत्त्वात्। स्वसंयुक्तमूर्तसंयोगवृत्तित्वस्य नियमत [1]उदयाचल[2]संयोगादावसत्त्वात्। [3]स्वसंयुक्तसंयोगिवृत्तित्वादेरेव संबन्धात् ।

---

तर्कस्य मानमात्रस्य सहकारित्वादिति भावः। अतिरिक्तदिक्साधनाय समाधत्ते प्राच्यामित्यादिना। उदयाचलेति। अयं भावः – मेरोः प्रदक्षिणमावर्तमानस्य सूर्यस्य प्राक्संयोगः प्राची। स चोदयाचलसंयोग एव। अवाक्संयोगी अवाचीः दक्षिणेति यावत्। स च वामवर्तिदेशविशेषसंयोग एव। उदक्संयोग उदीची। स च मेरुसंयोग एव। अत एव प्राच्यादिसंज्ञानामन्वर्थता अपि सङ्गच्छते। [4]प्रागस्यामञ्चति सवितेति प्राची। अवास्यामञ्चतीत्यवाची। प्रत्यस्यामञ्चतीति प्रतीची। उदस्यामञ्चतीत्युदीची। एवं प्रागवाची, अवाक् प्रतीची, उदक् प्रतीची, प्रागुदीची। एवं सूर्यस्याधस्संयोगो[5]ऽधस्तात्; सूर्यस्योर्ध्वदेशसंयोग ऊर्ध्वा। एवं दशदिशः सूर्यस्योदयाचलादितत्तद्देशसंयोगोपाधिवशात् भवन्ति। इत्थं च 'प्राच्यां घट' इति प्रतीतिव्यवहारयोः [6]प्राचीपदार्थे सूर्यनिष्ठोदयाचलसंयोगे भूतलादिवर्तिघटाधारत्वमनुपपन्नमिति तत्संबन्धघटकतयाऽतिरिक्तदिक्सिद्धिः। स च घटादिसम्बन्धः स्वसंयुक्तदिक्संयोगिसूर्यसमवेतत्वं, स्वसमवायिसूर्यसंयुक्तदिक्संयोगित्वं चेति मूले एवोक्तप्रायम्। एवं 'प्रतीच्यां घट' 'उदीच्यां घट' इत्यादावपि दिग्घटितसम्बन्ध उन्नेयः। नापीति। आकाशात्मानौ व्यापकावपि प्राच्यां घटसम्बन्धघटकावित्यपि नेत्यर्थः। तथा सतीति। आकाशात्मनोर्घटादौ सूर्यसंयोगोप– [7]नायकत्वे सति वाराणसीस्थेन नीलेन पाटलीपुर-

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | 'उदयाचल' नास्ति | आ. | 4 | प्राच्याम° | ग. |
| 2 | सूर्यादाव° | आ. | 5 | स्यात् | क. |
| 3 | 'स्व .... .... रूपादेः' इत्यन्तस्त्रुटितः | आ. | 6 | प्रतीची | क. |
| | | | 7 | °नामकत्वे | ग. |

---

* व्याख्यानुसृतपाठः

अस्ति हि घटादिसंयुक्तदिक्संयोगवृत्तित्वं प्राच्यादौ रूपादेः स्वाश्रयसंयुक्तसंयोगिवृत्तित्वादिकं शब्दादेः स्वाश्रयसंयुक्तसंयोगिवृत्तित्वादिकं वाच्यमिति दिगेव तथा। सा च तत्तद्दिशि तत्तत्पदार्थानामेव संबन्धितया धर्मिग्राहकमानसिद्धेति नातिप्रसङ्गः।

---

स्थितमणेरुपरञ्जनप्रसङ्गादात्माकाशाभ्यां काशीस्थनीलसमवेतनत्वस्य तादृशमणावुपनयनसम्भवात्। कालस्य सूर्यमात्रोपनायकत्वेन वा दिशोऽपि सूर्यसंयोगमात्रोपनायकत्वेन [1]सिद्धिः न तत्र तदतिप्रसङ्ग इति भावः। मूर्तानामिति। मूर्तद्रव्याणां प्राच्यादिपदार्थेन घटादिसम्बन्ध – [2]घटकतालाभसंभव इत्यर्थः। घटादिसंयुक्तप्रभादिमूर्तसंयोगित्वस्य सूर्यादौ सत्त्वेऽप्यन्धकारादौ तदसम्भवादाह – नियमत इति। असत्त्वादिति। तथा च घटादेः स्वसंयुक्तमूर्तसंयोगिसूर्यसमवेतत्वादिः न सूर्यसंयोगरूपप्राच्यां संबन्ध इति भावः। संयुक्त इति। स्वसंयुक्तदिक्संयोगिसूर्यवृत्तित्वादेरेव [3]प्राचीप्रतीच्यादौ घटादिसंबन्धत्वादित्यर्थः।

इदमेव विवृणोति – अस्तिहीति। प्राच्यादाविति। आदिनाऽस्ताचलसंयोगरूपप्रतीच्यादिसंग्रहः। तत्रापि स्वसंयुक्तदिक्संयोगिपूर्ववृत्तित्वादेरेव घटादिसंबन्धत्वादिति। 'प्राच्यां घटरूपमि'त्यत्र दिग्घटितसंबन्धं दर्शयति – रूपादेरिति। वृत्तित्वादिकमित्यादिना 'प्राच्यां घटरूपत्वमि'त्यादौ स्वाश्रयाश्रयसंयुक्त दिक्संयोगिसूर्यवृत्तित्वस्य सङ्ग्रहः। 'प्राच्यां शब्द' इत्यत्र दिग्घटितसंबन्धं दर्शयति – शब्दादेरिति। आदिना शब्दत्वादेः सङ्ग्रहः। स्वाश्रयेति। शब्दावच्छेदकमृदङ्गादीत्यर्थः। अवच्छेदकतया तस्यापि शब्दाश्रयत्वात्। एतेन विभुद्वयसंयोगनिषेधात् शब्दाश्रयनभसो दिशि संयोगासम्भवेपि नक्षतिः। अत्रापि वृत्तित्वादिकमित्यादिना 'प्राच्यां शब्दत्वमि'त्यादौ शब्दत्वाश्रयावच्छेदकसंयुक्तदिक्संयोगिपूर्ववृत्तित्वस्य सङ्ग्रह इति। दिगेवेति। अतिरिक्तदिगेव प्राची प्रतीचीत्यादौ घटादिसंबन्धघटिकेत्यर्थः।

---

1 'एव, दिशोऽपि सूर्यसंयोगमात्रो- पनायकत्वेन सिद्धेः क.

2 घटकतासंबन्ध क. घटकलाभ° ग.

3 'प्राची .... .... अतिरिक्तदिगेव' इत्यन्तस्त्रुटितः क

ननु चैत्रस्य 'प्राच्यां घट' इत्यादेः [1]चैत्राद्यपेक्षया [2]सन्निहितो[3]दयाचल-संयोगादिवृत्तित्वमर्थ इति तूभयाचलादिसंयोगसंबन्धघटकतया दिक्सिद्धिः । यदा तु चैत्राद्यपेक्षयोदयाचलसन्निहितादिवृत्तित्वं तदर्थ इति मतं, तदा किमतिरिक्तदिशा क्लृप्तेन संयोगसमवायादिरूपेण सन्निहिततत्तद्देशसंबन्धेनैव निर्वाहात् । न च घट[4]तद्रूपादिकं प्राच्यामित्यादावेकविधसंबन्ध उचितः । [5]तत्रापि [6]तत्त्संबन्धभेदात्, भूतले घटपृथिवीत्वादिकमित्यत्रैव संबन्धभेदेऽप्यक्षतेश्च ।

---

तत्तद्दिशि – सूर्यनिष्ठोदयाचलादिसंयोगादिरूपप्राच्यां दिशि । नातिप्रसङ्गः – न काशीस्थ-नीलेन पाटलिपुरस्थितमणेरुपरञ्जनप्रसङ्गः । यद्वा सूर्यक्रियोपनायकत्वमपि दिश एवास्तु किं कालेनेत्यतिप्रसङ्गो न ।

अतिरिक्तदिक्सिद्धिमसहमानः शङ्कते – ननु चैत्रस्येति । अर्थः – वाक्यार्थः । इति मते इति । सूर्यस्योदयाचलसंयोगः प्राची, [7]अस्ताचलसंयोगः प्रतीचीत्यादिमते उदयाचल-संयोगात्मकप्राच्यादौ घटादिसंबन्धघटकतयाऽतिरिक्तदिक्सिद्धिरस्त्वित्यर्थः । उदयाचल-सन्निहितो देशः प्राची, [8]अस्ताचलसन्निहितो देशः प्रतीची, एवमुदीची – अवाचीति मतेऽतिरिक्तदिशा न प्रयोजनम् । तत्तद्देश – क्लृप्त – [9]घटादिसंयोगादिनैवोपपत्तेरित्याह । यदात्विति । संयोगसमवायीति । 'प्राच्यां घट' इत्यत्र संयोगेन, 'प्राच्यां रूपमि'त्यत्र समवायेन, 'प्राच्यां पटाभाव' इत्यत्र विशेषणतयेत्यादि क्लृप्तसंबन्धेनैव निर्वाहादित्यर्थः । न च घटेति । प्राच्यां घटो, घटरूपं, घटत्वं वेत्यादौ दिग्घटितैकविधसंबन्ध उचित इत्यर्थः ।

---

1 चैत्रापेक्षया अ. इ.
2 स्वसन्नि° अ.
3 'उदयाचलसंयोग' नास्ति इ.
4 'तत्' नास्ति इ.
5 तदापि इ.
6 तत्र संबन्धात् आ.
7 'अस्ताचलसंयोगः प्रतीची' नास्ति ग.
8 'अस्ता .... .... अवाची' इत्यन्तस्त्रुटितः ग.
9 पटा° ग.

अत्र ब्रूमः — अस्तूदयाचलादिसन्निहिता प्राच्यादिः। परं तु तत्र क्लृप्तसंबन्धेन व्यवहारे प्रतीच्यादिवर्तिज्ञानादावपि प्राच्यामिति व्यवहारापत्तिः, विषयतादिसम्बन्धसत्त्वात्। न च काल एवात्रापि सम्बन्धोऽस्तु; 'अस्यां दिशि घट' 'अस्मिन् काले घट' इति प्रतीत्योः वैलक्षण्यं तु जन्यत्वमूर्तत्वयोः कालदिक्पदवत्वरूपयोः वा कालत्वदिक्त्वयोः [1]वैलक्षण्यादिति वाच्यम्। [2]जन्यमात्रस्य कालतया प्रतीच्यादिदिग्वर्तिष्वपि प्राच्यामित्यादिव्यवहारापत्तेः। न च मूर्तमात्रस्य दिगुपाधितया 'प्रतीच्यां घट' इत्यादि प्रतीतिविषयजन्यमूर्तमेव

---

तवापीति। अतिरिक्त[3]दिगवादिनोऽपि। 'प्राच्यां घट' इत्यत्र घटसंयुक्तदिक्संयोगित्वस्य, 'प्राच्यां घटरूपमित्यादौ च रूपसमवायिघटसंयुक्तदिक्संयोगत्वादेः प्राच्यात्मकोदयाचलसन्निहितमूर्तदेशे संबन्धित्वमिति संबन्धभेदादित्यर्थः। हेत्वन्तरमाह – भूतलेति। 'भूतले घटः' 'भूतले पृथिवीत्वमि'त्यत्र 'प्राच्यां घटः तद्रूपादिकमित्यत्र मम संबन्धभेदेऽप्यक्षतश्चेत्यर्थः।

उदयाचलादीत्यादिनाऽस्ताचलादेः परिग्रहः। प्राच्यादिरित्यादिना प्रतीच्यादेः सङ्ग्रहः तथा चोदयाचलसन्निहिता दिक् प्राची। अस्ताचलसन्निहिता दिक् प्रतीची। एवमुदीची अवाची च निर्वाच्येत्यर्थः। [4]समाधानमाह तदा किमतिरिक्तदिशेत्याक्षेपे – अत्र ब्रूम इत्यादि। तत्र – निरुक्तप्राच्यादौ। क्लृप्तसंबन्धेन – संयोगसमवायादिना। व्यवहारे – 'प्राच्यां घट' 'प्रतीच्यां रूपमि'त्यादि[5]व्यवहारे। प्रतीच्यादीति। प्राचीविषयके प्रतीच्यादिवर्तिज्ञानेच्छादावपि 'इदं प्राच्यामि'ति व्यवहारापत्तिः; दीपविषयतासंबन्धस्य प्राच्यां सत्त्वादित्यर्थः। जन्यमात्रस्येति। तथा च जन्यमूर्तस्यापि कालोपाधित्वस्वीकारात् 'इदानीमि'ति प्रतीतिविषयजन्यमूर्तस्य

---

1 वैलक्षयण्यादि वाच्यम् आ.
2 'जन्य .... .... वाच्यं' इत्यन्तस्त्रुटितः इ.
3 'दिक्' नास्ति ग.
4 'समाधान .... .... इत्यादि' इत्यन्तस्त्रुटितः ग.
5 'व्यवहारे' नास्ति क.

प्रतीच्यादिवर्तिविशेष्यकइदानीमिति प्रतीतिविषयोऽस्त्विति वाच्यम्। यस्मिन्नेव काले 'प्राच्यां घटः' तस्मिन्नेव काले 'प्रतीच्यां[1]पट' इति [2]व्यवहारानापत्तेरिति दिक्।

अत्र तदपेक्षया [3]उदयाचलसन्निहिता दिक् ततः प्राचि। अस्ताचलसन्निहिता प्रतीची। सुमेरुसन्निहिता उदीची। तदसन्निहिता दक्षिणा।

---

प्राचीशब्दार्थत्वं संभवत्येव, मूर्तमात्रस्य दिगुपाधित्वात्। तथा च प्रतीच्यादिवर्तिवस्तुन्यपि 'इदं' 'इदानीमि'तिवत् 'इदं प्राच्यामि'ति व्यवहारः स्यादिति भावः। न च मूर्तेति। अत्र जन्यमूर्तमेवेत्येवकारेण 'प्राच्यामिति प्रतीतिविषयजन्यमूर्तत्वव्यवच्छेदः। तथा च प्रतीच्यादिवर्तिवस्तुनि 'इदं' 'इदानीमि'ति प्रतीतिसम्भवेऽपि 'इदं प्राच्यामि'ति प्रतीतिव्यवहारौ नेत्यर्थः। यस्मिन्नेवेति। जन्यमात्रस्य कालोपाधित्वेऽपि प्रागुक्तातिप्रसङ्गभङ्गाय यदि 'प्रतीच्यां घट' इति प्रतीतिविषयीभूतं जन्यमूर्तमेव प्रतीच्यादिवर्तिविशेष्यकेदानीमिति प्रतीतिविषयः, [4]'प्राच्यां घट' इति प्रतीतिविषयीभूतं जन्यमूर्तमेव च प्राच्यादिवर्तिविशेष्यकेदानीमिति प्रतीतिविषयः; न तूभयत्रापि प्रतीतावेकमेव विषयीभूतं जन्यमिति कल्प्यते, तदा यस्मिन्नेव काले 'प्राच्यां घटः' [5]तस्मिन्नेव काले 'प्रतीच्यां पट' इति व्यवहारो न स्यात्। यत्तदोरेकार्थत्वासम्भवादिति भावः।

द्वितीयमतमाश्रित्य दिश औपाधिकं विभागमाह – अत्र यद *[तद]पेक्षयेति। अस्मदीयोदयाचलयोर्मेरुतद्भागीयजनान् प्रति विपरीतत्वात् तथैव तान् प्रत्यपि प्राच्यादिकं वाच्यमिति ज्ञेयम्।

---

1 घटः इ.

2 व्यवहारापत्ते° इ.

3 'उदया' नास्ति इ.

4 'प्राच्यां .... .... प्रतीतिविषयः' इत्यन्तस्त्रुटितः क.

5 'तस्मिन्नेव .... .... पट' इत्यन्तस्त्रुटितः क.

* मूलानुसृतपाठः

 

यत्तु — प्रागभिमुखचैत्रादेः वामापेक्षया दक्षिणभागसन्निहिता दक्षिणा। दक्षिणापेक्षया वामभागसन्निहितोत्तरो वा आत्मत्वदक्षिणत्वे जातिविशेषाविति — तन्न — [1]घटादेः [2]वामत्वाद्यभावात् तदपेक्षयोदयाचलादिसन्निहितत्वं च तन्निष्ठोदयाचलादिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयाचला[3]दिसंयुक्तसंयोगशालित्वम्। इत्थं च 'प्रयागात् प्राच्यां काशी' त्यतः प्रयागनिष्ठोदयाचलसंयुक्तसंयोगपर्याप्तसंख्या[4]व्याप्यसङ्ख्यापर्याप्त्यधिकरणोदयाचलसंयुक्तसंयोगशालिमूर्तवृत्तिः काशीत्यन्वयबोधः। तत्र प्राथमिकसङ्ख्यान्तं पञ्चम्यन्तस्य व्याप्त्यादिमूर्तान्तं प्राचीत्यस्य निष्ठान्तमेव वा पञ्चम्यन्तस्य उदयाचलेत्यादिमूर्तानां प्राचीत्यस्य [5]खण्डशक्त्यार्थः।

---

प्रयागादित्यस्य प्रयागनिष्ठोदयाचलसंयुक्तसंयोगापेक्षिक – [6]त्वमित्यर्थो दर्शितस्तदभिप्रायेणाह – प्राथमिकेति। प्रयागनिष्ठोदयाचलसंयुक्तसंयोगपर्याप्तसङ्ख्यापर्यन्तं प्रयागादिति पञ्चम्यन्तस्यार्थ इत्यर्थः। ननु प्रयागादित्यस्य प्राथमिकसङ्ख्यान्तं न शक्योऽर्थः। तत्र प्रयागपदस्य पञ्चम्या वा शक्तौ मानाभावात्। किं तु पञ्चम्याः तत्र लक्षणैव। तच्चायुक्तम्; शक्त्यैवोपपत्तौ लक्षणाया अन्याय्यत्वादित्यभिप्रायेणाह – निष्ठान्तमेववेति। तथा च निष्ठात्वरूपमवधित्वं पञ्चम्याः शक्य एवार्थः, न तु तत्र लक्षणेति भावः। ननूदयाचलादिमूर्तान्तस्य विशिष्टस्य प्राचीपदशक्यत्वे उदयाचलसंयुक्तसंयोगे पदार्थैकदेशे पञ्चम्यर्थस्य प्रयागनिष्ठत्वस्यान्वयो न स्यात्। "पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेने"ति व्युत्पत्तेरत आह – खण्डशेति। तथा चोदयाचलसंयुक्तसंयोगः तत्पर्याप्तसङ्ख्येन्यादि प्रत्येकमेव [7]यथान्वयानुभवं प्राचीपदशक्यमित्यर्थः।

---

1 पटादेः अ.
2 वामत्वाभावात् इ.
3 'आदि' नास्ति इ.
4 'व्याप्यसंख्या' नास्ति आ.
5 खण्डवाक्यार्थः आ.
6 'रूपप्रयोगापेक्षिक' इत्यधिकं क.
7 'यथान्वयानुभवं' नास्ति ग

वस्तुतः तन्निष्ठोदयाचलसंयुक्तसंयोगपरम्पराघटकं मूर्तं तत् *[ततः] प्राचीत्यादि वाच्यम्। यद्वा [1]सान्निध्यादिसम्बन्धेनोदयाचलविशिष्टं मूर्तं प्राच्यादि। [2]इत्थं च संयुक्तसंयोगपरम्पराज्ञानं विनापि प्राच्यादिबुद्धिर्नानुपपन्ना; संसर्गोपस्थितेः प्रागतन्त्रत्वात्। उदयाचलसन्निहिताद्यपेक्षया लाघवादुदयाचलसान्निध्यादेरल्पतर-संयुक्तसम्बन्धेनोदयाचलादिविशिष्टसंयोगस्यैव वा दिक्त्वम्; न तु मूर्तमात्रस्येति तु युक्तः पन्थाः।

अथ तथाप्युदयाचला – [3]दिज्ञानविरहिणः कथं प्राच्यादिव्यवहार इति चेत् – सङ्केतभ्रमात्।

## दिक्कालयोरीश्वरानतिरिक्तत्वखण्डनम्.

अत्र दीधितिकृतः — दिक्कालौ नेश्वरादतिरिच्येते; मानाभावात्। तत्तत्कालोपाधिदिगुपाधिविशिष्टादीश्वरादेव क्षणलवप्राच्यादिव्यवहारोपपत्तेरित्याहुः॥

---

उदयाचलसन्निहिता दिक् प्राच्यादिरित्यत्रोदयाचलादिसन्निहितत्वं तन्निष्ठोदयाचलादि-संयुक्तसंयोगपर्याप्तसङ्ख्याव्याप्यादिघटितं गुरुतरं, अतो लघुभूतं लक्षणमाह – वस्तुतः (तु) इति। तन्निष्ठेति। प्रयागादिनिष्ठेत्यर्थः। ततः प्रयागादितः। प्राचीत्यादीति। आदिना तन्निष्ठाचल-संयुक्तसंयोगपरम्पराघटकमूर्तं ततः प्राचीत्यादि संग्राह्यमिति। वक्ष्यमाणास्वरसादाह – यद्वेति। सान्निध्यादीति। आदिना व्यवहितत्वसङ्ग्रहः। तथा च [4]यदपेक्षया सान्निध्य-संबन्धेनोदयाचलविशिष्टं मूर्तं ततः प्राची। [5]यदपेक्षया सान्निध्येनास्ताचलविशिष्टं मूर्तं ततः

---

1 'सान्निध्यादि' नास्ति इ.
2 'इत्थं च' नास्ति आ.
3 'आदि' नास्ति
4 तदपे° क.
5 'यद ........ यावत्' इत्यन्तस्त्रुटितः क.

---

* व्याख्यानुसृतपाठः

तच्चिन्त्यम् — जीवात्मनामपि प्रत्येकं विनिगमकाभावेन दिक्कालोभयत्वापत्तेः । न च तेषां दिक्कालत्वे कार्यमात्रजनकत्वं परत्वापरत्वजनकत्वं कल्प्यम्, ईश्वरस्य तु तत्क्लृप्तमेवेति वाच्यम् । सम्बन्धभूतयोर्दिक्कालयोः कार्यमात्रजनकत्वा — [1]घङ्गीकारात् दिक्कालोपाधीनामेव तत्त्वात् विप्रकृष्टत्वसन्निकृष्टत्वाभ्यामेव परत्वापरत्वव्यवहारात् तयोर्गुणत्वे मानाभावात् । किं च संबन्धतयैव दिक्कालयोः साधनात् तयोरेकत्वे [2]प्रतीच्यादिदिग्वर्तिष्वपि प्राच्यामित्यादिव्यवहारापत्तिरिति न किंचिदेतत् ।

यत्तु — 'अस्मिन् काले घटः' 'अस्यां दिशि [3]घट' इत्यादिप्रतीतेः दिक्कालांशे[4]वैलक्षण्यस्यानुगतस्यानुभविकत्वात् तयोर्भेद एकैकत्वं [5]वा । अत एव जगदाधारता क्षणलवप्राच्यादिरूपता च तत्तद्देशकालोपाध्यवच्छिन्नयोस्तयोरेवेति ।

---

प्रतीची । यदपेक्षया सान्निध्येन मेरुविशिष्टं मूर्तं तत उदीची । यदपेक्षया व्यवहितसंबन्धेन मेरुविशिष्टं मूर्तं तत अवाची, दक्षिणेति यावत् । तदपेक्षया व्यवहितत्वं च तन्निष्ठमेरुसंयुक्तसंयोगपरम्परापेक्षया बहुतरमेरुसंयुक्तसंयोगपरम्परावत्त्वम् । एतत्सम्बन्धेन मेरुविशिष्टं त्वस्य रामचन्द्रवद्धसेत्वादेः सत्त्वादवाचीत्वमुपपद्यते । अत्र [6]प्राच्यादिपदशक्तिविषये सान्निध्यादेः संसर्गतया प्रवेशात् न गौरवमित्याखण्डलार्थः । पूर्वकल्पेऽस्वरसं प्रकाशयति – संयुक्तसंयुगेति । अतिलाघवात् कल्पान्तरमाह – उदयाचलेति । उदयाचलसन्निहिता दिक् प्राचीत्यादिलक्षणापेक्षयेत्यर्थः । लाघवात् – सन्निहितमूर्तात्मक धर्म्यप्रवेशेन लाघवात् । उदयाचलसान्निध्यादेरित्यादिना मेरुव्यवहितत्वस्यावाचीत्व सङ्ग्रहः । निरुक्तसान्निध्यादेरपि

---

1 °घनङ्गी° आ.
2 प्रतीचीदिग्व° इ.
3 पट आ.
4 'प्रतीति' इत्यधिकः आ.
5 च इ.
6 'प्राच्यादिपद' नास्ति ग.

तन्न — जन्यत्वमूर्तत्वरूपोपाधिद्वयविषयकत्वेनैव वैलक्षण्यादिसम्भवे तयोर्मानाभावात् ।

इदं तु चिन्त्यम् – सम्बन्धतया सिद्धयोर्दिक्कालयोस्समवायात् द्रव्यत्वगुणत्वयोरपि मानाभाव इति दिक् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां
पदार्थमलायां दिक्प्रकरणं
समाप्तम् ॥

---

गुरुत्वादाह – अल्पतरेति । [1]तदपेक्षयाऽल्पतरसंयुक्त – [2]संयोगेनोदयाचलादिविशिष्ट-सूर्यसंयोगत्वमेव प्राच्यादित्वमित्यर्थः । [3]एवं तत्तदपेक्षया बहुतरसंयुक्तसंबन्धेन मेरुविशिष्ट-संयोगस्यावाचीत्वमित्यपि बोध्यम् ॥

इति श्रीमन्महामहोपाध्याय लौगाक्षिगोत्रसम्भूत श्रीमद्रुद्रकवीन्द्र-
तनूजमुद्गलविदुषसूनुना भास्करेण कृतपदार्थमालाप्रकाशे
दिक्प्रकरणं समाप्तम् ॥

---

1 'तदपेक्षया' नास्ति ग.

2 'संयोगेन .... प्राच्यादित्वं' इत्यन्तस्त्रुटितः । तत्स्थाने – 'मूर्तात्मकसंबन्धेन' इत्यस्ति ग.

3 'एवं तत्तदपेक्षया' नास्ति ग.

## अथ आत्मप्रकरणम्

### आत्मत्वजातिसाधनम्

आत्मा इतरेभ्यो भिद्यते आत्मत्वात् । आत्मत्वं जातिविशेषः। नन्वत्र मानाभावः; ज्ञानवत्त्वादिनाऽऽत्मव्यवहारोपपत्तेः । न ह्यत्रानुगतं प्रत्यक्षम्; एकपुरुषस्य नानात्मप्रत्यक्षाभावादिति[1] चेत् – न । जन्यज्ञानेच्छाकृतिसुखादि-समवायिकारणतावच्छेदकत्वेनात्मत्वसिद्धेः। अन्यथा मनस्यपि ज्ञानाद्युत्पत्त्यापत्तेः। न चैवमीश्वरात्मनि कथं तत्सिद्धिः, प्रत्युत तत्र तत्सत्त्वे प्रत्यक्षानुमित्याद्यापत्तिः, उपनयपरामर्शसत्त्वादिति वाच्यम् । जन्यज्ञानादिहेतुतावच्छेदकत्वेन सिद्धाया जातेरेव [2]आत्मपदप्रवृत्तिनिमित्तत्वादात्मपदगर्भश्रुत्यैव तत्रात्मत्वसिद्धेः। मुख्ये बाधकं विना गौणत्वायोगात् । ईश्वरे जन्यज्ञानाद्यनुत्पादस्तु जन्यसविषयक-मात्रहेतोः विजातीयात्ममनोयोगस्याभावात् धर्माधर्मानुत्पादस्तु तत्त्वज्ञान इव मिथ्याज्ञान – [3]वासनाविरहादिति दिक् ।

---

**क्रमप्राप्तमात्मानं निरूपयति** – आत्मेति । आत्मत्वादिति । **अत्र यन्नेतरेभ्यो भिद्यते न स आत्मा, – यथा पृथिव्यादि ; न चायं नात्मा, तस्मादितरेभ्यो भिद्यत इत्युदाहरणोप-नयनिगमनानि बोद्धव्यानि** । अत्र – **आत्मत्वस्य जातित्वे**। ज्ञानवत्त्वादिना – **ज्ञानवत्त्व-लक्षणात्मत्वोपाधिना । लौकिकसन्निकर्षविरहादीश्वरे लौकिकप्रत्यक्षोत्पत्तेरापादयितुमशक्य-त्वादलौकिकप्रत्यक्षानुमित्यादिसामग्रीमेव दर्शयति** – उपनयेति । **श्रुत्यैव** – **'तस्मात् वा एतस्मात् आत्मन आकाश' (तै-उ.) इत्यादिश्रुत्यैव। नन्वत्र श्रुतावात्मपदं ज्ञानादिमति भाक्तम्;**

---

1 'चेत् .... .... सत्त्वादिति' इत्यन्तस्त्रुटितः आ.

2 'लाघवेन' इत्यधिकः आ. 3 'वासना' नास्ति इ.

आत्मविभागः

स [1]चायं द्विविधः – जीवेश्वरभेदात्। तत्र जीवः कर्ताभोक्ता सङ्ख्या-परिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारात्मक-चतुर्दश [2]गुणवान्। सङ्ख्यादयो विभागान्ता द्रव्यत्वात् सिद्धाः। आत्मैकत्व-परिमाणे न प्रत्यक्षे इति "टीकाकृतः"। धर्माधर्मौ सुखदुःख हेतुत्वात्। संस्कारो भावनाख्यः स्मृतिहेतुत्वात्, [3]ज्ञानादेराशुतरविनाशिनः कालान्तरभावि – [4]स्वर्गस्मृत्यादिरूपफलजनकत्वस्य फलपर्यन्तस्थायिव्यापारं विनाऽसंभवात्। [5]जीवा अनन्ताः। एकदा विज्ञत्वाविज्ञत्वसुखदुःखिमुक्तत्वसंसारित्वादिविरुद्धधर्मसमावेशात्। एतेऽनित्यज्ञानवन्तः भ्रमप्रमादिदर्शनात्।

---

न त्वात्मत्वजातिविशिष्टपरमत आह – मुख्य इति। ननु जन्यज्ञानसुखादिसमवायिकारण-तावच्छेदकतया सिद्धात्मत्वजातेरीश्वरात्मनि सत्त्वे जन्यज्ञानसुखाद्यनुत्पादः [सुखाद्युत्पादः] स्यादत आह – ईश्वरेति। विजातीयेति न च यन्मनःक्रियया जीवात्मनि विजातीयमनोयोगः तत्क्रियया ईश्वरेऽपि तादृशमनोयोगसम्भवात् जन्यज्ञानाद्यनुत्पादः स्यादेवेति वाच्यम्। तत्तत्पुरुषीयादृष्टाकृष्टमनसा तत्तत्पुरुष एव विजातीयमनो – योगोत्पादनात्। अन्यथा चैत्रीय-मनसा सुषुप्तमैत्रात्मन्यपि विजातीयमनोयोगजनने तत्रापि ज्ञानसुखाद्युत्पादापत्तेः। किं च जन्यज्ञानेच्छादिहेतोः शरीरादेरीश्वरे विरहादपि न तत्तज्जन्यज्ञानाद्युत्पाद इति भावः। ननु जन्यज्ञानधर्मादिसमवायिकारणतावच्छेदकात्मत्वस्येश्वरनिष्ठत्वे तत्र धर्माद्युत्पादः स्यात्। तदुत्पत्तौ विजातीयमनोयोगस्यानपेक्षणात्। अन्यथा सुषुप्त्यादौ गङ्गाजलादिस्पर्शे

---

1 चात्मा अ.

2 °गुणत्वात् आ. इ.

3 'योग' इत्यधिकः आ.

4 'स्वर्ग .... विना' इत्यन्तस्त्रुटितः। तत्स्थाने – 'स्मृत्युत्पादकत्वा' इत्यस्ति अ. इ.

5 'जीवा .... .... समावेशात्' इत्यन्तस्त्रुटितः अ. इ.

वेदान्तिमतनिरासः

नन्विदमयुक्तम्, "प्रत्यगस्थूलोऽचक्षुरप्राणोऽमनोऽकर्ताचैतन्यं चिन्मात्रं सत्" इत्यादिश्रुतेः परमार्थस्य निर्धर्मकस्याविद्यया कर्तृत्वादिमतः परमानन्दबोध-[1]रूपस्य जीवत्वात् ज्ञानेच्छासुखदुःखादीनामन्तःकरणाश्रितत्वात्, "कामः सङ्कल्पो विचिकित्साश्रद्धाऽश्रद्धा[2]धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः वेदान्तिमतस्य प्रामाणिकत्वादिति चेत् — न। 'अहं जानामि' 'अहं सुखी' 'दुःखी' इत्यादिप्रतीते —[3]रहङ्कारास्पदस्यात्मन एव ज्ञानाद्याश्रयत्वात्। न चात्मत्यन्तःकरण तादात्म्याध्यासात् तत्रान्तःकरणधर्मज्ञानाद्यारोपः तैरन्यथाख्यात्यस्वीकारादात्मन्यनिर्वचनीयज्ञानाद्यन्तरस्वीकारे तेषामेव स्वीकारौचित्यात्[4]।

---

धर्मोत्पत्तिर्न स्यादत आह — धर्मेति। मिथ्येति। मिथ्याज्ञानजनितवासनाया धर्माधर्महेतुत्वमेव रूपं वाच्यम्। अन्यथा तत्त्वज्ञानवत्यपि विहितनिषिद्धाभ्यां तदुभयोत्पादस्य दुर्वारत्वादिति भावः।

इदं — जीवस्य ज्ञानसुखादिधर्मवत्त्वम्। प्रत्यगिति। देहं देहं प्रति अञ्चतीति प्रत्यक्, सर्वान्तर्यामीत्यर्थः। अस्थूलादि विशेषणचतुष्टयेन देहवाह्यचेन्द्रियप्राणमनोभ्यो व्यावृत्तत्वं, अकर्तेत्यनेन च साङ्ख्याभिमतकर्तृभूतप्रकृतेः व्यावृत्तत्वं, चैतन्यमित्यनेन ज्ञानात्मकत्वं, चिन्मात्रमित्यनेन ज्ञानत्वादिधर्मराहित्यं, सदित्यनेन सत्तारूपत्वं चास्य प्रतिपाद्यत इति श्रुत्यर्थः। ननु सर्वदेहेषु जीवस्यैकत्वे ज्ञानाज्ञानादिवैचित्र्यानुपपत्तिरत आह — ज्ञानेच्छेति। तथा चात्मन एकत्वेऽपि प्रतिदेहमन्तःकरणस्य भिन्नत्वात् ज्ञानादिवैचित्र्योपपत्तिरिति भावः।

---

1 'रूप' नास्ति इ.
2 तदितरधृतिर्हि आ.
3 °रहङ्कारस्या° इ.
4 'तथाचान्योन्तर आत्मा आनन्दमय इति। प्रभाकरा अप्येवम्' इत्यधिकः आ.

'अयो दहति' इत्यादावयसि वह्निधर्मवत् तत्र परम्परयाऽन्तःकरणधर्मा एव प्रतीयन्ते। साक्षादेव वा सन्निकर्षसत्त्वेऽन्यथाख्यातेरपि स्वीकारादित्यपि मन्दम्। साक्षात्सम्बन्धेन ज्ञानादिमत्ता–[1]प्रतीतेरनुभवसिद्धाया बाधकं विना भ्रमत्वायोगात्; ज्ञानादिकं साधिकरणमित्यनुमित्या लाघवात् ज्ञानाद्यधिकरणस्य नित्यत्वसिद्धेः। तन्मते जन्यानामनन्तान्तःकरणानां [2]प्रागभावप्रध्वंसादि कल्पनेऽतिगौरवात् मन एव इतीत्यत्र मनःकारणके लक्षणाऽऽवश्यकी। [3]न ह्युपादानोपादेययोरभेदो

---

एतत्सर्वं मन एवेति। कामादिसर्वमन्तःकरणोपादानकमित्यर्थः। उपादानोपादेययोरभेद-प्रतिपादनाय मन एवेत्युक्तिः। प्रामाणिकत्वात्–श्रुतिप्रतिपाद्यत्वात्। अहङ्कारास्पदस्य–अहं शब्दप्रतिपाद्यस्य। तैः–वेदान्तिभिः। आत्मनि–अहङ्कारास्पदे। अनिर्वचनीयेति। शुक्तिरजतादिवत् सदसद्भ्यामनिर्वचनीय ज्ञानाद्यन्तरे इत्यर्थः। तेषामेव–वेदान्तिनामेव। स्वीकारौचित्यादिति। तथा च लोकसिद्धतत्तत्कारणं विनाऽनिर्वचनीयपदार्थस्वीकारोऽनुचित एवेति भावः।

वेदान्तिमतोपपादकान्तरं दूषयितुमुपन्यस्यति–...... इत्यादिना। तत्र–अहङ्कारास्पदेऽऽत्मनि। परम्परया–संयुक्तसमवायादिना। आत्मनि साक्षात्सम्बन्धावगाहिज्ञानादि-मत्ताप्रतीतिमप्युपपादयितुं कल्पान्तरमाह–साक्षादेवेति। प्रतीयन्त इत्यस्यानुषङ्गः। नन्वेव-मन्यथाख्यातिस्वीकारापत्तिरत आह–सन्निकर्षेति। प्रत्यक्षे सन्निकृष्टस्यैव भानात् सन्निकर्ष-विरह एवान्यथाख्यात्यनभ्युपगमो वेदान्तिनाम्। तत्सत्त्वे त्व[4]न्यथाख्यातिरिष्टैव। अत एव सन्निकृष्टरङ्गरजतयोः 'इमे रङ्गरजते' इति विपरीतज्ञानमन्यथाख्यातिरूपमेव; न त्वनि-र्वचनीयख्यातिरूपमिति तत्सिद्धान्त उपपद्यत इति भावः। ज्ञानादीनामात्मधर्मत्वे प्रतिपादिते "कामस्सङ्कल्प" इत्यादिश्रुतिविरोधमपि परिहरति मन एवेतीत्यत्रेति। तथा चात्मसमवेतज्ञानादौ

---

1 °बुद्धेरनु° इ.
2 'तत्' इत्यधिकः आ.
3 ननूपादानो° आ.
4 'अन्यथा .... विपरीतज्ञानं' इत्यन्तस्त्रुटितः क.

 

यौक्तिक इति नैय्यायिकाः । तथा च श्रुतिः – [1]"अन्योन्तर आत्मा आनन्दमय" इति । प्राभाकरा अप्येवम् ।

## साङ्ख्यमतनिरासः

एतेन साङ्ख्यमतमप्यपास्तम् । एवं हि तत् – जीवो भोक्ता, केवल-[2]बोधात्मकः बुद्धितत्त्वं प्रकृतिपरिणामविशेषरूपमहत्तत्त्वापरनामकं सुखदुःखेच्छाद्वेष-प्रयत्नधर्माधर्मभावनात्मक – [3]भावाष्टकशालिपुरुषस्य जन्यधर्मानाश्रयत्वरूप-कूटस्थत्वश्रुतेः सुखाद्यनाश्रयत्वात् । ज्ञानं तु बुद्धिनिष्ठो बुद्धिपरिणामविशेषो घटादिरूपो वृत्त्यपरनामा त्रिगुणात्मकबुद्धेः सत्त्वगुणोद्रेकरूपो ज्ञानत्वं तन्मते इच्छान्य सविषयकत्वम्; न तु चेतनात्वं, चेतनायाः पुरुषधर्मत्वेन नित्यत्वेन च क्षयिबुद्धिधर्मज्ञानानात्मकत्वात् । उपलब्धि[4]स्तु बुद्धिनिष्ठज्ञानात्मकवृत्तौ दर्पण इव स्वच्छायां चैतन्यप्रतिबिम्ब इति ।

---

मनसो निमित्तत्वात् तच्छ्रुतिविरोधोऽपि नेत्यर्थः । ज्ञानादौ मनसः उपादानत्वपक्षेऽपि तत्र श्रुतौ मनःपदे मन उपदानके लक्षणाऽऽवश्यकीत्याह – न हीति । अन्योन्तर इति अन्तः-करणादन्य आत्मानन्दप्रचुर इति श्रुत्यर्थः । प्राचुर्येऽपि मयटोऽनुशासनादिति । वैशेषिका-भिमतात्मव्युत्पादनातिदेशेन प्राभाकरमतात्मव्युत्पादनं दर्शयति – प्राभाकरा अप्येवमिति ।

एतेन – वक्ष्यमाणयुक्त्या । तत् – साङ्ख्यमतम् । कूटस्थत्वश्रुतेः – "प्रत्यगस्थूल" इत्यादिश्रुतेः । इच्छान्येति । इच्छा जन्या यस्य तादृशं सविषयकं तत्त्वमिच्छाजनकस-विषयकत्वमिति यावत् ।

---

1 'अन्योन्तर .... .... एवं' इत्यन्तस्त्रुटितः आ.
2 'इति' इत्यधिकः आ.
3 °भावात्मक° आ.
4 °स्तद्बुद्धि° आ.

न चैतद्युक्तम् — [1]चेतनासुखाद्योः सामानाधिकरण्यानुभवात् पुरुषस्यैव सुखादिमत्त्वात् । कूटस्थत्वं तु नित्यत्वमनात्मेतरत्वं वा, ज्ञानमपि न चेतनाभिन्नम् । न चा[च्]वृत्तौ चेतनाप्रतिबिम्बो वृत्तेरेव चेतनात्मकत्वात् । [2]बुद्ध्युपलब्धिज्ञानानां भेदकल्पनमप्यप्रामाणिकी । तथा च अक्षपादसूत्रम् – "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" (न्या. सू.) इति ॥

## भाट्टमतनिरासः

एतेन ज्ञानाज्ञानरूप आत्मा अज्ञानं [3]जडद्रव्यरूपं, सुषुप्ताविन्द्रिय – [4]व्यापारोपरमात् । सुषुप्तिप्रकाशास्वीकारे 'सुखमहमस्वाप्सम्' [5]इत्युत्थितस्य परामर्शो न स्यात् । न ह्यविद्याप्रकाशिका जडत्वादित्यात्मैव प्रकाश(कः) सिद्धः । 'न किञ्चिदवेदिषम्' इति परामर्शादशेषविज्ञानाभाववत्त्वमपि कल्प्यत इत्यप्रकाशो द्रव्यांशो[द्रव्यांशे]ऽपि सिद्धः । जाग्रदवस्थायामपि 'मामहं न जीवामि[जानामि]' इत्यात्मनि कर्तरि भासमानेऽपि 'मां न जानामि' इति [6]भावनात् द्विरूपतेति भाट्टमतम् [अपास्तम्] ॥

---

साङ्ख्यमतं दूषयति – न चैतद्युक्तमिति ॥

एतेन – वेदान्तिसाङ्ख्यमत दूषणेन । नन्विच्छैव सुषुप्तिप्रकाशिकाऽस्त्वित्यत आह – न ह्यविद्येति बोधांशः – ज्ञानरूपः । प्रकाशसिद्धः – सुषुप्तिप्रत्यक्षसिद्धः ॥

---

1 'बुद्ध्युपलब्धिज्ञानानां भेदकल्पनाप्यप्रमा' इत्यधिकः इ.

2 'तथा च' इत्यधिकः आ.
'बुद्ध्यु .... .... प्रामाणिकी' इत्यन्तस्त्रुटितः इ.

3 द्रव्यं जडं, सुषुप्ता° इ.

4 व्यापारापगमात् इ.

5 इति तस्य इ.

6 प्राणात् आ.

पातञ्जलवेदान्तमतयोर्निरासः।

साङ्ख्योक्त एवेति [साङ्ख्योक्तत्यैव] पातञ्जलमतमपि व्याख्यातम्। न च "(नित्यं) विज्ञानमानन्दं ब्रह्म" इति वेदान्तपक्षपातिनी विज्ञानपदस्य विजानातीति [1]कर्तृव्युत्पत्त्या विज्ञानाश्रयपरत्वात्, आनन्दमित्यस्यस्त्यर्थात् [मत्वर्थाच्] [2]प्रत्ययान्तस्यानन्दाश्रयबोधकत्वात्। अन्यथा 'आनन्दम्' इति नपुंसकत्वानुपपत्तेः॥

चार्वाकमतम्

यत्तु – स्वापेक्षयाऽपि स्वपुत्रे पियत्वदर्शनात् आत्मवचनेनापि पुत्रमरणात् पुत्रे नष्टे पुष्टे वा 'अहमेव नष्टः' 'पुष्टः' चेत्यनुभवात् "आत्मा वै पुत्र नामासि" इति श्रुतेश्च पुत्र एवात्मेत्यतिप्राकृतः। 'पुत्रं विनापि 'अहं जानामि' इति प्रत्ययात् प्रदीप्तगृहात् स्वपुत्रं त्यक्त्वाऽपि स्वस्य [3]निर्गमनात्। 'गौरोऽहं जानामि' [4]'स्थूलोऽहं जानामि' इत्यादि गौरत्वज्ञानादिसामानाधिकरण्यप्रतीत्या "स वा एष पुरुषोऽन्नरसमय" इति श्रुतेश्च 'स्थूलशरीरमेव आत्मा' इत्येकः चार्वाकः॥

---

व्याख्यातम् – विरुद्धत्वेन व्याख्यातम्, दूषितमति यावत्। "सिंहावलोकनन्यायेन" वेदान्तिमतोपपादनमाशङ्क्य निराकरोति – न च विज्ञानमिति। अन्यथा –'विज्ञानमानन्दमि'-त्यत्रानन्दपदस्य [5]अर्थाच् [अर्शाद्यच्] प्रत्ययान्तत्वानभ्युपगमे। नपुंसकत्वेति गुणवाचकानन्दशब्दस्य नित्यपुल्लिङ्गत्वेन नपुंसकलिङ्गत्वानुपपत्तिरित्यर्थः॥

---

1 कर्तृव्युत्पत्तिरविज्ञाना° इ.
2 प्रत्ययस्य इ.
3 निर्गमात् इ.
4 'स्थूलोऽहं जानामि' नास्ति इ.
5 अस्त्यर्थाच् ग.

## इन्द्रियात्मवादः

लोकायतनामापरस्तु — इन्द्रियाणां स्वापादावुपरमे सत्यपि देहे चलनत्वादेः चेतनधर्मस्याभावात् 'काणोऽहम्' 'बधिरोऽहम्' इत्याद्यनुभवात् "[1]ते ह प्राणाः प्रजापतिमेत्य ब्रूयुः" इति श्रुतेश्चेन्द्रियाण्येवात्मा प्राणानामिन्द्रियाणामचैतन्ये प्रश्नप्रणयनानुपपत्तेरित्याह ॥

## प्राणात्मवादः

परस्तु — प्राणाभावे इन्द्रियादेरपि [2]चलनाभावादिन्द्रियाणां मिलितानां न [3]ज्ञानाद्याश्रयत्वं, चक्षुरादिशून्यस्यापि त्वाचादिदर्शनात्। चक्षुःचाक्षुषस्य, त्वगादि त्वाचादेरधि[4]करणं वाच्यम्। तथा च [5]'योऽहं स्पृशामि सोऽहं पश्यामी'ति प्रतीत्यनुपपत्तेः; चक्षुषा दृष्टस्य [6]वस्तुनः चक्षुर्नाशेऽन्येन स्मरणानुपपत्तेः। 'अहमशनवान्' 'अहं पिपासावान्' इत्यशनपिपासयोः प्राणधर्मयोरहमास्पदे प्रतीतेः "अन्योन्तर आत्मा प्राणमयः" इत्यादिश्रुतेश्च [7]मुख्यः 'प्राण एवात्मा' इत्याह ॥

---

वैशेषिकात्मवादविरुद्धानि तैर्थिकमतानि दूषयित्वा बाह्यात्मवादानुपन्यस्य दूषयति — यत [यत्तु] इति। 'स्वापेक्षया' इत्यारभ्य 'अलं युक्तिशास्त्रे श्रुतिगवेषणया' इत्यन्तेन ग्रन्थसन्दर्भेण। श्रुतिप्रामाण्यप्रद्वेषिभिर्बाह्यैः स्वमते प्रमाणत्वेन श्रुत्युपन्यासः "परसिद्ध्या बोधनीयः पर" इति न्यायादेव; न तु तदभ्युपगमादिति बोध्यम् ॥

---

1 तत्र आ
2 चेतना° अ.
3 ज्ञानाश्रयत्वं इ.
4 °करणत्वं आ.
5 सोऽहं इ.
6 वस्तुतः इ.
7 स्वमुख्यः आ.

## मन आत्मवादः

अन्यस्तु – मनसि निर्व्यापारे प्राणादेरकिंचित्करत्वात् [1]'अहं सङ्कल्पवान्' 'अहं विकल्पवान्' इत्यनुभवात् "अन्योन्तर आत्मा मनोमय" इति श्रुतेश्च 'मन एवात्मा' इत्याह ॥

देहेन्द्रियातिरिक्तो देहपरिणाम आत्मेति दिगम्बराः ॥

## बौद्धमतम्

सौगतस्तु – मनसः [2]कर्तृत्वे सर्वेन्द्रियैरधिष्ठितत्वेन युगपत्सन्निहितत्वात् युगपन्नानाज्ञानोत्पत्तिः स्यादिति मनोभिन्नं क्षणिकज्ञानमेव कर्ता; मनस्तु [3]ज्ञानक्रमहेतुः करणम्। तथा च श्रुतिः – "अन्योन्तर अत्मा विज्ञानमय" इति इत्याह ॥

माध्यमिकस्तु – [4]सुषुप्तौ सर्वाभावात्; 'अहं सुषुप्तौ नास्मि' त्युत्थितस्यानुभवाच्च। शून्यं सर्वाभावरूपमात्मा। तथा च श्रुतिः – "असद्वा इदमग्र आसीत्" इति। इदं [5]नामरूपात्मकं जगदग्रे सृष्टेः प्राक्कालेऽसत् शून्यमेवासीदित्यर्थ इत्याह। तत्र पूर्वपूर्व[6]श्रुतियुक्तीनामुत्तरोत्तरश्रुति[7]युक्तिबाधितत्वात् पुत्रादीनामनात्मत्वं स्फुटम्।

---

1 एवं आ.
2 कर्तृलेशे अ. कूटत्वे इ.
3 ज्ञानत्वे हेतुः आ.
4 'सुषुप्तौ' नास्ति इ.
5 नानारूपं जग° इ.
6 °श्रुतीना° आ.
7 विमुक्ति° आ.

किं च "पुत्र आत्मा" इति श्रुतेः प्रागुक्त[1]प्रत्यक्श्रुत्या बाधः, सदित्यनेन क्षणिकविज्ञानस्य शून्यस्य चात्मत्वव्युदासः सर्वदा सदित्यर्थात्। तथा च श्रुत्यन्तराणि — [2]"न च स वा एष महानज आत्मा" "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" "अस्थूलमनण्वह्रस्वमदीर्घमचक्षुरश्रोत्रं न च पाणिपादम्" इत्यादि। न च "प्रत्यगस्थूल" इत्यादि[3]श्रुतौ "अकर्ता चैतन्यं चिन्मात्रम्" इति [4]श्रुत्या न्यायमतं विरुद्धम्। अकर्तेत्यस्य नञ ईषदर्थकतया ईश्वरभेद-परत्वात् चैतन्यमपि धर्मिपरमित्यलं 'युक्तिशास्त्रे श्रुतिगवेषणया। "यजमानः प्रस्तर" इत्यादिवत् गौणत्वेनापि यौक्तिकार्थपरत्वात् श्रुतेरिति।

## चार्वाकमतनिरासः

पुत्रदेहादिकमनित्यं न आत्मा कृतहानाकृताभ्यागमप्रसङ्गात्। तथा हि - [5]प्राग्जन्मगृहीतदेशादिनाशे तज्जन्मनि कृतानामदृष्टानां नाशे परजन्मनि

---

ननु युक्तिशास्त्रेऽपि श्रुतिगवेषणाऽऽवश्यकी, श्रुतिविरोधे युक्तेरकिञ्चित्करत्वात्; अन्यथा बौद्धशास्त्रस्यापि प्रमाणत्वापादनादत आह — यजमान इति। अत्र श्रुतौ [6]प्रस्तरे प्रयुक्तयजमानशब्दो लक्षणया यजमानकार्यकारित्वेन प्रस्तरं प्रतिपादयति। अन्यथा प्रस्तरे दर्भमुष्टौ यजमानाभेदस्य बाधेन श्रुतेरप्रामाण्यापत्तेः। तद्वत् प्रकृतेऽपि "अकर्ता चैतन्यं चिन्मात्रम्" इत्यादि श्रुतेरपि लाक्षणिकत्वेन यौक्तिकार्थपरत्वात् न कोऽपि श्रुतिविरोध इति भावः॥

---

1 °प्रत्यक्षश्रुत्या आ.

2 'न च .... .... इत्यादि' इत्यन्तस्त्रुटितः आ.

3 'श्रुतौ' नास्ति इ.

4 'श्रुत्या' नास्ति आ.

5 प्रागजन्यगृहीत° आ.

6 'प्रस्तरे .... .... अन्यथा' इत्यन्तस्त्रुटितः ग.

भोगान्यथानुपपत्त्याऽकृतानां तेषां कल्पनापत्तिः। किं च बालस्य स्तन्यपानादौ प्रवृत्तिरिष्टसाधनताधिसाध्या। [1]सा च धीः तस्य स्मृतिरूपैव वाच्या। स्मृतिश्च [2]समानाधिकरणानुभवसाध्येति पूर्वजन्मन्यनुभवाश्रयस्यैव परजन्मनि स्मरणम्। एवं तत्तत्पूर्वजन्मनीत्यनादित्वमात्मनःसिद्धम्। अनादेर्भावस्या[3]त्मनो न नाश इत्यनादिनिधनत्वमनपवादम्॥

## मन आत्मवादनिरासः

मनो नित्यमात्मेति न युक्तम्। तस्याणुत्वे सुखादेरणुदेशतापत्तेः। विभुत्वं [4]तु प्रागेव निराकृतं, संज्ञामात्रे विवादापत्तिश्च॥

## दिगम्बरमतनिरासः

[5]अपकृष्टमहत्व-[6]वत्वं तु सावयवत्वाद-[7]नित्यत्वनियतम्। अपि च 'सुखी' 'दुःखी' इत्यपरोक्ष-[8]ज्ञानमनुभव[9]सिद्धम्। न च मनसो [10]देहादेः वा तत्सम्भवः। बाह्येन्द्रियव्यापारं विनापि तदुदयात्। अथ त्वदभि[11]मतस्यात्मनोऽपि

---

"स्थूणानिखननन्यायेन" पुत्रदेहाद्यात्मवादं पुनः दूषयति – पुत्रदेहादिकमिति॥

देहपरिणाम एवात्मेति दिगम्बरमतं दूषयति – अपकृष्टेति। अनित्यत्वनियतमिति। तथा च कृतनाशोऽकृताभ्यागमश्च प्रसज्येते इति भावः। त्वदभिमतस्य – वैशेषिकाभिमतस्य।

---

1 सावधिस्तस्य आ.
2 समानाकारानुभव° इ.
3 'आत्मनः' नास्ति इ.
4 'तु' नास्ति अ.
5 अप्रकृष्ट° अ.
6 °वद्धेतुसाव° आ.
7 °नित्यनिय° इ.
8 'ज्ञान' नास्ति अ. आ.
9 'सर्व' इत्यधिकः अ. आ.
10 देहादेव वा आ.
11 °मतात्मनो° इ.

न लौकिकप्रत्यक्षसम्भवः। द्रव्यलौकिकप्रयत्यक्षे रूपस्पर्शोभयत्वेन हेतुत्वौचित्यात्। न चापसिद्धान्तः, "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" (न्या. सू. १.१.१०.) इत्यक्षपादसूत्रात्। उक्तं चात्र भाष्यकृता — "तत्रात्मा तावत् प्रत्यक्षतो न गृह्यत" (न्या. भा. पृ. ९१) इति। प्रशस्तपादभाष्येऽपि — (पृ. १६७) "तस्य सौक्ष्म्यादप्रत्यक्षत्वे सति करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते। वास्यादीनां करणानां कर्तृप्रयोज्यत्वदर्शनात्" इत्युक्तम्। उक्तं च त्रयाणां प्रत्यक्षत्वरूपवत्व - द्रवत्वानि [द्रव्यत्वानि] इति। अत एवात्मा योगिप्रत्यक्षमध्ये एव तैर्गणित इति चेत्—न। तादृशानुमितिसामग्रीविधुराणामपि पामराणां 'अहं जानामि' इति [1]प्रत्ययात् तादृशव्याप्त्यादिप्रतिसन्धानकल्पने गौरवात्' आत्मत्वविशिष्टस्यायोग्यत्वे साध्याप्रसिद्ध्याऽनुमानासम्भवाच्च। तद्योग्यत्वस्यैव न्याय्यत्वात्। अत एव "वार्तिककारादिभिरा"त्मनः प्रत्यक्षत्वमङ्गीकृतम्। व्याख्यतं [2]च सूत्रमन्यथेति दिक्॥

---

द्रव्यलौकिकेति। लाघवात् द्रव्यलौकिकप्रत्यक्षत्वावच्छिन्न एव रूपस्पर्शोभयत्वेन हेतुत्वमुचितम्; न तु बहिर्द्रव्यलौकिकप्रत्यक्षत्वावच्छिन्ने गौरवात्। येनात्मनो मानसलौकिकं स्यादित्यर्थः। तस्य — आत्मनः। सौक्ष्म्यादिति। अत्र सौक्ष्म्यं रूपस्पर्शोभयशून्यत्वं, न त्वणुपरिमाणवत्त्वम्। तत्र व्यापकत्वस्यैव साधितत्वादिति भावः। समधिगमः — अनुमितिः। तादृशानुमितीति। शब्दाद्युपलब्धिकरणानि श्रोत्रादीनि कर्तृप्रयोज्यानि करणत्वात् छिदाकरणवास्यादिवदित्यनुमितिसामग्रीविधुराणामपीत्यर्थः। तादृशव्याप्त्यादीति। यद्यत्करणं तत्कर्तृप्रयोज्यम्, यथा वास्यादीति व्याप्त्यादीत्यर्थः। आदिना पक्षधर्मतापरिग्रहः। वार्तिकेति। वात्स्यायनभाष्ये वार्तिककारादिभिरित्यर्थः। व्याख्यातं चेति। "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" (न्या. सू १. १. १०) इति सूत्रादिकं चेष्टाद्यनुमितेच्छादिभिः परदेहादावात्मानुमानपरत्वेन व्याख्यातमिति न तद्विरोध इत्यर्थः॥

---

1 प्रतीत्यादेः आ. 2 'च' नास्ति इ.

## ईश्वरनिरूपणम्

ईश्वरस्तु कर्ता एव । सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धीच्छा-प्रयत्ना – [1]त्मगुणवान् । बुद्धीच्छाप्रयत्नाः नित्याः, सर्वविषयकाश्च । [2]अयमेव ब्रह्मविष्णुशिवादिशरीरावच्छिन्नः सृष्टिस्थिति[3]प्रलयकर्ता । द्विविधोऽप्यात्माऽनादि-निधनो विभुश्च ।

## ईश्वरसद्भावे प्रमाणम्

नन्वीश्वरे किं मानम् ? न तावत् प्रत्यक्षम्, अरूपिद्रव्यत्वेन बाह्येन्द्रियाप्रत्यक्षत्वात् । परात्मनः [4]परमनोग्राह्यत्वाभावेनामानसत्वात् । न च

"विश्तश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
संबाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमीजनयन् देव एकः ॥

---

सपरिकरं जीवं निरूप्य ईश्वरं निरूपयितुमाह – ईश्वरस्त्विति । कर्ता एव इत्येवकारेण भोक्तृत्वव्यवच्छेदः । तत्र भोगजनकादृष्टस्यासत्त्वेन भोक्त्रसम्भवादिति भावः । तस्य तस्य द्रव्यत्वासिद्धये गुणानाह – सङ्ख्येत्यादि । सृष्टिस्थितीति । अत एव उत्तरमीमांसायां "जन्माद्यस्य यतः" (ब्र. सू. १. १. २) इति सौत्रं तल्लक्षणम् । यतोऽस्य जगतो जन्मस्थितिलयाः [5]तत् ब्रह्म, ईश्वर इति तदर्थः । शिष्यदृढसंस्कारार्थं जीवसाधारण्येन ईश्वरस्यानादिनिधनत्वं विभुत्वं चाह – द्विविधोऽपीति ।

---

1 °त्मकगुणाष्टकत्वात् आ.
2 एक एव अ.
3 °प्रलयकारी आ.
4 'पर' नास्ति इ.
5 तदेव ईश्वर क.

इत्यादिश्रुतिः मानम्, अर्थवादत्वात्। न च "ईश्वरमुपासीत" [1]इत्यादिविधिशेषीभूता

"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहु[2]रङ्गानि महेश्वरस्य" ॥

इत्यादिश्रुतिस्तथा। श्रुतिप्रामण्यविप्रतिपन्नं प्रति श्रुतेरकिंचित्करत्वादिति चेत्—

मैवम् — कार्यं सकर्तृकं कार्यत्वा[3]दित्याद्यनुमानेन तत्सिद्धेः। न चा[4]त्र पक्षतावच्छेदकं कृतिसाध्यत्वरूपं चेत् सिद्धसाधनमिति वाच्यम्।

---

न च विश्वेति। विश्वतश्चक्षुः — विश्वविषयकप्रत्यक्षवान्। विश्वतोमुखः — विश्वविषयकेच्छावान्। विश्वतोबाहुः विश्वविषयकप्रयत्नवान्। विश्वतस्पात् — विश्वव्यापी। यतत्र [पतत्रैः] — परमाणुभिः। द्यावाभूमी — द्यौरित्यूर्ध्वलोकसप्तकग्रहणम्। भूमिरित्यधोलोकसप्तकग्रहणम्। तथा च चतुर्दशभुवनानि सञ्जनयन् देवः — स्वप्रकाशज्ञानवान्, एकः — सजातीयापररहितः, बाहुभ्यां — धर्माधर्माभ्यां सहकारिभूताभ्यां संधमति — अर्थात् परमाणुद्व्यणुकादीनवयवान् मिथस्संयोजयतीति श्रुत्यर्थः। अत्र व्यवहित — समुपसर्गद्वयं छन्दसि "व्यवहितयोश्च" इत्यनुशासनबलात् समाधेयम्। अर्थवादत्वात् — दृढयोगाभ्यासेन प्राप्तैश्वर्यस्य योगिनः स्तावकत्वात्। तथा — ईश्वरे मानम्।

मीमांसकपूर्वपक्षनिरासाय सिद्धान्तयति मैवमिति। कार्यमित्यादि। अत्र कार्यत्वावच्छिन्नं क्षित्यङ्कुरघटादिसर्वमेव पक्षः। तेन कुलालादिकर्तृके घटादावपीश्वरस्य कर्तृत्वं बोध्यम्। न च घटादौ कुलालादिकर्त्रैवोपपत्तौ किं तत्कर्तृत्वोपगमेनेति वाच्यम्। सर्गाद्यकालीनघटादौ तत्कर्तृकत्वावश्यकतयेदानीन्तन — [5]घटादौ तत्प्रयोजकत्वावश्यकत्वे सत्यबाधात्

---

1 'इत्यादि' नास्ति इ.
2 गुणानि आ.
3 °दित्यनु° इ.
5 'अत्र' नास्ति इ.
5 'घटादौ .... .... अत्र' इत्यन्तस्त्रुटितः क.

प्रागभावप्रतियोगि -[1]त्वस्य तत्त्वात् पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् घटादिरूपकार्यस्य सकर्तृत्वसिद्ध्या [2]नांशतः सिद्धसाधनम् ॥

## ईश्वरानुमाने शरीरजन्यत्वस्योपाधित्वनिरासः

अथात्र शरीरजन्यत्वमुपाधिः । अङ्कुरादौ साध्यव्यापकत्वसन्देहेऽपि सन्दिग्धोपाधित्वं दुर्वारम् । तथा च व्यभिचारसंशयसत्त्वात् कथमनुमानम् ? लाघवात् व्यभिचारज्ञानत्वेनैव[3]विरोधित्वात् । पक्षतत्समयोरपि व्यभिचारसंशयस्य [4]विरोधित्वादिति चेत् — न । प्रकृते कार्यत्वावच्छिन्नं प्रति कर्तृत्वेन

---

तत्कर्तृकत्वमेवास्त्वित्यभिप्रायात् । अत्र यद्यत्कार्यं तत्तत्सकर्तृकमित्यन्वयव्याप्तौ घट एव दृष्टान्तः। न च तस्य पक्षान्तर्गतत्वे क्व [5]दृष्टान्तत्वमिति वाच्यम् । दृष्टान्तत्वे हि पक्षभिन्नत्वं[न] प्रयोजकम् अभेदानुमाने व्यभिचारात् । किं तु हेतुसाध्यवत्तया निश्चितत्वं, तादृशस्य च पक्षान्तर्गतत्वेऽपि दृष्टान्तत्वसंभवात् । यद्वा यत् न सकर्तृकं न तत्कार्यम् यथा नभ इति व्यतिरेकव्याप्तिग्रहादेवात्रानुमितिरिति न कापि क्षतिरिति ॥

ननु व्यभिचारनिश्चय एवानुमानविरोधी; स च प्रकृते नास्त्येवेत्यत आह — लाघवादिति । विरोधितावच्छेदके [6]संशयान्यज्ञानत्वरूपनिश्चयत्वप्रवेशेन लाघवादित्यर्थः। ननु व्यभिचारिज्ञानत्वेनैव विरोधित्वे पक्षे पक्षसमेवाऽपि व्यभिचारसंशयस्यापि विरोधित्वापत्तिः, तत्रेष्टापत्तिमाह — पक्षतत्समयोरपीति । सन्दिग्धसाध्यवत्वे सति पक्षतावच्छेदकानाक्रान्तः

---

1 'अदृष्टद्वारा जन्यत्वस्याविषयतासंबन्धावच्छिन्नकारणताप्रतियोगिक समवायावच्छिन्नजन्यत्वस्य साध्यत्वाच्च । न सर्गान्तरीत्याऽदृष्टजनक' इत्यधिकः अ., सत्त्वस्य इ.

2 नाशतः अ.

3 विरुद्धत्वात् इ.

4 'विरोधि .... .... संशयस्य' इत्यन्तस्त्रुटितः अ.

5 'क्वं .... .... व्यभिचारात्' इत्यन्तस्त्रुटितः क.

6 'संशया .... .... प्रवेशेन' इत्यन्तस्त्रुटितः ग.

कारणत्व निश्चयात् लाघवतर्कावतारे व्यभिचारसंशयस्याविरोधित्वात् । अत एवानुकूलतर्कावतार एव व्यभिचारसंशया — [1]धायकःसन्दिग्धोपाधिः दोष इति दिक् ॥

## ईश्वरानुमाने सिद्धसाधनार्थान्तरयोर्निरासः

अथ सकर्तृत्वे साध्येऽस्मदादिना सिद्धसाधनमर्थान्तरं वा [2]दुर्वारम् । ज्ञानादेरेव जनकतया [3]कर्तुरजनकत्वात् बाधश्चेति चेत् — सत्यम् । प्रत्यक्ष-जन्यत्वेच्छाजन्यत्वादेः साध्यतायामदोषात् । [4]अदृष्टाद्वारजन्यत्वस्य [5]विशेष्यता-सम्बन्धावच्छिन्न — [6]कारणताप्रतियोगिक समवायावच्छिन्नजन्यत्वस्य वा

पक्षसमः । यथा 'पर्वतोवह्निमान् धूमादि'त्यत्र पर्वतान्तरम् । न चैवं व्यभिचारसंशयमात्रस्य [7]विरोधित्वेऽनुमानोच्छेदापत्तिः हेतुमत्तया निश्चिते [8]पक्षादौ साध्यसंशय[9]स्यैव व्यभिचारसंशय —[10]रूपस्य सर्वत्र [11]सत्त्वादिति वाच्यम् । पक्षे तत्समे वा स्वारसिक-व्यभिचारसंशयस्याविरोधित्वात् । अन्याहितस्यैव विरोधित्वात् । प्रकृते च न स्वारसिकः सः सन्दिग्धोपाध्याहित एवेति तत्सत्त्वे कथं सकर्तृकत्वानुमानं वैशेषिकस्येति मीमांसकाशयः ॥

1 'आधायक' नास्ति इ.
2 'दुर्वारम्' नास्ति इ.
3 कर्तृजनक° अ.
4 अदृष्टद्वार° अ.
5 विशेष्यसं° इ.
6 'कारण .... .... समवायाव-च्छिन्न' नास्ति इ.
7 'विरोधे मानमात्रोच्छेदानुपपत्तिः । साध्याभाववत्तया निश्चितहेतु-सन्देहस्यैवहेतुम° ' इत्यस्ति क.
8 'पक्षादौ' नास्ति क.
9 'एव' नास्ति क.
10 'रूपस्य सर्वत्र' नास्ति । तत्स्थाने'त्वेन पक्षीयसाध्यसंशयस्यापि' इत्यस्ति क.
11 तथात्वादिति क.

साध्यत्वाच्च। न [1]च सर्गान्तरीयादृष्टजनकास्मदादिज्ञानजन्यत्वेन सिद्धसाधनमर्थान्तरं वा। सर्गाद्यकालीनं द्रव्यं ज्ञानव[2]त्कर्तृकं कार्यत्वात् इत्यादिरूपं वाऽनुमानं पक्षतावच्छेद – [3]कावच्छेदेन साध्यसिद्धिरिति तत्त्वम् ।

---

यद्यप्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं सकर्तृकत्वमित्यर्थे नास्मदादिना सिद्धसाधनादि । न हि क्षित्यङ्कुराद्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमस्मदादेः सम्भवति । अदृष्टजनकयागानुकूलव्रीह्यादिगोचरापरोक्षज्ञानचिकीर्षाकृतीनामस्मदादि समवेतानां क्षित्याद्युपादानगोचरत्वाभावात् तथापि कृतिमज्जन्यत्वं सकर्तृकत्वमित्यभिप्रायेण शङ्कते – अथ सकर्तृ(क)त्वे इति। नन्वस्मदादिरपि कर्ता क्षित्यादावद्यापि न सिद्ध इत्यत आह – अर्थान्तरं वेति। ईश्वरसाधनायोपन्यस्तास्मदादिरेव कर्तृत्वेन सिध्यतीत्यर्थान्तरमित्यर्थः। प्रकृतानुपयोगिवचनस्यैवार्थान्तरत्वादिति बोध्यम् । ज्ञानादेरेव – कर्तृनिष्ठज्ञानेच्छाकृतेरेव। यत्पुरुषप्रत्यक्षज्ञानेच्छाकृतिजन्यत्वं यत्र कार्ये तत्र तत्कर्तृकत्वमिति निर्विवादम्। तथा च प्रकृते त्रितयजन्यत्वस्य साध्यत्वे व्यर्थविशेषणत्वं दुष्परिहरमिति प्रत्यक्षजन्यत्वादि प्रत्येकमेव साध्यम्; तावतापि क्षित्यादिजनकप्रत्यक्षाद्याश्रयत्वेन ईश्वरसिद्धेस्सम्भवादित्यभिप्रायेण समाधत्ते – प्रत्यक्षजन्येत्यादिना। ननु तथापि कार्यमात्रे ऽदृष्टस्य हेतुत्वात् क्षित्यादिजनकादृष्टजनकास्मदादिप्रत्यक्षादिकमादाय सिद्धसाधनं दुर्वारं, अतस्तद्वारणायाह – अदृष्टाद्वारेति। [4]अदृष्टाद्वारकप्रत्यक्षादि जन्यत्वस्येत्यर्थः। समवायेन घटाद्युपादेयं प्रति विशेष्यतया प्रत्यक्षादि कारणमिति कार्यकारणभावघटितप्रत्यक्षादि – जन्यत्वमात्रस्य साध्यत्वेऽपि न प्रागुक्तदोष इत्यतस्तथैवाह – विशिष्यत [विशेष्यते]ति। लघुभूतमनुमानमाह – सर्गाद्येति। सर्गाद्यकालीनं द्रव्यं परमाणुगगनाद्येव। तत्र विशेष्यतया ज्ञानवत्त्वं साध्यं, तत्र कार्याश्रयत्वादिति हेतुः। कार्यस्य द्व्यणुकशब्दादेराश्रयत्वादिति तदर्थः। एतेन –

> "कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
> वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥" न्या. कु.

---

1 'च सर्गान्तरीय' नास्ति इ.
2 'कर्तृकं नास्ति आ.
3 °ककालाव° इ.
4 अदृष्टद्वार° क.

अथ तत्तत्पुरुषीयघटा — [1]द्यर्थिप्रवृत्तिं प्रत्येव तत्तत्पुरुषीयघटादिमत्त्व-प्रकारकोपादानप्रत्यक्षत्वेन हेतुत्वात् [2]कार्यत्वावच्छिन्ने प्रत्यक्षत्वेन हेतुत्वे मानाभावः। चिकीर्षितप्रवृत्तावेव हेतुरिति नेच्छात्वेनापि तथा; नापि कृतित्वेन घटत्वावच्छिन्न एव विलक्षणकृतित्वेन हेतुत्वादिति चेत् —न। [3]प्रवृत्ताविव घटादावपि प्रत्यक्षेच्छयोरन्वयव्यतिरेकाभ्यां हेतुत्वे सिद्धे तत्कार्यतावच्छेदकं कार्यत्वमेवलाघवात् कल्प्यते। घटत्वपटत्वादीनामानन्त्यात् शरीरलाघवमपेक्ष्य संग्राहकत्वलाघवस्य बलवत् कृतेरपि "यद्विशेषयोरि" ति न्यायात् सामान्यतो हेतुत्वसिद्धिरिति ॥

---

इति 'कुसुमाञ्जलिपद्ये' ईश्वरसाधकसंग्राहके कार्यस्यैव लिङ्गत्वेनोपन्यासः समर्थितः वेदितव्यः। अन्यथा कार्यपदस्य कार्यत्वार्थकत्वे लक्षणा स्यादिति। इत्यादि–रूपेण *[रूपं वा] इत्यत्रादिनेच्छादिसाध्यकानुमानसंग्रहः। ननु सर्गाद्यकालीनद्रव्येऽपि विशेष्यतयाऽतीतानागतयोगिज्ञानं संभवत्येवेति न तदाश्रयत्वेनेश्वरसिद्धिरत आह – पक्षेति। तथा च तादृशसर्गाद्यकालावच्छेदेन पक्षे न विशेष्यतया योगिज्ञानं संभवति, तदानीं शरीरादेरसत्त्वादिति नित्यज्ञानं तथा वाच्यमिति तदाश्रयत्वेनेश्वरसिद्धिः। अन्यथा द्रव्याश्रितस्य तस्य गुणत्वानुपपत्तेरिति भावः।

तन्तुज्ञानादेः घटाद्युत्पत्तिवारणाय ज्ञानादिना तत्तत्कार्यं प्रति विशिष्य हेतुत्वावश्यकत्वे, कार्यत्वावच्छिन्नं प्रति ज्ञानत्वादिना सामान्यतः कारणत्वाभावात् कथं क्षित्यादिजनकज्ञानाद्याश्रयत्वेनेश्वरसिद्धिरित्यभिप्रायेण शङ्कते – अथ तत्तदिति। शङ्कां परिहरति – प्रवृत्ताविवेति ॥

1 °द्यर्थाप्र° आ.
2 कार्यताव° अ.
3 प्रवृत्त्यादाविव इ.

* मूलानुसृतपाठः

दीधितिकृतस्तु — घटत्वाद्यवच्छिन्ने कृतित्वेन हेतुत्वेऽपि [1]खण्ड-घटाद्युत्पत्तिप्राक्काले कुलालादिकृतेरसत्त्वादीश्वरकृतिसिद्धिरित्याहुः ।

तच्चिन्त्यम् — कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोगेन कारणत्वात्[2] । न च वैशेषिकनये श्यामघटादिनाशोत्तरं रक्तघटाद्युत्पत्तिप्राक्काले [3]प्राक्तन-परमाणुद्वयसंयोगद्व्यणुकादेर्नाशात् नैवं संभवतीति वाच्यम् । पूर्वसंयोगध्वंसपूर्व-द्व्यणुकादिध्वंसानामुत्तरसंयोग [4]द्व्यणुकादावन्ततः कालोपाधितयापि जनकत्वात् । [5]म[त]त्कालेऽपि कुलालादिकृति – [6]प्रयोज्यविजातीयसंयोगसत्त्वात् । अन्यथा घटत्वाद्यवच्छिन्ने दण्डादिहेतुत्वमपि दुर्घटं स्यात् । अस्तु दण्डादेः स्वप्रयोज्य-विजातीयसंयोगेन हेतुत्वं प्रकृतेऽस्तु लाघवात् [7]विशिष्य तयैव तत्त्वम् । न च कुलालकृतिः तत्कालेऽस्तीति चेत् – न । [8]विजातीयसंयोगत्वेन सम्बन्धत्वेऽपि गौरवाभावात्, निश्चिताव्यभिचाराच्च । स्वप्रयोज्यत्वं तु संबन्धः ।

तच्चिन्त्यमिति । चिन्तावीजं स्वयमेव स्फुटयति – कुलालादीति । तया – विशेष्य-तया । तत्काले – **पाकेन श्यामघटनाशोत्तररक्तघटोत्पत्तिकाले** । विजातीयसंयोगत्वेनेति । **एतस्य कृतिहेतुतायां स्वप्रयोज्यविजातीयसंयोगस्येत्यादिः** । निश्चितेति । **विशेष्यतया कृतेर्घटादिहेतुत्वे खण्डघटादौ तस्या व्यभिचारसंशय ईश्वरकृतावद्यापि विवादात् । विजातीय-संयोगेन हेतुत्वे तु खण्डघटादिस्थलेऽपि कुलालादि कृतेरेव तादृशसंयोगेन सत्त्वात् न तत्संशयि इति निश्चितव्यभिचारकत्वं, तस्मात् स्वप्रयोज्यविजातीयसंयोगत्वेनैव कृतेर्घटादिहेतुत्वं, न तु विशेष्यतयेति भावः । ननु कुलालादिकृतेर्घटादिजनकतावच्छेदकसंबन्धे यदि लाघवात्**

1 'खण्ड' नास्ति इ.
2 'तत्काले सत्त्वात्' इत्यधिकः आ.
3 प्राक्तपर° इ.
4 'द्व्यणुक' नास्ति अ.
5 'मत्' नास्ति अ.
6 स्वप्रयोज्य° अ. आ.
7 विशेष्य अ. आ.
8 'विजातीय .... .... घटत्वाद्य-वच्छिन्ने' इत्यन्तस्त्रुटितः अ.

किं च घटत्वाद्यवच्छिन्ने विजातीयकृतित्वेनैव हेतुत्वं, न व्यापकधर्मेणेति दिक् ॥

## ईश्वरस्य नित्यशरीरादिकम्

अथै[1]वं शरीरत्वेन [2]चेष्टात्वेन च हेतुत्वात् नित्यशरीरादिकमपि स्यादिति चेत् – [3]किं नःछिन्नम् । न हि तयोः [4]नित्यत्वं ज्ञानादिनित्यत्वे बाधकम् । यत्किंचिद्विशेषान्वयव्यतिरेकाभ्यां सामान्यतो हेतुत्वसिद्धौ शरीरत्वादिनापि हेतुत्वं स्यादित्येवमाक्षेप इति चेत् – न; कथं स्यादिति वाच्यमायुष्मता । बाधकादिति चेत् – किं तत् ? [5]शरीरचेष्टत्वाद्यवच्छेदेन जन्यत्वमिति चेत् – तुल्यं ममापि ।

---

विजातीय – [6]संयोगत्वं संबन्धतावच्छेदकं तदा तादृशसंयोगेनैव हेतुत्वौचित्यात् तत्र स्वप्रयोज्यत्व – निवेशक [निवेशोऽनर्थकः]; तदनिवेशे तु पाकेन श्यामघटनाशोत्तररक्तघटोत्पत्तिस्थले कुलालकृतेः व्यभिचारस्तदवस्थः । तत्र तादृशसंयोगस्य तत्कृतिजन्यत्वाभावेन तत्कृतिसंबन्धत्वासंभवादत आह – स्वप्रयोज्यत्वं त्विति । कुलालादिकृतेः घटादिजनकतावच्छेदकसंबन्धो विजातीयसंयोग एव; तत्र च तत्कृतेः स्वप्रयोज्यत्वं संबन्धः, न तु संबन्धतावच्छेदके तस्य प्रवेशः, येन गौरवं स्यादिति भावः ।

दूषणान्तरमाह – किं च घटत्वेति । तथा चेश्वरकृतेः साधारणतया तत्र घटादिजनकतावच्छेदकवैजात्याभावात् न खण्डघटादौ तद्धेतुत्वमिति "दीधितिकारोक्त" भगवत्साधनमनादेयमिति भावः ॥

---

1 'एवं' नास्ति इ.
2 'चेष्टात्वेन च' नास्ति इ.
3 'न स्यात्' इत्यधिकः अ.
4 नित्यज्ञा° इ.
5 शरीरत्वावच्छेदेन इ.
6 °संयोगसंबन्ध° क.

वस्तुतः परमाणव एव प्रयत्नवदीश्वरात्मसंयोगाधीनचेष्टावन्त ईश्वरस्य नित्यशरीराणि। स्वीकृतमेतत् "आचार्यैरपि" "टीकाप्रथमश्लोकव्याख्याने"। चेष्टाया नित्यत्वे तु मानाभावः; अनित्यचेष्टाया अपि सर्गादौ सम्भवात्। वायुपरमाणव एव वा नित्यक्रियावन्तस्तथा। अत एव [1]तेषां सदागतित्वमीश्वर-प्रयत्नाधीनचेष्टावतां सर्वेषामेव शरीरत्वम्। अत एव सर्वावेशपरा सर्वाभेदश्रुतिः "भ्रामयन् सर्वभूतानि" इत्यादिक – [2]मपि साधुसङ्गच्छते।

---

पुनः शङ्कते – अथैवमिति। यदि कार्यत्वावच्छिन्नंप्रति ज्ञानत्वादिना [3]हेतुत्वात् क्षित्यादिहेतुतया नित्यज्ञानादिसिद्धिस्तदेत्यर्थः। हेतुत्वात् – कार्यत्वावच्छिन्न हेतुत्वात्। तयोः – शरीरचेष्टयोः। बाधकमिति। यदि ईश्वरस्य शरीरं नित्यं तत्र नित्यज्ञानादिसिद्धिर्न स्यात्। ज्ञानादीनां चेष्टाद्वारा न जनकत्वादित्यर्थः। प्रकारान्तरेण कार्यत्वावच्छिन्नं प्रति शरीरादेः हेतुत्वमाशङ्कते – यत्किंचिद्विशेषेति। घटादौ कार्ये ज्ञानादेरन्वयव्यतिरेकाभ्यां यदि कार्यत्वावच्छिन्नं प्रति ज्ञानत्वादिना हेतुत्वसिद्धिः, तदा घटादौ शरीरादेरप्यन्वयव्यतिरेक-सत्त्वात् कार्यत्वावच्छिन्नं प्रति शरीरत्वादिनापि हेतुत्वं स्यात्। तथा च क्षित्यादौ महीकार्ये नित्यज्ञानादेरिव नित्यशरीरादेरपि सिद्धिस्यादित्येवमाक्षेप इत्यर्थः आयुष्मतेति निन्दार्थे मतुप् तुल्यं ममापीति। शरीरत्वाद्यवच्छेदेनेव ज्ञानत्वाद्यवच्छेदेनापि जन्यत्वनिश्चयात् तव मते नित्यज्ञानादिकमपि न सिध्येदिति मयापि सुवचत्वादित्यर्थः।

"न कथं स्यादिति वाच्यम्" इत्यनेन सिद्धान्तिना भगवतो नित्यशरीरमङ्गीकृतम्; तद्विविच्य दर्शयति – वस्तुत इति। परमाणव एवेति। कर्ता यदधिष्ठाय कार्यं करोति तच्छरीरम्। [4]ईश्वरश्च परमाणूनधिष्ठायैव सर्वं कार्यं करोतीति तत एव तच्छरीरं नित्यमित्यर्थः। आचार्यैरपि –उदयनाचार्यैरपि। टीकेति। न्यायवार्तिकटीकेत्यर्थः। प्रथमेति। –

---

1 'तेषां' नास्ति इ.
2 'अपि' नास्ति इ.
3 हेतुत्वस्मृत्यादि° ग.
4 'ईश्वर .... .... तच्छरीरं' इत्यन्तस्त्रुटितः क.

"आकाशशरीरंब्रह्म" इति [1]श्रुतेराकाशमेव तच्छरीरमित्यन्ये ।

अत एव कृष्णादिशरीरे चेष्टाविषयहेतु – [2]कृत्याश्रयत्वेनापीश्वरसिद्धिः । न च नानाविधचेष्टायां नानाविधकृतेर्हेतुत्वात् नैकविधनित्यकृतेस्तद्धेतुत्वम् । एकस्या एव कृतेस्तादृशतादृशचेष्टावच्छिन्नविशेष्यतया तादृशतादृशचेष्टाहेतुत्वात् । अत एव विंशत्यङ्गुल्यवच्छेदेन विंशतिप्रयत्नस्वीकारो दीधितिकृतो [3]निष्फलः । तादृशतादृशचेष्टासाध्यकेनैकेनैव नाना – [4]विधचेष्टासम्भवात् । न चैव – [5]मपि नित्यकृतेश्चेष्टाकालीननियमासम्भवः । तत्तत्कालीनतादृशचेष्टायां तत्तत्कालीन-तादृशचेष्टावच्छिन्नविशेष्यतया तस्या हेतुत्वात् । न च [6]नर्तकादिनानाविध-चेष्टादर्शनादस्मदादेस्तादृशचेष्टा – [7]विषयककृत्युत्पादेऽपि न तादृशचेष्टेति विलक्षण-कृतेरेव तद्धेतुत्वम्; तस्यां चाभ्यास – [8]पाटवमपि तन्त्रमिति वाच्यम् ।

---

"विश्वव्यापी विश्वशक्तिः पिनाकी"

इति श्लोकव्याख्याने इत्यर्थः । अस्मदादिशरीराण्येवेश्वरशरीरं, नत्वतिरिक्तमित्यपि व्यवस्थापयति – ईश्वर-प्रलये[प्रयत्ने]ति । सर्वविशितं [सर्वावेशेति] । "तत्सृष्ट्वा तदे(व)वाऽनुप्राविशत्" इतिसर्वावेशपरा, "सर्वं खल्विदं ब्रह्म" इति सर्वाभेदपराश्रुतिरिति । भ्रामयन्निति —

"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानां यन्त्रारूढानि मायया ॥"

इति भगवद्गीतश्रवणमपीत्यर्थः ।

---

1 युक्तेरा° अ.
2 °'कृत्याश्रय' नास्ति इ.
3 विफलः अ.
4 विषयचेष्टा° अ.
5 °मनित्य° इ.
6 'नर्तकादि .... .... अस्मदादि' इत्यन्तस्त्रुटितः इ.
7 °विधेयक° अ.
8 पाटवः अपि आ.

आवश्यका[1]स्मदादितादृशचेष्टायामेवाभ्यासपाटवस्य तन्त्रत्वात्। युक्तं चैतत् — व्याधिजडीभूतकरादेः कुलालादेरनुव्यवसायदुःखादिकार्यसिद्धतादृशकृति—[2]सत्त्वेऽपि तादृशचेष्टानुदयात्। [3]अन्यथा कृतिविलोपापत्तेः। न चैवमस्मदादिचेष्टायामपि तस्या एव सम्भवे जन्यप्रयत्नवैफल्यसंभवः। सत्यनुभवे इष्टत्वात्। अत एव जीवनयत्नसिद्धिः।

एतेनास्मदाद्यदृष्टवदात्मसंयोगादेव कृष्णादिशरीरे क्रियैव, न तु चेष्टेत्यपास्तम्। नानाविधक्रियाहेतुनानाविधादृष्टस्वीकारे गौरवात् चेष्टात्वलोपापत्तेः, कालनियमासम्भवाच्च। इत्थं च घटत्वावच्छिन्नेऽपि विलक्षणचेष्टात्वेनैव हेतुत्वं कृतिवैजात्ये

---

[4]अत एव — चेष्टात्वावच्छिन्नं प्रति कृतित्वेन हेतुत्वादेव। कृष्णादिशरीरे — [5]रामकृष्णादि शरीरे। अत एव — 'तादृशचेष्टासाधकेने'त्यादिवक्ष्यमाणयुक्तेरेव। न चेति। एवमपि — नित्यकृतेश्चेष्टाकालनियमसंभवेऽपि। नन्वस्मदादिविलक्षणचेष्टायामभ्यासपाटवस्य हेतुत्वे आवश्यककृतित्वेनापि कृतेर्हेतुत्वं न स्यादत आह — अन्यथेति। विलक्षणचेष्टायां कृतित्वेनापि कृतेर्हेतुत्वे इत्यर्थः। विलक्षणास्मदादिचेष्टायाः कृतेः कृतित्वेनैव हेतुत्वे बाधकमाशङ्क्य निषेधति — न चैवमिति। तस्याः — ईश्वरकृतेः। एतत्सम्भवे *[एव सम्भवे] — विशेष्यतया जनकत्वसम्भवे।

†काय[काल]नियमेति। अदृष्टवदात्मसंयोगस्यैव शरीरादिक्रियाहेतुत्वे तस्य [6]सार्वत्रिकत्वात् क्रियोत्पत्तौ कालनियमासम्भव इत्यर्थः। इत्थं च — प्रागुक्तरीत्या एकविधकृतेः

---

1 °स्मदादावपि तादृश° अ.

2 नाशेऽपि इ.

3 'अन्यथा .... ... इष्टत्वात्' इत्यन्तस्त्रुटितः इ.

4 'अत एव .... .... शरीरे' इत्यन्तस्त्रुटितः क.

5 'अस्मदीयादृष्टनाशादेव ....' इत्यधिकः ग.

6 सार्वदिकत्वात् क.

---

* मूलानुसृतपाठः † मूलानुसृतपाठः

मानाभावात्। तादृश–[1]चेष्टावत्त्वमेव कुलालत्वादिकम्। अत एवाद्यकुलालरूपतयापीश्वरसिद्धिः। अत एव "नमः कुलालेभ्यः कर्मारेभ्यश्च" इत्यादिश्रुतिरपीति युक्ततमः पन्थाः।

[2]अथैवमिष्टसाधनताऽनुमितेरपि हेतुत्वादनुमितिरपि नित्या स्यादिति [3]चेत् - न। इष्टसाधनताप्रत्यक्षादेरपि हेतुत्वात् तदनुमितित्वेनाहेतुत्वात्।

स्यादेतत् —उपादानप्रत्यक्षं लौकिकमेव जनकमिति लौकिकत्वेनैव तस्य हेतुत्वात् लौकिकप्रत्यक्षमीश्वरे सिध्यतु। यदि च प्रणिधानाद्यर्थं मनोवहनाड्यादौ प्रवृत्तिस्वीकारादनुमित्यादिसाधारणं [4]तद्धर्मावच्छिन्नतदर्थ-प्रवृत्ति [प्रवृत्तौ] तद्धर्मावच्छिन्नतदुपा–[5]दानत्वप्रकारकज्ञानमात्रं हेतुरिति मतं तदा ईश्वरज्ञान–[6]मात्रमायातु, न तु प्रत्यक्षमिति चेत्–सत्यम्। "पश्यत्यचक्षुः [7]सशृणोत्यकर्णः"

---

[8]तत्तद्विलक्षणचेष्टाजनकत्वसंभवे च। अत एव – कुलालत्वादेः [9]तत्तद्विलक्षणचेष्टावत्त्वरूपत्वादेव। अत एव – आद्य – [10]कुलालादेरीश्वरात्मकत्वादेव। कुलालेभ्य इति। लोहकारेभ्य इत्यर्थः।

ईश्वरप्रत्यक्षमादायाक्षिपति अथैवमिति। इष्टेति। इष्टं घटादिकार्यं तत्साधनत्वप्रकारकोपादानविषयताकानुमितेरपि तत्तत्कार्यहेतुत्वादित्यर्थः। प्रणिधानाद्यर्थं मनसस्तत्तद्वस्तुनि स्थिरीभावाद्यर्थम्।

---

1 °चेष्टादिकत्वमेव अ.
2 'अथैव .... .... स्यादेतत्' इत्यन्तस्त्रुटितः अ.
3 यत्रेष्ट° आ.
4 यद्धर्मावच्छिन्ने पदार्थ° आ.
5 °दानकप्रकारक° आ.
6 'मात्र' नास्ति इ.
7 'स' नास्ति इ.
8 'तत्त .... .... कुलालत्वादेः' इत्यन्तस्त्रुटितः क.
9 'तत्तत्' नास्ति ग.
10 °कुलीनेच्छादेरीश्वरा° ग.

 

इत्यादिना प्रत्यक्ष – [1]सिद्धेः। [2]तर्हि चाक्षुषादिकमायात्विति चेत् – न। अचक्षुरित्यनेन चक्षुरादिव्यतिरेकोक्तेः तज्जन्यतावच्छेदकजात्यवच्छिन्नाभाव- लब्धदृश्यादेः प्रत्यक्षमात्रपरत्वात्। [3]प्रत्यक्षत्वं तु नेन्द्रियजन्यताव-च्छेदकम्; [4]मानाभावात्। न वा ज्ञानत्वादिकं [5]निखिलकार्यजनकज्ञानत्वादेकत्वस्य नित्यत्वस्य च सिद्धेः; किं तु जन्यज्ञानत्वादिकं प्रामाणिकगौरवस्यादोषत्वात्। अन्यथा स्नेहत्वादिनैव जलादि – [6]जन्यत्वे नित्यस्नेहाद्यपि विलीयत इति दिक्।

अथ किमिदं ज्ञाने एकत्वं न सङ्ख्या, [7]साक्षादाधारत्वासम्भवात्। परम्परया तु नानात्वाविरोधात्। नापि नित्यज्ञानवन्निष्ठभेदप्रतियोगि – [8]तानवच्छेदकस्वेतर- ज्ञानवृत्तिनित्यत्व[9]वत्त्वं वा तत्। नित्यज्ञानासिद्धेःप्राक् [10]एतज्ज्ञानाभावादनुमितौ

---

ननु चक्षुरादिजन्यतावच्छेदकचाक्षुपत्वाद्यवच्छिन्नं नेश्वरे, तदा इन्द्रियजन्यताव- च्छेदकप्रत्यक्षत्वावच्छिन्नमपि कुत इत्यत आह – प्रत्यक्षत्वं त्विति। मानाभावादिति। तथा चेन्द्रियजन्यतावच्छेदकतया सिद्धजन्यप्रत्यक्षत्वं जन्यप्रत्यक्षमात्रे जातिरेवेत्यर्थः। ईश्वर- साधारणप्रत्यक्षत्वं तु लौकिकविषयिता नाशत्व [शालित्व]मेव। आत्मादेरिति जन्यताव- च्छेदकमित्यनुपज्यते। अन्यथा – ज्ञानत्वादेरेवात्मादिकार्यतावच्छेदकत्वमुपगम्य नित्य- ज्ञानादेर्विपयस्वीकारे।

---

1 °सिद्धिः आ.
2 'तर्हि .... .... चेत्' इत्यन्तस्त्रुटितः आ.
3 प्रत्यक्षं ने° इ.
4 'माना .... .... जन्यज्ञानत्वादिकं' इत्यन्तस्त्रुटितः अ.
5 'आत्मा' इत्यधिकः इ.
6 °नित्यत्वे आ.
7 साक्षाद्धाधात् आ.
8 °'तानवच्छेदकस्वेतर° नास्ति आ.
9 बलं वा अ.
10 एवतज्ज्ञाना° आ.

[1]वैशिष्ट्य *[तद्वैशिष्ट्य]भानासम्भवादिति चेत् — न । आत्मानात्मवृत्तिभिन्नदुःखवद्वृत्तिद्वित्वासामानाधिकरण्यस्य ज्ञाने तादृशद्वित्वशून्यत्वस्य तदाश्रये तत्त्वात् । भिन्नान्तमीश्वरघटादिद्वित्वस्य, आवृत्त्यन्तमीश्वरजीवद्वित्वस्य वारणाय । घटपटादिद्वित्वं चेदृशं प्रसिद्धम् ।

ज्ञान [आत्म] द्वयावृत्तिनित्यत्ववत्त्वं ज्ञानैकत्वमित्यन्ये । †तन्न युक्तम् ।

इदं तु तत्त्वम् — तत्तत्कार्याणां देशकालादिनियमेश्वरेच्छादित एव तत्सिद्धिः । वदन्ति हि पामरा ईश्वरेच्छैव नियामिकेति ।

---

नापि नित्येति । नित्यज्ञानवन्निष्ठभेदस्य प्रतियोगितानवच्छेदकं यत् स्वेतरज्ञानं तदवृत्तिनित्यत्ववत्त्वमेव भगवज्ज्ञाने एकत्वम् । अत्र [2]स्वं नित्यज्ञानत्वेनाभिमतं भगवज्ज्ञा — [3]नेतरज्ञानस्य नित्यत्वाभावात् तदवृत्तिनित्यत्वं भगवज्ज्ञाननिष्ठमेव योग्यतयालभ्यत इति तत्र निरूपकत्वसमन्वय इति भावः । प्राक् — नित्यैकज्ञानसिद्धेः प्राक् । अनुमितौ — क्षित्यादिज्ञानवज्जन्यमित्यनुमितौ । तद्वैशिष्ट्येति । निरुक्तैकत्व वैशिष्ट्येत्यर्थः । तदाश्रये — ज्ञानाश्रये भगवति । तत्त्वात् — एकरूपत्वात् ।

न युक्तमिति । ज्ञानद्वयावृत्ति — नित्यत्ववत्तस्य [नित्यत्ववत्त्वस्य] आत्मद्वयावृत्तिनित्यत्ववत्त्वस्य च गगनपरिमाणादावपि सत्त्वादतिव्याप्तेः तन्निर्वचनद्वयं न युक्तमित्यर्थः ।

ईश्वरसाधके सुकरोपायं दर्शयति — तत्तत्कार्याणामिति । अतीतानागतवर्तमानसकलप्रतिपादकवेदकर्तृत्वेन नित्यसर्वज्ञो भगवान् सिध्यति । वाक्यार्थज्ञानं विना वाक्यप्रयोगासम्भवात्; तस्य तद्धेतुत्वात् ।

---

1 °विशिष्य ज्ञाना° इ. 2 'ज्ञानसिद्धिरित्यर्थः इत्यधिकः ग.
3 'नेतर .... .... इति भावः' इत्यन्तस्त्रुटितः । तत्स्थाने — 'न वृत्तिनित्यत्वस्य ज्ञानसामान्याभावात् स्वेतरेति ज्ञानविशेषणम्' इत्यस्ति ग.

---

* व्याख्यानुसृतपाठः † व्याख्यानुसृतपाठः

किं च निखिलवेदार्थदर्शिनो वेदकर्तुः भगवतोऽपलापे दुर्घट इति। तथा च [1]पद्यम् —

"समालोच्य क्षुद्रेष्वपि [2]भुवननाथस्य [3]भवने [भवतो]
नियोगाद्भूतानां मितसमयदेशस्थितिलयम् ।
[4]अये केयं भ्रान्तिस्सततमपि मीमांसकजुषां
व्यवस्थातः कार्ये जगति जगदीशापरिचयः ॥

विभाव्य [5]भुवने भूयः [6]परमेशनिदर्शनम् ।
तं यो न मनुते मन्दः स तेनैव विडम्बितः" ॥

इत्यधिकं कारिकाव्याख्यायामनुसन्धेयम् ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां
पदार्थमालायामात्मप्रकरणं
समाप्तम् ॥

---

शुकादिवाक्यप्रयोगेऽपि शिक्षयितुरेव वाक्यार्थज्ञानस्य हेतुत्वात् न व्यभिचार इत्येवं "वाचस्पतिमिश्रमतं" दर्शयति किं च – निखिलेति। कारिकेति। न्यायकुसुमाञ्जलिकारिकेत्यर्थः ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसम्भूत श्रीमद्रुद्रकवीन्द्र-
तनूजमुद्गलविदुषसूनुना भास्करेणकृत पदार्थमालाप्रकाशे
आत्मप्रकरणं समाप्तम् ॥

---

1 'मान्यं' इत्यधिकः
2 भवन आ.
3 भुवने आ.
4 'अ' नास्ति इ.
5 भूयते इ.
6 परमेशं आ. परमेश्वर° इ.

## अथ मनःप्रकरणम्

मन इतरेभ्यो भिद्यते मनस्त्वात्। मनस्त्वं जातिविशेषो निःस्पर्शाणुत्वं [1]द्रवत्वव *[द्रव्यव] द्भिन्नाणुत्वं वा। तच्च सङ्ख्यापरिमाणसंयोगविभागपरत्वापरत्व-संस्कारत्ववत्। विभागान्ता द्रव्यत्वादेवसिद्धाः; मूर्तत्वाच्च परत्वापरत्वसंस्कारा अपि। प्रयत्नज्ञानायौगपद्याय प्रतिशरीरमेकैकत्वम्। प्रमाणंच सुखादिसाक्षात्कार इन्द्रियजन्यः जन्यसाक्षात्कारत्वात् स्पर्शसाक्षात्कारवत् इत्यनुमानम्। न च चक्षुरादिजन्यत्वेन सिद्धसाधनम्; सुखादिसाक्षात्कारो न चक्षुर्जन्यः महत्वोद्भूत-रूपवद्समवेतगुणसाक्षात्कारत्वादित्यनुमानेन स्पर्शसाक्षात्कारवत् प्राक्चक्षुरादि-जन्यत्वबाधावतारात्।

अत्र स्वतन्त्राः — नोक्तानुमानात् मनस्सिद्धिः। इन्द्रियत्वस्य मनोगर्भत्वात्। तदसिद्धौ साध्याप्रसिद्धेः। साक्षात्कारकारणविषयानिरूपित-सन्निकर्षाश्रयत्वं, साक्षात्कारकारणशरीरसंयोगाश्रय—[2]त्वं वेन्द्रियत्वमिति चेत्-न।

---

द्विविधमात्मानं निरूप्य क्रमप्राप्तं मनो निरूपयति—मन इति। [3]मनस्त्वस्य जातित्वे मानाभावादाह — निःस्पर्शेति। नव्यमतेऽनुद्भूतस्पर्शादेरसत्त्वात् निःस्पर्शाणुत्वं [4]प्राणाद्यारम्भक — परमाणावतिव्याप्तमत आह — द्रव्यवद्भिन्नेति। मनसो द्रव्यानारम्भकत्वात् [5]तत्र द्रव्यवद्भिन्नाणुत्वमस्तीति समन्वयः। द्रव्यमनारभ्यैव नष्टतन्त्वादावतिव्याप्ति-वारणायाणुत्वमिति। द्रव्यवत्परिमाणावतिव्याप्तिवारणाय भिन्नान्तमिति। प्रयत्नज्ञानेति। सर्वदेहिनामेकदैव प्रयत्नज्ञानाद्युत्पत्तिवारणायेत्यर्थः।

---

1 द्रववत् अ. 3 मनः स्वस्य ग. 5 तत्तद्द्रव्य॰ ग.
2 सत्त्वं चे॰ अ. 4 घ्राणा॰ ग.

---

* व्याख्यानुसृतपाठः

 

शरीरेणात्मना वा सिद्धसाधनात् [1]अर्थान्तराद्वा। [2]अतीन्द्रियत्वेन तत् विशेष्यम्। तच्चेह निर्विकल्पकाविषयत्वमिति चेत् - न। त्वचा सिद्धसाधनात्। न च [3]स्पर्शाविषयकसाक्षात्कारत्वेन [4]त्वगन्यतादृशजन्यत्वं साध्यमप्रयोजकत्वात्।

---

एकदेशिमतं मनःखण्डनं दूषयितुमुपन्यस्यति – अत्र स्वतन्त्रा इति। अस्य च "इत्याहुः" इत्यग्रिमेणान्वयः। इन्द्रियत्वस्येति। स्मृत्यजनकज्ञानजनकमनस्संयोगाश्रयत्वस्येन्द्रियत्वस्य मनोगर्भत्वात् मनसोऽसिद्धौ तद्घटितेन्द्रियत्वघटितसाध्यस्याप्रसिद्धेरित्यर्थः। साध्याप्रसिद्धिं परिहर्तुं शङ्कते – साक्षात्कारेति। साक्षात्कारकारणीभूतः विषयानिरूपितो यः सन्निकर्षः चक्षुरादिमनस्सन्निकर्ष एव तदाश्रयत्वस्य चक्षुरादौ सत्त्वात् समन्वयः घटचक्षुस्संयोगमादाय घटेऽतिव्याप्तिवारणाय विषयानिरूपित इति [5]सन्निकर्षविशेषणम्। चक्षुर्गगनसंयोगमादाय गगनेऽतिव्याप्तिवारणाय साक्षात्कारकारणेति। [6]तद्विशेषणत्वात् लाघवाल्लक्षणान्तरमाह – साक्षात्कारेति। साक्षात्कारकारणीभूतो यः शरीरसंयोगः शरीरचक्षुरादिसंयोग एव तदाश्रय-[7]त्वस्य चक्षुरादौ सत्त्वात् समन्वयः, शरीरसंयोगः शरीरप्रतियोगिकसंयोगः तेन शरीरे नातिव्याप्तिः। शरीरेणेति। आद्यनिर्वचनाभिप्रायेण। साक्षात्कार – [8]कारणविषयानिरूपित-सन्निकर्षाश्रयत्वस्यात्मन्यपि सत्त्वात्, शरीरमनस्सन्निकर्षस्यापि साक्षात्कारहेतुत्वादिति। तत् – साक्षात्कारेत्यादिनिरुक्तमिन्द्रियत्वलक्षणद्वयम्। विशेष्यमिति। तथा चातीन्द्रियत्वे सति [9]साक्षात्कारकारणविषयानिरूपित सन्निकर्षाश्रयत्वे (तत्त्वे) सति साक्षात्कारकारणशरीर संयोगाश्रयत्व – [10]मिन्द्रियत्वमित्यर्थः। इत्थं च शरीरात्मनोरतीन्द्रियत्वा – श्रयात् [भावात्] न ताभ्यामिन्द्रियजन्यत्वसाध्ये सिद्धसाधनाद्यवकाश इति भावः। नन्वतीन्द्रियत्वमिन्द्रियग्राह्यत्वमिन्द्रियलक्षणे प्रविष्टमित्यात्माश्रय इत्यतः तच्चेति।

---

1 'अर्थान्तराद्वा' नास्ति इ.
2 'अथ' इत्यधिकः अ.
3 स्पर्शवि° इ.
4 'त्वगन्य .... .... सामान्यजनकस्य' इत्यन्तस्त्रुटितः। तत्स्थाने – 'त्वग्जन्यतावच्छेदकस्य' इत्यस्ति इ.
5 सान्निकर्ष° ग.
6 तत्तद्विशेष° ग.
7 इत्यस्य क.
8 कारणीभूतविशेषनिरू° क.
9 'साक्षात्कार .... .... सति' इत्यन्तस्त्रुटितः ग.
10 °वदिन्द्रिय° क.

अन्यथा सुखादिविषयकदुःखादिसाक्षात्कारणां विभिन्नेन्द्रियजन्यत्वापत्तेः। ज्ञानसामान्यजनकस्य शरीरादेः [1]तद्विशेषावच्छिन्नं प्रति जनकत्वं [2]तु त्वचो मनसो वा स्पार्शनं मानसं वा प्रति [3]चाविरुद्धम्। जन्यज्ञानत्वावच्छिन्ने त्वक्त्वादिना हेतुत्वे नेन्द्रियत्वादिना तथात्वमिति चेत्—न। [4]त्वक्त्वादिप्रवेशे इन्द्रियत्ववैयर्थ्यात्।

---

अतीन्द्रियत्वं चेत्यर्थः। त्वचेति। अतीन्द्रियत्वविशेषितनिरुक्तलक्षणद्वयस्यापि त्वचि सत्त्वात् तया सिद्धसाधनादित्यर्थः। न च स्पर्शेति। तथा च सुखादिसाक्षात्कारः त्वगन्यनिरुक्तलक्षणाक्रान्तजन्यः स्पर्शाविषयकसाक्षात्कारत्वात् गन्धसाक्षात्कार—[5]वदित्याकारकानुमानात् [6]मनस्सिद्धिः। अत्र त्वगादिना सिद्धसाधनाद्यनवकाशादिति न चेत्यर्थः। ननु प्रागुक्तमनस्साधकानुमाने शरीरादिना सिद्धसाधनाद्युक्तम्। [7]तदयुक्तम्—जन्यज्ञान[8]त्वावच्छिन्नजन्यतानिरूपित—जनकताशालिनः शरीरादेः सुखादिसाक्षात्कारत्वावच्छिन्नं प्रत्यसाधारणजनकत्वासम्भवात्। अतस्तादृशजनकत्वमुपपादयति-ज्ञानसामान्येति। जन्यज्ञानसामान्येत्यर्थः। समान्यहेतोरपि विशेषहेतुतायां दृष्टान्तद्वयमाह - त्वचो मनसो वेति। त्वचो हि जन्यज्ञानसामान्यहेतुत्वं त्वङ्मनस्संयोगद्वारा मन[स]स्तु आत्म[म]नः संयोगद्वारा अपि। इदं च संप्रदायमतेनैव, एकदेशिना मनसोऽनभ्युपगमादिति। अविरुद्धमिति। तथा च निरुक्तलक्षणद्वये शरीरादिवारणायातीन्द्रियत्वविशेषणोपादानमनुचितमिति शरीरादिना सिद्धसाधनादिकं दुष्परिहारमिति भावः। ननु शरीरादेस्त्वगादिदृष्टान्तेन सामान्यविशेषोभयहेतुत्वमुक्तं, तत्र दृष्टान्त एव तथात्वं संभवति; सामान्यविशेषोभयहेतुतावच्छेदकरूपभेदसत्त्वात्। [9]न च प्रकृते हेतुतावच्छेदकरूपभेदा-

---

1 तद्विषयाव° इ.
2 'तु' नास्ति इ.
3 चासिद्धम् अ. आ.
4 त्वगिन्द्रियप्रवेशे अ.
5 °वदित्यनुमानेन क.
6 'मन .... .... प्रागुक्तमनस्साधकानुमाने' इत्यन्तस्त्रुटितः क.
7 'तदयुक्तं' नास्ति क.
8 'त्वावच्छिन्न .... .... सुखादिसाक्षात्कार' इत्यन्तस्त्रुटितः क.
9 ननुप्र° ग.

ननु *[एवं] [1]त्वगिन्द्रियत्वादिना हेतुत्वे इन्द्रियत्वेनेन्द्रियजन्यत्वं जन्यसाक्षात्कारत्वे [2]तन्त्रं संभवति। अन्यथा [3]किं तत्र तन्त्रमिति चेत् - किं [4]तन्त्रम्; जनकत्वं चेत् - न किंचित्; [5]व्यापकत्वं चेत् - सामग्री। यथा जन्यज्ञानोत्पत्तिनियामिका तत्सामग्री; तदवच्छिन्नं प्रति जनकं चेत् - आत्मशरीरादि। एकरूपावच्छिन्नस्य कथं सामान्यविशेषोभयावच्छिन्नजनकत्वमिति चेत् - कतमो विरोधः। न चैवं पृथिवीत्वादिना [6]घटादिजनकत्वापत्तिस्सम्भवति। व्याप्यरूपेण [7]हेतुत्वे-

---

सत्त्वादित्यभिप्रायेण शङ्कते — जन्यज्ञानत्वेति। त्वक्त्वादीति। त्वगादेर्जन्यज्ञानत्वावच्छिन्नकारणतावच्छेदकत्वत्वक्त्वादेः स्पार्शनादिकारणतावच्छेदके प्रवेशः आवश्यकः। अन्यथेन्द्रियत्वेनैव तद्धेतुत्वे चक्षुरादिनापि स्पार्शनाद्युत्पादापत्तेः। तथा च जन्यज्ञानत्वावच्छिन्न इव स्पार्शनादावपि त्वक्त्वादिनैव हेतुत्वं, न तु तत्रेन्द्रियत्वप्रवेशः; प्रयोजनाभावादिति दृष्टान्तेप्येकरूपेणैव सामान्यविशेषोभयहेतुत्वमिति प्रकृतेऽपि तथात्वमुचितमिति भावः।

त्वगादेः स्पार्शनादिहेतुतावच्छेदके इन्द्रियत्वप्रवेशः आवश्यक इत्याशङ्कते — नन्वेवमिति। [8]पुनश्शङ्कते एकरूपेति। एकरूपं शरीरत्वादि त्वक्त्वादि च तदवच्छिन्नस्य शरीरादेः त्वगादेर्वेत्यर्थः। न चैवमिति। एकरूपेण सामान्यविशेषोभयहेतुतायां विरोधाभावे इत्यर्थः। पृथिवीत्वादिनेति। कपालादेरिति शेषः। [9]ननु जन्यज्ञानसामान्यहेतोः शरीरादेः

---

1 त्वगिन्द्रियादिहेतुत्वे इ.

2 'न' इत्यधिकः इ.

3 'तु' इत्यधिकः अ.

4 तत्र जनकं° अ.

5 'व्यापकत्वं .... तत्सामग्री' इत्यन्तस्त्रुटितः। तत्स्थाने-'व्यापकं ज्ञानत्वादित्यपि चेत्-चाक्षुषत्वादिसमवायं चेत् साक्षात्कारसामग्री' इत्यस्ति आ.
'व्यापकं चेत् ज्ञानत्वादिव्याप्यं चेत् चाक्षुषत्वादिसमव्याप्यं चेत् साक्षात्कारसामग्रीजन्यत्वादितदवच्छिन्नोत्पत्तिनियामकमिति चेत् - सामग्री' इत्यस्ति इ.

6 'घटादि .... .... स्पर्शादि' इत्यन्तस्त्रुटितः अ.

7 'हेतुत्वे व्यापकरूपेण' नास्ति इ.

8 'पुनश्शङ्कते' नास्ति ग.

9 'ननु' नास्ति ग.

* व्याख्यानुसृतपाठः

व्यापकरूपेणान्यथासिद्धत्वात् । विरुद्धरूपावच्छिन्नौ स्पर्शादिसुखादिसाक्षात्कारौ प्रत्येकरूपावच्छिन्नस्य कथं हेतुत्वमिति चेत् - यथाऽग्निसंयोगस्य रूपादिकं, यथा वाऽऽत्मनः सुखादिकं प्रति । कथं तर्हि कार्यवैलक्षण्यं, तद्वदेव सामग्रीवैलक्षण्यादेव गृहाण । [1]अस्तु वा प्रमाण *[प्राणा] एव सुखादिसाक्षात्कारकारणम् ।

अथ भावकार्यस्य [2]सासमवायिकारणकत्वनियमात् सुखादीनां तदावश्यकम् । तच्च परिशेषात् सुखादिकं संयोगासमवायिकारणकवृत्तिगुणत्वव्याप्यजातिमत्, विभुविशेषगुणत्वात् नित्यवृत्त्यनित्यविशेषगुणत्वात् शब्दवत् पाकजवच्चेत्यनु-

---

यदि शरीरत्वादिना सुखादि साक्षात्कारं प्रति हेतुत्वं तदा विनिगमकाभावात् स्पर्शादि - [3]साक्षात्कारं प्रत्यपि तद्वाच्यम् । तच्च विरुद्ध(त्व)म् । अन्यथा दण्डत्वेन विरुद्धघटत्व-पटत्वाद्यवच्छिन्नं प्रत्यपि हेतुत्वापातादित्याशयेन शङ्कते – विरुद्धरूपेति । शङ्कां परिहरति – यथाऽग्नीति । पुनश्शङ्कते – कथं तर्हीति । यद्येकरूपेण विजातीयविजातीयकार्यं प्रति हेतुत्वं, कथं तर्हि तत्तत्कार्ये वैलक्षण्यमित्यर्थः । शङ्कां परिहरति – तद्वदेवेति । एकाग्निसंयोगसाध्य-रूपरसादाविव, एकात्मसाध्यसुखदुःखादाविव च तत्तददृष्टादिघटितसामग्रीवैलक्षण्यादित्यर्थः । अतिरिक्तमनोवादिना शरीरप्राणसंयोगस्यापि सुखादिसाक्षात्कारं प्रति हेतुत्वमवश्यं वाच्यम् अन्यथा तद्वियोगदशायामतिप्रसङ्गात् । तथा च विनिगमकाभावात् तद्द्वारा प्राण एव तत्र कारणमस्तु । न च तस्य जन्यज्ञानसामान्यहेतुत्वात् कथं तद्विशेषहेतुत्वमिति वाच्यम् ।

---

1 'अस्तु वा' नास्ति इ.

2 असम° आ.

3 साक्षात्कारत्वावच्छिन्नं प्रत्यपि क.

---

* व्याख्यानुसृतपाठः

मानाच्च संयोग एवेति तदाश्रयत्वेन मनस्सिद्धिरिति चेत् - न । [1]कार्ये कारणैकार्थ-प्रत्यासत्त्या कारणत्वादिरूपस्यासमवायिकारणत्वस्य [2]कारणतानवच्छेदकत्वात् भावकार्ये तन्नियमाभावात् सुखादेरतथात्वात् । अवयवरूपादिकं विनाऽवयवि-रूपादेरवयवसंयोगादिकं विनाऽवयव्यादेरनुत्पत्तेः; तत्कार्यविशेषे तत्तत्कारणविशेषस्य हेतुत्वात् । न चैवमवयव्येकत्वादा-[3]वयवैकत्वादेरसमवायित्वं न स्या[4]दिति वाच्यम् । इष्टत्वात् । जन्यद्रव्यमात्रादेव तदुत्पत्तिसम्भवात् ।

अस्तु [5]वा शरीरस्य कारणस्य [करणस्य] वा संयोग एव तथा । न चैवं सुखादिमात्रस्य [6]शरीरादिव्यापित्वापत्तिः; मनस्संयोगस्य तथात्वेऽप्यणुदेशतापत्तेः ।

---

तथात्वेऽपि शरीरस्येव तस्यापि [7]तथात्वाविरोधादित्यभिप्रायेण कल्पान्तरमाह – अस्तु वा प्राणा इति ।

मनस्साधकमाशङ्कते – अथेति । भावेति । भावकार्यत्वावच्छिन्नं प्रत्यसमवायि-कारणत्वेन [8] हेतुतामूलकात् भावकार्यस्य सासमवायिकारणत्वनियमात् सुखादीनामपि तथात्वादसमवायिकारणं किंचिदावश्यकमित्यर्थः । शङ्कां परिहरति – कार्येति । कारणतेति । भावकार्यत्वावच्छिन्ननिरूप्य तत्कारणतानवच्छेदकत्वादित्यर्थः । अतथात्वात् – असमवायि-कारणजन्यत्वाभावात् । *(आधेयतयेति । [9]समवायेनैकत्वोपपत्तिं प्रति घटादेः

---

1 'कार्ये' नास्ति अ.
2 कारणतावच्छेदकत्वात् इ.
3 'अवयव' नास्ति इ.
4 'इति वाच्यम्' नास्ति इ.
5 'वा' नास्ति इ.
6 शरीरव्यापित्वा° इ.
7 तथात्वविरो° क.
8 हेतुस्तन्मूलकत्वात् ग.
9 'सम .... .... माधेयत्वेन' इत्यन्तस्त्रुटितः ग.

---

*कुण्डलितग्रन्थानुसारो मूलपाठो नोपलभ्यते

न च [1]विभुकार्यस्य निमित्तप्रादेशिकत्वाधीनप्रादेशिकत्वेऽपि यावत्य [ यावद् ]-समवायिकारण - त्वा [ त्वमा ] वश्यकमिति वाच्यम् । मानाभावत् । घनसङ्घट्टादि-जन्यशब्दसन्तानान्तिम - सा [ स्या ] द्यशब्ददेशपर्यन्तवृत्तित्वापत्तौ निकटस्थस्यापि दूरस्येव मन्दशब्दोपलब्ध्यापत्तेश्च ।

अथ व्यासङ्गदशायां चक्षुरादीनां [2]स्वस्वविषयकसम्बन्धानामप्येकमेव ज्ञानं जनयति, नेतराणी - [3]त्यानुभविकं तत्र यस्यासन्निकर्षादितरेषां ज्ञानजनकत्वं तत्तेषां क्रमेणाधिष्ठापकं मनःतदेव सुखादि साक्षात्कारकारणम् । तथा च पारमर्षं सूत्रम् – "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" (न्या. सू. १.१.) [4]इति । बुभुत्सावशात् [5]तथा नियम इति चेत् - पञ्चबुभुत्सायां पञ्चज्ञानानि स्युः । भवन्त्येव पञ्चावधानवतामिति चेत् - अन्यस्यापि स्यात् । तस्मात् तत्र दीर्घशष्कुली-भक्षणे च कल्प्यते ज्ञानक्रमः । यौगपद्यधीस्तु भ्रान्ता ; बाधकबलात् ।

---

हेतुत्वमाधेयत्वेन समवेतद्रव्यत्वेनेत्यर्थः । तेन नित्यद्रव्यस्य कालिकतया गुणादेश्च समवायेनाधेयत्वेऽपि न तत्रैकत्वाद्युत्पत्तिरिति ।)

[6]सिद्धान्तानुरोधात् भावकार्यस्य सासमवायिकारणकत्वनियममभ्युपेत्यापि मनो निरस्यति – अस्तु वेति । तथा । सुखाद्यसमवायिकारणशरीर प्राणसंयोगस्य सुखाद्यसमवायित्वे [7]असमवायिकारणप्रादेशिकत्वस्य कार्यप्रादेशि – [8]कत्वनियमात् सुखादेः सर्वशरीरव्यापित्वं

---

1 भावकार्यस्य अ.
2 सुखवि° इ.
3 °त्याद्यानु° आ.
4 इव इ.
5 'तथा .... ... स्यात्' इत्यन्तस्त्रुटितः इ.
6 'सिद्धान्तानुरोधात्' नास्ति ग.
7 सम° क.
8 °कत्वोपगमात् ग.

न [1]च ज्ञानस्य करणं कारणं वैकत्रात्मनि शरीरे वा एकदा [2]एकमेव ज्ञानं जनयतीति नियमः; अन्यथा समूहालम्बनमप्येकं ज्ञानं न स्यादिति तत एव व्यासङ्गे एकं ज्ञानमिति वाच्यम् । कार्यानुत्पादस्य विना कारणाभावमसम्भवात् । सामग्रीसत्त्वे कार्योत्पत्त्यापत्तेर्दुर्वारत्वात् । न च तदितरेषां ज्ञानान्तराजनकत्वात् न सामग्रीसमवधानं; तत्तत्कालीनत्वादेः जनकतावच्छेदकत्वेन तदा स्वरूपयोग्यताया दुर्वारत्वात् । स्वरूपयोग्ये च

---

स्यादित्याशङ्क्य निषेधति – न चैवमिति । मनस्संयोगस्येति । तथा विभुकार्यसुखादि-प्रादेशिकत्वे निमित्तप्रादेशिकत्वमेव नियामकम्; न त्वसमवायिप्रादेशिकत्वमिति शरीरे यद्यदवच्छेदेन चन्दनादिसंयोगः तत्तदवच्छेदेनैव सुखाद्युत्पत्तिरिति भावः ।

पुनः मनस्साधकमाशङ्कते – अथेति । व्यासङ्गेति । इष्टानिष्ट – पित्ता [प्राप्ति] जनितव्याकुलत्वदशायामित्यर्थः । मनस्साधनं मध्यत एवोपसंहरति – तस्मादिति । तत्र – पञ्चबुभुत्सास्थिले । दीर्घेति । घृतादिपक्वान्नविशेषभक्षणे इत्यर्थः । दान [ज्ञान] क्रमेति । सूक्ष्मस्य मनसः सर्वेन्द्रियैर्युगपत्संबन्धाभावादिति भावः । बाधकेति । युगपदेव रूपरसादीन् साक्षात्करोमीति धियः प्रमात्वे सर्वेन्द्रियैः मनस्सन्निकर्षविरह एव बाधकः । तद्बलात् तस्याश्रयत्व [तस्याः भ्रान्तत्व] मेवास्थीयत इत्यर्थः ।

त्रिनैव मनसा व्यासङ्गदशायामेकज्ञानोत्पादोपपत्तिमाशङ्क्य निराकरोति – न च ज्ञानस्येति । न च तदिति । व्यासङ्गादावेकेन्द्रियेणैव ज्ञानोत्पत्तिकाले इतरेन्द्रियाणां [3]ज्ञाना-जनकत्वात् तत्तज्ज्ञानसामग्रीसमवधानमेव नास्ति । फलोपहितकारणस्यैव [4]सामग्रीपदार्थत्वात् ।

---

1 'च' नास्ति इ.

2 'एकमेव' नास्ति अ.

3 ज्ञानजनक° ग.

4 सामग्रीव प° ग.

फलानुपधानस्य सहकारिविरहप्रयुक्तत्वात्। समूहालम्बनं तु घटपटादिज्ञान-सामग्रीसमाजाज्जायमानं विरोधात्; लाघवाच्चैकमेव नानाविषयकं ज्ञानमुत्पद्यते। चाक्षुषस्पार्शनाकारं [1]तु नैकं, जाति[2]विरोधादिति चेत्-न। रसनसंयोग-दशायामणोरपि मनसः त्वचा संयोगसत्त्वात् युगपदेव न कथं रसस्पर्शसाक्षात्कारौ, अदृष्टवशादिति चेत् - व्यासङ्गेऽपि तथाऽस्तु।

---

तथा च तत्तत्कालीनेन्द्रि[3]यस्य तत्तज्ज्ञानजनकत्वलाभात् तदानीं ज्ञानान्तरोत्पत्तिवारणसम्भवेऽभ्युपगमोऽव्यर्थ एवेति भावः। त[त्त]त्कालीनत्वादेरिति। तत्तत्कालीनेन्द्रियत्वेन तत्तज्ज्ञान-जनकत्वे लाघवात् तत्तत्कालस्यैव जनकत्वमस्त्वित्युक्तदोषाभावात् तत्कालीनत्वादेः [4]कारण-तावच्छेदकत्वमवश्यं वाच्यमिति व्यासङ्गादौ सर्वेन्द्रियेषु तत्तज्ज्ञानजननस्वरूपस्वरूपयोग्यताया दुर्वारत्वात्, स्वरूपयोग्यताशालिकारणसत्त्वे च फलानुपधानं किंचित्सहकारिविरहप्रयुक्तमेवेति प्रकृते तादृशसहकारि मन एवेति भावः। नन्वतिरिक्तमनः[5]स्वीकारे ज्ञानकारणमेवात्रात्मनि-शरीरे चैकदैकं ज्ञानं जनयतीति नियमानभ्युपगमे समूहालम्बनोच्छेदः स्यादित्यत आह – समूहालम्बनं त्विति। ननु 'घटपटावि'त्यादिसमूहालम्बनवत् चक्षुरादिनानेन्द्रियैरेकमेव रूपरसादिविषयकसमूहालम्बनज्ञानं लाघवादुत्पाद्यतामित्यत आह – चाक्षुषेति। जाति-विरोधादिति। जातिसङ्करापातादित्यर्थः। तेन चाक्षुषस्पर्शनाद्याकारैकज्ञानस्वीकर्तृमते चाक्षुष-त्वस्पार्शनत्वादिजातिविरोधासत्त्वेऽपि न क्षतिः। 'अथ व्यासङ्गदशायां' इत्यादिग्रन्थसन्दर्भेणोक्तं मनस्साधनं खण्डयति – रसनसंयोगेति। अयं भावः – अतिरिक्तमनोवादिना सुषुप्त्यादौ ज्ञानाद्युत्पत्तिवारणाय त्वङ्मनस्संयोगस्य जन्यज्ञानमात्रे हेतुत्वं वाच्यम्। तथा च रसनमन-

---

1 'तु' नास्ति इ.

2 विशेषादिति अ.

3 °यत्वेन तत्त° ग.

4 कारणतानव° ग

5 स्वीकारोपष्टम्भकं ज्ञानं° ग.

अपि च रूपादिकं पश्यतो जातायां गीतादिबुभुत्सायां सद्य एव कुतो गीतादिश्रवणम्; बुभुत्सावशादिति चेत् - न। श्रोत्रमनोयोगं विना श्रावणज्ञाना-सम्भवात्। न हि बुभुत्साहत्यैव श्रोत्रमनोयोगं कुरुते।

अथ बुभुत्सायां सत्यामभिमतबोधकारणमनस्संयोगार्थं मनोवहनाड्यां प्रयत्नो जायते। तया नुन्नं च मनः [1]क्रमेण तेनेन्द्रियेण युज्यते। ततो बुभुत्सितार्थ[2]बोध इति चेत् - तत्किं पामरा अपीन्द्रियमनस्संयोगस्य कारणं

---

स्संयोगवेगेन रासनोत्पत्तिसमये त्वङ्मनस्संयोगस्यावश्यकत्वात् युगपद्रासनस्पार्शन-साक्षात्कारौ कथं न भवेताम्। यदि चादृष्टवशात् न तथा, तदा व्यासङ्गोऽपि तत एव मास्तु। युगपज्ज्ञानाज्ञानोत्पत्तिरिति कृतमतिरिक्तमनसेति।

ननु विजातीयात्ममनोयोगस्यैव जन्यज्ञानमात्रे हेतुत्वं तदभावादेव च सुषुप्तौ न ज्ञानोत्पादः। तथा च रासनोत्पत्तिकाले [3]त्वङ्मनःसंयोगानपेक्षणात् रसनमनस्संयोगात् तदा रासनस्यैवोत्पत्तिः, न तु स्पार्शनस्य, तद्धेतुत्वङ्मनस्संयोगविरहात् [4]इच्छायाश्चादृष्ट-विशेषनियामकत्वानुपगमात्। व्यासङ्गानुरोधेन तत्तदिन्द्रियमनस्संयोग एव तत्तज्ज्ञानोत्पत्तौ नियामक इत्यस्वरसादाह अपि चेति। श्रोत्रमनोयोगं विनेति। तव मत इति शेषः। शब्दादि-बुभुत्सैव स्वद्वितीयक्षणे श्रोत्रमनोयोगं जनयति, तेन रूपादिकं पश्यतः सद्य एव गीतादि-श्रवणोपपत्तिरित्याह – न हि बुभुत्सेति। किं तु बुभुत्सानन्तरमदृष्टवदात्मसंयोगान्मनसि गत्यादिक्रमेणैव श्रोत्रमनोयोग इति सद्य एव [5]गीतादिश्रवणानुपपत्तिः मनोवादिन इति भावः।

---

1 'क्रमेण' नास्ति इ.

2 'बोध' नास्ति अ.

3 'त्वङ्मन .... .... तद्धेतु' इत्यन्तस्त्रुटितः क.

4 इत्थं चा° क.

5 'गीतादि .... .... एव न' इत्यन्तस्त्रुटितः क.

[1]विन्दन्ति [विदन्ति]; असर्वज्ञाश्च किमिदानीमस्यां नाड्यां मनो विद्यते संयोक्ष्यते च नेन्द्रियेणेति [2]निश्चिन्वते ।

किं चादरेण रूपादिकं पश्यतो वेगवत्तरमहा - [3]मेघसंघट्टजन्मनो - [4]झणझणा-शब्दस्य झटित्येव कथं साक्षात्कारः । तस्माददृष्टादेरव्यासङ्गादौ ज्ञानोत्पादनियमः । अत एव शष्कुलीभक्षणे रूपरसादिसाक्षात्काराणां यौगपद्यप्रत्ययो न भ्रान्तः । युगपदेव चादृष्टानां विवृद्धिनिरोधात् सुस्वापो, वृत्तिलाभाच्च जागरणमदृष्टविशेष-परीपाकावशाद्वा न तदानीं ज्ञानोत्पादः मनसो निरिन्द्रियप्रदेशगमने त्वयापि [5]तस्याङ्गीकरणीयत्वात् । तस्मात् मनस्सिद्धौ श्रुतेरेव भार इत्याहुः ।

---

मनोवादिमते शब्दादिबुभुत्सायां सद्य एव न गीतादिश्रवणम्; किं तु मनसा नोदनगत्यादिक्रमेण श्रोत्रमनोयोगानन्तरमेवेत्यभिप्रायेण शङ्कते – अथ बुभुत्सायामिति । आशङ्कां सोपहासं निरस्यति 'तत्किमित्यादिना निश्चिन्वत इत्यन्तेन' ।

दूषणान्तरमाह – किं चादरेणेति । त्वयापि – मनोवादिनापि । तस्य – अदृष्टविशेषस्य । तस्मात् – मनस्साधक[6]युक्त्यसत्त्वात् । श्रुतेरेव – 'मनसैवानुद्रष्टव्यम्' इत्यादिश्रुतेरेव । भार इत्यनेन केवलया श्रुत्या अपि नातिरिक्तमनस्सिद्धिरिति सूचितम् । तर्कसहकृतत्वेनैव श्रुतेरर्थप्रज्ञापकत्वात् । अन्यथाऽतिप्रसङ्गात् । मनस्साधकयुक्त्यसत्त्वे च तच्छ्रुतेः तर्कसह-कृतत्वाभावात् ।

---

| | | | | | |
|---|---|---|---|---|---|
| 1 | वदन्ति | अ. | 4 | गणगणा॰ | इ. |
| 2 | निश्चितम् | अ. | 5 | तस्य शरणीयत्वात् | अ. |
| 3 | वेग॰ | इ. | 6 | ॰युक्तस॰ | क. |

केचित्तु — भौतिका एव [1]परमाणवो मनांसि । तेषां च ज्ञानादि-हेतु-[2]तद्रूपेण [हेतुता तद्व्यक्तित्वेन, न तु जात्या] पृथिवीत्वादिना सङ्करापत्त्या जातेरसम्भवात् । अनन्तानां धर्माणामतिरिक्तायाश्च जातेः कल्पनामपेक्ष्य कॢप्तानामेव धर्मिणां कॢप्तेनैव रूपेण हेतुताया न्याय्यत्वात् । नियमः पुनरदृष्टविशेषग्रहात् तदानीमनारम्भोऽपि [3]तेनैव प्रतिबन्धादित्याहुः ।

अत्र वदन्ति — यत्संयोगव्यतिरेकात् सुषुप्तिकाले कार्यानुत्पादः, तदेव मनः । न च शरीरादिकं तथा, शरीरादिकसंयोगस्यात्मनि तत्कालेऽपि सत्त्वात्; अथोदासीनानन्तमनसामपि संयोगः तत्कालेऽस्तीत्यदृष्टविशेषाकृष्ट-

---

मनःखण्डनरीत्यन्तरवादिनामपि मतं दूषयितुमुपन्यस्यति – केचित्त्विति । भौतिका इति । पृथिव्यादिपरमाणवः तेजःपरमाणवो वा मनांसि सन्तु । परं तु तेषां ज्ञानादिहेतुता तद्व्यक्तित्वेन, न तु मनस्त्वजात्या पृथिवीत्वादिना संकरापत्त्या तस्य जातित्वासम्भवादित्यर्थः । ननु भौतिक – [4]परमाणूनामेव मनस्त्वे घटाद्यारम्भकाणुसंयोगादपि ज्ञानाद्युत्पादः स्यात् । एवं तद्दशायां तत्तत्परमाणुभिः द्रव्यारम्भश्च स्यादित्यत आह – नियम इति । अदृष्टविशेषोपगृहीत पृथिव्याद्यणूनामेव मनस्त्वात् तत्संयोगादेव ज्ञानाद्युत्पादनियमो ऽदृष्टविशेषेणैव च प्रतिबन्धात् न तद्दशायां तैः द्रव्यारम्भो ऽपीत्यर्थः ।

अतिरिक्तमनस्साधयन् मतद्वयं दूषयति – अत्र वदन्तीत्यादिना ।

---

1 अणवो इ.

2 तादृश्येन अ.

3 नैव इ.

4 अणूना° क.

मन एव तथा वाच्यम्। तथा च तत्तत्पुरुषादृष्टाकृष्टो भौतिकाणुरेव तस्य मनोऽस्त्विति चेत् - न। तस्य भौतिकत्वे पृथिवीत्वं [1]जलत्वादिकं वेत्यत्र नियामकाभावात्। पृथिवीत्वादिराहित्यसिद्धेः।

नव्यनये रूपादिरहितस्यापि पृथिवीत्वसम्भवेन रूपादिशून्यत्वात् वायुरेवेत्ययुक्तम्। अन्यथा स्पर्शादिराहित्यात् न [2]वायुरित्यपि सुवचम्।

किं च ज्ञानादि - [3]जनकात्मप्रतियोगिकविजातीयसंयोगं प्रति मनस्त्वेन वैजात्येन हेतुत्वम्। तच्च वैजात्यं पृथिवीत्वादिविरुद्धमिति।

एतेन विजातीयशरीरादिसंयोग एव ज्ञानजनक इत्यपास्तम्। शरीरादि-संयोगे कर्मजत्वादिना साङ्कर्यात् वैजात्यासम्भवात् च।

---

ननु मनसोऽतिचपलस्वभावत्वात् वायवीयपरमाणुत्वमेव युक्तम्। न च तस्य स्पर्श-राहित्यात् न तत्त्वम्; अनुद्भूत स्पर्शसम्भवात्। न च तदानीं तेन द्रव्यारम्भापत्तिः; अदृष्टविशेषेण प्रतिबन्धात् [4]तेन द्रव्या [ना] रम्भादित्यस्वरसादाह – किं च ज्ञानादीति। पृथिवीत्वादीत्यादिना जलत्वतेजस्त्ववायुत्वानां संग्रहः।

एतेन – शरीर इत्यादिवक्ष्यमाणयुक्त्या।

---

1 जलत्वं वे° इ.

2 'वा' इत्यधिकः अ.

3 °जनकाप्रति° इ.

4 'तेन द्रव्यानारम्भात्' नास्ति ग.

स्यादेतत् — तत्पुरुषीयद्रव्यतत्समवेतादिमानसे तदात्मतदात्मसमवे-[1]तत्वादेरेव नियामकत्वेनानतिप्रसङ्गात्। [2]भावकार्यमात्रे सासमवायिकारणकत्व-नियमस्याभावादा[3]त्मनःसंयोगस्य ज्ञाननियामक-[4]त्वमेवासिद्धम्। सुषुप्तिकाले ज्ञानोत्पाद [ज्ञानानुत्पाद]स्तु कालविशेषस्य विरोधत्वादिति चेत्-न। अनन्तकालविशेषाणां [5]विरोधिकल्पना-[6]पेक्षया जन्यज्ञानमात्रे विजातीयात्म-मनोयोगहेतुत्वकल्पनाया एव युक्तत्वादिति शिवम्।

भाष्याद्युक्तिषु हीनयुक्तिषु रतिः [7]प्रेक्षावतां नेक्ष्यते
प्राचार्यैर्विहितापि युक्तिरहिता वाणी क्वचिल्लक्ष्यते।
मत्वैवं जयराम एष विपुलैस्सद्युक्तिमुक्ताफलैः
प्रव्यक्तं वितनोति [वितताम] कोविद[8]मुदे शब्दार्थमालामिमाम्॥

---

शरीरादिजनकविजातीयात्मप्रतियोगिकसंयोगजनकतावच्छेदकमनस्त्वरूपवैजात्याश्रय-त्वेनातिरिक्तमनस्सिद्धिरित्युक्तमाक्षिपति – स्यादेतदिति। आक्षेपं निरस्यति – अनन्तकालेति।

स्वीयग्रन्थे प्राचीननिबन्धापेक्षयोत्कर्षं दर्शयति – भाष्येत्यादिश्लोकद्वयेन। विततानेति। अहं चखनि च विनवेत्यादिप्रयोगवैकल्पिकवृद्धिनिमित्तभूतवैकल्पिकणित्वस्य "णलुत्तमो वा" (पा. सू. ७. १. ९१) इति ज्ञापकवलात् कर्तृपरोक्षेऽपि लिटः साधुत्वं बोध्यमिति।

---

1 °तत्वादेव इ.
2 भावादिकार्य° अ.
3 °त्मसंयो° इ.
4 °त्वेवाऽसिद्धम् अ.
5 विधि° इ.
6 मपेक्ष्य जन्य° अ.
7 प्रेक्ष्यावतां अ.
8 °युतैश्श° अ.

पदार्थमालां यदि नाम [1]बाला
लीलावशादप्यनुशीलयन्ति ।
तदा [2]दुरूहार्थिपयोधिपारं
विना विचारं परिशीलयन्ति ॥

इति श्रीमज्जयरामन्यायपञ्चाननविरचितायां

पदार्थमालायां मनःप्रकरणं समाप्तम् ।

द्रव्यपरिच्छेदः समाप्तः ।

पदार्थमाला समाप्ता ।

---

श्रीवासुदेवस्य पदारविन्द-
प्रसादमासाद्य गुरोस्तथैव ।
पदार्थमालागहनार्थतत्त्व-
व्यख्यां व्यधात् भास्करनामधेयः ॥

इति श्रीमन्महामहोपाध्यायलौगाक्षिगोत्रसम्भूत

श्रीमद्दुद्गकवीन्द्रतनूजमुद्गलविदुषसूनुना

कृतपदार्थमालाप्रकाशे मनःप्रकरणं

समाप्तम् ॥

द्रव्यपरिच्छेदः समाप्तः ।

पदार्थमालाप्रकाशः समाप्तः ।

---

1 बालां इ. 2 दुरुक्तार्थि° अ.

अथ सङ्क्षेपतो नाम्ना वादिसिद्धान्तः कथ्यते —

सप्तपदार्था इति काणादाः गौतमीयाश्च ।

द्रव्यगुणकर्मसामान्यानि पदार्था इति तौतातिताः ।

द्रव्यगुणकर्मसामन्यसङ्ख्यासमवायसादृश्यशक्तयोऽष्टौ
पदार्था इति प्राभाकराः ।

द्रव्याद्यष्टक्रमोपकारसंस्काराश्च त्रय इत्येकादश-
पदार्था इति प्राभाकरैकदेशी ।

चन्द्रमठार्णवकारस्तु - अपादानिकत्वेनत्वात्
पदार्थानाह ।

प्रकृतिपुरुषौ द्वौ पदार्थौ। महत्तत्त्वादीनि
प्रकृतिपरिणाम इति साङ्ख्याः ।

कार्यकारणयोगविधिदुःखान्ताः पञ्चपदार्था
इति पाशुपताः ।

ब्रह्ममात्रं पदार्थः। व्यवहारे धर्मिधर्माधारप्रदेशविशेषाः
पञ्चपदार्था इति वेदान्तिनः ॥



# अनुबन्धः(क) (APPENDIX I)

## पदार्थमालायां पदार्थमालाप्रकाशे च वर्तमानानां सविवरणपारिभाषिकपदानां सूची

| पदम् | | विवरणम् | | पृष्ठम् |
|---|---|---|---|---|
| अकारणगुणपूर्वकत्वम् | - | विशेषगुणपूर्वकत्वम् | (प. मा) | २९१ |
| अतीतकालः | - | वर्तमानध्वंसप्रतियोग्यवच्छिन्नः | (प. मा.) | ४२२ |
| अतीन्द्रियत्वम् | - | लौकिकविषयप्रत्यक्षाविषयगुणत्वसाक्षाद्-व्याप्यजातिमत्त्वम् | (प. मा.) | २८८ |
| अनन्यथासिद्धत्वम् | - | अन्यथासिद्धभिन्नत्वम् | (प. प्र.) | १२८ |
| अनेकाश्रितत्वम् | - | स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधि-करणगुणत्वम्, नानैकत्वसमानाधिकरण-गुणत्वम् वा | (प. मा.) | २८३ |
| अन्तःकरणग्राह्यत्वम् | - | प्रत्यक्षात्मविशेषगुणवृत्तिगुणत्वव्याप्य-जातिमत्त्वम् | (प. मा.) | २८८ |
| अमूर्तगुणत्वम् | - | मूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्य-जातिशून्यगुणत्वम् | (प. मा.) | २८३ |
| अव्याप्यवृत्तित्वम् | - | अवच्छिन्नवृत्तिकत्वम् | (प. मा.) | २७७ |
| अवान्तराणुत्वम् | - | अणुवृत्तिद्रव्यविभाजकोपाधिमत्त्वम् | (प. मा.) | २४८ |
| आकाशत्वम् | - | शब्दवत्त्वम् शब्दसमवायिकारणत्वम् अष्टद्रव्यातिरिक्तत्वं वा | (प. प्र.) | ४०६ |
| आधारत्वम् | - | अतिरिक्तमेवाधारत्वम्, तच्च संबन्धादि-भेदभिन्नम् | (प. मा.) | १६९ |
| इन्द्रियत्वम् | - | स्मृत्यजनकज्ञानजनकमनस्संयोगाश्रयत्वम् | (प. मा.) | ३७१ |
| इष्टसाधनत्वम् | - | प्रत्यवायसाधनीभूताभावप्रतियोगित्वम् | (प. मा,) | ७४ |
| उदयाचलादिसन्निहितत्वम् | - | तन्निष्ठोदयाचलादिसंयोगापेक्षया अल्पत-रोदयाचलादिसंयुक्तसंयोगशालित्वम् | (प. मा.) | ४३८ |
| उभयगुणत्वम् | - | कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वम् | (प. मा.) | २८३ |
| एकदेशवृत्तित्वम् | - | स्वकालावच्छेदेन स्वाधिकरवृत्त्यत्यन्ताभाव-प्रतियोगित्वम् | (प. मा.) | २८० |

| पदम् | विवरणम् | | पृष्ठम् |
|---|---|---|---|
| एकैकाश्रितत्वम् - | स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगि-गुणत्वम्, स्वाश्रयान्योन्याभावासमानाधि-करणत्वम् वा | (प. मा.) | २८४ |
| कारणगुणपूर्वकत्वम् - | स्वाश्रयसमवायिभिन्नसमवेतासमवायि-कारणकान्यत्वे सति स्वाश्रयसमवायिसमवेता-समवायिकारणकत्वम् | (प. मा.) | २९० |
| कालत्वम् - | विभुत्वे सति कालिकपरत्वासमवायिकारण-संयोगाश्रयत्वाद्युपाधिरूपम् | (प. मा.) | ४१५ |
| क्षणत्वम् - | स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वम् स्ववृत्तियावद्-ध्वंसविशिष्टसमयत्वम् स्वपूर्ववर्तियावत्पदार्थ-विशिष्टसमयत्वम् | (प. मा.) | ४१५ |
| क्षणिकत्वम् | तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् | (प. मा.) | २५८ |
| खण्डप्रलयत्वम् - | जन्यद्रव्यानधिकरणद्रव्यप्रागभावा(न)धि-करणकालत्वम् | (प. मा.) | ४२७ |
| गुणत्वसाक्षाद्व्याप्यत्वम् - | गुणत्वव्याप्याव्याप्यत्वे सति गुणत्वव्याप्यत्वम् | (प. प्र.) | २८८ |
| गुरुत्वम् - | रतिकामाषकतोलकत्वादि | (प. मा.) | २५५ |
| घृतत्वम् - | क्षीरप्रभवस्नेहवत्त्वम् | (प. प्र.) | ३८० |
| चरमकृतिः - | स्वसमानाधिकरणस्वोत्तरवर्तिकृत्यपेक्षा कृतिः | (प. पू.) | ५ |
| चरमत्वम् - | तत्क्रियाजन्यत्वे सति तत्क्रियाजन्यसंयोगा-पूर्वत्वम् | (प. पू.) | ३३१ |
| चरमत्वम् - | तद्वेगजन्यचरमकार्यजन्यत्वम् | (प. पू.) | ३३२ |
| जन्यत्वम् - | प्रागभावप्रतियोगित्वम् | (प. पू.) | ११३ |
| तदभावत्वम् - | तज्ज्ञानविरोधिज्ञानविषयत्वम् | (प. मा.) | १७१ |
| तेमनम् - | शाकाविशेषः | (प. पू.) | ६९ |
| तैलत्वम् - | तत्प्रभवस्नेहवत्त्वम् | (प पू.) | ३८० |
| त्यागः - | न ममेति ज्ञानम् इच्छा वा | (प. पू.) | १३७ |
| दानत्वम् - | संप्रदानस्वीकारपूर्वकस्वस्वत्वध्वंसपरस्व-स्वोत्पत्तिफलकत्यागत्वम् | (प. पू.) | १३७ |
| दिक्त्वम् - | विभुत्वे सति दैशिकपरत्वापरत्वासमवायि-कारणसंयोगाश्रयत्वाद्युपाधिरूपम | (प. मा.) | ४३२ |

| पदम् | | विवरणम् | | पृष्ठम् |
|---|---|---|---|---|
| द्रव्याद्यन्यतमत्वम् | - | द्रव्यादिसप्तभिन्नभिन्नत्वम् | (प. प्र.) | १५ |
| द्रव्यारम्भकत्वम् | - | द्रव्यसमवायिकारणतावच्छेदकमूर्तत्व-व्याप्यजातिमत्त्वम् | (प. मा.) | २४८ |
| द्वीन्द्रियग्राह्यत्वम् | - | चाक्षुषस्पार्शननिर्विकल्पकविषयगुणत्वव्याप्य-जातिमत्त्वम् | (प. मा.) | २८७ |
| धनुर्धरत्वम् | - | धनुस्संयोगानुकूलचेष्टाविशेषः | (प. प्र.) | ६३ |
| नमस्कारत्वम् | - | का[यि]कादित्रितयसाधारणो जातिविशेषः अनुगतव्यवहारसिद्धः | (प. प्र.) | २ |
| पटुतरत्वम् | - | दार्ढ्यापरनामको जातिविशेषः | (प. मा.) | २९४ |
| परममहत्त्वम् | - | सर्वोत्कृष्टमहत्त्वम् | (प. मा.) | २५६ |
| पारिमाण्डल्यम् | - | परमाणुपरिमाणम् | (प. प्र.) | २५७ |
| पाषाणत्वम् | - | मृद्विशेषप्रभवद्रव्यत्वम् | (प. प्र.) | ३५६ |
| प्रकारत्वम् | - | भासमानवैशिष्ट्यप्रतियोगित्वं, प्रकारत्वम्, तदेव विशेषणत्वम् | (प. मा.) | १७४ |
| प्रतिबन्धकत्वम् | - | कारणभूताभावप्रतियोगित्वम्, कार्यानुकूलयत्किञ्चिद्विघटकत्वं वा | (प. प्र.) | ८६ |
| वाह्यैकैकेन्द्रियग्राह्यत्वम् | - | बहिरिन्द्रियद्वयावेद्यबहिरिन्द्रियवेद्य-गुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् | (प. मा.) | २८७ |
| भविष्यत्कालः | - | वर्तमानप्रागभावावच्छिन्नकालः | (प. मा.) | ४२२ |
| भविष्यत्त्वम् | - | वर्तमानकालोत्तरकालोत्पत्तिकत्वमेव; न तु विद्यमानप्रागभावप्रतियोगित्वरूपम् | (प. प्र.) | २२२ |
| भूतत्वम् | - | बहिरिन्द्रियग्राह्यविशेषगुणजातीयगुणवत्व-रूपम् | (प. मा) | २४४ |
| महाप्रलयत्वम् | - | गन्धाद्यनधिकरणकालत्वम् | (प. मा.) | ४२९ |
| मुख्यविशेष्यत्वम् | - | तद्ज्ञानाविशेषणत्वे सति तद्ज्ञानविशेष्यत्वम् | (प. पू.) | ५६ |
| मूर्तगुणत्वम् | - | अमूर्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्य-जातिशून्यगुणत्वम् | (प. मा.) | २८२ |
| मूर्तत्वम् | - | अपकृष्टपरिमाणवत्त्वम् | (प. मा.) | २४५ |
| मूर्तामूर्तोभयगुणत्वम् | - | कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वम् | (प. मा.) | २८३ |
| यागत्वम् | - | देवतोद्देश्यकहविस्त्यागत्वम् | (प. पू.) | ३८० |

# अनुबन्धः (ख) (APPENDIX - II)

## पदार्थमालायां पदार्थमालाप्रकाशे च प्रमाणतयोदाहृतानां वेदोपनिषद्धर्मशास्त्रवचनानां सूची



 

# अनुबन्धः (ग) (APPENDIX - III)

## पदार्थमालायां पदार्थमालाप्रकाशे च प्रमाण-तयोदाहृतानां वचनानां सूची

# अनुबन्धः (घ) (APPENDIX - IV)

## पदार्थमालायां पदार्थमालाप्रकाशे च प्रमाणतयोदाहृतानां श्लोकानां सूची.

# अनुबन्धः (ङ) ( APPENDIX - V )

## पदार्थमालायां पदार्थमालाप्रकाशे चोदाहृतानां न्यायानां सूची.

| न्यायाः | | | पृष्ठम् |
|---|---|---|---|
| अणुरपीति न्यायात् | (प. मा.) | .... | ३९६ |
| अणुरपि विशेषोऽध्यवसायकरः | (प. पू.) | .... | ३९६ |
| अधिकरणभेदेनाभावभेदानभ्युपगमात् | (प. पू.) | .... | ३६० |
| कदम्बगोलकन्यायेन | (प. मा.) | .... | ४११ |
| कदम्बमुकुलन्यायेन | (प. पू.) | .... | ४११ |
| खले कपोतन्यायात् | (प. पू.) | .... | ५९ |
| तुल्यन्यायात् | (प. पू.) | .... | ४२१ |
| धर्मिकल्पनातो धर्मकल्पना बलीयस्त्वात् | (प. पू.) | .... | १७०; ४०० |
| ,, ,, लघीयसी | (प. मा.) | .... | ४०० |
| न विधौ -परश्शब्दार्थः | (प. मा) | .... | ७५ |
| पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन | (प. पू.) | .... | ५८; ३४८ |
| परप्रसिध्द्या बोधनीयः परः | (प. पू.) | ... | ४४९ |
| प्रकृतिवत् विकृतिन्यायेन | (प. पू.) | ... | ९७ |
| प्रतिक्षणं किञ्चिदुत्पद्यते किञ्चिन्नश्यति | (प. पू.) | ... | ४१६ |
| प्रतिक्षणं किञ्चिन्नश्यति | (प. पू.) | ... | ११७, ४१६ |
| फलवत्सन्निधावफलं तदङ्गम् | (प. पू.) | ... | ९७ |
| यद्विशेषयोः | (प. मा; प. पू.) | ... | ४५९; १२ |
| राजपुरप्रवेशन्यायः | (प. पू.) | ... | ५९ |
| विशिष्टस्य वैशिष्ट्यमितिन्यायेन | (प. पू) | ... | ३१५; ३१६ |
| विशेष्ये विशेषणमित्यादिन्यायेन | (प. पू.) | ... | ३१५, ३१६ |
| विश्वजिन्न्यायात् | (प. पू.) | ... | ५ |
| वीचीतरङ्गन्यायेन | (प. मा; प. पू.) | ... | ४११ |
| व्यक्तिवचनानां | (प. मा; प. पू.) | ... | ९८ |
| शाब्द्याकाङ्क्षा | (प. मा; प. पू.) | ... | ३० |
| सिंहावलोकनन्यायेन | (प. पू.) | ... | ४४८ |
| स्थूणानिखननन्यायेन | (प. पू.) | ... | ४५२ |

# अनुबन्धः (च) (APPENDIX - VI)

## पदार्थमालायां पदार्थमालाप्रकाशे च प्रमाणतयोदाहृतानां ग्रन्थानां सूची

| ग्रन्थाः | | | पृष्ठम् |
|---|---|---|---|
| अक्षपादप्रणीतम् | (प. प्र.) | ... | ३५२ |
| अक्षपादसूत्रम् | (प. मा.) | ... | ३५२; ४४७; ४५३ |
| अनुमानदीधितौ | (प. पू.) | ... | २९४ |
| उत्तरमीमांसायाम् | (प. पू.) | ... | ४५४ |
| कारिकाव्याख्यायाम् | (प. मा.) | ... | ४६८ |
| कारिकेति | (प. पू.) | ... | ४६८ |
| काव्यप्रकाशविवृतौ | (प. मा.) | ... | १११ |
| कुसुमाञ्जलिपद्ये | (प. पू.) | ... | ४५९ |
| टीका | (प. मा.) | ... | ४६२ |
| दीधितिग्रन्थ | (प. पू.) | ... | ३९ |
| नामलिङ्गानुशासनम् | (प. पू.) | ... | ४०४ |
| न्यायकुसुमाञ्जलिकारिकायाम् | (प. पू.) | ... | ४६८ |
| पारमर्षसूत्रम् | (प. मा.) | ... | ३३२; ३५२; ४७५ |
| ,, | (प. पू.) | ... | ३५२ |
| प्रशस्तपादभाष्ये | (प. मा.) | ... | ४५३ |
| भाष्यम् | (प. मा.) | ... | २५६; २८०; ३३२ |
| भाष्यविरोधः | (प, म.) | ... | ३३२ |
| भाष्ये | (प. मा.) | ... | ३३२ |
| भूषणस्य | (प. मा.) | ... | २१२ |
| लीलावत्युपष्टम्भक | (प. पू.) | ... | ७९ |
| वादमालायाम् | (प. मा.) | ... | ३८८ |
| वात्स्यायनभाष्ये (वार्तिककारादिभिः) | (प. पू.) | ... | ४५३ |
| सूत्रम् | प मा.) | ... | ४५३ |
| सूत्रस्थ | (प. मा.) | ... | २०५ |

# अनुबन्धः (छ) ( APPENDIX - VII )

## पदार्थमालायां पदार्थमालाप्रकाशे च प्रमाणतयोदाहृतानां ग्रन्थकाराणां सूची.

| ग्रन्थकाराः | | पृष्ठम् |
|---|---|---|

